श्रीः

श्रीगणेशाय नमः

# नागेशगूढार्थदीपिका

महामहोपाध्याय नागेशभट्टविरचितस्य

परिभाषेन्दुशेखरस्य

## व्याख्या

श्रीमद्विजयनगरमहाराजसंस्कृतमहापाठशाला विश्रान्तप्रधानोपाध्यायेन, कृष्णापरिसरागिरिपल्ली मार्कण्डेयसंस्कृतकलाशालाध्यक्षेण, शिरोमण्युपाधिधारिणा, वैयाकरणशेखरेण

**पेरि वेङ्कटेश्वरशास्त्रिणा**

विरचिता



आन्ध्रविश्वकलापरिषदा

राजमहेन्द्रनगर्यां

सरस्वतीमुद्रणालये

मुद्रयित्वा प्रकाशिता

1955

विजयतेतराम् ।

अन्य प्राप्तिस्थान—

**चौखम्बा विद्याभवन**

ो० बाक्स नं० ६९ चौक, ( बनारस स्टेट बैंक भवन के पीछे )

# INTRODUCTION

BY

**Professor G. J. SOMAYAJI, Vidwan, M.A., L.T.**

Vaiyākaranasiromani Sri P. Vēnkatēswara Sāstry the author of this commentary 'Gūḍharthadīpika' has laid the students of Sanskrit Grammar under a deep debt of gratitude by his present contribution.

The author has been a great desciple of the late Sri Mahāmahōpādhyāya Tāta Subbarāya Sāstry, the foremost of the teachers of Sanskrit Grammar in the Andhra, and he bears aloft the torch of learning that has been brought by his Guru into this part of the country. Sri Vēnkatēswara Sāstry has not only mastered the texts and commentaries that expounded the Pānīniyan System, but has also been engaged in disseminating that knowledge to successive batches of advanced students. Being a scholar of the foremost erudition and a professor of great repute he is highly competent to undertake this work.

With the aphorisms of Maharshi Pāṇini, the foundation for the Pāṇinian System has been laid, and for centuries master-minds worked at it and a huge superstructure of Grammatical literature has been built up and following Kātyāyana and Patanjali the other two Maharashis that contributed to the higher studies of learning in grammatical thought, a good lot of exegitical work has provided the gloss, at the hands of many masterminds in later centuries. Of them the names of Kaiyata, Bhaṭṭōji Dikshita, and Nāgesa are highly prominent.

The Mahābhāshyapradīpōdyōta, the Sabdēndusēkhara, Paribhāshēndusēkhara, the Manjūsha, the Marmaprakāsika and a few others are not only well known but have been works of constant study and reference towards the elucidation of the Paṇiniyan System of thought.

Nagesa by his great knowledge, keen perception and wonderfu genius has enlightend many a dark spot of this vast edifice, and in spite of the many and varied commentaries on Nagesa's works, a good lot of controversy has been raised, regarding certain interpretations, explanations and niceties of construction, accepted by him.

Sri Venkatēswara Sastry following the footsteps of his great Guru, and as an ardent student and admirer of Nagesa, has taken up the challenge that has been thrown by later commentators on Nagesa's interpretations and has ably refuted them in this present commentary of his. This requires not only erudition and insight, but also sympathy and understanding of the interpretations of Nagesa and Sri Venkateswara Sastry who must have really been seized with a feeling of identity with the great Nagesa has highly succeeded in his attempt. Of the many works of Nagesa, the Laghusabdendu-sēkhara, and Paribhāshēndusēkhara have a great number of commentaries. As many as eleven of them have been dealt with by our Professor Venkateswara Sastry and he has specially refuted the statements in Vijaya, Hymavathi, Vakyartha Chandrika and Bhuti Bhūshita. By his vast experience as a teacher of Mahabhāshya to successive batches of students, Sri Venkateswara Sastry has attained such a mastery over the subject that it can be said that he is easily the foremost scholar in Andhra and one of the best that India to-day has.

The authorities of Andhra University in their usual generosity and patronage for the propagation of knowledge especially the oriental, have done very well in publishing this great work.

WALTAIR
18-8-1955

**G. J. SOMAYAJI**
*Head of the Department of Telugu*
ANDHRA UNIVERSITY

भो विद्वन्महाशयाः

सुविदितमेव हि विश्वेषां विदुषां यदद्यत्वे सर्वस्मिन्नपि भारते वर्षे पाणिनीयमधिजिगांसमानानां महामहोपाध्यायैस्सर्वतन्त्रस्वतन्त्रैः नागेशोपाध्यायैर्विरचितमतिगभीरार्थं शेखरद्वयं पाणिनीयसिद्धान्तपरिज्ञानायात्यन्तोपकारकमिति सकलविश्वकलापरिषत्स्वन्यत्र च पाठ्यक्रमेऽत्यन्तप्राधान्यमधिगच्छतीति च। अत एव चास्य ग्रन्थद्वयस्य बहवो व्याख्यातारो बहूनि व्याख्यानानि व्यरचयन्। परन्तु तेषु द्वित्राणि विना ऽन्यानि सर्वाण्यपि मूलग्रन्थखण्डन-एवाभिनिविष्टान्यासन्। तत्र शब्देन्दुशेखरस्य स्वरसन्ध्यन्तभागस्यास्मद्गुरुचरणै र्महामहोपाध्यायैः कलाप्रपूर्णैस्ताता सुब्बारायशास्त्रिमहोदयैः गुरुप्रसादाभिधं मण्डनरूपं व्याख्यानं विरचितं सत्सकलविद्वज्जनपरिगृहीतमासीत्। तदनु हल्सन्धिमारभ्य कारकान्तभागस्य तयैव रीत्या तत्समक्षमेव मया प्रणीत आन्ध्रविश्वकलापरिषदा प्रकाशितश्च गुरुप्रसादशेषनामकोऽपि ग्रन्थो-विपश्चिज्जनदृष्टिपथमयासीत्। ततः परिभाषेन्दुशेखरस्याप्येवंविधमन्यव्याख्यातृभिस्तदाशयाविमर्शनेन तदीयग्रन्थे आरोपितानां दोषाणां निराकरणभूतं तदीयग्रन्थान्तरोपबृंहिततदाशयानुगृहीत-समन्वयप्रदर्शकं च व्याख्यानमावश्यकमिति मन्यमानोऽहं तद्रचनायै प्रवृत्तः प्रथमप्रकरणान्तं विरच्य लुप्तप्राये शास्त्राध्ययनकौतुकेऽस्मिन् काले महता मानसिकप्रयासेनेदृशग्रन्थप्रणयनं किमर्थमिति निर्विण्णचेताः उपरितनग्रन्थव्याख्यानव्यवसायाद्व्यरमम्। कदाचित्प्रसङ्गवशेन विजयनगरमहाराज कलाशालाध्यक्षाणाम्, डाक्टर् ए. यल्. नारायणमहाशयानां श्रुतिगोचरेऽस्मिन्विषये तदारभ्यार्ष-विद्याप्रणयिनस्तत्समुद्धरणबद्धादरास्ते तद्ग्रन्थपरिसमापनाय मामत्यन्तं प्रोत्साहयामासुः। ततः "कालोह्ययं निरवधिरिति महाकविसूक्तिमनुसरन् सत्स्वपि बहुषु विक्षेपकारणेषु निरस्तपूर्वमपि ग्रन्थप्रणयनोत्साहं पुनराश्रित्यावशिष्टं प्रकरणद्वयं व्याख्याय कृतकृत्योऽभवम्।

ग्रन्थप्रणयनेऽस्मिन्, वाक्यार्थचन्द्रिका गदा, विजया, हैमवत्यादि परिभाषेन्दु-शेखरव्याख्यानानि सम्यक् परिशील्य तत्र कैश्चिन्मूलग्रन्थे आपादितेषु दोषेषु, समन्वयविषये च नागेशाशयमुन्नेतुकामोऽहमवहितेन मनसा महाभाष्यप्रदीपोद्योतादीनन्यापि नागेशग्रन्थान् सम्यग्विमृश्यान्यव्याख्यातृभिरापादितदोषनिराकरणपूर्वकं, नागेशीयेतरग्रन्थसंवादानुगृहीतं महा-

भाष्याद्याकरग्रन्थसंमतं समन्वयप्रकारं प्रादर्शयम्। नागेशाशयाविरुद्धमाकरग्रन्थसंमतं चान्यव्याख्यातृभिरुपदर्शितं समन्वयप्रकारं च पर्यगृह्णाम्।

तत्रानुबन्धपञ्चके, उभयगतिरिति परिभाषायां, कार्यमनुभवन्निति परिभाषायामवयवावयवन्यायविचारे, भाव्यमानपरिभाषायां, प्रत्ययग्रहणपञ्चके, तत्राप्याद्ये वाक्यार्थचन्द्रिकाकृत्कृतसन्नन्तशेखरचिन्त्यताविचारे, क्वचिन्न्यायानाश्रयणमित्येकदेशविकृतन्यायविवरणे, इयं च त्रिपाद्यां न प्रवर्तत इत्यन्तरङ्गपरिभाषाविचारे, सर्वो द्वन्द्व इति परिभाषाज्ञापकत्वे, अन्तरङ्गानपि विधीनिति परिभाषाज्ञापकत्वे, अकृतव्यूह परिभाषाविवरणे, येन नाप्राप्तिन्यायविचारेऽन्येषु च बहुषु प्रदेशेषु मया प्रदर्शितां समन्वयरीतिं तदुपष्टम्भकतया तत्र तत्र मया प्रदर्शितान् भाष्याद्याकरग्रन्थांश्च सम्यक्परिशील्य गुणपक्षपातिनः सहृदया अत्र ये केचन गुणाःस्युस्तदा तान् परिगृह्य पुरुषबुद्धिप्रमादजांश्चदोषान् "गुणदोषौ बुधो गृह्णन्" इति न्यायेन परित्यजेयुरित्यभ्यर्थये। आकरग्रन्थसंमतस्य नागेशाशयस्य प्रकाशनमेव ममाभिप्रेतं नत्वन्यव्याख्यानखण्डनाग्रह इत्यप्याकलयन्तु सुधिय इत्यभ्यर्थये।

ग्रन्थस्यास्य परिसमापनाय मामत्यन्तं प्रचोदयतां श्रीलक्ष्मीनारायणार्याणां, ग्रन्थमेनं प्रकाश्य मदीयं परिश्रमं सफलयतामान्ध्रविश्वकलापरिषदध्यक्षाणां तत्परिषदश्चात्यन्तं कृतज्ञो भवामि। मुद्रणप्रसंगे बहुधा शोधितेष्वप्यक्षरस्खालित्येषु ग्रन्थपरिचयदोषेण यदि केचिदवशिष्टा भवेयुः तदा तान् स्वयं शोधयेयु स्सुधिय इति प्रार्थयामि।

मुद्रणावसरे शोधनविषये ममात्यन्तमुपकुर्वतां मत्सहायोपाध्यायानां ग्व. शोभावधानि-नामन्येषां चात्यन्तं कृतज्ञस्तेषामहं भूयांसि श्रेयांसि परमेश्वरो वितरत्वित्याशासे, इति शिवम्।

एवं विज्ञापयिता
बुधजनविधेयः
**ग्रन्थकारः**

श्रीः

# नागेशगूढार्थदीपिका

## महामहोपाध्याय नागेशभट्टविरचित

## परिभाषेन्दुशेखरव्याख्या

श्रीः

श्रीगणेशाय नमः

# नागेशगूढार्थदीपिका



## नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
## बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥



वन्दे वटतरोर्मूलमासीनं दक्षिणाननम् ।
व्याचष्टे यः परब्रह्मतत्त्वं मौनेन मौनिनाम् ॥ १

क्वायं मन्दमतिः क्वासौ नागेशवचनक्रमः ।
तथापि गुरुकारुण्यसंलब्धज्ञानवैभवः ॥ २

अक्षपादकुलोद्भूतः पेरि वंशाब्धिचन्द्रमाः ।
नरसाम्बाजगन्नाथतनुजो ललिताप्रियः ॥ ३

विजयाभिख्यनगरीपालकेन महीयसा ।
संस्थापिता या विजयरामभूपालमौलिना ॥ ४

तस्यां प्रधानोपाध्यायो विपश्चिद्वेङ्कटेश्वरः ।
लुप्तप्रायेऽपि कालेन शास्त्राध्ययनकौतुके ॥ ५

कालोऽह्ययं निरवधिर्विपुला च वसुन्धरा ।
इतीमां संस्मरन् सूक्तिं प्राक्तनस्य महाकवेः ॥ ६

लक्ष्मीनारायणार्येण विदुषा संप्रचोदितः ।
सुब्रह्मण्यपदाम्भोजं पाणिन्यादि मुनित्रयम् ॥ ७

ध्यात्वा हृदि गभीरार्थं विवृणोति यथामति ।
सुखबोधाय बालानां परिभाषेन्दुशेखरम् ॥ ८

ये चान्यै दर्शिता दोषा नागेशवचनक्रमे ।
निरस्य तान् यथाबुद्धि नागेशाशय उद्धृतः ॥ ९

गुणदोषौ विमृश्यात्र सन्तस्तत्त्वबुभुत्सवः।
गुणा यदि स्युस्तानेव परिगृह्णन्तु नेतरान्॥ १०

जीयादियं वितन्वाना मोदं सुमनसां सदा।
हरेः कटाक्षादाचन्द्रताराकं करुणानिधेः॥ ११

---

प्रारिप्सितग्रन्थपरिसमाप्तिप्रचारादिप्रतिबन्धकदुरितव्यूहोपशमनाय कृतं शिष्टाचारानुमितश्रुतिबोधितेतिकर्तव्यताकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नंश्चिकीर्षितं प्रतिजानीते। [नन्त्वेत्यादिना।] नतेः स्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापाररूपतया सर्वजगदुपादनत्वादिरूपस्य चोत्कर्षस्य शुद्धे ब्रह्मण्यसंभवादाह। [साम्बमिति।] अम्बयत्युत्पादयति सर्वं जगदित्यम्बा माया। तया सहितमित्यर्थः। शेतेऽस्मिन् सर्वं जगदिति व्युत्पत्त्या शिवमित्यस्य विलीनसर्वजगत्कमित्यर्थः। सर्वस्याऽपि घटादिकार्यस्योपादानकारण एव लयदर्शनादनेन सर्वजगदुपादानमित्यर्थः फलति। एवञ्च मायासहितमत एव सर्वजगदुपादानं वस्तुतो नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म नत्वेति भावः। यद्वा। परमात्मस्वरूपमम्बया पार्वत्या सहितं शिवं विश्वेश्वरं नत्वेत्यर्थः। [नागेश इति।] स्वनामोत्कीर्तनं कीर्त्यनुवृत्त्यर्थम्। नचात्मनाम गुरोर्नामेति स्मृतिविरोधादिदमयुक्तमिति वाच्यम्। "श्राद्धे विवाहे संकल्पेऽथापत्कालादिषु क्वचित्। स्वनामग्रहणं कुर्वन् श्रेयस्कामोऽप्यदोषभागि" ति तदपवादभूतस्मृत्यन्तरे आदिपदेन प्रतिज्ञाया स्संग्रहेण प्रतिज्ञावाक्यघटकतया स्वनामग्रहणे दोषाभावात्। अत एव "गोनर्दीयस्त्वाह" "रामो द्विर्नाऽभिभाषते" इत्यादिप्रयोगास्स्वरसत उपपद्यन्ते। अत्र स्वनामपदमात्मनामेत्यादिस्मृतिनिषिद्धगुर्वादिनाम्नामप्युपलक्षणम्। तेन श्राद्धे पित्रादिनामग्रहणे विवाहे कलत्रनामग्रहणे च न दोषः। स्वनामपदस्योक्तरीत्या उपलक्षकत्वाऽनङ्गीकारे श्राद्धविवाहयोस्संकल्पातिरिक्तविषये स्वनामग्रहणस्याऽदृष्टचरत्वेन संकल्प इत्यनेनैव सिद्धे श्राद्धविवाहयोः पृथगुपादानं व्यर्थं स्यादिति बोध्यम्। यत्तु प्रकृतनिषेधवचनघटकेनात्मन्शब्देन प्रयोक्तृप्रयुज्यमाननामप्रतिपाद्ययो स्साक्षात्सामानाधिकरण्यप्रतीते र्निषेधनिमित्ततया तथा प्रतीयमानस्य तस्य विना प्रमाणं परित्यागाऽयोगाच्च यत्र तादृशं तादात्म्यं प्रतीयते तत्रैवाऽयं निषेधः। तत्प्रतीतिश्चास्मच्छब्दसामानाधिकरण्य एव। यथा देवदत्तोऽहं ब्रवीमीत्यादौ। गोनर्दीयस्त्वाहेति प्रयुञ्जानस्य भगवतो भाष्यकारस्याऽप्ययमेवा-

शयो न्याय्यः। एवञ्च प्रकृते तदर्थसामानाधिकरण्यप्रयुक्तस्य तथाविधसामानाधिकरण्यनिमित्तस्य तादृशनिषेधस्याऽप्रसङ्ग एव। "कैयटो जैयटात्मज" इत्यत्राऽपि यः कैयट इति लोके व्यवह्रियते सोऽहं जैयटात्मज इति तदर्थाश्रयणात्परम्परया तादात्म्यप्रतीतावपि साक्षादप्रतीतिरेवेति न कुत्राऽपि दोष इति चन्द्रिकाकारा स्तन्न। निषेधवचनघटकेनात्मन्शब्देन तदुक्तार्थविशेषस्याऽलाभात्। "यथागमं विधास्येऽहं कैयटो जैयटात्मज" इति कैयटीयपद्ये साक्षात्प्रतीयमानस्याऽस्मच्छब्द-सामानाधिकरण्यस्य परिहाराय क्लिष्टान्वस्याऽयुक्तत्वात्। एवमपि "अमुकगोत्रः अमुकशर्माऽहम्" अमुकगोत्रस्यामुकशर्मणो मम" इत्यादिना संकल्पे प्रयोक्तृप्रयुज्यमाननाम्नोः साक्षात्सामानाधिकरण्यस्य दृष्टतया तत्रात्मनामेत्यादिस्मृतिविरोधस्य मदुक्तरीत्यैव परिहरणीयतया सर्वत्र तयैव निर्वाहेऽत्र तद्विरोध-परिहाराय स्वानुभवमात्रलब्धार्थविशेषस्याऽश्रयणे मानाभावादिति बोध्यम्। यदप्युच्चारणे स्वनामग्रह-णस्य दुष्टत्वेऽपि लेखने न दोष इति। तदपि न। मानसजपस्थल इव तत्राऽपि स्वीयसूक्ष्मोच्चारणस्य सर्वानुभवसिद्धत्वात्। यदप्यस्याभिवादनवाक्यत्वेन यथा "मा हिंस्यात्सर्वाभूतानीति" निषेधस्य "अग्नीषोमीयं पशुमालभेते" ति विधिना बाधस्तथाऽभिवादने नामोच्चारणविशेषविधिना सामान्य-नामोच्चाणनिषेधस्य बाध इति मिश्राः। तदप्ययुक्तम्। अस्य नमस्कारात्मकमङ्गलवाक्यत्वेऽप्यभि-वादनवाक्यत्वाभावात्। "अभिवादये देवदत्तोऽहमयमस्मि भो" इति, "अभिवादये देवदत्तनामाहं देवदत्तशर्माऽह" मिति, "देवदत्तशर्मनामाऽह" मित्येवं रूपेणाऽभिवादनवाक्यप्रयोगस्य स्मृतिषु प्रसिद्धत्वात्। किञ्चाभिवादनप्रकारस्य तत्कालस्य च "पादोपसंग्रहणं समवायेऽन्वह" मित्यादिना गौतमेन "दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादये" दित्यादिना आपस्तम्बेन च प्रतिपादि-तत्वेनास्य तादृशाभिवादनवाक्यत्वाऽसंभव इति स्पष्टमेवेति बोध्यम्। अपूर्वग्रन्थरचनारूपक्रिया जन्यप्रधानफलस्य यशःस्वर्गादेः कर्तृगामित्वात्कुरुत इत्यात्मनेपदप्रयोगः। एतेन सुखबोधरूपक्रिया फलस्य परगामित्वादात्मनेपदप्रयोगस्य कथमुपपत्तिरिति शङ्का परास्ता। अपूर्वग्रन्थकरणस्य प्रतिभा-विशेषमन्तराऽसंभवात्तादृशप्रतिभातिशयमात्मन स्सूचयितुमाह। [सुधीरिति।] निरुक्तक्रियाफलस्य यशःस्वर्गादे र्ग्रन्थान्तरविलक्षणलोकोपकारमन्तरेणासंभवा दाह। [बालानामिति।] भाष्यादिग्रन्थेभ्यः परिभाषार्थनिर्णयासमर्थानामित्यर्थः। [सुखबोधायेति।] अनायासेन परिभाषार्थज्ञानायेत्यर्थः। एतेन ग्रन्थान्तरवैलक्षण्यमस्य सूचितम्। आत्मन श्शिवभक्तत्वेन स्वग्रन्थस्य महेश्वरतादात्म्य-प्रतिपादनाय परिभाषेन्दुशेखर इति ग्रन्थनाम। तत्र ग्रन्थपक्षे परिभाषा एवेन्दुरिति मयूरव्यंसका-दित्वाद्रूपकसमासः। अर्थप्रकाशकत्वरूपसादृश्येन परिभाषासु चन्द्रत्वारोपः। स शेखरो यस्येति

# प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे

---

बहुव्रीहिः। अत्र ग्रन्थे परिभाषाणामेव व्याख्येयत्वेन प्राधान्याच्छेखरत्वमारोप्यते। यद्वा। स शेखरो भूषणं व्याख्येयत्वात्प्रधानं यस्येत्यर्थः। शिवपक्षे तु परिभाषा इवेन्दुस्स शेखरश्शिरोभूषणं यस्येति विग्रहः। अर्थप्रकाशकत्वेन च सादृश्यमिति बोध्यम्। अत्रोत्तरार्धेन परिभाषार्थनिर्णयो विषयस्तज्ज्ञानं प्रयोजनं तज्जिज्ञासुरधिकारीत्याद्यनुबन्धचतुष्टयं दर्शितम्। अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। परिभाषार्थज्ञानं मदिष्टसाधनमित्याकारकप्रवृत्तिप्रयोजकेष्टसाधनताज्ञानविषयतायाः परिभाषार्थरूपे विषये तज्ज्ञानरूपे प्रयोजनेऽस्मदर्थेऽधिकारिणि च सत्त्वाल्लक्षणसमन्वयः।

ननु किं तावत्परिभाषात्वम्? यदि लिङ्गवत्त्वे सति सन्दिग्धार्थनिश्चायकत्वं परिभाषात्वमित्युच्यते, तदा उक्तलक्षणलक्षितानां तस्मिन्निति निर्दिष्ट इत्यादीनामव्याख्यानाल्लिङ्गवत्त्वाभावेन तदनाक्रान्तानां यस्मिन्विधिस्तदादावल्ग्रहणे, वर्णाश्रये नास्ति प्रत्ययलक्षण, मित्यादिसंज्ञानिषेधशास्त्राणां व्याख्यानाच्च प्रतिज्ञाविरोधः। यदि विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वप्रकारक शक्त्यविषयकबोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं तत्त्व मित्युच्यते, एवमपि यस्मिन्विधिरित्यादेर्येन विधिरित्यादिवत्सङ्केतग्राहकतया तासां शक्त्यविषयकबोधजनकत्वाभावेन प्रतिज्ञाविरोधः। किञ्च संज्ञापरिभाषाप्रयोज्यविध्युपकारप्रकारप्रतिपादकयोर्यथोद्देशकार्यकालपरिभाषयो र्विधिशास्त्रप्रवृत्तिनिवृत्त्यन्यतरोपयोगिबोधाजनकत्वेन प्रतिज्ञाविरोधः। किञ्चोक्तलक्षणाक्रान्तानां तस्मिन्नित्यादीनामव्याख्यानेन न्यूनता च। यदि च संकेतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वे सति पाणिन्युच्चारितभिन्नत्वं व्याख्येयपरिभाषात्वमित्युच्यते, एवमपि यस्मिन्विधिरित्यादेस्संकेतग्राहकत्वेन यथोद्देशकार्यकालयो स्साधुत्वप्रकारकबोधे सहकारित्वाभावेन च तासां व्याख्यानेन प्रतिज्ञाविरोध एवेत्यतो व्याख्येयपरिभाषास्वरूपं निरूपयति। [प्राचीनेत्यादिना।] पाणिनेः प्रचीना ये इन्द्रादयस्तेषां तन्त्रे परिभाषापाठे वचनरूपेण पठितानीत्यर्थः। एवञ्च तेषां तन्त्रेऽपि परिभाषापाठादन्यत्र पठितानां श्रन्थिग्रन्थील्यदीनां पाणिनीयपरिभाषापाठे पठितानामिको गुणवृद्धीत्यादीनाञ्च प्रतिज्ञाविषयत्वाभावादव्याख्यानेऽपि न विरोधः।

**ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ॥**

---

[ज्ञापकन्यायसिद्धानीति ।] अस्य प्रायेणेत्यादिः । एवञ्च वाचनिकानां यस्मिन्विधिरित्यादीनामत्र व्याख्यानेऽपि न प्रतिज्ञाहानिः । अत्र वाचनिकसंग्रहाय बहुविधक्लिष्टकल्पनापेक्षया इदमेव युक्तमिति बोध्यम् । तत्र ज्ञापकमेतच्छास्त्रीयं प्रमाणम् । न्यायश्चैतच्छास्त्रप्रसिद्धा युक्तिः । सा च परान्नित्यस्य बलवत्त्वे प्रदर्शिता लाघवरूपा युक्तिः । किञ्च लोकतन्त्रान्तरप्रसिद्धा च युक्तिर्न्यायः । तत्र ज्ञापकसिद्धान्यसिद्धं बहिरङ्गमित्यादीनि । केवललोकन्यायसिद्धानि "कृत्रिमाऽकृत्रिमयोः" "सन्निपातलक्षणोविधि" रित्यादीनि । यस्मिन्विधिरित्यादीनि तु वाचनिकानि । न्ययाज्ज्ञापकस्यैतच्छास्त्रीयत्वेनाभ्यर्हितत्वात्तद्वाचकस्यपूर्वनिपातः । [भाष्यवार्तिकयोरुपनिबद्धानीति ।] तत्सम्मतानीत्यर्थः । एतेन कार्यमनुभवन्नित्यादिपरिभाषाणां तत्र साक्षादनुपलब्धत्वेऽपि तत्सम्मतत्वेन नासंग्रहः । नाऽपि प्राचीनपठितानामपि कासाञ्चिदव्याख्यानं दोष इति बोध्यम् । एवञ्च प्राचीनवैयाकरणतन्त्रे परिभाषापाठे पठितान्यत्र पाणिनीयतन्त्रे ज्ञापकसिद्धानि न्यायसिद्धानि वाचनिकानि च तत्र तत्र भष्यवार्तिककाराभ्यामभ्युपगतानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते इत्यखण्डार्थः । परितो भाष्यते व्याप्रियते या सेति व्युत्पत्त्या परितो व्याप्तां भाषां परिभाषां प्रचक्षत इत्यभियुक्तोक्त्या कश्चिदेकदेशस्थस्सर्वं शास्त्रमभिज्वलयतीति षष्ठी स्थाने योगेतिसूत्रस्थभाष्याच्चैकदेशस्थत्वे सति विधिशास्त्रीयवाक्यार्थबोधोपकारकत्वं परिभाषात्वमित्यर्थलाभेऽपि परिभाषापदस्य केवलयौगिकत्वस्वीकारे पाणिनीयसंज्ञाशास्त्रादिष्वप्यतिप्रसङ्गाद्योगरूढत्वं तस्याश्रयणीयम् । एवञ्च परिभाषापदमवयवशक्तिसहकृतसमुदायशक्त्या पाणिन्युच्चारितानि "इको गुणवृद्धी" इत्यादीनि प्राचीनवैयाकरणपरिभाषापाठे पठितान्यसिद्धं बहिरङ्गमन्तरङ्ग इत्यादीनि च बोधयति । तासु कासाञ्चिद्विधिशास्त्रीयवाक्यार्थबोधोपकारकत्वरूपावयवार्थाभावेऽपि पङ्कजशब्दः स्थलपङ्कजमिवावयवार्थनैरपेक्ष्येण ता अपि बोधयति । पाणिन्युच्चारितानामिकोगुणवृद्धी इत्यादीनामुक्तपरिभाषात्वस्य सत्त्वेऽपि तेषां भाष्यकारादिभिरात्मना च विशिष्य व्याख्यातत्वेन न तासामेतद्ग्रन्थविषयता । किन्तु तद्भिन्नानां तत्सम्मतानां प्राचीनवैयाकरणतन्त्रे परिभाषापाठे वचनरूपेण पठितानामेवैतद्ग्रन्थविषयतेति न काचिदनुपपत्तिरित्यवधेयम् । तत्र सकलशास्त्रोपयोगित्वेन प्रकृतशास्त्रमूलभूतवर्णसमाम्नायस्थलिङ्गबोधितत्वेन भाष्ये सर्वतः पूर्वमुक्तत्वेन च प्राधान्याद्व्याख्यानत इत्येतस्याः परिभाषायाः प्रथमं व्याख्यना

ननु लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु संदेहादनिर्णयो ऽत आह॥

व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्॥ १॥

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रति

---

मुचितमित्याशयेन तां व्याचिख्यासुरवतारयति। [नन्विति।] अणिण्ग्रहणेष्विति। ग्रहणमिति भावे ल्युट्। कर्मषष्ठ्यन्तेन षष्ठीसमासः। अणिण्पदयोरुपादान इत्यर्थः। यद्वा अणिणोर्ग्रहणमुपादानं येषु तानि तेषु। केऽणः इण्कोरित्यादिष्वित्यर्थः। यद्वा अणिणो गृह्यन्ते येष्वित्यधिकरणे ल्युट्। तुल्योर्थः। [सन्देहादिति।] तद्धटकाणादिपदानां हर्यादिपदवन्नानार्थकत्वेन तत्र पूर्वेण परेण वा णकारेण प्रत्याहारो वक्तुरभिप्रेत इति वक्तृतात्पर्यसन्देहादित्यर्थः। [अनिर्णय इति।] अणादिपदजन्यबोधे प्रामाण्यानिश्चयात्तद्घटितवाक्यजन्यबोधे प्रामाण्यानिश्चय इत्यर्थः। तात्पर्यनिर्णयस्य तत्तद्वाक्यजन्यबोधे प्रामाण्यनिश्चयेपयोगित्वेन तत्सन्देहे वाक्यजन्यबोधे प्रामाण्यानिश्चय इति भावः।

यत्तु तात्पर्यसन्देहादनिर्णयः शाब्दबोधानुदय इति वाराणसेया स्तन्न। तात्पर्यज्ञानस्य शाब्दबोधहेतुताया ग्रन्थकृताऽन्यत्र निराकृतत्वेन तत्सन्देहेन शाब्दबोधानुदयस्य वक्तुमशक्यत्वात्। [व्याख्यानत इति।] आद्यादित्वात्सार्वविभक्तिकस्तसिः। व्याख्यानादित्यर्थः। [विशेषप्रतिपत्तिरिति।] कर्तृकर्मणोरिति कर्मषष्ठ्यन्तेन समासः। कर्मणि चेति समासनिषेधस्तु न भवति। तृजकाभ्यां कर्तरीति निषेधारम्भसामर्थ्येनोभयप्राप्तौ कर्मणीति सूत्रविहितषष्ठ्या एव तेन निषेधात्। अन्यथा अपां स्रष्टेत्यादावपि अनेनैव निषेधे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत्र तु कर्तुरनुपादानेनोभयप्राप्तावित्यस्याप्राप्तिरिति बोध्यम्। [व्याख्यानादिति।] तच्च "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्।" इत्युक्तरूपम्। अत्र तु "परेणैवेण्ग्रहास्सर्वे पूर्वेणैवाण्ग्रहा मताः। ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु"। इत्येवमुपदेशपरंपरया भाष्यकारादिशिष्टकृतात्पदार्थोक्तिरूपाद्व्याख्यानात्संदेहेऽपि विशेषार्थविषयक-

पत्तिर्निश्चयो, यतः संदेहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्या-दित्यर्थः॥ असंदिग्धानुष्ठानसिध्द्यर्थे ऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्या-

---

निश्चयो भवतीति भावः। अस्मदादिकृतव्याख्यानात्तु न तद्दाशविशेषप्रतिपत्तिरित्याशयेनाऽऽह। [शिष्टकृतादिति।] भाष्यकारादिलक्ष्यैकचक्षुष्ककृतादित्यर्थः। अत्र हेतुमाह। [यत इति।] [सन्देहादिति।] बोध्यसन्देहादित्यर्थः। शास्त्रस्य प्रस्तुतत्वादाह। [शास्त्रमिति।] परिभाषास्थस्यालक्षणमित्यस्यार्थमाह। [अननुष्ठापकं लक्षणमिति।] साधुशब्दप्रयोगाजनकं लक्षणमित्यर्थः। अलक्षणमित्यस्य तदर्थान्तर्भावेण वृत्तिरिति भावः। [निर्णयेति।] शब्द-प्रयोगनिर्णयेत्यर्थः। [औचित्यादिति।] अन्यथा शास्त्रस्य वैयर्थ्यापत्तेरिति भावः। तथाच शास्त्रस्य शब्दप्रयोगाजनकत्वे आनर्थक्यापत्तिः। शास्त्रानर्थक्यञ्च वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। अतस्सन्देहमात्रेण शास्त्रस्य शब्दप्रयोगाजनकताया अनौचित्याद्भाष्यकारादिव्याख्यानाद्विशेषार्थ-निर्णय आश्रयणीय इति भावः। नन्वणादिप्रत्याहारेषु भाष्योक्तज्ञापकैरेव सम्भवति विशेषार्थ-निर्णये निष्फलेयं परिभाषेत्यत आह। [असंदिग्धेति।] सदेहविषयभिन्नेत्यर्थः। संपूर्वकदिह-धातोरकर्मकत्वेन कर्मणि प्रत्ययासंभवेऽपि भावक्तान्तात्संदिग्धशब्दादर्शआद्यचि तदन्तेन नञ्समासे निरुक्तार्थलाभः। [अनुष्ठानसिध्द्यर्थ इति।] अनुष्ठानं शब्दप्रयोगः, तत्सिद्धिफलक इत्यर्थः। [संदिग्धोच्चारणेति।] अत्राऽपि संदिग्धपदे अर्शआद्यच्। संदेहजनकेत्यर्थः। अणादिपदेषु वक्तृतात्पर्यसंदेहजनकवार्णसमाम्नायिकणकारानुबन्धद्वयोच्चारणरूपमहेश्वरव्यवहारेणेति समुदायार्थः। [व्याख्यानातिरिक्तनिमित्तानपेक्षत्वमिति।] शिष्टोपदेशपरंपरारूपान्निरुक्ता-द्व्याख्यानादतिरिक्तानि यानि संदेहनिवर्तकानि भाष्योक्तज्ञापकादिरूपाणि निमित्तानि तदनपेक्षत्व-मित्यर्थः। संदेहनिवृत्तेर्व्याख्यानापेक्षत्वं बोध्यत इत्येव सिद्धे नञ्द्वयोपादानं तु यत्र व्याख्यानेन तदतिरिक्तप्रमाणेन च संदेहनिवृत्तिः प्राप्ता तत्र व्याख्यानाज्जायमानसंदेहनिवृत्तिरेव प्रकृतशास्त्र-प्रवृत्तिप्रयोजिकेत्यर्थबोधनाय। अत एव हृदयस्य हृल्लेखेति सूत्रेऽण्ग्रहणसामर्थ्येन लेखपदस्य

# नातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्॥

---

घञन्तत्वलाभेऽपि तस्य "उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं ने" ति परिभाषाज्ञापकता-परभाष्यप्रामाण्याऽखपदस्याणन्तत्वे तात्पर्यमवधार्यते। न तु घञन्तत्वे। तथाच यथोत्तरं मुनीनां प्रामाण्यमिति वचनमप्येतत्सिद्धार्थानुवादकमेवेति भावः। [बोध्यत इति।] ज्ञापकादिना संदेह परिहारे प्रतिपत्तिगौरवाज्ज्ञापकशून्यस्थले संदेहानिवृत्तेश्च सर्वत्र व्याख्यानेनैव विशेषार्थनिर्णयः कार्यइत्यमुमर्थमनुबन्धद्वयोच्चारणेन महेश्वरो बोधयतीतीयमावश्यकी परिभाषेति भावः। अत-एव लणूसूत्रे भाष्ये केऽण इत्यादौ सर्वत्र तत्तज्ज्ञापकैर्विशेषार्थनिर्णयं कृत्वापि अन्ते "किंपुन-र्वर्णोत्सत्ताविवायं णकारोद्विरनुबध्यते एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा व्याख्यानत" इत्यादिनाऽनुबन्धद्वयोच्चारणस्यैतत्परिभाषाज्ञापकत्वमुक्तम्। आवश्यकेन व्याख्यानेनैव क्वचित्पूर्वेण क्वचित्परेण णकारेण प्रत्याहार इति निर्णयसंभवे ज्ञापकाद्यनुसरणक्लेशो व्यर्थ इति तदाशय इति बोध्यम्।

नन्वनुबन्धद्वयोच्चारणं कथमस्यां ज्ञापकम्? ज्ञापनोत्तरमनुबन्धान्तरोच्चारणेनाऽपि सिद्धे स्वांशे चारितार्थ्याभावात्। नहि स्वांशे चारितार्थ्यमन्तरा ज्ञापनं संभवति। विपरीतार्थ-स्याऽपि ज्ञापनापत्तेः। नापीयमनन्यथासिद्धेन केन चित्प्रयोजनवती। ज्ञापकाश्रयणेनैव तत्र तत्र संदेहनिवारणसंभवादत इयमनुपादेयैव परिभाषेति चेत्सत्यम्। विपरीतार्थकल्पना-निरासायैव स्वांशे चारितार्थ्यस्यापेक्षितत्वेन यत्र तादृशार्थकल्पनाप्रसक्तिस्तत्रैव तदपेक्षा। नान्यत्र। सा च प्रसक्तिर्यत्र सर्वथाऽसिद्धस्यैवार्थस्य शास्त्रेण बोधनं तत्रैव। स्वांशे चारितार्थ्य मन्तराऽपूर्वार्थकल्पनायां विनिगमनाविरहादर्थान्तरकल्पनापि कुतो नेति शङ्कायास्तत्रैव संभवात्। प्रकारान्तरेण सिद्धस्यार्थस्य बोधने तु न विपरीतार्थकल्पनाप्रसक्तिः। क्लृप्तस्यार्थस्य कल्पना-पेक्षया सर्वथाऽसिद्धस्यार्थस्य कल्पनायां प्रतिपत्तिगौरवस्य सत्त्वेन तादृशशङ्काया अनुदयात्। एवञ्चात्र व्याख्यानतो विशेषार्थप्रतिपत्तेर्लोकसिद्धतया तमेवार्थमनुबन्धद्वयोच्चारणेन महेश्वरो बोधयतीति नात्र स्वांशे चारितार्थ्य मपेक्षितम्। लणूसूत्रस्थभाष्ये ज्ञापयतीत्यस्य बोधयतीत्येवार्थः। अत एव ग्रन्थकृता लणूसूत्रस्थोद्योतेऽत्र च बोध्यत इत्येवोक्तम्। उभयोर्ज्ञानसामान्यार्थकत्वाऽविशेषेऽप्यभिधानस्वाभाव्यादपूर्वार्थबोधने ज्ञाधातोःसिद्धस्यार्थस्यावगमने बुधधातोश्च वृत्तिः।

तेनाणुदित्सवर्णस्येत्येतत्परिहाय पूर्वेणाण्ग्रहणं, परेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह ॥

यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

---

"एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भाव्यमानेन" त्याद्यणुदित्सूत्रस्थभाष्ये ज्ञापयतीत्यस्य यथाश्रुतार्थपरत्वमेव। "अत्यल्पमिदमुच्यतेऽप्रत्यय इति, अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्" इत्युपक्रमभाष्येण तत्रत्यप्रत्ययपदस्य प्रत्ययमात्रबोधकताया एव लाभेनागमादेशयोस्सवर्णग्रहणनिषेधस्य सूत्रतोऽलाभेन प्राचीनपठितभाव्यमानेनेत्यादिपरिभाषाबोधितस्य तदंशस्याप्रत्यय इत्यनेनैकदेशानुमत्या बोधनात्। तत्राऽपि न स्वांशे चारितार्थ्यापेक्षा। तस्याप्यर्थस्यांशतस्सूत्राक्षरैस्सिद्धतया विपरीतार्थकल्पनाया असिद्धेः। एवमेव गतिकारकोपपदानामित्येतद्विषयेऽपीत्यवधेयम्। ज्ञापकाश्रयणेनैव तत्र तत्र संदेहनिवारणसंभवे नेयं प्रयोजनवती परिभाषेत्यपि न युक्तम्। ज्ञापकाद्यभावस्थले व्याख्यानापेक्षाया आवश्यकत्वेन तेनैव सर्वसंदेहेषु निर्वाहे ज्ञापकाद्यनुसरणेनात्र संदेहनिवृत्तेः क्लिष्टत्वात्। एतेन लण्सूत्रभाष्यस्थज्ञापयतीत्यस्य बोधयतीत्यर्थकरणप्रयासो मूलकृतो विफल एवेति हर्युक्त मपास्तम्। अपूर्वार्थो नानेन बोध्यत इत्यर्थद्योतनाय तदावश्यकत्वात्। [तेनेति।] महेश्वरेण तथा बोधनेनेत्यर्थः। [भाष्ये स्पष्टमिति।] अणादिपदेषु संदेहनिवर्तकं पदार्थोक्तिरूपं व्याख्यानं भगवता स्फुटीकृतमित्यर्थः।

उभे इमे परिभाषे। परिभाषाणां विध्युपकारकत्वेन प्रथमतस्तत्प्रयोज्यविध्युपकारनिरूपणस्यावश्यकतया तत्प्रकारनिरूपकपरिभाषाद्वयस्यादौ व्याख्यानमुचितमित्याशयेनाह। [तत्रेति।] शास्त्र इत्यर्थः। तेनैतद्ग्रन्थाविषयेषु तस्मिन्नित्यादिष्वपीदं पक्षद्वयमस्तीति सूचितम्। [संज्ञापरिभाषाविषय इति।] तत्प्रयोज्यविध्युपकारविषय इत्यर्थः। तत्राद्यपक्षप्रतिपादिकां परिभाषां

उद्देशमनतिक्रम्य यथोद्देशम्। उद्देश उपदेशदेशः। अधिकरणसाधनश्चायम्॥ यत्र देशउपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे

---

व्याचष्टे। [उद्देशमनतिक्रम्येत्यादिना।] ननु प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति भाष्येणोपदेशोद्देशयोर्भेददर्शनादुद्देशपदस्य भावघञन्तत्वाच्च कथमुद्देशपदेनोक्तार्थलाभोऽत आह। [अधिकरणसाधनश्चेति।] अधिकरणार्थक इत्यर्थः। साध्यते साधुत्वेन प्रतिपाद्यते प्रकृतिप्रत्ययादिरस्मिन्निति व्युत्पत्त्या साधनशब्दस्यार्थपरत्वात्। उद्दिश्यते उपदिश्यतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या उद्देशशब्दस्योपदेशदेशोऽर्थः। उद्दिष्टो मेऽनुवाकः, उपदिष्टो मे पन्था इत्यादौ क्वचिदुपदेशोद्देशयोस्सांकर्यस्याऽपि दर्शनेनाऽत्रोत्पूर्वकदिशधातोरुपदेशार्थकत्वादिति भावः। परिभाषायां संज्ञापरिभाषमिति समाहारद्वन्द्वः। विध्युपकारविषये संज्ञापरिभाषमुपदेशदेशमनतिक्रम्य वर्तत इति परिभाषार्थः। तदेतदाह। [यत्रेत्यादिना।] [तद्देश एवेति।] एवकारेण विधिदेशव्यावृत्तिः। ननु गुणप्रधानशास्त्रयोर्देशभेदेन वाक्यार्थबोधे कथमनयोः परस्परमुपकार्योपकारकभावोऽत आह। [गृहीतशक्त्येति।] गृहीतशक्तिस्मरणेनेत्यर्थः। संज्ञाविषय इदम्। परिभाषाविषये आह। [गृहीतपरिभाषार्थेनेति।] परिभाषाजन्यनियमस्मरणेनेत्यर्थः। तथचैकदेशस्थितेनैव प्रदीपेन यथा सर्वगृहप्रकाशः एवमुपदेशदेशस्थिताभिरेव संज्ञापरिभाषाभिस्सर्वविधिशास्त्रोपकार इति भावः। सर्वत्रेति। अत्र परिभाषाविषये सर्वपदेन त्रिपाद्यतिरिक्तस्यैव ग्रहणम्। अत्र पक्षे परिभाषाणां त्रिपाद्यामप्रवृत्तेरेव सिद्धान्तत्वात्। संज्ञाविषये तु न संकोचावसरः। अत्रापि पक्षे तासां त्रिपाद्यां प्रवृत्तेरनुपदमेव वक्ष्यमाणत्वात्। समुदायापेक्षया च सर्वत्रेत्युक्तमिति बोध्यम्। ननु कोऽयमासां देशः। यत्रासां वाक्यार्थबोधोऽभिप्रेतः प्रसिद्धदेशस्यासंभवादत आह। [देशश्चेति।] च स्त्वर्थे। [प्रथमोच्चारणकाल इति।] आचार्यकर्तृकाद्योच्चारणकाल इत्यर्थः। यद्यपि स इदानीं दुर्लभः तथाप्यष्टाध्यायीस्थानुपूर्वीघटकपौर्वापर्यव्यवहारप्रयोजकसन्निवेशघटकावकाश एवेह तत्त्वेन विवक्षित इति बोध्यम्। ननु

व्यवह्रियते॥ तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यद्यथाश्रुतग्राहि-

---

संज्ञापरिभाषाणामुपदेशदेशे सामान्यतो वाक्यार्थबोधे जातेऽपि तदुत्तरं किमनेन प्रयोजनमिति प्रयोजनविशेषजिज्ञासाया नियमतो जायमानत्वात्तन्निवृत्तये तासां विधिशास्त्रेण सह लक्ष्यसंस्कारकमहावाक्यार्थबोध आवश्यकः। स च तासां कार्यार्थत्वेन कार्यस्य प्राधान्याद्विधिप्रदेश एव न्याय्यः गुणशास्त्रानुरोधात्तद्देशे प्रधानशास्त्रसन्निधानापेक्षया प्रधानानुरोधेन गुणशास्त्राणामेव कार्यदेशे संनिधानस्यौचित्यात्। तथा च सर्वथा कार्यकालतैव संज्ञापरिभाषाणां संभवति। न तु यथोद्देशत्वमित्यसंभवदुक्तिक एवायं पक्ष इत्याशङ्क्य प्राचीनोक्तां तदुपपत्तिं दर्शयति। [तत्तदित्यादिना कैयट इत्यन्तेन।] [वाक्यार्थबोध इति।] संज्ञापरिभाषाशास्त्रीयसामान्यवाक्यार्थबोध इत्यर्थः। [अनेनेति।] संज्ञाशास्त्रजन्यशक्तिग्रहेण परिभाषाशास्त्रजन्यनियमग्रहेण चेत्यर्थः। [ज्ञानमात्रेण संतुष्यदिति।] मात्रपदेन विशेषज्ञानव्यावृत्तिः। प्रयोजनसामान्यज्ञानेनैव सन्तुष्यन्तो निवृत्तप्रयोजनविशेषजिज्ञासा ये यथाश्रुतग्राहिणो मन्दमध्यमाधिकारिणो बोद्धारस्तदपेक्षोऽयं पक्ष इत्यखण्डार्थः। अयं भावः। उपदेशदेशे संज्ञापरिभाषाशास्त्रजन्यवाक्यार्थबोधोत्तरं सत्यामपि प्रयोजनजिज्ञासायां प्रकरणविशेषानुपक्रमेण पठितानां गुणशास्त्राणां सकलप्रकरणोपकारकत्वस्य प्रसिद्धत्वात्, वृद्धिसंज्ञासूत्रभाष्ये "वर्णेनाप्यनर्थकेन न भवितव्यम्" इत्यादिना भगवता शास्त्रानर्थक्यस्य सर्वथा निराकृतत्वाच्च भविष्यति किंचिदनेन प्रयोजनमिति प्रयोजनसामान्यज्ञानेनैव निवृत्तप्रयोजनाकाङ्क्षाः ये मन्दमध्यमाधिकारिणस्तेषां प्रयोजनविशेषाकाङ्क्षाया अभावेन विधिशास्त्रानुपस्थितेस्तदेकवाक्यतया महावाक्यर्थबोधस्यासंभवात् तदपेक्षोऽयं पक्षः। ये तु प्रयोजनसामान्यज्ञानेनासन्तुष्टाः प्रयोजनविशेषमाकाङ्क्षन्ते तेषामुत्तमाधिकारिणां तन्निवृत्तये तत्तद्विध्येकवाक्यतया महावाक्यार्थबोधस्यावश्यकत्वात्तस्य च निरुक्तदिशा विधिप्रदेश एव न्याय्यत्वात्तदपेक्षः कार्यकालपक्षः। एवं चाधिकारिभेदेन प्रवृत्ताविमौ पक्षौ लक्ष्यानुरोधादत्र शास्त्रे सर्वत्र व्यवतिष्ठेते इति। यत्तु छात्रो द्विविधः। तत्रैको गुरूपदिष्टोऽर्थोऽवश्यमेव मदुपयोगीति श्रद्धावानयमेवापेक्षाबुद्धिमान्। अपरश्च फलानुरोधेनैव गुर्वादिवाक्येऽपि श्रद्धावानुपेक्षाबुद्धिमान्। तत्रापेक्षाबुध्यपेक्षो यथोद्देशपक्षः। उपेक्षाबुध्यपेक्षस्तु कार्यकाल इति वाराणसेयाः।

# प्रतिपत्त्रपेक्षोऽयं पक्ष इतीदूत्सूत्रे कैयटः।

---

तत्तु "यदा अनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किंचिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा संभवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः। महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्ष इति" ईदूत्सूत्रस्थकैयटग्रन्थाक्षराननुगुणत्वादुपेक्ष्यम्। तेन प्रयोजनविशेषजिज्ञासातदभावयोरेव परिभाषाद्वयमूलकतायाः स्फुटं प्रतीतेः। [कैयट इति।] अयमत्र कैयटाशयः। अधिकारिभेदेन व्यवस्थितयोरनयोः पक्षयोराद्यपक्षे संज्ञापरिभाषयोर्द्वयोरपि भिन्नवाक्यतयैव विध्युपकारकत्वं स्वदेशीयत्वं च। द्वितीये तु विधिप्रदेशे सति सम्भवे द्वयोरपि पदैकवाक्यतयैव विध्युपकारकत्वं विधिदेशीयत्वं च। अत एवात्र पक्षे प्रगृह्यसंज्ञाया अयादिभ्यः परत्वप्रतिपादनपरमयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसोमादिति सूत्रस्थं भाष्यं परिभाषासादृश्येनाङ्गीकृतपरिभाषात्वस्य क्ङिति चेत्यस्य कार्यकालपक्षे सार्वधातुकार्धधातुकयोरित्येतद्विध्येकवाक्यत्वेनाङ्गाधिकारीयतया नलुमतेति निषेधविषयत्वप्रतिपादनपरं क्ङितिचेति सूत्रस्थं च भाष्यं संगच्छते। अत एव च यथोद्देश एव परिभाषयोः पौर्वापर्यं न तु कार्यकालतायामितीकोगुणेति सूत्रस्थकैयटग्रन्थोऽपि संगच्छत इति। अत्र कैयट इत्यनेनारुचिस्सूचिता। तद्बीजन्तु, भाष्ये समकक्षतया प्रतिपादितयोरनयोः पक्षयोरेकस्य मन्दमध्यमाधिकारिपरतया अपरस्योत्तमाधिकारिपरतया च योजनमयुक्तम्। किञ्च वक्ष्यमाणषष्ठी स्थानेयोगेति सूत्रस्थभाष्येण पक्षद्वयेऽपि परिभाषाणामेकवाक्यतायाः स्वदेशीयत्वस्य च स्फुटं प्रतीत्या यथोद्देशपक्षे तासां भिन्नवाक्यतया विध्युपकारकत्वप्रतिपादनं, कार्यकालपक्षे विधिदेशीयत्वप्रतिपादनं चायुक्तम्। अतः पक्षद्वयस्याप्युत्तमाधिकारिपरतयैव योजनं पक्षद्वयेऽपि परिभाषाणां सति संभवे एकवाक्यतयैव विध्युपकारकत्वं स्वदेशीयत्वं च न्याय्यम्। तथा च शब्दानुशासनज्ञानाय प्रवृत्तस्य प्रथमतस्सकलतच्छास्त्रोपकारकसंज्ञापरिभाषाज्ञानस्यावश्यकतया तदनुरोधेन प्रथमतो गुणशास्त्राणामुपस्थितौ तत्र संज्ञाशास्त्राणां कोशादिवत् संकेतग्राहकत्वेन तदीयवाक्यार्थबोधकाले विधिशास्त्राकाङ्क्षाया नियमतोऽनुपस्थितावपि परिभाषाणां नियामकत्वेन तस्मिन्नित्यादेस्सप्तमीनिर्देशेन विधीयमानं कार्यमव्यवहितस्यैव पूर्वस्यैवेत्यादिरूपेण सामान्यतो वाक्यार्थबोधे जाते किं तत्सप्तमीनिर्देशेन विधीयमानं कार्यमित्याकारकनियम्यविधिविशेषविषयकाकाङ्क्षाया उत्तमाधिकारिणां नियमतो जायमानत्वात्तदनुरोधेन तत्प्रदेशे इको यणचीत्यादि-

# केचित्तुपरिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधेसप्तमी-निर्देशादि केति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ

---

सकलतत्तद्विध्युपस्थितावेकस्य परिभाषाशास्त्रस्य उपस्थितसर्वविध्येकवाक्यतया नियामकताया असंभवादात्मभेदकल्पनेन तत्तद्विध्येकवाक्यतया तत्तदुपकारकत्वं, संज्ञाविषये तूत्तमाधिकारिणामपि तादृशोत्थिताकाङ्क्षाया अभावात् तद्देशे विधीनामनुपस्थितत्वान्न तैरेकवाक्यता संज्ञानाम्। किन्तु तदीयवाक्यार्थबोधोत्तरं वृध्द्यादिपदानामादैजादिषु शक्तिग्रहे जाते गृहीतशक्तिस्मरणेन मृजेर्वृद्धिरित्यादीनां वाक्यार्थबोधः। एवं चेदानीं स्वदेशावस्थितानामेव संज्ञापरिभाषाणां भिन्नवाक्यतया एकवाक्यतया च विध्युपकारकत्वात्सिद्धं यथोद्देशत्वमासाम्। यदा तु व्याकरणस्य प्रयोगसाधुत्वज्ञानार्थतया तस्य च विधिशास्त्राधीनत्वेन प्रथमत इकोयणचीत्यादिविधिशास्त्राणा-मुपस्थितिस्तदा तासामजुपश्लिष्टस्येको यणित्यादिरीत्या वाक्यार्थबोधे जाते उपश्लेषस्य पूर्वपर-साधारणत्वेन व्यवहिताव्यवहितसाधारणत्वेन चानियमेनादेशप्रसक्तौ नियामकाकाङ्क्षाया नियमतो जायमानतया तदनुरोधेन तत्प्रदेशे तस्मिन्नित्यादिपरिभाषाबुद्धौ तदेकवाक्यतया लक्ष्यसंस्कारक-महावाक्यार्थबोधात्कार्यकालता परिभाषाणाम्। एवं मृजेर्वृद्धिरित्यादीनां प्रथमत उपस्थितौ सामान्यतो वाक्यार्थबोधे जाते वृद्धिपदार्थज्ञानाय वृद्धिरादैजित्यादिसंज्ञाशास्त्राणां विधिप्रदेशे उपस्थितौ तैस्सह पदैकवाक्यतायामन्यतरवृध्यादिपदवैयर्थ्यापत्त्या वाक्यैकवाक्यतया लक्ष्य-संस्कारको महावाक्यार्थबोध इति कार्यकालत्वं तासामिति। तदेतद्ध्वनयन् भाष्यसंमतं सिद्धान्तमाह [केचित्त्वित्यादिना।] अन्यत्रेवात्रापि स्वसिद्धान्तस्य परेत्यादिना प्रतिपादनीये एव-मुक्तिस्तु अत्रार्थे कस्य चिदंशस्य स्वानभिमतत्वसूचनाय। स च संज्ञाशास्त्राणां कार्यकालपक्षे विधिदेशीयत्वरूपः। निरूपयिष्यते चेदमुपरिष्टात्। संज्ञाविषये तदीयवाक्यार्थबोधोत्तरं विधिशास्त्रविषयकोत्थिताकाङ्क्षायाः कस्याप्यभावेन तत्प्रदेशे विधीनामनुपस्थित्या संज्ञाशास्त्राणा-मत्र पक्षे विध्येकवाक्यताया असंभवादाह। [परिभाषेति।] [सकलतत्तद्विधीति।] सप्तमी-निर्देशघटितसर्वविधीत्यर्थः। त्रैपादिकातिरिक्तेत्यादिः। एतन्मतेऽपि यथोद्देशपक्षे परिभाषाणां त्रिपाद्यां प्रवृत्तेरनिष्टत्वात्। [सकलतत्संस्कारायेति।] उपस्थितसकलविधिशास्त्रीयलक्ष्यसंस्कारक-महावाक्यार्थबोधायेत्यर्थः। एकस्य परिभाषाशास्त्रस्य युगपदनेकविधिशास्त्रैकवाक्यताया असंभवा-

**सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः॥**

---

दाह [गुणभेद मिति।] गुणस्य अप्रधानस्यात्मनो भेदमावृत्तिमित्यर्थः। [एकवाक्यतयैवेति।] न तु संज्ञानामिवात्रापि पक्षे परिभाषाणां भिन्नवाक्यतया विध्युपकारकत्वमिति भावः। एकवाक्यता चात्र विषये संभवाल्लाघवानुरोधेन च पदैकवाक्यतैवेति बोध्यम्। ननु पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतयैव विध्युपकारकत्वे विशेषाभावात्तद्विषयेऽन्यतरपक्षवैयर्थ्यमित्याशङ्कायामाह [कार्यकालपक्षेत्विति।] [त्रिपाद्यामपीति।] अपिना सपादसप्ताध्याय्या स्समुच्चयः। एवं च कार्यकालपक्षे सर्वविध्येकवाक्यता परिभाषाणामत्र तु त्रैपादिकातिरिक्तैरेवेति विशेषस्य सत्त्वा न्न तद्विषयेऽन्यतरवैयर्थ्यशङ्केति भावः।

नन्वत्रापि पक्षे परिभाषास्थलीयाकाङ्क्षावशात्सापादिकानामिव त्रैपादिकानामपि विधीनामुपस्थितौ तदेकवाक्यतया तदुपकारकत्वस्यापि संभवेन न निरुक्तविशेषसंभवः। न च सापादिकपरिभाषादृष्टया त्रैपादिकविधीनामसिद्धत्वात्तद्विषयकाकाङ्क्षाया एवाभावान्न तदेकवाक्यतया तदुपकारकत्वमिति वाच्यम्। असिद्धत्वस्य कार्यार्थत्वेन कार्यज्ञानोत्तरमेव तत्प्रवृत्त्या तस्य च परिभाषादेशे विधीना मुपस्थितौ तदेकवाक्यतया लक्ष्यसंस्कारकमहावाक्यार्थबोधं विनाऽसंभवात्ततः पूर्वमसिद्धत्वस्य वक्तुमशक्यत्वादिति चेन्न। परिभाषाशास्त्राणां सामान्यतो वाक्यार्थबोधाभावे सप्तमीनिर्देशादिकेति पर्यालोचनाया एवासंभवा त्तथा विधीना मपि सामान्यतो बोधाभावे औपश्लेषिकाधिकरणसप्तम्यन्तत्वादिनिश्चयासंभवाच्च गुणप्रधानशास्त्रयो स्सामान्यवाक्यार्थबोधोत्तरमेव परस्पराकाङ्क्षावशात्परस्परैकवाक्यतया महावाक्यार्थबोधस्य वक्तव्यतया तादृशसामान्यबोधप्रयुक्तसामान्यकार्यज्ञानमादायैवात्र पक्षे परिभाषादेशे त्रैपादिक-विध्युपस्थितेः पूर्वमेव तदसिद्धत्वस्य सुवचतया निरुक्तविशेषस्य सुस्थत्वात्। कार्यकालपक्षे तु तादृशसामान्यबोधप्रयुक्तसामान्यकार्यज्ञानमादाय सापादिकपरिभाषादृष्ट्या त्रैपादिकविधीना-मसिद्धत्वेऽपि तद्दृष्ट्या सापादिकपरिभाषाणां सिद्धतया तदीयोपकारकाकाङ्क्षानुरोधेन त्रैपादिकविधि-प्रदेशे सापादिकपरिभाषाणा मुपस्थितेस्सुलभतया तदेकवाक्यतया तदुपकारकत्वं सुवचमिति बोध्यम्।

एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति षष्ठीस्थाने इति सूत्रे भाष्य उक्तम् ॥ अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते। कश्चित्परि-

---

यत्तु कार्यकाले तु तादृशसामान्यबोधप्रयुक्तकार्यज्ञानमाश्रित्य न त्रैपादिकासिद्धत्व-प्रवृत्तिः। किन्तु विशिष्टवाक्यार्थबोधप्रयुक्तविशेषकार्यज्ञानमाश्रित्य। अत एव पूर्वत्रासिद्ध सूत्रस्थभाष्यसंगतिरिति चन्द्रिकाकाराः। तन्न। यथोद्देशे सामान्यकार्यज्ञानस्य कार्यकाले विशेषकार्यज्ञानस्य चासिद्धत्वप्रयोजकत्वमिति विशेषकथने मानाभावात्। पूर्वत्रासिद्धमिति सूत्रस्थभाष्यस्य मदुक्तदिशा सुयोजत्वात्। यथोद्देशेऽपि परिभाषाणामेकवाक्यतयैव विध्युपकारकत्व-मित्यत्रार्थे मानमाह। [एतदेवेति।] पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतया विध्युपकारकत्व-मेवेत्यर्थः। [अभिप्रेत्येति।] अस्योक्तमित्यनेनान्वयः। [एकदेशस्थ इति।] उपदेशदेश-एव स्थित इत्यर्थः। [सुप्रज्वलित इति।] एतेन यथा दीपस्य प्रज्वलनोत्तरमेव सर्वगृह-प्रकाशकत्वं, न तु ततः प्राक्, एवं परिभाषाणामपि स्वीयसामान्यवाक्यार्थबोधोत्तरमेव विध्युपकारकत्वमिति सूचितम्।

नन्वधिकारपरिभाषयोः स्वतो भिन्नतया अधिकारशास्त्रविषयकतया प्रवृत्तमिदं भाष्यं कथमुक्तार्थे मानं भवतीत्याशङ्क्य कैय्यटोक्तं तद्भाष्यार्थमाह। [अधिकारशब्देनेति।] [पारार्थ्यादिति।] परार्थत्वाविशेषादित्यर्थः। [परिभाषापीति।] अपिना पूर्वत्रासिद्धमित्यादि-प्रसिद्धाधिकारशास्त्रसंग्रहः। भाष्यस्थकश्चित्पदस्यार्थमाह। [परिभाषारूप इति।]

ननु यथोद्देशपक्षे परिभाषादेशे सर्वविधिशास्त्रोपस्थितावात्मभेदकल्पनेनैकदेशस्थस्यैव परिभाषाशास्त्रस्य सर्वविधिशास्त्रोपकारकत्वसंभवेऽपि कार्यकालपक्षे तत्तद्विधिप्रदेशे परिभाषाणा-मेकवाक्यतया विध्युपकारकत्वात्तत्पक्षे कथमेकदेशस्थपरिभाषाशास्त्रस्य सर्वविध्युपकारकत्व-

भाषारूप इति कैयटः॥ दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यं- पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः॥ तत्रै-

---

मित्याशङ्क्य तद्भाष्याशयं दर्शयति। [दीपो यथेति।] अत्र दीपस्थानीयं परिभाषाशास्त्रम्। प्रभास्थानीयं विधिवाक्यार्थघटकतया स्वविधेयबुद्धिजननम्। प्रकाशस्थानीयश्च सर्वशास्त्रोपकार- इति बोध्यम्। [एतदिति।] परिभाषाशास्त्रमित्यर्थः। [स्वबुद्धिजननद्वारेति।] स्वस्यात्मन- आत्मीयस्याव्यवहितस्य पूर्वस्येत्याद्यंशस्य वा या बुद्धिः विधिवाक्येन सहैकवाक्यताबुद्धिः तज्जननद्वारेत्यर्थः। एवञ्च वाक्यैकवाक्यतया विध्युपकारकाणामलोऽन्त्यस्येत्यादीनां पदैकवाक्यतया विध्युपकारकाणां तस्मिन्निति निर्दिष्ट इत्यादीनां च संग्रहः। यथा प्रदीपस्य विषयदेशगमनमन्तरैव स्वीयप्रभाद्वारा, सर्वविषयप्रकाशकता एवं पठितदेशस्थस्यैव परिभाषाशास्त्रस्य तत्र तत्र स्वबुद्धिजननद्वारा सकलविध्युपकारकत्वम्। न तु कार्यकालपक्षे ऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनसंभव इति भावः। नन्विदं भाष्यं कार्यकालपक्षाभिप्रायकमेवेति कथमिदमत्र पक्षे परिभाषाणामेकवाक्यतासाधकमत आह। [एतच्चेति।] [पक्षद्वयेति।] पक्षविशेषानुपक्रमेण प्रवृत्तत्वाद्यथोद्देशे एकदेशस्थस्य सर्वशास्त्रोपकारकतायास्स्पष्टतया विनिगमना- विरहाच्चेति भावः। [प्रदेशैकवाक्यताया इति।] विधिप्रदेश एवेति विशेषानादरेण विध्येक- वाक्यताया इत्यर्थः। [इत इति।] अस्माद्भाष्यादित्यर्थः। [प्रतीतेरिति।] अत्र दीपदृष्टान्तेनैकवाक्यताप्रतीतिः। दीपो यथा स्वीयप्रभासंयोगं तत्तत्पदार्थेषु सम्पाद्य तत्तत्पदार्थ- प्रकाशकः एवमेतत्परिभाषाशास्त्रमपि स्वविधेयसंबन्धं विधिवाक्यार्थे संपाद्य विध्युपकारक- मित्यर्थस्य ततो लाभात्। भिन्नवाक्यतायान्तूपदेशदेशजन्यवाक्यर्थबोधेन गृहीतनियमस्मृत्या विधिशास्त्रोपकारकमिति प्रदीपदृष्टान्तस्य नातीव स्वारस्यमिति भावः। ननु यथोद्देशेऽपि परिभाषाणां संभवात् लाघवानुरोधेन च पदैकवाक्यताया एवाभ्युपगमे, विध्युपकारविषये

तावान्विशेषः। यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तं क्ङिति चेति सूत्रे कैयटे। यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जत इति॥ कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्रैकदेशस्थ इत्यनेन तत्र तत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा व्यवहर्तॄणां कार्यार्थमनेक-

---

[एतावानिति।] एतावानेवेत्यर्थः। न तु यथोद्देशे भिन्नवाक्यता कार्यकालपक्ष एकवाक्यतेत्येवमेकवाक्यताविषये प्रचीनोक्तविशेषोऽस्तीति भावः। प्रागुक्तस्त्रिपाद्यां प्रवृत्त्यप्रवृत्तिरूपो विशेषस्त्वस्त्येवेति बोध्यम्। एतावानित्यनेन विवक्षितं विशेषं दर्शयति। [यथोद्देश इति।] [आत्मभेदमिति।] परिभाषाभेदमित्यर्थः। [परिकल्प्येति।] अस्य स्थितानामिति शेषः। अत एव क्त्वाप्रत्ययस्योपपत्तिः। [तैरिति।] विधिसूत्रैरित्यर्थः। [एकवाक्यतेति] लाघवात्तदैकवाक्यता भवतीत्यर्थः। अत्रार्थे मानमाह [तदुक्त मिति] [गुणभेदमिति।] परिभाषाभेदमित्यर्थः। परिभाषादेशे संनिहितानामनेकेषां विधिसूत्राणामेकेन परिभाषाशास्त्रेणैकवाक्यताया असंभवात्तस्यावृत्तिःकल्प्यत इति भावः। [परिभाषाबुध्येति।] परिभाषाविधेयस्याव्यवहितस्य पूर्वस्येत्याद्यंशस्य बुद्ध्येत्यर्थः। एतेन तत्पक्षेऽपि न तद्देशगमनं परिभाषाणामिति सूचितम्।

कार्यकालपक्षे परिभाषाणां विधिदेशीयत्वमिति कैयटोक्तं तु निरुक्तन्यायविरुद्धत्वादुपेक्ष्यमिति सूचयन्नाह [अत्रैकदेशस्थ इत्यादिना।] [तद्बुद्धावपीति।] तत्तत्परिभाषाबोध्यस्याव्यवहितस्य पूर्वस्येत्याद्यंशस्य बुद्धावपीत्यर्थः। [तत्तद्देशस्थत्वमिति।] तत्तद्देशसंबन्धित्वमित्यर्थः। अत एव दृष्टान्ते न तद्देशीयत्वमित्येवोक्तमिति बोध्यम्। विधिदेशीयत्वाभावे दृष्टान्तमाह [यथेति।] अत्र व्यवहर्तृसदृशानि परिभाषाशास्त्राणि।

देशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः किं त्वभिजनदेशीयत्वव्यवहार एव, तद्वत्। निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः क्ङिति चेत्यत्र

---

अनेकदेशगमनसदृशंचानेकेषु विधिप्रदेशेषु स्वबुद्धिजननम्। नत्वचेतनस्य शास्त्रस्य तद्देशगमनसंभवः। [न तद्देशीयत्वव्यवहार इति।] न तद्देशसंबन्धित्वव्यवहार इत्यर्थः। [अभिजनदेशीयत्वेति।] यत्र स्वपूर्वैरुषितं तद्देशसंबन्धित्वव्यवहार एवेत्यर्थः। एवं च व्यवहर्तॄणां कार्यार्थमनेकदेशगमने ऽपि तत्र चिरावस्थाने ऽपि तद्देशीयत्वव्यवहाराभावस्य प्रसिद्धतया अचेतनत्वेन सर्वथा असंभावितविधिदेशगमनस्य परिभाषाशास्त्रस्य तद्देशे स्वबुद्धिजननमात्रेण तद्देशीयत्वव्यवहारस्सुतरामयुक्त इत्याशयः।

नचैवं परिभाषासादृश्यादङ्गीकृतपरिभाषात्वस्य क्ङिति चेत्यस्य कार्यकालपक्षे सार्वधातुकार्धधातुकयोरित्येतद्विध्येकवाक्यत्वेनाङ्गाधिकारीयतया न लुमतेति निषेधविषयप्रतिपादनपरक्ङिति चेति सूत्रस्थभाष्यविरोध इति वाच्यम्। तद्भाष्यस्य नलुमतेत्यत्र स्वरितत्वासंगेनाङ्गाधिकारपठितस्येव तदधिकारस्थैकवाक्यतापन्नस्यापि ग्रहणमित्याशयकताया उद्योते स्पष्टत्वात्। ननूक्तपक्षद्वयस्य संज्ञापरिभाषामात्रविषयकतया क्ङिति चेति निषेधविषये कार्यकालपक्षोपन्यासो भाष्यकृतामयुक्त इत्यत आह। निषेधवाक्यानामपीति। अपिना गुणशास्त्रस्य समुच्चयः [निषेध्यविशेषेति।] क्ङिति चेत्यादि निषेधशास्त्रेष्वनुवृत्तगुणवृध्यादिपदश्रुत्या तद्विशेषरूपनिषेध्यशास्त्राकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रोपस्थितौ व्यक्तिपक्षे विनिगमनाविरहात्तत्तद्विषयकनिषेधवाक्यानामुपप्लवेनैकवाक्यतयैवान्वय इति भावः। [इतीति] इति हेतौ। विध्येकवाक्यतया अन्वयरूपं यत्परिभाषासादृश्यं तस्मादित्यन्वयः। तथा च निषेधशास्त्रस्यारोपितं परिभाषात्वं न मुख्यमिति भावः। नन्वर्थैकत्वादेकं वाक्यं साकाङ्क्षं चे द्विभागे स्यादिति जैमिनीयोक्त्या भिन्नवाक्यतया पठितानां शास्त्राणामेकविधेयसमर्पकत्वमेकवाक्यत्वमित्यर्थलाभात्परस्परविरुद्धविधेयसमर्पकयोर्विधिनिषेधशास्त्रयोः कथमेकवाक्यत्व-

भाष्ये। तत्रैकवाक्यता पर्युदासन्यायेन। प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः॥

---

मित्यत आह। [तत्रैकवाक्यतेति।] [पर्युदासन्यायेनेति।] "यजतिषु ये यजामहं करोति नानुयाजेष्वि" त्यत्र प्रसज्यप्रतिषेधमाश्रित्य यजतिषु विषये ये यजामहं कुर्यादनूयाजेषु न कुर्यादित्येवं वाक्यभेदेनान्वयस्वीकारे गौरवापत्त्या यागत्वावच्छेदेन ये यजामहकरणविधाने अनूयाजयागेषु तस्य प्रतिषेधे च विहितप्रतिषिद्धत्वादनूयाजेषु तस्य वैकल्पिकत्वप्रसक्तेश्चानूयाजपदस्य लक्षणया तद्भिन्नपरत्वं समस्तस्यापि नञः तात्पर्यग्राहकत्वं चाश्रित्य पर्युदासपरतया अनूयाजभिन्नेषु यजतिषु ये यजामहं कुर्यादित्येवमेकवाक्यतयाऽन्वयः पूर्वतन्त्रे सिद्धान्तितः। तन्न्यायेनात्रापि क्ङिद्भिन्नसार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टस्येगन्ताङ्गस्येत्येवं पदैकवाक्यतयैवान्वयः। अन्यथा तदुक्तदोषद्वयप्रसंग इति भावः।

नन्वत्र शास्त्रे सर्वादीनि, द्वन्द्वे चेति विधिनिषेधाभ्यामेव द्वन्द्वे जसि विकल्पसिद्धौ विभाषा जसीति सूत्रारम्भसामर्थ्यान्निषेधाश्च बलीयांस इत्यर्थज्ञापनान्न विकल्पप्रसंगः। किंच विधिनिषेधयोः पर्युदासाभ्युपगमेऽ नचि चेत्यत्र नञिवयुक्तन्यायेनाज्भिन्ने अच् सदृशे हलीत्यर्थे अवसाने द्वित्वानापत्तिः। तथा च वाक् वाक्क् इति भाष्योदाहरणासंगतिः।

किंच तिङन्तसमभिव्याहृतस्यासमस्तस्य नञोऽत्यन्ताभावार्थकताया एवान्यत्र सिद्धान्तितत्वेनात्र पर्युदासपरतया व्याख्यानमयुक्तमित्याह [प्रसज्यप्रतिषेधेऽपीति।]

[तेन सहेति।] विधिशास्त्रेण सहेत्यर्थः। [वाक्यार्थबोधेति।] सार्वधातुकार्धधातुकयोरिगन्ताङ्गस्य गुणो भवति क्ङिति न भवतीति समूहालम्बनात्मकैकबोधाभ्युपगममात्रेणेत्यर्थः; [एकवाक्यताव्यवहार इति।] एकबोधीयविषयतासमर्पकत्वेनैकवाक्यताव्यवहार इति भावः। एवं च प्रसज्यप्रतिषेधपक्षे विधिनिषेधयोर्वाक्यैकवाक्यत्वमिति बोध्यम्। ननु परिभाषाणामिव संज्ञानामपि व्यवहर्तृदृष्टान्तेन पक्षद्वयेऽपि स्वदेशीयत्वस्यैव न्याय्यत्वाद्यथोद्देशेऽपि गृहीतशक्तिस्मरणेन त्रैपादिकविध्युपकारस्य सुवचत्वाच्च संज्ञाविषये यथोद्देशकार्यकालयो

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः। किन्तु प्रदेशवाक्येन सहैव। अत एवाणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नाददसोमाादित्येतत् प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थतया कार्य-

---

विशेषाभावादन्यतरपक्षावलम्बेनैव निर्वाहे पक्षद्वयाश्रयणं विफलमित्याशङ्क्य तद्विषये कार्यकालपक्षे विशेषं दर्शयति। [संज्ञाशास्त्रस्यत्विति।] तु शब्देन परिभाषापेक्षया कार्यकालपक्षेऽस्य वैलक्षण्यं सूचितम्। तदेव दर्शयति। [न पृथग्वाक्यार्थबोध इति।] विधिशास्त्रैकवाक्यतामन्तरा उपदेशदेशेऽसिद्धत्वाद्युपयोगी न कश्चिद्वाक्यार्थबोध इत्यर्थः। [सहैवेति।] वाक्यैकवाक्यतया विधिप्रदेश एव वाक्यार्थबोध इत्यर्थः। नचोपदेशदेशे सामान्यतोऽपि वाक्यार्थबोधाभावे तत्र संज्ञात्वस्य ग्रहीतुमशक्यतया विधिशास्त्रेण कथं तदाकर्षणमिति वाच्यम्। वाक्यार्थबोधाभावे ऽपि यथा मिदेर्गुण इत्यादौ प्रथमान्तगुणपदश्रुत्या विधेयबोधकत्वज्ञानेनेकोगुणवृद्धीति परिभाषाया उपस्थितिरेवं प्रथमान्तपदद्वयश्रुत्या तदर्थोपस्थितिमात्रेण च वृद्धिरादैजित्यादीनां संज्ञाशास्त्रत्वस्य सुग्रहतया विधिशास्त्रेण तदाकर्षणस्य सुलभत्वात्। परिभाषाशास्त्रस्य तूपदेशदेशे सामान्यतो वाक्यार्थबोधाभावे तत्र नियामकशास्त्रत्वस्य दुर्ग्रहतया कार्यकालपक्षे इकोयणचीत्यादेर्नियामकाकाङ्क्षायास्सत्वेऽपि तेन तस्मिन्निति परिभाषाशास्त्रस्याकर्षणं दुर्लभमतः कार्यकालपक्षेऽपि तासां सामान्यतः पृथग्वाक्यार्थबोध आवश्यक इत्यवधेयम्।

ननु सत्यपीदृशे विशेषे ऽयं विशेषो निष्फल इत्यत आह। [अत एवेति।] कार्यकालपक्षे संज्ञाशास्त्रस्य पृथग्वाक्यार्थबोधाभावादेवेत्यर्थः। [न मुत्वाद्यसिद्धमिति।] अन्यथा अदसो मादित्येतद्दृष्ट्या मत्वोत्वयोरसिद्धत्वात्प्रगृह्यत्वाभावेऽप्रगृह्यस्येति निषेधाप्रवृत्तौ अमू अमी इत्यादावनुनासिकापत्तिरिति भावः।

नन्वेवमप्यणोऽप्रगृह्यस्येत्यत्रादसो मादित्यस्योपस्थितेः प्रागेव संज्ञादृष्ट्या मुत्वस्यासिद्धत्वं कुतो नेत्यत आह। [असिद्धत्वस्येति।] [कार्यार्थतयेति। कार्यस्य

ज्ञानोत्तरमेव तत्प्रवृत्तिः कार्यज्ञानं च प्रदेश-देश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात्।

---

प्रवर्तकतया निवर्तकतया वेत्यर्थः। नन्वेवमप्यणोऽ प्रगृह्यस्येत्यत्र संज्ञाशास्त्रस्योपस्थित्यनन्तरं कार्यज्ञानस्य जायमानत्वेन तदुत्तरमुपस्थापकदेशगतपूर्वत्वमादाय संज्ञादृष्ट्या मुत्वस्यासिद्धत्वं दुर्वारमत आह। [कार्यज्ञानं चेति।] [तद्देशस्थस्येति।] अणोऽ प्रगृह्यस्येत्येतदेकवाक्यतापन्न-संज्ञाशास्त्रस्येत्यर्थः। [असिद्धत्वादिति।] मुत्वदृष्ट्या असिद्धत्वादित्यर्थः। [पूर्वग्रहणेनाग्रहणा-दिति।] मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटक पूर्वग्रहणेनाग्रहणादित्यर्थः। अयं भावः। पूर्वत्रासिद्धमित्यस्याधिकारत्वेन पूर्वत्र कर्तव्ये इदमसिद्धमिति तदर्थः। तत्र कार्यकालपक्षे तद्देशोपस्थितसंज्ञापरिभाषाणामप्यनेनासिद्धत्वं बोध्यते। एवं च मुत्वदृष्ट्या अनुनासिकविधेः तदेकवाक्यतापन्नसंज्ञाशास्त्रस्य चासिद्धत्वबोधनेन मुत्वविध्येकवाक्यतापन्न पूर्वत्रासिद्धशास्त्रघटक-पूर्वग्रहणेनादसोमादीदूदेदित्यनयोर्ग्रहीतुमशक्यतया न तद्दृष्ट्या मुत्वस्यासिद्धत्वम्। किंचासिद्धत्वस्य कार्यार्थतया कार्यज्ञानस्य च वाक्यार्थबोधोत्तरभावित्वेन प्रत्यासत्या यद्देशावच्छेदेन वाक्यार्थबोधः कार्यज्ञानं च तद्देशगतमेव पौर्वापर्यमसिद्धासिद्धिमद्भावनियामकमिति न संज्ञादृष्ट्या मुत्वस्यासिद्धत्वमिति। स्पष्टं चेद मीदूदेदिति सूत्रे उद्योते।

यत्तु असिद्धत्वादित्यस्य मुत्वशास्त्रैकवाक्यतापन्न पूर्वत्रासिद्धमित्येतत्प्रति संज्ञाशास्त्रस्य अणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नपूर्वत्रासिद्धमित्यनेनासिद्धत्वादित्यर्थ इत्यौत्तराहाः। तदयुक्तं। पूर्वत्रासिद्धमित्यस्याधिकारत्वेनान्यदृष्ट्यान्यस्यासिद्धत्वबोधनेपि स्वदृष्ट्या स्वस्यान्यस्य वा असिद्धत्वबोधनस्यास्वारसिकत्वात्। नचानुनासिकविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रापेक्षया मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रस्य भिन्नत्वेन तद्दृष्ट्या अनुनासिकविध्येकवाक्यतापन्नसंज्ञा-शास्त्रस्यासिद्धत्वं सुवचमेवेति वाच्यम्। अवध्यवधिमतोस्साजात्येन यत्किंचिन्निष्ठोद्देश्यतानिरूपित विधेयतासमर्पकस्यैवानुनासिकविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वपदेन ग्रहीतु मौचित्यत्। अत एवोद्योते मुत्वादिदृष्ट्यैवानुनासिकविध्येकवाक्यतापन्नसंज्ञाशास्त्रस्यासिद्धत्वमुक्तमीदूत्सूत्रे

एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्रत्य-परत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम्। अत एव कार्यकालपक्षे ऽयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसोमादिति सूत्रे भाष्य उक्तम्॥ आकडाराधिकारस्थभपदसंज्ञादि-

---

इति बोध्यम्। एतेन मुत्वशास्त्रतदेकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रैतदुभयदृष्ट्या संज्ञाया असिद्धत्वप्रतिपादनपरा हर्युक्तिरपास्ता।

ननूक्तरीत्या विधिदेशगतपौर्वापर्यस्यासिद्धासिद्धिमद्भावनियामकत्वेऽपि पाठकृत-स्वदेशीयत्वस्यानपायादयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसोमादिति सूत्रस्थभाष्यासंगतिरत आह। [एवमिति।] [तद्बोधोत्तरमेवेति।] विधिप्रदेशे संज्ञाशास्त्रोपस्थित्या यो वाक्यार्थबोध-स्तदुत्तरमेवेत्यर्थः। [विरोधप्रतिसंधानमिति।] प्रगृह्यसंज्ञाकार्यज्ञानमन्तरा विरोधपरिज्ञानासंभवेन तस्य च वाक्यार्थबोधोत्तरमेव सत्त्वेन तदुत्तरमेव विरोधप्रतिसंधानं न तु ततः प्रागित्याशयः। [तत्रत्यपरत्वमेवेति।] प्रदेशदेशगतपरत्वमेवेत्यर्थः। एतेन पाठकृतपौर्वापर्यव्यवच्छेदः। प्रत्यासत्त्या यद्देशावच्छेदेन विरोधप्रतिसंधानं तद्देशावच्छेदेन गृहीतपौर्वापर्यमेव विप्रतिषेध-शास्त्रप्रवृत्तिप्रयोजकमिति संज्ञानामत्र पक्षे पृथग्वाक्यार्थबोधाभावाद्विद्यमानमपि पाठकृतपौर्वा-पर्यमप्रयोजकमिति भावः। अत्रार्थे मानमाह। [अत एवेति।] [परैवेति।] प्रगृह्यसंज्ञायाः पूर्वप्रगृह्या इत्येतद्देशस्थत्वादिति भावः। ननूक्तभाष्यबलात्संज्ञानां विधिदेशी-यत्वाभ्युपगमे गां दोग्धि धनुषा विध्यतीत्यादौ द्वितीयाविध्येकवाक्यतापन्नकर्मसंज्ञादृष्ट्या तृतीया विध्येकवाक्यतापन्न करणसंज्ञादृष्ट्या च पञ्चमीविध्येकवाक्यतापन्नापादानसंज्ञाया एव परत्वा-दपादानमुत्तराणि कारकाणि बाधन्त इत्याकडारसूत्रस्थभाष्यकारीयसिद्धान्तव्याकोप इत्यत आह। [आकडाराधिकारस्थेति।] [भपदसंज्ञादीति।] अत एव राज्ञ इत्यादौ नलोपो न। अन्यथा अल्लोपनलोपशास्त्रैकवाक्यतापन्नयोर्भपदसंज्ञयोरनाकडारीयत्वेन बाध्यबाधकभावाभावे कृदादिसंज्ञानामिव परस्परसमावेशेऽल्लोप इव नलोपोऽपि स्यात्। एवं दंडिना गौर्येत्यादौ भविष्यति किं चिदनेन प्रयोजनमित्यभिसंधिमात्रेण प्राप्तभत्वेन पदत्वबाधान्नलोप प्रकृतिभावयो-

विषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्य-बाधकभावः। पदादिपदानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः। अत एव पूर्वत्रासिद्धमिति

---

स्प्रवृत्तिरपि यथोद्देशत्व एव सिद्धा। कार्यकालत्वे तु भत्वप्रयुक्तकार्याभावेन भत्वाप्रप्त्या तेन पदत्वस्य बाधायोगात्तयोरापत्तिर्दुर्वारेत्यवधेयम्। संज्ञादीत्यत्र कतन्तवत्तत्पुरुषबहुव्रीह्यो-रेकशेषाभ्युपगमात्सर्वासामप्याकडारीयसंज्ञानां संग्रहः। अत एव निरुक्तभाष्यसंगतिः। नदीसंज्ञायां यथोद्देशत्वस्यैव प्रतिपादनपरयूस्त्र्याख्याविति सूत्रस्थशेखरग्रन्थेन च न विरोधः। अत्र क्वचिदादिशब्दरहितः पाठः। तत्र पाठे भपदेत्येतदन्यासामप्याकडारीयसंज्ञाना-मुपलक्षणमिति बोध्यम्। नन्वेवं ष्यङस्संप्रसारणमिति सूत्रस्थभाष्यासंगतिः। तत्र-ह्यनन्त्यविकारपरिभाषाखण्डनावसरेऽनस्तक्ष्णइत्यदावादिभूतस्यानोऽकारस्य लोपवारणाय यजादि-स्वादिपरोऽनित्यर्थसंपत्तये "कार्यकालं संज्ञापरिभाषं" भस्येत्युपस्थितमिदं भवति यचि भमिति, तत्र यजादिस्वादिपरत्वेनान्कारं विशेषयिष्यामः, अनाऽकारमित्यनेन भसंज्ञायाः कार्यकालत्व-मुक्तमिति चेन्न। कार्यकालत्वेऽप्यन्यतरसंज्ञावाचकपदवैयर्थ्यापत्त्या अयुक्तायाः पदैकवाक्यताया-स्तत्र प्रदर्शितत्वेन तद्भाष्यस्यैकदेश्युक्तित्वात्। [तत्रत्यपरत्वेनैवेति।] स्वदेशकृतपरत्वेनैवेत्यर्थः।

नन्वेवमाकडरीयसंज्ञादृष्ट्या त्रिपाद्या असिद्धत्वात्तासां त्रिपाद्यामप्रवृत्तौ त्रैपादिक-विधिशास्त्रघटकसंज्ञावाचकपदेन स्वरूपविधिरेव स्यादत आह। [पदादिपदानामिति। तत्रेति।] स्वदेश इत्यर्थः। एवकारेण विधिप्रदेशे शक्तिग्रहनिरासः। [त्रिपाद्यामपीति।] अपि-स्सपादसप्ताध्यायीसमुच्चायकः। अयं भावः। असिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव तत्प्रवृत्त्या तस्य च विधिशास्त्रीयवाक्यार्थबोधोत्तरमेव सत्त्वेन विधिशास्त्रस्य सामान्यतोऽपि बोधाभावे नासिद्धत्वप्रवृत्तिः। तद्बोधश्च सुप्तिङन्तमित्यादिशास्त्रजन्यवाक्यार्थबोधेन पदादिपदानां गृहीतशक्तिस्मृत्यनन्तरमेव संभवति। न तु ततः प्राक्। वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वात्। एवं च सर्वथा संज्ञादृष्ट्या त्रिपाद्या असिद्धत्वं न संभवतीति। इद मनाकाडारीय प्रातिपदिकादिसंज्ञास्वपि तुल्यमेव। परेश्चघाङ्क्योरित्यादौ स्वरूपग्रहणे व्याख्यानमेव शरणमिति बोध्यम्। अत्रार्थे मानं दर्शयति। [अत एवेति।] उक्तरीत्या यथोद्देशेऽपि

सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयेण समाहितमित्याहुः ॥ यथोद्देश

---

संज्ञानां त्रिपाद्यामपि प्रवृत्तेरव्याहतत्वादेवेत्यर्थः। [परिभाषाणामेवेति।] एतेन संज्ञाव्यावृत्तिः। [समाहितमिति।] अन्यथा शङ्कासमाधानयोःसंज्ञास्वपि तुल्यत्वेन विशिष्यपरिभाषास्वेव तदुक्तिरसंगतेति स्पष्टमेवेति भावः। [आहुरिति।] अत्रारुचिबीजन्तु व्यवहर्तृदृष्टान्तेन परिभाषाणामिव संज्ञानामपि विधिदेशीयत्वाभावस्य न्याय्यतया कार्यकालपक्षे संज्ञानां विधिदेशीयत्वाश्रयणमयुक्तम्। कश्चिदेकदेशस्थ इत्यादिभाष्यमपि संज्ञापरिभाषोभयसाधारण-मिति वक्तुं शक्यम्। परिभाषारूप इति कैयटस्तु परार्थोपलक्षकतया योज्यते। अत एव निषेधशास्त्रसंग्रहः। संज्ञासु पदैकवाक्यताया असंभवेन दीपदृष्टान्तविरोधान्न तद्भाष्यं संज्ञाविषयक-मिति तु न युक्तम्। तद्दृष्टान्तबलेन कथं चिद्विधिप्रकाशकताया एकवाक्यतायाश्च लाभेऽपि पदैकवाक्यतायाश्शब्दमर्यादया अलाभात्। अतएव क्क्ङिति चेति सूत्रविषये तद्दृष्टान्तोपान्यासः स्वरसतस्संगच्छते। अन्यथा प्रसज्यप्रतिषेधपक्षे निषेधशास्त्राणां विधिभिर्वाक्यैकवाक्यताया एवाङ्गीकारात्तद्दृष्टान्तासंगतिस्स्पष्टैव। संज्ञानामपि कार्यकालपक्षे निषेधशास्त्राणामिव प्रदेशवाक्येन सह वाक्यैकवाक्यतया बोधान्न तद्दृष्टान्तासंगतिः।

यत्तु। दीपो यथा स्वावयवप्रभासंबद्धपदार्थप्रकाशकः तथा परिभाषापि स्वावयव-विधेयसंबद्धमेव विधिशास्त्रमभिज्वलयतीत्यर्थ इति स्पष्टमेव दीपदृष्टान्तेन पदैकवाक्यता लभ्यते। वाक्यैकवाक्यतायां त्ववयवसम्बन्धाभावादृष्टान्तासंगतिरिति दीपदृष्टान्तेन पदैकवाक्यता प्रतीयत इति विजयाकृत आहुः। तन्न। दीपप्रभयोरवयवावयविभावसम्बन्धस्यायुक्तत्वात्। अवयवावयविनोरयुतसिद्धत्वेनावयविनमन्तराऽवयवस्य देशान्तरगमनासम्भवात्। प्रभाया विषयदेशगमनस्य सर्वानुभवसिद्धत्वात्। किंच तयोरवयवावयविभावाङ्गीकारे अवयवनाशाद-वयविनाशस्य सुप्रसिद्धतया प्रभानाशे दीपनाशप्रसंगात्। दीपनाशात्प्रभानाशस्य दृष्टत्वेऽपि प्रभानाशाद्दीपनाशस्यादृष्टत्वात्। अतस्सम्बन्धान्तरमेव तयोराश्रयणीयमिति न तेन पदैकवाक्यताप्रतीतिः। किंच तेन सर्वथा पदैकवाक्यताया एव प्रतीतौ वाक्यैकवाक्यतया

# पक्षः प्रगृह्य संज्ञाप्रकरणे भाष्ये ॥ २ ॥ कार्यकालमित्यस्य

विध्युपकारकाणामसंग्रह इत्यवधेयम्। अयादिभ्यः परैव प्रगृह्यसंज्ञा, इत्यदसो मादिति सूत्रस्थ-भाष्यं तु प्रगृह्यसंज्ञाप्रयुक्तः प्रकृतिभावः पर इत्यर्थकमिति न तेन विधिदेशीयत्वलाभः। अन्यथा संज्ञाया अन्तरङ्गत्वात्तदसंगतिरेव। कथं कार्यकालं संज्ञापरिभाषमित्यादितदुत्तरभाष्य-मेकदेशिनोरुक्तिप्रत्युक्तिपरमेव स्पष्टं चेदमुद्योते। किंचेदं खल्वपि भूयस्सामानाधिकरण्य-मेकविभक्तिकत्वं च द्वयोश्चैतद्भवति। विशेषणविशेष्ययोः संज्ञासंज्ञिनोर्वेत्यादि वृद्धिसूत्रस्थभाष्येण सामानाधिकरण्यविशिष्टसमानविभक्तिकत्वस्यैव संज्ञासंज्ञिभावप्रत्यायकताया लाभाद्वाक्यार्थबोधमन्तरा सामानाधिकरण्यस्य ग्रहीतुमशक्यतया वृद्धिरादैजित्यादीनामत्रापि पक्षे संज्ञाशास्त्रत्वज्ञानाय सामान्यत उपदेशदेशे पृथग्वाक्यार्थबोध आवश्यकः। अन्यथा विधिशास्त्रेण तदाकर्षणस्य दुर्लभत्वात्। एवं च परिभाषाणामिव संज्ञानामपि सामान्यवाक्यार्थबोधप्रयुक्तसामान्यकार्यज्ञान-मादायाष्टाध्यायीपाठकृतपौर्वापर्यमाश्रित्यैव पूर्वत्रासिद्धशास्त्रस्य विप्रतिषेधशास्त्रस्य च प्रवृत्तिरुचिता। तयोर्वैषम्ये बीजाभावात्। ध्वनितं चेद मयादिभ्यः परैवेत्यादिभाष्यस्य परेत्वित्यादिना प्रगृह्यसंज्ञाप्रयुक्त प्रकृतिभावस्य परत्वप्रतिपादनतात्पर्यकत्वमुपवर्णयता, उद्योतकृता। प्रगृह्यसंज्ञादृष्ट्या मुत्वादेरसिद्धत्वाभावस्त्ववध्यवधिमतो स्साजात्यनियमान्मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटक पूर्वग्रहणेन संज्ञानामग्रहणात्सिद्धः। साजात्यं च भेदसंसर्गकविधेयसमर्पकत्वेन। संज्ञाशास्त्राणां त्वादैचो वृद्धिपदाभिन्ना इत्येवं वाक्यार्थबोध इति न तादृशविधेयसमर्पकत्वम्। एवं चाकडारीयसंज्ञासु कार्यकालपक्षोऽपि निर्बाधः। अत एव भसंज्ञाविषये कार्यकालत्वोपपादनपरं ष्यङ इति सूत्रस्थं भाष्य-मपि स्वरसत उपपद्यते। पदैकवाक्यताप्रयुक्तेनांशान्तरीयाप्रामाण्येन सर्वस्याप्रामाण्ये मानाभावः। अत एव पक्षविशेषानुपक्रमेण नदीसंज्ञाविषये प्रवृत्तमवयवस्त्रीविषयत्वात्सिद्धमिति नदीसंज्ञासूत्रस्थं भाष्यमपि संगच्छत इति। विवृतं चैतन्मदीये गुरुप्रसादशेषे। अत एवान्यत्रेवात्रापि स्वसिद्धान्तस्य परेत्वित्यादिना प्रतिपादनीये केचित्त्वित्यादिनोक्तिरितीति सुधियो विभावयन्तु। एतत्पक्षसत्त्वे मान माह। [यथोद्देशपक्ष इति।]

अथ द्वितीयां परिभाषां व्याचष्टे। [कार्यकालमित्यस्य चेत्यादिना।] चस्त्वर्थे। ननूभयोरचेतनत्वात्कथं विधिशास्त्रेण गुणशास्त्रस्य कार्यदेशप्राप्तिरित्यत आह।

च कार्येण काल्यते स्वसंनिधिं प्राप्यत इत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत्॥ अत एव पूर्वत्रासिद्धमिति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा

---

[कार्येणेत्यादिना।] कार्येण=कार्यविधायकशास्त्रेण, स्वसंस्काराय=स्वीयलक्ष्यसंस्कारकमहावाक्यार्थ बोधाय। [स्ववृत्तिलिंगेत्यादि।] स्ववृत्ति यल्लिङ्गमौपश्लेषिकाधिकरणसप्तम्यन्तत्वादिरूपं तेन चिह्निता याः परिभाषा स्तस्मिन्नित्यादय स्तासामित्यर्थः। [आक्षेप इति।] शाब्दाकाङ्क्षया शब्दतस्सम्बन्ध इत्यर्थः। विधीनामचेतनत्वेऽप्यारोपिताकाङ्क्षया परिभाषाणामाक्षेप इति भावः। स च पदोपस्थापकपरिभाषासु तस्मिन्निति निर्दिष्ट इत्यादिषु परिभाषाबोध्यस्याव्यवहितस्य पूर्वस्येत्याद्यंशस्य तत्समानार्थकशब्दान्तरस्य वा प्रदेशेषु सम्बन्धः। यद्वा प्रदेशघटकस्यैव षष्ठ्याद्यंशस्याव्यवहितपूर्वत्वविशिष्टार्थलाक्षणिकत्वमित्येवं प्रकारेण वा भवति। एतेनाक्षिप्तस्य कथं शाब्दान्वयित्वमिति शङ्कानिरासः। वाक्यैकवाक्यतया विध्युपकारकाणामलोऽन्त्यस्येत्यादीनां संज्ञानां च विधिशास्त्राकाङ्क्षया विधिप्रदेशे उपस्थितिरिति बोध्यम्। भाष्यविरुद्धत्वादस्य पक्षस्य कैयटोक्त आशयो न युक्त इति ध्वनयन्निरुक्ताक्षेपस्यैव परिभाषार्थत्वे मान माह। [अतएवेति।] अस्यास्तदाक्षेपार्थकत्वादेवेत्यर्थः। [तत्रेति।] त्रिपाद्यामित्यर्थः। [अप्रवृत्तिमाशङ्क्येति।] परस्पराकाङ्क्षयैव गुणप्रधानशास्त्रयोः परस्परसंबन्धस्य वक्तव्यतया त्रैपादिकविधीनां सापादिकपरिभाषाविषयकाकाङ्क्षासत्त्वेऽपि त्रिपाद्या असिद्धत्वात्सापादिकपरिभाषाणां तद्विषयकाकाङ्क्षाया अभावात् कथं त्रिपाद्यां प्रवृत्तिरिति तदाशयः। पक्षद्वयसाधारणीयमाशङ्का भाष्यकृतः। कार्यकालपक्षे त्रिपाद्यामन्यतराकाङ्क्षयापि संज्ञापरिभाषाणामुपस्थितिरित्याशयेन समाधत्ते। [यद्यपीदमिति।] [तत्त्विह सिद्धमिति।] परिभाषाशास्त्रं तु त्रिपाद्यां सिद्धमित्यर्थः। एवं च सपादायां सप्ताध्याय्यामुभयाकाङ्क्षया संबन्धः। त्रिपाद्यां तु विधिशास्त्राकाङ्क्षयैवेति भावः। भाष्ये कथमित्यस्येदृशविशेषसत्त्वेऽपि त्रिपाद्यां प्रवृत्तिः कथं सिद्धेत्यर्थः। असिद्धेऽसि-

तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ॥ न च कार्यकालपक्षे ङमो ह्रस्वादित्यादौ तस्मादित्युत्तरस्य तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति तस्मिन्निति-सूत्रस्थभाष्यासंगतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः। स्पष्टं चेदमिको गुणेत्यत्र कैयट इति

---

न्कथं तदुपस्थितिरुत्थाकाङ्क्षाया अभावादिति भावः। उत्तर माह [कार्यकालमिति।] अत्र पक्षे ऽन्यतराकाङ्क्षयापि संबन्धात्तत्सिद्धिरिति भावः। अस्य पक्षस्य कैयटोक्ताशयकत्वे तु यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमिति भाष्यस्य निष्फलत्वं स्यादिति तत्रैवोद्योते स्पष्टम्। अयमत्र कैयटाशयः। अत्र पक्षे संज्ञापरिभाषाणामत्यन्तपारार्थ्यान्न स्वातन्त्र्येण कार्यावगमहेतुत्वम्, केवलमाचार्येण लाघवायानेकप्रधानाङ्गवद्भावप्रतिपत्तये पृथगुपदेशः कृतः। ततश्च तस्मिन्निति निर्दिष्टे पूर्वस्येत्यनेन केवलेन न किंचित् क्रियते। नापि झलो झलीत्यनेन। किन्तु संहत्य कार्यं क्रियते। ततो झल्यनन्तरे पूर्वस्य सकारस्य झलः परस्य लोप इति वाक्यार्थ इत्येकवाक्यतायां पौर्वापर्याभावादसिद्धत्वाभाव इति। स्पष्टं चेदं पूर्वत्रासिद्धमिति सूत्रे कैयटे। अत्र मते कार्यकालमित्यस्य कार्येण समकालं तयोः प्रवृत्तिरित्यर्थः। अस्य पक्षस्यैवमाशयकत्वे निरुक्तभाष्यस्य निष्फलत्वापत्तिः। किंचैकवाक्यताज्ञानोत्तरं पौर्वापर्याभावज्ञाने असिद्धत्वाभावज्ञानं तज्ज्ञाने चैकवाक्यतेत्यन्योन्याश्रयश्चेति न तद्युक्तमिति नागेशाशय इति बोध्यम्। ननु विरोधप्रतिसंधानस्य विप्रतिषेधशास्त्रप्रवृत्तिप्रयोजकतया तस्य च कार्यज्ञानोत्तरमेव सत्त्वेन तदुत्तरमेव तत्प्रवृत्तिर्वाच्या, कार्यज्ञानं चात्र पक्षे प्रदेशदेश एवेत्युभयनिर्देशेषु ङमो ह्रस्वादचीत्यादिषु तस्मिन्निति तस्मादित्यनयोरुभयोरप्येकदेशस्थत्वेन विप्रतिषेधशास्त्रप्रवृत्तेरयोगाद्भाष्यविरोधो लक्ष्यासिद्धिश्चेति शङ्कते। [न चेति।] [कैयट इति।] यथोद्देश

वाच्यम्॥ विप्रतिषेध सूत्रे ऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात्। नहि कार्यकालपक्ष इत्येतावता

---

एव परिभाषयोः पौर्वापर्यं न तु कार्यकालतायामिति तत्र तेन स्फुटीकृतमिति भावः। [विप्रतिषेधसूत्रे ऽष्टाध्यायीपाठकृतेति।] परिभाषाणामत्रापि पक्षे सामान्यत उपदेशदेशे पृथग्वाक्यार्थबोधस्य प्रागुपदर्शितत्वेन तादृशसामान्यबोधप्रयुक्तसामान्यकार्यज्ञानमादाय विरोधप्रतिसंधानाद्विप्रतिषेधशास्त्रप्रवृत्तिरिति भावः। संज्ञाशास्त्रस्य त्वत्र पक्षे उपदेशदेशे पृथग्वाक्यार्थबोधाभावेन सामान्यकार्यज्ञानस्याप्यभावाद्विरोधप्रतिसंधानाभावेन न पाठकृतपरत्वमाश्रित्य विप्रतिषेधशास्त्रप्रवृत्तिः। अतएवायादिभ्यः परैवेत्यादि प्रागुक्तभाष्यसंगतिरिति बोध्यम्।

वस्तुतस्तु परिभाषाणामिव संज्ञानामप्यत्र पक्षे सामान्यत उपदेशदेशे पृथग्वाक्यार्थबोध आवश्यकः। अन्यथा तासु संज्ञाशास्त्रत्वप्रतीतेरभावाद्विधिशास्त्रेण तदाकर्षणस्य-दुर्लभत्वात्। न च प्रथमान्तपदद्वयश्रुत्या तासु संज्ञाशास्त्रत्वग्रहस्सुलभ इति वाच्यम्। इदं खल्वपि भूयस्सामानाधिकरण्यमेकविभक्तिकत्वं च द्वयोश्चैतद्भवति। कयोः? विशेषणविशेष्ययोः संज्ञासंज्ञिनो र्वा, इत्यादिभाष्येण सामानाधिकरण्यविशिष्टसमानविभक्तिकत्वस्यैव संज्ञासंज्ञिभाव प्रत्यायकताया लाभाद्वाक्यार्थबोधमन्तरा तादृशसामानाधिकरण्यस्य दुर्ग्रहत्वात्। समानविभक्तिकपदश्रवणमात्रेण तु न तद्ग्रहः। गौरश्व इत्यादौ व्यभिचारात्। एवं परिभाषाणामिव संज्ञानामपि सामान्यबोधप्रयुक्तसामान्यकार्यज्ञानमादायाष्टाध्यायीपाठकृतपरत्वमाश्रित्यैव पूर्वत्रासिद्धशास्त्रस्य विप्रतिषेधशास्त्रस्य च प्रवृत्तिरुचिता। तयोर्वैषम्ये बीजाभावात्। ध्वनितं चेदमयादिभ्यः परैव प्रगृह्यसंज्ञेत्यादिभाष्यस्य परेत्वित्यादिना प्रगृह्यसंज्ञाप्रयुक्त प्रकृतिभावस्य परत्वप्रतिपादनतात्पर्यकत्वमुपवर्णयता उद्योतकृतेत्यवधेयम्। अत्रैकदेशस्थ इत्यादिना प्रसंगादस्यार्थस्य प्रागुक्तत्वेऽपि, अत्र तदर्थनिरूपणस्य प्रस्तुतत्वेन पुन स्तदर्थनिरूपणे न पौनरुक्त्य-

तदपैति। पक्षद्वये ऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात्। नहि तत्पक्षे ऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति। अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम्। अत एव तस्मिन्निति सूत्रे कैयटः सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति। इकोगुणेति सूत्रस्थकैयटस्तु चिन्त्य एव॥

---

मिति बोध्यम्। [तदपैतीति।] अष्टाध्यायीपाठकृतं पौर्वापर्यं नापैतीत्यर्थः। [प्रदेशेष्विति।] विषयसप्तमीयम्। तथा च विधिप्रदेश एवेति विशेषानादरेण पक्षद्वयेऽपि विधिशास्त्रविषये स्वबुद्धिजननेन विशेषाभावादित्यर्थः। ननु कार्यकालपक्षे गुणशास्त्राणां प्रदेशदेशगमनात् कथं विशेषाभावोऽत आह। [नहि तत्पक्षेऽपीति।] अपिना यथोद्देशसमुच्चयः। ननु शास्त्रस्याचेतनत्वेन तद्देशगमनासंभवेऽप्यस्माकं तादृशबुद्धेसत्त्वात् तद्देशीयत्वं कुतो नेत्यत आह। [नाप्यस्मदादीति।] अत एवेति। स्वदेशात्यागादेवेत्यर्थः।

ननु मास्तु स्वदेशत्यागः विधिदेशीयत्वं तु स्यादेव कथमन्यथा संज्ञानामपि तत्स्यादत आह। [अत एवेति।] विधिदेशीयत्वाभावादेवेत्यर्थः। कश्चिदेकदेशस्थ इत्यादि भाष्यादेतत्कैयटग्रन्थाच्च परिभाषाणां विधिदेशीयत्वाभावः। संज्ञानां तु अयादिभ्यः परैवेत्यादि भाष्यात्तत्त्वमिति भावः। वस्तुतस्तु कश्चिदेकदेशस्थइत्यादिभाष्यम्, तस्मिन्निति सूत्रस्थकैयटश्च संज्ञापरिभाषोभयसाधारणम्। अयादिभ्यः परैवेत्यादि भाष्याशय उक्त एवेति बोध्यम्।

नन्वेवं यथोद्देश एव परिभाषयोः पौर्वापर्यं न तु कार्यकालतायामिति प्रागुक्तकैयटविरोध इत्यत आह। [इको गुणेति।] [चिन्त्य एवेति।] कश्चिदेकदेशस्थ

अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्। किं च क्ङिति चेति सूत्रस्थ कैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याहन्येत। एवं च वृक्षेभ्य इत्यत्र सुपि चेत्यतः परत्वाद् बहुवचने झल्येदित्येत्त्वमित्याद्युच्छिद्येतेत्यलम् ३ ॥

---

इति भाष्यविरोधान्निरुक्तस्वग्रन्थविरोधाच्चेति भावः। अस्मदादीनां विधिप्रदेशे परिभाषाबुद्धिजननमात्रेण तासां स्वदेशत्यागे बाधकमाह। [अन्यथेति।] अस्मदादिबुद्धिजननेन स्वदेशत्याग इत्यर्थः। [प्रयोगार्थत्वेनेति।] एवं च यथा संज्ञापरिभाषाणां कार्यार्थत्वेन तद्देशे तदुपस्थितिरेवं सर्वेषामपि शास्त्राणां प्रयोगार्थत्वेन तत्र सर्वेषामप्युपस्थितौ प्रयोगरूपैकदेशस्थत्वात्पौर्वापर्यव्यहारस्यैवोच्छेद इति भावः।

ननु विप्रतिषेधशास्त्रसार्थक्या न्यथानुपपत्त्या प्रयोगातिरिक्तप्रदेशसंबन्धकृतमेव परत्वं तत्सूत्रप्रयोजकमिति कल्पनान्नायं दोषोऽत आह। [किंचेति।] [सन्निधानेनेति।] बौद्धसंनिधानेनेत्यर्थः। [तेषामिति।] तेषामपीत्यर्थः। इष्टापत्तौ बाधकमाह। [एवं चेति।] किंच भाष्यसम्मतफलाभाव एव परिभाषाणां विधिदेशीयत्वाभावे तथाविधपरत्वस्य विप्रतिषेधशास्त्रविषयत्वाभावे च मूर्धाभिषिक्तो हेतु रिति न तदर्थं हेत्वन्तरान्वेषणप्रयासावसर इति ध्वनयन्नुपसंहरति। [अल मिति।]

# इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसंदेहआह ॥

---

पूर्वपरिभाषयाऽस्यास्सगतिं ध्वनयितुमादौ व्याख्यास्यमानपरिभाषाघटकानुबन्धपदस्यार्थमाह। [इत्संज्ञका इति।] एतेनानुल्लिख्य परिभाषां तद्घटकानुबन्धपदस्यार्थवर्णनमसंबद्धमिति शङ्का निरस्ता। संगतिश्चास्यास्संज्ञाप्रसंगेन स्मृतिविषयीभूतेत्संज्ञाविशिष्टवर्णविषयकावयवानवयवत्वसन्देह एवेति बोध्यम्। अनुबन्धपदे अनुपूर्वाद्बध्नातेः कर्मणि घञ् अनुरप्रधानवाची बध्नातिरुच्चारणार्थः। एवंचानुबन्धपदस्यावयवशक्त्या आचार्यकर्तृकाप्रधानीभूतोच्चारणविषया इत्यर्थः। अप्राधान्यं च लक्ष्यसमवायातिरिक्तकार्यसमर्पत्वम्। तथाचाचार्यकर्तृकलक्ष्यसमवायातिरिक्तकार्यसमर्पकोच्चारणविषयत्वमनुबन्धत्वमिति फलितम्। तच्चोच्चारणसौकर्यरूपकार्यसमर्पकेषु ख्यत्यादित्यादावुच्चारणार्थकाकारादिष्वप्यस्तीति तत्रातिप्रसंगः। यदि तु तादृशातिप्रसंगवारणायेत्संज्ञाप्रयुक्तस्वनिवृत्तिव्यतिरिक्तलक्ष्यगतकार्यसमर्पकत्वं तत्त्वमित्युच्यते तदा प्रत्याहारेऽनुबन्धानामित्यत्र वार्णसमाम्नायिकेष्वित्संज्ञकेषु भाष्यकृत्कृतस्यानुबन्धत्वव्यवहारस्यासंगतिः। तेषां प्रत्याहारमात्रोपयोगित्वेऽपि लक्ष्यगतकार्यसमर्पकत्वस्याभावात्। अतः पङ्कजादिपदवदिदमनुबन्धपदं योगरूढ्येत्संज्ञकवर्णबोधकमिति न काप्यनुपपत्तिरित्याशयः।

[तेष्विति।] इत्संज्ञकवर्णविषय इत्यर्थः। [अवयवानवयवत्वसंदेह इति। उपस्थापके उपलभ्यमानस्यानुबन्धस्य वृक्षे उपलभ्यमानयोः शाखाबलाकयो रिवावयवानवयवत्वयोरुभयो रपि दर्शनात्संदेह इत्यर्थः। अयं भावः। यदि तेषा मवयवत्वं तदा मेङ उपदेशे एजन्तत्वाभावेनात्वाप्राप्त्या उदीचां माङ इति निर्देशासंगतिः। तथा उपदेशेऽजनुनासिक इति सूत्रस्योपदेशग्रहणस्य वैयर्थ्यापत्तिः। तद्धि अभ्र आँ अटित इत्यादावाङेऽनुनासिक इत्यनेन विहितस्यानुनासिकाकारस्येत्संज्ञावारणाय। तथासत्यादिनश्चेतीण्णिषेधः स्यादिति। अनुबन्धानामेकान्तत्वेत्वादित इत्यादेरित्संज्ञकाकारावयवस्येत्याद्यर्थात्तस्येत्संज्ञायां सत्यामप्यटधातोस्तादृशाकारावयवकत्वाभावेनेण्णिषेधाप्राप्तावुपदेशग्रहणं व्यर्थम्। किंचौशादीनामनेकाल्त्वादेव सर्वादेशत्वे सिद्धे अनेकाल् शिदिति सूत्रस्थशिद्ग्रहणवैयर्थ्यापत्तिश्च। यदि तु तेषा मुक्तप्रमाणबला-

## अनेकान्ता अनुबन्धा इति ॥ ४ ॥

अनेकान्ता अनवयवा इत्यर्थः। यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथा, तदर्थभूते

---

दनवयवत्वमित्युच्यते, तदा आटश्चेत्यादि निर्देशासंगतिः। समुदायस्यानर्थकत्वेनाप्रातिपदिकत्वात्समुदायाद्विभक्तेर्दुर्लभत्वात्। तथा तस्य लोप इत्यनेन लोपविधानस्य वैयर्थ्यापत्तिश्च। किंचावयवत्वेन बोधकान्त्यपदघटितहलन्त्यसूत्रस्वारस्यभङ्गापत्तिश्चेत्यतस्तेषामुपस्थापकावयवत्व मनवयवत्वं वेति संदेह इति। [अनेकान्ता इति।] इत्यस्येति शेषः। अत एव इत्यर्थ इत्यनेनान्वयस्सुलभः। अनवयवत्वं व्यतिरेकमुखेन दर्शयति। [योह्ययवयव इति।] शाखादिरित्यर्थः। शाखादीनामपि कुठारदिना छेदनोत्तरमवयविनि वृक्षेऽनुपलंभादाह। [कदाचिदिति।] छेदनरूपानुपलंभकयत्नाभावे इत्यर्थः। [तत्रेति।] अवयविनि वृक्ष इत्यर्थः। [उपलभ्यत एवेति।] छेदनादिरूपानुपलम्भकयत्नाभावे न कदाप्यवयविनि नोपलभ्यते। अपि तु सर्वदोपलभ्यत एवेति भावः।

[अयन्तु न तथेति।] अयमनुबन्धस्तु नावयवइत्यर्थः। तत्र हेतुमाह। [तदर्थभूत इत्यादिना।] इत्संज्ञकणकारादीनामवयवित्वेनाभिमतं यत्सौत्राणादिपदं तस्यार्थभूते विधेये औपगवादिलक्ष्यघटकाकारे कदाप्यदर्शनादित्यर्थः। अनुबन्धविनिर्मुक्तस्यैव पदार्थस्य सर्वथा लक्ष्ये उपस्थित्या न कदापि विधेये अनुबन्धानां दर्शनमिति भावः।

नन्वनुबन्धानामुपस्थापकानवयवत्वस्यैव सिसाधयिषितत्वात्तद्भिन्ने उपस्थाप्ये कदाप्यदर्शनं कथं तेषामनवयवत्वं साधयेत्। न हि शरीरावयवस्य हस्तादेर्वृक्षादावदर्शनेन शरीरानवयवत्वं शक्यते वक्तुमितिचेदत्र केचित्। उपस्थापकावयवत्वेन निश्चितानामनङादिघटकनकारादीनां लोपशास्त्रज्ञानात्पूर्वमुपस्थाप्ये दर्शनवत्प्रकृते तदभावेन तेषामुपस्थापकानवयवत्वमित्याशय इति वदन्ति।

वस्तुतस्तु यो ह्यवयवस्स कदाचित्तत्रोपलभ्यत एवेति व्यतिरेकदृष्टान्तेनावयवविन्युपलम्भानुपलम्भयोरेवावयवानवयवत्वसाधकतायास्स्वरसतः प्रतीत्या तद्भिन्ने उपस्थाप्ये अनुबन्धानामनुपलम्भो यद्यपि नानवयवत्वं साधयितु मीष्टे। तथाऽपि वाच्यवाचकयो स्तादात्म्याङ्गीकारादवयविवत्वेनाभिमतसौत्राणादिपदबोध्यस्याप्यवयवित्वेन तत्र तेषा मनुपलम्भेनानवयवत्व मित्याशयः। अत एव विधेयस्य तदर्थभूत इति विशेषणं स्वरसत स्संगच्छते वाच्यवाचकयो स्तादात्म्यात्तस्याप्यवयवित्व मित्यर्थध्वननायैव तदुक्तेः। नचैवमप्यवयविन्युपस्थापके लोपशास्त्रज्ञानात्पूर्वमनुबन्धानामुपलम्भात्कथ मनवयवत्वमिति वाच्यम्। यो ह्यवयव स्स कदाचित्तत्रोपलभ्यत एवेत्येवकारस्वारस्येनावयवित्वावच्छेदेन तदुपलम्भस्यैवावयत्वसाधकतायाः प्रतीत्या तेषामुपस्थापकदेशावच्छेदेनावयविन्युपलम्भेऽप्युपस्थाप्यदेशावच्छेदेन तत्रानुपलम्भान्नावयवत्वमित्याशयादिति बोध्यम्।

ननु जसश्शीत्यादावादेशप्रवृत्तेः पूर्वं प्रत्ययत्वप्रयुक्ताया इत्संज्ञाया अभावेन तन्निवृत्त्ययोगादुपस्थाप्ये? प्रत्ययसंज्ञोत्तरं तदुपलम्भस्य दुर्वारतया अनुबन्धत्वेनानुबन्धस्य विधेये कदाप्यदर्शनस्य हेतोः स्वरूपासिद्धिः। किंच गोद इत्यादौ विधीयमानकप्रत्ययविषयेऽणोऽप्यापत्तिः। तत्र विधानात्पूर्वं प्रत्ययत्वप्रयुक्ताया इत्संज्ञाया अभावेन ककारे विधेयानवयवत्वस्य वक्तुमशक्यतया वासरूपन्यायस्य दुर्वारत्वादिति चेन्न। जसश्शीत्यादीनामनेकाल्शिदित्यादिपरिभाषाशास्त्रसहकारेणादन्तात्सर्वनाम्नः परस्य जसः शी भवन् सर्वस्य स्थाने भवतीत्येवं प्रकारेण महावाक्यार्थबोधे जाते श्यादीनां लक्ष्यप्रवृत्तेः प्रागेव स्थनिवत्सूत्रसहकारेण प्रत्ययत्वज्ञानस्य सुलभतया अन्तरङ्गत्वादित्संज्ञालोपयोः कृतयोरनुबन्धविनिर्मुक्तस्यैव पदार्थस्य लक्ष्ये उपस्थित्या निरुक्तस्वरूपासिद्धत्वरूपदोषस्याप्रसरात्। अत एवानुबन्धविनिर्मुक्तस्यैव पदार्थस्य लक्ष्ये उपस्थितिरिति ग्रन्थकृत्सिद्धान्तस्य निखिलानुबन्धव्यापकतासिद्धिः। अन्यथा औशादिष्वनुबन्धविनिर्मुक्तस्योपस्थितिः श्यादिषु तत्सहितस्येत्यर्धजरतीयत्वापत्तिः। किंचान्यत्रत्वन्तरङ्गत्वात् प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्संज्ञेति हलन्त्यसूत्रस्थशेखरे प्रायग्रहणं कुर्वता ग्रन्थकृतापि सूचितोऽयमर्थः। तेन क्वचिदुपदेशोत्तरकालमित्संज्ञाप्रवृत्तेरयोगेऽपि वाक्यार्थबोधोत्तरं लक्ष्ये प्रवृत्तेः प्राक्तत्प्रवृत्तिरित्यर्थस्य लाभात्। एवं नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापनपरानेकाल्शिदिति सूत्रस्थभाष्यप्रामाण्येन, लुटः प्रथमस्येति सूत्रस्थभाष्यप्रामाण्येन चेत्संज्ञायोग्यत्वमेवात्र शास्त्रेऽनुबन्धत्वमित्यर्थस्य जसश्शीति सूत्रे शेखरे ग्रन्थकृता निरूपितत्वेन कप्रत्ययादि-

विधेये कदाप्यदर्शनात्॥ शित्किदित्यादौ समीपे

---

घटककादीनां वाक्यार्थबोधात्प्रागपि तादृशानुबन्धत्वज्ञानस्य सुलभत्वेन तेषां बोधकानवयवत्वस्य सुवचतया वासरूपन्यायस्याप्रवृत्तौ गोद इत्यादौ कविषयेऽणोऽप्यापत्तिरूप द्वितीयदोषस्याप्यनवकाशः। विवृत्तंचैतदस्माभिस्तत्रैव गुरुप्रसादशेषे इति बोध्यम्। एतेनैतद्दोषवारणाय लशक्वतद्धित इत्यादिना प्रत्ययत्वयोग्यानामादिभूता ये लशकादयस्तेषां विधानात्पूर्वमेवेत्संज्ञा। अत एव ददातिदधात्योर्विभाषेति णबाधकशस्य विकल्पविधानं सार्थकम्। अन्यथा उक्तरीत्या वासरूपन्यायेनैव विकल्पसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। तादृशं च प्रत्ययत्वमौपदेशिकमातिदेशिकं वेत्यन्यदेतदिति हर्युक्तिरपास्ता। तत्रत्यप्रत्ययपदस्य लक्षणया प्रत्ययत्वयोग्यपरतायां माना ।वात्। मूलकृन्मतापेक्षयात्रमते लाघवाभावाच्च। यदपि चन्द्रिकाकृतः। इत्संज्ञायोग्यस्यैवानुबन्धत्वमिति न युक्तम्। अनवयवत्वेन शकारनिवृत्तावीकारमात्रस्यैव लक्ष्ये प्रवर्तनीयतया तत्काले शकारस्येत्संज्ञाया अभावेन चानेकाल्त्वस्य शित्त्वस्य वा वक्तुमशक्यत्वेन सर्वादेशताया एव दौर्लभ्यापत्तेः। उपस्थापक एवानुबन्धानां निवर्तनीयतयाप्रत्ययादित्वप्रयुक्तया स्तस्याः कदाप्य-नावेन योग्यताया दुर्वारत्वाच्चेति वदन्ति। तदप्ययुक्तं। आदेशप्रवृत्तेः प्राक् छकारस्येत्संज्ञाया अ-नावेऽपि तद्योग्यतायास्सत्त्वेनेत्संज्ञायोग्यशकारत्वस्यैव शित्पदार्थत्वेन शित्त्वात्सर्वादेशत्वस्य सुवचत्वात्। इत्संज्ञायोग्यत्वरूपमनुबन्धत्वमुपजीव्यैवानुबन्धाना मुपस्थापके निवृत्ते वाच्यतया तां पुरस्कृत्य शकारादीनामित्संज्ञायोग्यताया दुर्वचत्वोक्तेस्सुतरामयुक्तत्वाच्च। .कथ मन्यथा भवन्मतेऽ प्यनुबन्धानामुपस्थापक एव निवृत्त्या शकारादिविशिष्टे प्रत्ययत्वयोग्यतापीत्यवधेयम्। तेषामित्संज्ञायोग्यतापि भवन्मते प्रत्ययत्वयोग्यताया इवानेकाल्त्वात्सर्वादेशे स्थानिवद्भावेन प्रत्ययत्वमादायेत्संज्ञाप्रवृत्त्या बोध्यासत्यां च तस्यामनवयवत्वेनोपस्थापक एव निवृत्त्या अनेकाल्त्वात्सर्वादेशत्वस्य वक्तु मशक्यतया शित्त्वादेवसर्वादेशत्वमिति तूभयोस्सममेवेत्यलम्।

नन्वनुबन्धानामनवयवत्वे शित्किदित्यादाववयवावयविभाव रूपसंबन्धस्य षष्ठ्यर्थताया वक्तुमशक्यत्वात सामीप्यस्यषष्ठ्यर्थत्वाभावाच्च षष्ठ्यर्थबहुव्रीहेरनुपपत्ति रत आह। [शित्किदित्यादा-

ऽवयवत्वारोपेण समासो बोध्यः। वुञ्छण्कठेत्यादौ णित्त्वप्रयुक्तंकार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम्।

---

विति ।] [अवयवत्वारोपेणेति ।] विधेयसमीपवर्तिनि शकारादौ तदवयवत्वारोपेणेत्यर्थः। सामीप्यं च स्वोच्चारणाव्यवहितोच्चारणविषयत्वम् एवं च ग्रामकूपो गङ्गातीरमित्यदाविवारोपितावयवावयविभाव-रूपषष्ठ्यर्थसंबन्धे वृत्तिः। शित्किदित्यादि पदानां चेत्संज्ञकशकारादिसमीपवर्तीत्यादि फलितोऽर्थः। अत्र चोपदेशेऽजनुनासिक इदिति सूत्रस्थोपदेशपदस्याश्रआँअटित इति प्रयोजनप्रतिपादनपरं भाष्य मेव मानमिति बोध्यम्।

नन्वेवमपि वृञ्छण्कठेत्यत्र णकारानुबन्धस्य छप्रत्ययकप्रत्ययोभयनिरूपितसामीप्यव-त्त्वात्कप्रत्ययस्यापीत्संज्ञकणकारसमीपवर्तित्वरूपणित्वस्य विद्यमानत्वेन ऋश्यक इत्यादौ णित्त्वप्रयुक्त-वृद्धिस्स्यात्। तथा नन्दिग्रहीत्यादिना विहितल्युप्रत्ययान्ते तपन इत्यादौ च णित्त्वप्रयुक्तवृद्धिस्स्या दत आह। [वृञ्छणित्यादि ।] [व्याख्यानत इति ।] गुरुमुखावगतप्रयोगदर्शनमूलकाद्यदुपदेशप्रयुक्ता यस्येत्संज्ञा तत्प्रयुक्तं कार्यं तस्यैवेत्यादिप्रत्यासत्तिरूपादित्यर्थः। किं च प्रमाणे द्वयसज्दघ्नजित्यत्र द्वयसचश्चकारेणैव दघ्नचोऽपि चित्त्वप्रयुक्तकार्यसिद्धौ तत्र पुनश्चित्करणसामर्थ्याद्यादृशानुबन्धघटितं पदं पदान्तराघटितं तादृशानुबन्धप्रयुक्तं कार्यं तस्यैवेत्याद्यर्थज्ञापनादपि न प्रागुक्तदोषः। वृञ्छणित्यादौ णकारानुबन्धघटितं पदं विशिष्टमपि भवतीति तत्रातिप्रसङ्गवारणाय पदान्तराघटित मिति विशेषणम्। एवं च पदान्तराघटितं णकाररूपानुबन्धघटितं च पदं छणित्येतदेव भवतीति तस्यैव णित्त्वप्रयुक्तं कार्यं न तु कस्य। अयमनुबन्धः पूर्वपदघटक एव न तु परपदघटक इत्यत्र चावयवत्ववादइवात्रापि व्याख्यानमेव शरणमिति ततो न कश्चिद्विशेष इति बोध्यम्।

यद्यपि भाष्ये ऽत्र पक्ष एतद्दोषवारणाय वुञ्छणित्यादि रूपेण विच्छिन्नानां पाठः कार्यः। ततश्च पूर्वस्यैवासावनन्तरो न तु परस्य कालव्यवधानादित्यर्थकं "सिद्धन्तु पूर्वव्यवसितपाठा" दिति वार्तिक मुक्तम्। तथापि तत्पक्षे तत्पाठस्य कर्तव्यतां कालव्यवधानेनोच्चारणे संहिताया अभावात् वुञ्छणित्यादिसूत्रे द्वन्द्वानुपपत्तिं बहुवचनानुपपत्तिं च मनसि निधाय अवयवत्ववाद इवात्राप्युक्तरूपाद्व्याख्यानादेव तन्निर्णय इत्युक्त मिति बोध्यम्।

हलन्त्यमित्यत्रान्त्यशब्दः परसमीपबोधकः ॥ ४ ॥
वस्तुतस्तु-

एकान्ताः ॥ ५ ॥

---

नन्वनुबन्धानामुपस्थापकानवयवत्वे अइउणित्यादौ णादेरित्त्वानापत्तिः। हलन्त्यमित्यत्रान्त्यशब्दस्यावयवत्वेनावयवोपस्थापकतया तेषां तत्त्वाभावादत आह। [हलन्त्यमित्यत्रेति।] [परसमीपबोधक इति।] उपदेशकरणभूता ये धात्वादयस्तस्मात्परस्य तत्समीपवर्तिनो लक्षणया बोधक इत्यर्थः। इदमुपलक्षणम्। आदिर्ञिटुडवइत्यादावादिशब्दस्यापिसोऽपिलक्षणयाधात्वादिभ्यः पूर्वस्य तत्समीपवर्तिनो बोधक इति बोध्यम्। नन्वनुबन्धत्वस्येत्संज्ञाघटितत्वेन संज्ञाप्रवृत्तेः पूर्वमनुबन्धत्वप्रयुक्तावयवत्वाभावस्य वक्तुमशक्यतया लक्षणाश्रयणं व्यर्थमिति चेन्न। हलन्त्यमित्यादिशास्त्रवाक्यार्थज्ञानपूर्वकमित्संज्ञाप्रवृत्त्युत्तरमेवास्मदादीनामनवयवत्वज्ञानेऽपि पाणिनेरुच्चारणकाल एव तत्सत्त्वात्। अन्यथा, उपस्थापकावयवत्वतात्पर्येणैव तेषा मुच्चारणे, वक्तृतात्पर्यस्यैवार्थबोधनियामकतया स्वंरूपमिति शास्त्रबलादुपस्थाप्यावयवत्वमपि दुर्वारं स्यात्। तस्य लोप इत्यनेनानवयवत्वेन वा तेषामुपस्थाप्ये निवृत्तेरुक्तौ त्वनवयवत्ववाद एव दूरापास्तः। तस्माद्बोध्द्भिरनुमास्यमानेनानवयवत्वेनैव पूर्वं पाणिनेरुच्चारणमिति युक्तमतो लक्षणैव तेषामित्त्वप्रवृत्तौ शरणमिति बोध्यम्। नचैवमपि मतुप्युकारसत्त्वेन तेन व्यवधानात्पकारस्योपदेशसामीप्याभावेनेत्संज्ञाया अयोगान्मतौ बह्वृच इति निर्देशासंगतिरिति वाच्यम्। पकारोच्चारणसामर्थ्येनेत्संज्ञाप्रकरणे सामीप्यस्य व्यवहिताव्यहितसाधारणस्यैव स्वीकारेणादोषात्। एकदेशविकृतन्यायेनैकानुबन्धविशिष्टस्य पकारसत्त्वेऽपि सूत्रेऽनुकरणे क्षत्यभावाच्च, उच्चारणार्थ एव वा निर्देश उकार इति वक्तुं शक्यत्वाच्च।

एवमेतावता प्रबन्धेन तस्य लोप इति सूत्रभाष्योक्तमेकदेशिमतं प्रदर्श्य सिद्धान्तिमतं प्रदर्शयति। [वस्तुतस्त्वित्यादिना।] एकान्ता अवयवा इत्यर्थः। नन्वयवत्वाभावसाधकहेतो

इत्येव न्याय्यम्। शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषू-

---

रुक्तत्वात्कथमस्य न्याय्यत्वमत आह। [शास्त्र इति।] घटकत्वं सप्तम्यर्थः। इदम इशित्यादिशास्त्रघटक इत्यर्थः। [तत्रेति।] अवयवित्वेनाभिमते उपस्थापके इशित्यादावित्यर्थः। [उपलम्भादिति।] लोपशास्त्रज्ञानात्पूर्वं सर्वदोपलम्भादित्यर्थः। छेदनरूपानुपलम्भक यत्नाभावेऽवयविनि वृक्षे सर्वदोपलभ्यमानायाश्शाखाया यथा वृक्षावयवत्वं प्रसिद्धमेवमनुपलम्भकलोपशास्त्र ज्ञानरूपयत्नाभावेऽवयविन्युपस्थापके सर्वदोपलभ्यमानस्याप्यवयवत्वमेव न्याय्यम्। अवयविनि दर्शनस्यैवावयवत्वसाधकतया तद्भिन्ने विधेयेऽदर्शनेऽपि क्षत्यभावादित्याशयः। न च वाच्यवाचकयोस्तादात्म्याङ्गीकाराद्विधेयस्याप्यवयवित्वेन तत्र तेषाङ्कदाप्यदर्शनादुक्तरीत्याऽनवयवत्वमेव न्याय्यमिति वाच्यम्। तादात्म्यस्य भेदाभेदरूपतायास्तत्राभेदस्यावास्तविकत्वस्य चान्यत्र ग्रन्थकृता निरूपितत्वेनोपस्थाप्योपस्थापकयो रारोपिताभेदसत्त्वेऽपि वास्तविकभेदस्यैव विद्यमानत्वेन तत्रानुबन्धानामनुपलम्भस्य नानवयवत्वसाधकत्वमित्याशयात्। अभेदस्यावास्तविकत्वादेव वह्निशब्दोच्चारणे मुखे न दाहाद्यापत्तिः। अर्थे च न वर्णमालाद्यनुभव इति बोध्यम्। ननूपस्थापकावयवत्वस्य संदिग्धतया साधनीयत्वेन तद्विषयकोपलम्भस्यैव कथं हेतुत्व मत आह। [अन्यत्रानुपलम्भाच्चेति।] एवञ्च तदवयत्वप्रकारकोपलम्भविशिष्टान्यावयवत्वप्रकारकोपलम्भाभावो हेतुः, न तु केवल तन्मात्र एव। तथा च केवलस्य तस्य हेतुत्वासम्भवेऽपि, अयं पुरुषः, पुरुषत्वप्रकारकोपलम्भविशिष्ट परिस्पन्दवत्त्वप्रकारकोपलम्भादितिवद्युक्तमेव विशिष्टस्य तस्य हेतुत्वमिति भावः। यद्यपि भाष्ये "एकान्तस्तत्रोपलब्धेः" इत्येवोक्तम्, तथापि तस्यावधारणपरतया व्याख्यानान्निरुक्तार्थलाभः। स्पष्टं चेदं तत्रैव कैयट इति बोध्यम्। एवं स्वपक्षेहेतुं प्रदर्श्य विपक्षे लोकदृष्टान्तविरोधेन हेतुराहित्यं दर्शयति। [अनवयवोहीति,] एकजातीयसम्बन्धेनेति। संयोगादिनेत्यर्थः। संयोगादेस्संबन्धिभेदेन भिन्नत्वादेकत्वमनुपपन्नमित्याशयेनोक्तमेकजातीयेति।

पलभ्यते। नैवमयम्। एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः। अन्त्यादिशब्दे लक्षणा च न। किंचानवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः प्रत्ययादित्वा

---

[नैवमयमिति।] अयमनुबन्धो न तादृशसम्बन्धेन सर्वदोपलभ्यत इत्यर्थः। ननूपस्थाप्योपस्थापकयोरभेदस्यारोपितत्वेऽप्यारोपस्य शास्त्रप्रवृत्तिप्रयोजकताया बहुशो दृष्टत्वादारोपिताभेदमाश्रित्य निरुक्तदिशाऽनवयवत्वमेव कुतो न। तथाचोदीचां माङ इति निर्देशोपपत्तिः। अर्वणस्त्रसावनञ इत्यादिना विहितादेशस्य च न सर्वादेशत्वप्रसक्तिः। तन्निर्देशोपपत्तये एतद्दोषवारणाय च नानुबन्धकृतमनेकाल्त्वमित्यादि परिभाषास्वीकारे तु तदेवात्र पक्षे गौरवम्। किञ्च तेषामनवयवत्वादेव उपदेशे ऽजनुनासिक इति सूत्रस्थमुपदेशग्रहणं चरितार्थमित्याशङ्क्य, न हि वर्णाभिव्यक्तिजनक कण्ठताल्वाद्यभिघातजन्यमेव गौरवम् किन्तु ज्ञानजनकमनोव्यापारगौरवमपि तथेति सूचयं स्तत्र पक्षे लक्षणाद्याश्रयणप्रयुक्तं ज्ञानगौरवं दर्शयति, [एवं हीति।] अनुबन्धानामवयवत्व स्वीकार इत्यर्थः। अस्योभयत्रान्वयः [न्यायत एवेति।] औचित्येनैवेत्यर्थः। समीपेऽवयवत्वारोपं विनैवेति यावत्। अन्यथा शित्किदित्यादौ समीपेऽवयवत्वारोपेण बहुव्रीहिः। इशादीनां शस्येत्संज्ञासिद्धये हलन्त्यमित्यत्रान्त्यपदस्य लक्षणया परसमीपबोधकत्वं चाश्रयणीयमिति गौरवमिति भावः। अनवयवत्ववादे न केवलमन्त्यशब्द एव लक्षणा, अपित्वादिशब्देऽपि साऽवश्यकीत्याशयेनाह। [किञ्चेति।] [प्रत्ययादित्वाभावादिति।] आदिशब्दस्यावयवत्वेनावयवबोधकतया णादीनामनवयवत्वे इत्त्वानापत्तिः, तदर्थं तत्रत्यादिशब्दस्य लक्षणया पूर्वसमीपबोधकत्वे तदपि तत्र पक्षे गौरवमिति भावः। यद्यप्यत्र पक्षे नानुबन्धकृतमनेकाल्त्व मित्यादि वचनत्रयकल्पनाप्रयुक्तगौरवस्य विद्यमानत्वेन तेन तद्गौरवस्य निर्मातुं शक्यतया न ततोऽत्र पक्षे लाघवमिति शक्यते वक्तुम्। तथाप्यनेकाल् शिदिति सूत्रस्थशिद्ग्रहणेन परिभाषात्रयसंग्राहकतया ऽनुबन्धानामविद्यमानवद्भावज्ञापन एव भाष्यतात्पर्यान्निरुक्तगौरवस्यात्र पक्षे वक्तु मशक्यतया प्रयुक्तं ज्ञानगौरवं तत्र पक्षे ऽधिकमेवेति बोध्यम्। नन्वाद्यपक्षे लक्षणाद्याश्रयण प्रयुक्तगौरवस्य सत्त्वेपि तस्य लोप इति लोपशास्त्राननुसन्धानरूपस्यावयवत्वानाश्रयणप्रयुक्तस्यैव

भावात्। दध्नचश्चकारस्य वैयर्थ्यापत्तिश्च। इदंच तस्य-लोप इत्यत्र भाष्ये स्पष्टम्। तत्रह्युक्तमेकान्ता इत्येव न्याय्यमिति दिक्॥ ५॥

---

लाघवस्य सत्त्वेन फलमुखत्वान्निषादस्थपत्यधिकरणोक्तरीत्या न तद्गौरवं दोषावहमित्याशङ्क्य तत्पक्षे प्रमाणविरोधं दर्शयति। [दध्नच इति।] वैयर्थ्यापत्तिश्चेति। तत्पक्षे चित इत्यादीनामित्संज्ञकचकारसमीपवर्तीत्यादिरूपेणैवार्थाद्व्यंसचि चकारेणैव दध्नचोऽपि चित्त्व प्रयुक्तस्वरादिसिद्धौ तत्र पुनश्चकारग्रहणस्य वैयर्थ्यं स्यादिति भावः। न च यादृशानुबन्धप्रयुक्तं कार्यं तस्यैवेत्यर्थज्ञापनेन तच्चरितार्थम्। अत एव वुञ्छणित्यादिसूत्रविहितके ऋश्यैक इत्यादौ णित्त्वप्रयुक्तवृद्धिर्न। अन्यथा इत्संज्ञकणकारसमीपवर्तित्वरूपणित्त्वस्य कप्रत्ययेऽपि सत्त्वा वृद्धिः स्यादिति वाच्यम्। अयमनुबन्धः पूर्वपदघटित एव न परपदघटित इत्यर्थस्य निर्णेतु-मशक्यतया तादृशार्थज्ञापनस्यासम्भवात्। फलाभावाच्च। न चावयवत्ववादे ऽयमनुबन्धः पूर्वावयवो न परावयव इतिव्याख्यानत एव तन्निर्णय इति वाच्यम्। एकान्तत्वपक्षे एकोऽवयवो द्वयोर्न सम्भवतीति संदेहाद्व्याख्यानतो ऽयं पूर्वावयव एव न परावयव इत्यर्थस्य निर्णेतुं शक्यत्वेऽप्य-नेकान्तत्वे आनन्तर्यस्योभयापेक्षस्यैवेत्यत्र विरोधाभावात्संदेहाभावेन व्याख्यानाप्रवृत्तेस्तथा निर्णयस्यासम्भवात्। विरुद्धानेककोटिविषयकज्ञानस्यैव संदेहत्वात्। किञ्चानवयवत्वे वुञ्छणित्यादिविहितकेणित्त्वप्रयुक्तवृद्ध्यापत्तिः। उक्तरीत्याऽत्र पक्षे व्याख्यानाप्रवृत्तेः। तदेतत्सकलमभिसन्धायाह। [इदं चेति।] प्रागुक्तं सर्वं चेत्यर्थः। तत्र हिनिरुक्तपक्षद्वयमुपपाद्यो-भयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति। किमत्र न्याय्यम्? एकान्ता इत्येव न्याय्यम्। अत्र हि हेतु र्व्यपदिष्टः। यच्च नाम सहेतुकं तन्न्याय्यमित्युक्त मिति बोध्यम्। [दिगिति] तदर्थस्तु अनवयवत्वपक्षे लक्षणाद्याश्रयणप्रयुक्तगौरवस्य फलमुखत्वेनादूषकत्वेऽपि दध्नचश्चकारस्य वैयर्थ्यं दुर्निवारमेव। किञ्च तत्र पक्षे निरुक्तदिशा संदेहाभावेन व्याख्यानाप्रवृत्तेर्वुञ्छणित्यादि सूत्रविहितके णित्त्वप्रयुक्तवृद्ध्यापत्तिर्दुर्वारा। नचावयवत्ववादे, उपदेशेऽजनुनासिक, इति सूत्रस्योपदेशग्रहणस्य व्यर्थत्वात्तेन दध्नचश्चकारवैयर्थ्यं निमातुं शक्यत एवेति वाच्यम्।

# नन्वेकान्तत्वेऽनेकाल्त्वादेव, औशादीनां सर्वादेश-

---

अनवयवत्ववादेऽनवयवत्वादेवोपस्थाप्येऽनुबन्धानां निवृत्तिसम्भवादनुबन्धघटितधर्माणामुपस्थापकगतानामुपस्थाप्ये सामर्थ्यादेवारोपसिद्धेश्च, तस्य लोप इति सूत्रस्यैव व्यर्थत्वेनावयवत्वपक्षमाश्रित्य सूत्रैकदेशभूतस्योपदेशपदस्यैव लाघवेन तत्कल्पनाया युक्तत्वात्। प्रत्युत चकारग्रहणवैयर्थ्यस्य तदवस्थत्वात्। न चैवमप्युपदेशग्रहणस्य, अभ्र आँ अटित, इत्यत्रादितश्चेतीट्प्रतिषेधनिवारकत्वेनावश्यकत्वप्रतिपादनपरभाष्यविरोधोऽवयवत्वपक्षे दुर्वार इति वाच्यम्। लाघवानुगृहीतेन न्यायसहकृतेन च तस्य लोप इति सूत्रस्थभाष्येण तद्भाष्यस्यैकदेश्युक्तिताया एव न्याय्यत्वात्। एवं ध्वसोरेद्धावित्यत्र लोपस्य द्विशकारकनिर्देशेन शित्त्वोपपादनपरमलोन्त्यादि सूत्रस्थं भाष्य मप्युक्तभाष्यविरोधादेकदेशिन एव। तस्य सर्वादेशत्वं तु लोपोयीत्यतो लोपग्रहणेऽनुवर्तमाने पुनर्लोपग्रहणात्सिद्धम्। किञ्चावयवत्वाङ्गीकारादेव आटश्चेत्यादौ सानुबन्धाद्वि त्युत्पत्तिः केवलात्तदनुपपत्तिश्च स्वरसत उपपन्ना। अन्यथा तदर्थं सौत्राद्याश्रयणेऽति गौरवम्। किञ्चोपस्थाप्योपस्थापकयोरारोपिताभेदमाश्रित्यानवयवत्वसाधनापेक्षया वास्तविकभेदमाश्रित्यावयवत्वसाधनस्यैव न्याय्यत्वाल्लाघवानुगृहीतत्वाच्चावयवत्वस्वीकार एव उचित इतीति सुधियो विभावयन्तु।

एतत्पक्षे "तत्रासरूपसर्वादेशदाप् प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वादि" ति वार्तिककृदुक्तं दोषत्रयं भाष्यकृदुक्तदिशा परिजिहीर्षुः पूर्वसङ्गतिं दर्शयति। [नन्विति।] यद्यपि वार्तिककारेणैकान्तत्वपक्षे कर्मण्यण् आतोऽनुपसर्गे क इत्याद्यसरूपप्रत्ययविधौ दोषः प्रथममुद्भावितः। ततो दिव औदित्यादौ सर्वादेशत्वापत्तिरूपो दोषः प्रदर्शितः। तदुत्तरमवदातमित्यत्रादाबिति घुत्वप्रतिषेधानापत्तिरूपो दोषो दर्शितः। तत्क्रमेण च भगवता भाष्यकारेणापि तद्दोषवारणोपाय भूता 'नानुबन्धकृत मसारूप्य' मित्यादि परिभाषाश्च प्रदर्शिताः। तथापि तत्क्रमं विहायात्र प्रथमत एतत्परिभाषाप्रदर्शनमावश्यकेनैतज्ज्ञापकेनैव वक्ष्यमाणपरिभाषात्रयफलानामपि सिद्धिर्भविष्यति। तेषां ज्ञापकान्तरोपन्यासस्तूपायान्तरपरमिति सूचनायेति बोध्यम्। अत एवानेकाल् शिदिति सूत्रे भाष्ये शिद्ग्रहणेन 'नानुबन्धकृतमनेकाल्त्व' मिति परिभाषां ज्ञापयित्वा "किमेतस्या ज्ञापने प्रयोजनम्?" तत्रासरूप सर्वादेश दाप्प्रतिषेधे

त्वसिध्याऽनेकाल्सूत्रे शिद्ग्रहणं व्यर्थमत आह ॥

---

पृथङ्निर्देशोऽनाकारान्तत्वादित्युक्तम्। तन्नवक्तव्यं भवतीति सम्पूर्णवार्तिकस्याकर्तव्यत्वं भगवता प्रतिपादितम्। न च तावता दिव औदित्यादौ सर्वादेशत्वापत्तिरूपदोषस्य वारणेऽपीतरयोरवारणात्कथं सम्पूर्णवार्तिकस्याकर्तव्यत्वमिति वाच्यम्। उक्तज्ञापकेन परिभाषात्रयसंग्राहकतयाऽनुबन्धानामविद्यमानवद्भावज्ञापन एव भाष्यतात्पर्यमित्यर्थस्य प्रागुपदर्शितत्वेन तेन सम्पूर्णवार्तिकस्याकर्तव्यतासिद्धेः। नच नानुबन्धकृतमसारूप्यमिति परिभाषाज्ञापकेन 'ददातिदधात्योर्विभाषेति' णबाधकशस्य विकल्पविधानेनाप्ययमर्थो ज्ञापयितुं शक्य एवेति वाच्यम्। एवमपि कादीनां कादेर्वाक्यार्थबोधोत्तरमेव प्रत्ययत्वप्रयुक्तेत्संज्ञायास्सत्त्वेनानुबन्धत्वज्ञानात्पदोपस्थापकत्वेन पदैकवाक्यतया विध्युपकारकस्य वासरूपन्यायस्य वाक्यार्थबोधकाल एव प्रवृत्त्या तदानीं कादेरनुबन्धत्वज्ञानाभावेनाविद्यमानताया अभावाद्वासरूपन्यायेनैव विकल्पसिद्धौ विकल्पविधानस्य स्वांशे चारितार्थ्याभावाद्यावतेति न्यायेनेत्संज्ञायोग्यत्वमेवानुबन्धत्वमित्यर्थस्यापि ज्ञापनीयतया श्यादीनां सर्वादेशत्वासिद्धेः, शिद्ग्रहणवैयर्थ्यापत्तेश्च। तेनैत्संज्ञायोग्यशकारवत्त्वमेव शित्त्वमित्यर्थज्ञापने तु तेनैव सकलेष्टसिध्या ज्ञापकान्तरस्यानावश्यकत्वात्। न च णबाधकशस्य विकल्पविधानेनानुबन्धपदस्येत्संज्ञायोग्यपरत्वं नैव ज्ञाप्यते। किन्तु यावता विनेति न्यायेन भाविनीं प्रत्ययादिसंज्ञामादाय पूर्वमेवेत्संज्ञेत्यर्थो ज्ञाप्यते। तथाच श्यादीनां सर्वादेशतायाः प्रागप्यनुबन्धत्वादविद्यमानवद्भावेऽनेकाल्त्वप्रयुक्तसर्वादेशताया अलाभात्तदर्थं शिद्ग्रहणस्य चरितार्थतया न तेन ज्ञापकान्तरमावश्यकमिति वाच्यम्। एवमपि परिभाषात्रयसंग्राहकनिरुक्तार्थे सम्पूर्णसूत्रस्य ज्ञापकत्वापेक्षया शिद्ग्रहणस्यैव लाघवाज्ज्ञापकत्वमुचितमित्याशयेन प्रथमतस्तदुक्तेरिति बोध्यम्। [शिद्ग्रहणं व्यर्थमिति।] नन्विदम इशित्यादावशादिना सवर्णग्रहणमाशङ्क्य ज्ञापकादिना समाधानपराणुदित्सूत्रस्थभाष्यप्रामाण्यादनुबन्धविनिर्मुक्तस्यैव विधेयत्वलाभेनौशादिष्वौकारमात्रस्यैव विधेयत्वात्कथमनेकाल्त्वात्सर्वादेशत्वसिद्धिः। न चानेकाल्पदबोध्यस्सर्वस्य स्थाने भवतीत्यर्थेन तत्सिद्धिरिति वाच्यम्। तथा सति तासस्त्योर्लोप इत्यनेन विहितलोपस्य विसर्जनीयपदबोध्यस्य च सर्वादेशत्वापत्तेरिति चेन्न। औशादिषु शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमाश्रित्य सर्वादेशत्वा-

# नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

## शिद्ग्रहणमेवैतज्ज्ञापकम्,

---

सिद्धिरित्यर्थस्योद्योते स्पष्टत्वात्। लोपविसर्गयोस्तु न सर्वादेशत्वम्। अभावरूपे लोपे, बिन्दुद्वयात्मके विसर्जनीये च कदाप्यनेकाल्त्वाभावेन भूतपूर्वगतेर्वक्तुमशक्यत्वात्। किञ्च तदाश्रयणस्य तत्तद्वर्णोच्चारणसामर्थ्यमूलकतयाऽत्र तादृशसामर्थ्याभावेन तस्य सुतरामयुक्तत्वाच्च। नचैवमपि जश्शसोश्शिरित्यादेश्शवर्णस्य विभाषा ङिश्योः, शिसर्वनामस्थानमित्यादौ विशेषणार्थतया चारितार्थ्यात्सामार्थ्याभावेन भूतपूर्वानेकाल्त्वमादाय सर्वादेशतायाः दुर्वचतया तथाविधानां सर्वादेशत्वाय शिद्ग्रहणस्यावश्यकत्वात्कथं तद्वैयर्थ्यमिति वाच्यम्। श्यदीनां सर्वादेशतायाः प्राक् तद्धटकशवर्णस्य प्रत्ययादित्वप्रयुक्तेत्संज्ञाया वक्तुमशक्यतयाऽदेशप्रवृत्तिकालेऽनेकाल्त्वस्य विद्यमानत्वेन विनैव भूतपूर्वगतिं सर्वादेशतायास्सुवचत्वात्। न चैवमपि द्विशकारेण निर्दिष्टस्य ध्वसोरिति सूत्रविहितलोपस्य सर्वादेशत्वाय शिद्ग्रहणमावश्यकमिति वाच्यम्। अत्र पक्षे शिक्किदित्यादीनामित्संज्ञकशकारावयव इत्यादिरूपेणार्थाल्लोपस्य तत्त्वाभावेन शित्वात्सर्वादेशस्य वक्तुमशक्यतया लोपोयीत्यतो लोपग्रहणेऽनुवर्तमाने पुनर्लोपग्रहणादेव तत्र सर्वादेशताया वक्तव्यत्वादिति बोध्यम्। अनुबन्धकृतमनेकाल्त्वं नाश्रयणीयमिति परिभाषार्थः। एवं चैतत्परिभाषा स्वीकारे औशादीनामनुबन्धप्रयुक्तानेकाल्त्वस्यानाश्रयणाद्बोधकवृत्त्यनेकाल्त्वस्य बोध्ये आरोपेण वा भूतपूर्वानेकाल्त्वमाश्रित्य वा विधीयमानस्य औ इत्यस्य सर्वादेशताया वक्तुमशक्यतया तेषां सर्वादेशत्वाय शिद्ग्रहणमावश्यकमिति भावः। अत्र मानं दर्शयति। [शिद्ग्रहणमेवैतज्ज्ञापकमिति।] नन्वेतत्परिभाषाज्ञापनोत्तरमप्यौशादिषु शकारोच्चारणसामर्थ्यस्यानुपक्षीणतया तद्वैयर्थ्यमूलकेनानेकाल्त्वारोपेण, भूतपूर्वानेकाल्त्वाश्रयणेन वाऽनेकाल्त्वादेव औशादीनां सर्वादेशत्व सिद्ध्या न तदर्थं शिद्ग्रहणस्यावश्यकता। श्यादिषु च सर्वादेशतायाः प्रागित्संज्ञाया अभावेनानुबन्धत्वाभावात्प्रकृतपरिभाषाया अप्रवृत्तावनेकाल्त्वादेव सर्वादेशत्वसिद्धिः। एवञ्च ज्ञापनोत्तरमपि शिद्ग्रहणस्य स्वांशे चारितार्थ्याभावादिदं ज्ञापनमयुक्तमिति चेदत्रोच्यते। यावता विनाऽनुपपत्तिस्तावत्सर्वं ज्ञाप्यत इति न्यायेनेत्संज्ञायोग्यत्वमेवात्र शास्त्रेऽनुबन्धत्वमित्यर्थोऽपि ज्ञाप्यते।

तेनार्वणस्तृ इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वा-

---

तथाच श्यादिषु सर्वादेशतायाः प्रागित्संज्ञाया अभावेऽपि तद्योग्यताया स्सत्वेन प्रकृतपरिभाषया ऽनेकाल्त्वप्रयुक्तसर्वादेशत्वस्य वक्तुमशक्यतया तदर्थं शिद्ग्रहणमावश्यकम्। न चैवमपि तदानीं तेषां शित्वाभावात्कथं शिद्ग्रहणे कृतेऽपि सर्वादेशत्वमिति वच्यम्। पूर्वोक्तन्यायेन शित्त्वमपीत्संज्ञायोग्यशकारवत्त्वमेवेत्यर्थस्यापि ज्ञापनेन तत्सिद्धेः। स्पष्टं चेदमुद्योत इति बोध्यम्। चन्द्रिकाकारास्तु यावता विनेति न्यायेन भाविनीं प्रत्ययादिसंज्ञामादाय पूर्वमेवेत्संज्ञाप्रवृत्ति-रित्यर्थो ज्ञापनीयः। अत एव आदिर्ञिटुडव इत्यादीनामुपपत्तिः। अन्यथा सानुबन्धकस्य क्रियावाचकत्वाभावादनुपपत्तिः स्पष्टैव। तादृशी च प्रत्ययादिसंज्ञा उपदेशेनानिर्देशेन वेत्यन्यदेतत्। एवं च श्यादीनां शवर्णस्य विधानात्पूर्वमेवानुबन्धत्वेन प्रकृतपरिभाषया सर्वा-देशत्वाप्राप्तौ तत्सम्पादनाय शिद्ग्रहणमावश्यकमेवेत्याहुः। परेतु निरुक्तार्थज्ञापनापेक्षया-ऽत्र ज्ञापने लाघवाभावः। किञ्च न धातुलोप इति सूत्रस्थभाष्यप्रामाण्यादनुबन्धविनिर्मुक्तस्यैव धातुत्वादनुबन्धविशिष्टे भाविधातुत्वस्याप्यभावेनेदृशार्थज्ञापनेऽप्य दिर्ञिटुडव इत्यादीना मनुपपत्तिर्दुष्परिहरैव। किन्तु तत्र धातुपदं धातुत्वादियोग्यघटितपरमिति नागेशोक्तदिशैव तत्रानुपपत्तिः परिहार्या। अतो ग्रन्थकृदुक्तज्ञापनां विहायान्यादृशार्थज्ञापने लाघवाभावः फलाभावश्चेत्याहुः। परिभाषाफलं दर्शयति। [तेनेति।] [अर्वणस्तृ इति।] ननूगित्त्वारोप-सम्पादनद्वारेण नुमर्थतया ऋकारोच्चारणसामर्थ्यस्योपक्षयादनेकाल्त्वारोपस्य दुर्लभतया विनापि परिभाषामन्त्यादेशत्वं सेत्स्यतीति नेदमस्याः परिभाषायाः प्रयोजनम्। न च ससजुषोरु-रित्यनेन विहितरोस्सर्वादेशत्ववारणमेतत्फलमिति वाच्यम्। तस्यापि 'रोस्सुपी' त्यादा-वितरव्यावर्तनेन चरितार्थोकारतया सर्वादेशत्वसम्पादकानेकाल्त्वारोपस्य दुर्वचत्वात्। किञ्च तृज्वत्क्रोष्टुरित्यादिन्यासेनापितयोस्तत्त्वसिद्धेरत आह। [आदाविति।] तेन, 'दिव औत्' ऊदनोर्देशे, गन्धस्येदुत्पूतिसुसुरभिभ्य इत्यादीनां संग्रहः। नन्वेवं डादीनामनेकाल्त्वा-भावात्सर्वादेशत्वं न स्यादत आह। [डादिविषयेत्विति।] आदिना 'जसश्शी' सुपां सुलुगित्यादिना विहितशीशे इत्यादीनां संग्रहः। णलस्तु नादिपदेन ग्रहणम्। तस्य प्रत्ययाधिकारपाठादौपदेशिकप्रत्ययत्वेन सर्वादेशतायाः प्रागपीत्संज्ञायास्सत्त्वादनया परिभाषयाऽ

# देशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्यासिद्धम् ॥ ६ ॥

---

नेकाल्त्वप्रयुक्तसर्वादेशत्वस्यालाभात्प्रश्लेषेणैव तत्र सर्वादेशत्वस्य वक्तव्यत्वादिति बोध्यम्। [आनुपूर्व्यादेवेति।] डकारोत्तरात्वरूपानुपूर्वीवशादेवेत्यर्थः। अनेकाल्त्वादेव सर्वादेशत्वमित्याशयः। इदं प्राचामनुरोधेन। वस्तुतस्तु अनेकाल्शिदिति सूत्रस्थोद्योतोक्तदिशा इत्संज्ञायोग्यस्यैवानुबन्धत्वेन डादीनां डकारादेः सर्वादेशतायाः प्रागपि तादृशानुबन्धत्वसत्त्वादनया परिभाषयाऽनेकाल्त्वात्सर्वादेशता वक्तुमशक्या। किन्तु णलीव तत्रापि डा आ इति प्रश्लेषेणैव सर्वादेशत्वं वाच्यम्। इत्संज्ञायोग्यशकारवत्त्वस्यैव शित्त्वादिति बोध्यम्। हरिशास्त्रिणस्तु "जश्शसोश्शि" रित्यादेश्शवर्णस्येव दिव औदित्यादेस्तकारस्यापि वर्णान्तरोच्चारणे सहायसम्पादनेन चरितार्थतया सर्वादेशत्वसम्पादकानेकाल्त्वारोपनिमित्तत्वायोगाद्भिनैव प्रयासमन्त्यादेशत्वसिध्द्या निष्फलैवैषा परिभाषा। शिद्ग्रहणं तु वासरूपन्यायेन काणोः पर्यायतानिरासाय भाविनीं प्रत्ययसंज्ञामादाय पूर्वमेवेत्संज्ञेत्यर्थबोधनद्वारा श्यादीनां सर्वादेशत्वबोधनाय। इत्संज्ञायोग्यस्यैवानुबन्धत्वमित्युक्तौ तु व्यर्थमेवैतन्मते शिद्ग्रहणम्। औशादीनां तूच्चारणार्थतया परिकल्पितं शकारमादाय शकारोच्चरणमहिम्ना भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वं सुलभम्। यदि त्वौशादिष्वपि प्रश्लेषेणैव निर्वाहः, शवर्णस्तूच्चारणार्थ एवेत्युच्यते, तर्हि इदम इशित्यत्रैवानेकाल्त्वारोपापेक्षा। दिव औदित्यादौ तु न प्रश्लेषेण सर्वादेशता, योगविभागवत्तस्यापीष्टसिद्धिमात्रोपयोगित्वात्। अनेकान्तत्वपक्षे, 'इदम इश्' जश्शसोश्शिरित्यादेस्सर्वादेशत्वाय शिद्ग्रहणमावश्यकमेव। तस्मात्प्रकृतपरिभाषाज्ञापनपरानेकाल् सूत्रभाष्यकाराभिप्रायस्त्वनिर्वचनीय एव। स्पष्टश्चायमर्थः कौस्तुभ इत्याहुः। उपाध्यायानुयायिनस्तु शिद्ग्रहणेनानुबन्धानामविद्यमानवद्भावो ज्ञाप्यते। तथा च प्रदीव्येत्यादौ क्त्वादेः स्थानिसम्बन्ध्यल्वृत्तिधर्मत्वाभावेन क्त्त्वातिदेशे गुणनिषेधसिद्धिः। अत एव 'न ल्यपी' ति निषेधश्चरितार्थः। अन्यथा प्रदायेत्यादावनल्विधाविति निषेधात्कित्त्वानतिदेशे ईत्त्वाप्राप्त्या तद्वैयर्थ्यं स्पष्ट मेव। अनुबन्धकार्येऽनल्विधाविति निषेधो न प्रवर्तत इत्यप्येतल्लब्धार्थानुवाद एव। नापूर्वः। परिभाषा-

त्र्यमिदमपि न कार्यम्। ङकारसत्त्वेऽपि तस्याविद्यमानवद्भावेनात्वप्रवृत्त्या माङ इति निर्देशोपपत्तेः। काणोरनुबन्धस्याविद्यमानवद्भावे तयोस्सरूपत्वेन वासरूपन्यायाप्रवृत्त्या कविषयेऽणापत्ति रूपदोषस्याप्यभावात्। तस्य लोप इत्यस्य चानुबन्धानामविद्यमानवद्वचनमित्येवार्थः। अत एव प्रत्याहारेष्वितां ग्रहणाभावे 'लोपश्चबलवत्तर' इति तृतीयहेतूपन्यासो भाष्यकारीयस्संगच्छते। अन्यथा तत्राक्षरसमाम्नाये उच्चारितानां प्रसक्तादर्शनरूपस्यलोपस्यबाधितत्वात्तदसंगतिःस्पष्टैव। नचेत्संज्ञायोग्यत्वरूपानुबन्धत्वमादाय पूर्वमेवानुबन्धानामविद्यमानवद्भावे पश्चादित्संज्ञैव दुर्लभेति वाच्यम्। उपजीव्यत्वेनेत्संज्ञां प्रत्यविद्यमानवद्भावो नेति सुवचत्वात्। नचैवं कित्त्वस्येव त्त्वावृत्तिवलादित्वस्याप्यतिदेष्टुं शक्यतया प्रपठ्येत्यादौ वलादि लक्षणेट् स्यादिति वाच्यम्। अस्यार्थस्य ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात्क्वचिदप्रवृत्त्याऽदोषात्। अत एव नदटष्टकारमादाय हल्ङ्यादिलोपो न।

अत एव च ङ्याब्ग्रहणमपि चरितार्थम्। अन्यथा तत्रानुबन्धं हलमादाय लोपप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव। अत एव च शितीत्यादावित्संज्ञकशकारादावित्यर्थला भः। अत एवौङआप इत्यत्र भाष्ये ङितीत्यत्र यस्मिन्विधिरिति परिभाषासंचारः कृतः। न च क्वचिदनुबन्धानां विद्यमानताया अपि स्वीकारे गौरवमिति वाच्यम्। क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधस्य प्राचीनैरप्यङ्गीकार्यत्वेन समत्वात्। शिद्ग्रहणस्य नानुबन्धकृत-मनेकाल्त्वमिति परिभाषाज्ञापनपरमनेकाल्शिदिति सूत्रस्थं भाष्यमप्येतदाशयकमेव। अत-एव विनैतस्य ज्ञापने प्रयोजन मित्याशङ्क्य "तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथङ्निर्देशो-ऽनाकारान्तत्वादित्युक्तम्। तन्नवक्तव्यं भवती" ति भगवता प्रतिपादितम्। अन्यथा नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापनमात्रेण सम्पूर्णवार्तिकस्याकर्तव्यतासिध्द्या तदसंगतिः स्पष्टैव। अनुबन्धानामल्त्वव्यवहाराभावो ज्ञाप्यत इत्यनेकाल्सूत्रस्थोद्द्योतग्रन्थः स्थानिवत्सूत्रस्थशेखरग्रन्थश्च तेषामविद्यमानवद्भावज्ञापनद्वारा स्थानिसंबन्ध्यल्व्यवहाराभावज्ञापन-तात्पर्यक एव। एवं च प्रदीव्येत्यादौ गुणनिषेधसिद्धिः, कविषयेऽणापत्तिवारणमवदात-मित्यादावदाबितिघुसंज्ञानिषेधश्च निरुक्तज्ञापनप्रयोजनमिति सर्वमनवद्य मितिवदन्ति।

एवमवयवत्ववादे प्रसक्तदोषत्रयस्यानेकाल्शिदितिसूत्रभाष्योपदर्शितेनैवोपायेन वारण-संभवेऽपि मन्दबुद्धिवैशद्यायोपायान्तरपरतया वार्तिककृदुक्ततृतीयदोषवारणोपायभूतां परिभाषा

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृतेऽदाबिति घुसंज्ञाप्रतिषेधो न स्याद्दैपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य

---

मवतारयति। [नन्वेव मपीति।] अवयवत्ववादे प्रसक्तसर्वादेशत्वापत्तिरूपदोषस्योक्तपरिभाषया वारणसंभवेपीत्यर्थः। [अवदातमिति।] अवपूर्वस्य दैपो निष्ठान्तस्य रूपमिदम्। अत्र घुसंज्ञाप्रतिषेधस्याऽप्राप्तौ बीजं दर्शयितुं न्यायप्राप्तां प्रक्रियां दर्शयति। [पलोपोत्तर मात्वे कृते इति।] अन्यथा यस्मात्परो नास्ति तत्रैवान्तशब्दस्य प्रवृत्त्याऽनेजन्तत्वात्तन्नस्यादिति भावः। ननु पलोपोत्तरमपि कथमात्वम्? उपदेशकाले एजन्तत्वाभावादिति चेन्न। आदेच उपदेश इत्यत्रोपदेशपदस्य कर्मसाधनत्वेन षष्ठ्यर्थे सप्तमीत्वेनचैजन्तस्योपदिश्यमानस्येति सामानाधिकरण्येनान्वयात्पलोपोत्तरं तस्य सुलभत्वात्। नच समुदायवदवयवस्याप्युपदिष्टत्वेन तत्समुदायनिरूपितान्त्यत्वस्यैकारे सत्त्वेन च पकारलोपात्पूर्वमपि कुतो नात्वमिति वाच्यम्। समुदायोपदेशेऽवयवोपदेशस्य नान्तरीयकत्वेऽपि तदुपदेशे ऋषितात्पर्याभावेन समुदायोपदेश एव ऋषितात्पर्येण च पलोपात्पूर्वमेजन्ते उपदिश्यमानताया अभावादात्वाऽप्राप्तिरित्याशयात्। अत एव ढौकतौ न दोषः। पलोपोत्तरंत्वानुमानिकस्थानिवद्भावेनैजन्ते उपदिश्यमानतायाः सुलभत्वात्तत्सिद्धिरिति बोध्यम्। [नस्यादिति] तथा च "अच उपसर्गात्त" इति तादेशोऽवत्तमिति स्यादित्याशयः। यत्तु चन्द्रिकाकारैः "घुसंज्ञामादाय दोदद्घोरित्यनेन दथ्इत्यादेशप्रवृत्त्या अवदत्तमिति स्यादित्युक्तं, तन्नु अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणीत्यादिना आदिकर्मण्यपवादभूतस्यापि तत्वस्याऽप्रवृत्तिरित्याशयकमेवेति, एतदुपसर्गप्रतिरूपकमव्ययमित्याशयकं वेतिवाबोध्यम्। वस्तुतस्तु तत्वापादनमेव युक्तम्। अत एव कैयटे तत्वमेवापादितमिति बोध्यम्। ननु पकारसत्त्व एव स निषेधः कुतो नेत्यत आह [दैप इत्यादिना] [आत्वाप्राप्त्येति] उक्तरीत्या आत्वस्याप्राप्त्येत्यर्थः। अस्य दारूपत्वाभावादित्यनेनान्वयः। नन्वेवं पलोपोत्तरमेव स निषेधः कुतो नेत्यत आह। [पलोपोत्तरमिति।] [अस्येति।] कृतात्वस्य

# दाप्त्वाभावादत आह ॥

---

दाशब्दस्येत्यर्थः। [दाप्त्वाभावादिति।] तस्य तत्त्वाभावे तदानीं पकाराभावो हेतुः। नन्वदाबित्यस्येत्संज्ञकपकारविशिष्टस्य दाशब्दस्येत्यर्थात्पलोपोत्तरमात्वे कृते स्वतो दात्वं स्थानिवद्भावेनेत्संज्ञकपकारवैशिष्ट्यं चाश्रित्य निषेधप्रवृत्तिः सुलभैवेति नेद मवतरणं युक्तमिति चेदत्रोच्यते। तरप्तमपौ घ इति सूत्रभाष्योक्तदिशा शब्दमात्रग्रहणे स्वंरूपमिति शास्त्रेण स्वरूपग्रहणस्य "दाधाघ्वि" त्यस्य दारूपा धारूपाश्च धातवो घुसंज्ञा भवन्ति, दाब्रूपस्य तु दाशब्दस्य घुसंज्ञा नेत्यर्थोऽवश्यं वाच्यः। अत एव घुसंज्ञासूत्रे भाष्ये "दाप्प्रतिषेधे न दैप्यनेजन्तत्वा" दित्यादिना समाहितम्। अन्यथा त्वदुक्तरीत्या एजन्तत्वेपि तत्र घुत्वप्रतिषेधस्य सुलभतया शङ्कासमाधानयोरुभयोरपि निर्दलत्वापत्तिः। नचादाबित्यस्योक्तार्थापरिज्ञानेन तयोः प्रवृत्त्या न दोष इति वाच्यम्। मदुक्तरीत्या तयो स्सामञ्जस्ये तयोरज्ञानकल्पनाया अन्याय्यत्वात्। नचात्रार्थे प्रणिदापयतीत्यादावदाबिति घुसंज्ञाप्रतिषेधः स्यात पकारविशिष्टे स्वतो दब्रूपत्वस्य यदागमन्यायेन दाशब्दत्वस्य च सत्त्वादिति वाच्यम्। सिद्धान्ते औपदेशिकदाप्शब्दस्यैव तत्र ग्रहणेन तत्रादोषात्। नचैवमप्यदाबिति न्यासे प्रणिदापयतीत्यत्र घुत्वप्रतिषेधशङ्कापरं दाधाघ्वपिदिति न्यासेन तत्समाधानपरं च भाष्यमसंगतं स्यादिति वाच्यम्। तद्भाष्यस्य भवन्मत इवास्मन्मते प्यदाबित्यस्य निरुक्तसिद्धान्तार्थापरिज्ञानेन प्रवृत्ततया एकदेश्युक्तित्वेन तद्विरोधस्याऽकिञ्चित्करत्वात्। एवंच प्रकृते दाब्रूपत्वाभावेन घुसंज्ञाप्रतिषेधो न स्यादित्यवतरणं सम्यगेवेति। परिभाषायामनुबन्धकृतमिति तृतीयातत्पुरुषः। अनेजन्तत्वमिति च षष्ठीतत्पुरुषगर्भो नञ्समासः। आरोपितमेजन्तत्वमिति बोधः। असंदेह इत्यादिवद्भेदसंबन्धेनारोपितज्ञानाच्च तदत्यन्ताभावप्रतीतिः। स्पष्टं चेदं नञर्थवादे मञ्जूषायाम्। एवं चानुबन्धप्रयुक्तएज्वृत्तिचरमावयवत्वाभावो नेति परिभाषार्थः। अनेजन्तत्वमित्यत्र षष्ठीतत्पुरुषगर्भोऽव्ययीभाव इति हर्युक्तं तु न युक्तम्। अर्थाभावशब्दे नञो घटकतया सूत्रगृहीताव्ययत्वेन नञाऽव्ययीभावाभावात्। अत एव पूर्वपदार्थप्रधानो नञ्तत्पुरुष इति पक्षे तत्पुरुषेणाऽव्ययीभावस्य बाधप्राप्त्या ऽव्ययीभावासिद्धिरूपं दूषणं भाष्ये नोपन्यस्तमित्याद्यन्यत्र विस्तरः। अनया परिभाषया ऽनुबन्धाना मविद्यमानवद्भावबोधनद्वारेण, तत्सत्त्वेप्येचि चरमावयवत्वारोपबोधनद्वारेण वा उपदिश्यमानेषु दैबादिष्वेजन्तत्वबुद्धिप्रयोज-

नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

उदीचां माङ इति निर्देशो ऽस्या ज्ञापकः। आदेच उपदेश इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते। ङकारसत्वेत्वेजन्तत्वाभावादात्वाप्राप्तेस्तस्यासंगतिः। न

---

कैङ्गतचरमावयवत्वप्रतिपत्तिप्रतिबन्धकीभूतेन पकाराद्यनुबन्धेन विशेषणाभावप्रयुक्तविशिष्टाभावविधया प्रसक्तस्यैजन्तत्वाभावस्याभावो बोध्यते। एवं च दैब्रादीनामनुबन्धलोपात्पूर्वमुपदेश एवाऽत्वप्रवृत्त्या दाब्रूपत्वसत्त्वेनाऽनुबन्धलोपोत्तरं तस्य स्थानिवद्भावेन दाशब्दे विद्यमानत्वाद्घुत्वप्रतिषेधो-निर्बाध इति बोध्यम्। अत्र मानं दर्शयति [इति निर्देश इति।] इत्यत्रत्यः सानुबन्धकस्यात्वभूतस्य मेङो निर्देश इत्यर्थः। ननु माङ एवेदं ग्रहणं न तु मेङो विकृतस्य लाक्षणिकस्येति कथं ज्ञापकत्वमिति चेन्न। मेङो व्यतीहारेण नित्ययुक्ततया शीघ्रोपस्थितिकत्वेनाऽन्तरङ्गत्वात्तस्यैव सूत्रे ग्रहणमुचितम्। माङस्तु पदान्तरसंनिधानेन तदर्थप्रतीत्या विलम्बोपस्थितिकत्वेन बहिरङ्गत्वान्न तस्य ग्रहणं युक्त मित्याशयात्। स्पष्टं चेदं कैयटे। नचैवं व्यतीहारेण तस्य नित्ययुक्तत्वा-त्सूत्रे व्यतीहार इति विशेषणासंगतिरिति वाच्यम्। नित्ययुक्तत्वमित्यस्य पदान्तरसंनिधान-मन्तरापि तस्य वृत्तिः, माङस्तु तत्संनिधानेनैव तत्र वृत्तिरित्येवाशयो नतु तस्यार्थान्तराभाव इत्याशयेन, अर्थान्तरे तत्प्रवृत्तिवारणाय तदावश्यकत्वात्। अत एव " तुभ्यं नावमये ब्रूहि दूतोऽसि परिपन्थिना " मित्यादिष्वपकारार्थेऽपि तत्प्रयोग उपपद्यते। किंच सूत्रे मेङ एव ग्रहणमित्यर्थस्य व्यतीहारपदग्रहणेनैव निर्णेयतया तदुत्तरमुपजीव्यभूततद्ग्रहणानर्थक्यशङ्कायास्सुतरामयुक्तत्वाच्चेति बोध्यम्। अन्येतु माङो ऽनभिधानात् क्त्वाया अनुत्पत्तिरिति न तस्य तत्र ग्रहणम्। अनभिधाने च प्रकृतपरिभाषाज्ञापनपरं भाष्यमेवमानमित्याहुः। तन्निर्देशस्य ज्ञापकत्वमुपपादयति। [आदेच इति।] तत्रोपदेशशब्दः कर्मसाधनः। षष्ठ्यर्थे सप्तमी विशेष्यत्वं च तस्येत्याशयेनाह [उपदिश्यमानस्येति।] [एजन्तत्वाभावादिति] यस्मात्परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति भावः। [तस्याऽसंगतिरिति।] तन्निर्देशस्याऽसंगतिरित्यर्थः। ननु ज्ञापनोत्तरमपि कथं तन्निर्देशोपपत्तिः, एशिरेजादीनामात्ववारणाय लिटि धातोरित्यतस्तत्र धातुग्रहणानुवृत्ते रावश्यकतया ङकारसत्त्वे मे

चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वम्। तत्र धातोरित्यस्य निवृत्तेरित्यन्यत्र विस्तरः॥ स्पष्टं चेदं दाधा घ्वदाबिति सूत्रे भाष्ये॥ ७॥

नन्वेवमपि वासरूपसूत्रेण कविषये ऽणो ऽप्यापत्तिरित्यत आह।

---

इत्यस्य धातुत्वाभावेनात्वाप्राप्तेः। अनुबन्धलोपोत्तरमेव धातुत्वमित्यर्थस्य न धातुलोप इति सूत्रे भाष्यकैयटयोः स्पष्टत्वादित्याशयेन शङ्कते। [नचेति।] [अस्यामवस्थायामिति।] अनुबन्धलोपात्पूर्वमित्यर्थः। [तस्येति।] मे इत्यस्येत्यर्थः। समाधत्ते। [तत्रेत्यादिना।] [निवृत्तेरिति।] आत्वविधायके धातोरित्यस्यानुवृत्तिरनावश्यकी, गवादिशब्दानामुपदेशत्वाभावान्नात्वम्। इरेप्रभृतीनामुपदेशत्वेऽपि तेषामशित्परत्वाभावान्नात्वम्। अशितीत्यस्य प्रसज्यप्रतिषेधत्वेऽपि प्रत्यासत्त्या शित्परत्वयोग्यानामेवैजन्तानां तत्र ग्रहणान्न दोष इत्याशयः। नचैवमपि डकारसत्त्वे मे इत्यस्य ढौकतौ ढौशब्दस्येवोपदिश्यमानत्वाभावात्कथमात्वमिति वाच्यम्। एतद्भाष्यप्रामाण्येनात्र तदुपदेशेऽपि ऋषितात्पर्यावगमेनादोषात्। उक्तमर्थं सर्वं प्रमाणयति। [स्पष्टं चेदमिति।] [दाधाघ्विति।] इदमुपलक्षणं, तस्य लोप इत्यस्यापि।

एवमेकान्तत्वपक्षे प्रसक्तं द्वितीयदोषमुद्धृत्य तत्पक्षे प्रसक्तं तृतीयदोषमुद्धर्तुं परिभाषामवतारयति। [नन्वेवमपीति।] निरुक्तदोषस्योक्तरीत्या परिहारे ऽपीत्यर्थः। [अणोऽप्यापत्तिरिति।] इको गुणवृद्धी इत्यादिवद्वाऽसरूपोऽस्त्रियामित्येतदसरूपप्रत्ययविधायकेषु तत्तद्वाक्यार्थबोधकाले वेति पदमुपस्थाप्य पदैकवाक्यतया विध्युपकारिका। एवं चैकान्तत्वपक्षे ऽनुबन्धानामुपस्थापकावयवत्वेन तत्तद्विधिशास्त्रीयवाक्यार्थबोधसमकालप्रवृत्तिकवासरूपन्यायप्रवृत्तिकाले काणोरुभयोरपि वैरूप्यात्तेन न्यायेन अपवादभूतस्य कप्रत्ययस्य विकल्पेन प्रवृत्तौ तदभावे तद्विषयेऽणोऽप्यापत्तिः। अनेकान्तत्वे तु अनुबन्धानामुपस्थापकानवयवत्वेन द्वावप्यकारावेवेति सारूप्यात्तन्न्यायाप्रवृत्तौ न समावेशप्रसङ्ग इति भावः। अपवादप्रत्ययस्योत्सर्गनिरूपितमनुबन्धप्रयुक्त-

# नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

ददातिदधात्योर्विभाषा इति णबाधकशस्य विकल्पविधायकमस्यां ज्ञापकम् ॥ तेन गोद इत्यादौ नाणिति वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

---

मसारूप्यं नेति परिभाषार्थः। अत्र ज्ञापकमाह। [विकल्पविधायकमिति।] श्यादूव्यधेत्यादिसूत्रविहितणप्रत्ययस्य बाधको यो "ददाति दधात्योर्विभाषे" त्यनेन विहितः शप्रत्ययस्तस्य विकल्पविधायकं तत्सूत्रघटकं विभाषाग्रहणमित्यर्थः। अनुबन्धप्रयुक्तस्यासारूप्यस्याङ्गीकारे तु वाऽसरूपइत्यनेनैव णबाधकस्य शस्य विकल्पेन प्रवृत्तिसिद्धौ तत्सूत्रे विभाषा ग्रहणं व्यर्थमेव स्यादिति भावः। नच प्रत्ययइत्यस्य संज्ञासूत्रत्वेन वाक्यैकवाक्यतया विध्युपकारकत्वात्तद्विधिशास्त्रीयवाक्यार्थबोधोत्तरमेव कादीनां तेन प्रत्ययसंज्ञाबोधनात्तदुत्तरमेवेत्त्वप्रवृत्त्या वासरूपन्यायप्रवृत्तिकाले कादेरनुबन्धत्वज्ञानाभावेन प्रकृतपरिभाषाया अप्रवृत्तौ तेन न्यायेनोक्तदोषोदुर्वारएवेति ज्ञापनोत्तरमपि न स्वांशे चारितार्थ्यमिति वाच्यम्। यावता विनेति न्यायेनेत्संज्ञायोग्यस्यैवानुबन्धत्वमित्यर्थस्यापि तेन ज्ञापनेनाऽदोषात्। नच वाऽसरूपन्यायप्रवृत्तिकाले कादीनां प्रत्ययत्वज्ञानाभावे कथं तन्न्यायप्रवृत्तिः। यत्राऽसरूपप्रत्ययविधानं तत्र वेत्युपतिष्ठत इति तदर्थादिति वाच्यम्। यस्य प्रत्ययत्वं भावि तद्विधाविति तदर्थादिति बोध्यम्। परिभाषाफलं दर्शयति। [तेनेति।] नाऽणिति। अन्यथा अपवादभूतस्य कप्रत्ययस्य विकल्पेन प्रवृत्तौ पक्षेऽणि गोदायइत्यनिष्टमापद्येतेति भावः। नन्वेतावता औपदेशिकमेवाऽसारूप्यं वाऽसरूपन्यायप्रवृत्तिप्रयोजकमिति लभ्यते तथाचोपदेशे सर्वेषामप्यसरूपत्वेन व्यावर्त्याभावात्सूत्रेऽसरूपग्रहणं व्यर्थमिति चेन्न। वाऽस्त्रियामित्येतावन्मात्रोक्तौहि उत्सर्गापवादयोरप्येतत्परिभाषावशाद्विकल्पापत्तौ समासतद्धिताभ्यां मुक्तस्य वाक्यस्येवोत्सर्गापवादाभ्यां मुक्तस्य केवलस्यापि धातोः प्रयोगापत्तेः। असरूप इत्युक्तौत्वसारूप्यं किमपेक्षयेत्याकाङ्क्षायां स्वविषये सर्वत्र यत्प्राप्नोति तन्निरूपितमेवौचित्यादुपस्थितत्वाच्चाश्रयितुं शक्यते। स्वविषये सर्वत्र प्राप्तिश्चोत्सर्गस्यैव, नापवादस्य, उत्सर्गविषये सर्वत्रापवादाप्राप्तेः। तथाचोत्सर्गनिरूपितमपवादप्रत्ययस्यासारूप्यं

**ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्प्रकरणस्याभिधानियामकत्वसिद्धात्कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायात्। अस्ति च प्रकृते बह्वादीनां**

---

वाऽसरूपन्यायप्रवृत्तिप्रयोजकमिति लभ्यते। एवंच वाऽसरूप इत्येतत्परिभाषोपस्थापकलिङ्गसम्पादनायासरूप इत्यस्यावश्यकत्वान्न तद्वैयर्थ्यमिति बोध्यम्। यत्तु वाराणसेया हनश्च वध इति सूत्रविहितवधादेशसंनियोगशिष्टाप्प्रत्ययस्य मूर्तौ घन इति सूत्रविहितेन घनादेशसंनियोगशिष्टेनाप्प्रत्ययेनापवादभूतेन वैकल्पिकबाधाभावाय असरूपग्रहणमावश्यकमेव वैकल्पिकबाधे तु मूर्तावपि पक्षे वधादेशमात्रं मूर्तौ तेन विधीयते, प्रत्ययस्तु पूर्वसूत्रेणैव किंच तावन्मात्रप्रयोजनकत्वे पदलाघवाद्धनश्चवधोऽमूर्ताविति न्यासेन बाध्यबाधकभावाभावेन न दोष इत्युच्यते, तदा इगुपधलक्षणकप्रत्ययस्य तुन्दशोकयोः परिमृजापनुदोरिति विहितकप्रत्ययेन वैकल्पिकबाधाभावाय तत्सार्थकम्। वैकल्पिकबाधे हि उत्सर्गकप्रत्यये शोकस्यापनुदः शोकापनुद इति समासविकल्पापत्तिः। इष्यते तूपपदमतिङिति नित्यसमास इति वदन्ति। तन्न। अपवादप्रत्ययो वा भवतीत्यर्थस्याऽसरूपग्रहणलभ्यतया तदभावे तादृशार्थालाभात्। तुन्दशोकयोरित्यनेन विहितकप्रत्ययस्य कर्मण्यणिति सूत्रविहिताण्बाधकत्वेऽपि कप्रत्ययबाधकत्वाभावादिति बोध्यम्।

इत्संज्ञाप्रस्तावात्सामान्यतया विद्यमानेन संज्ञात्वेनोपस्थितसंख्यादिसंज्ञाविषये विशेषं वक्तुं परिभाषामवतारयति [नन्वित्यादिना।] [बह्वादीनामेवेति।] नन्वत्र शास्त्रे बह्वादीनां संख्यासंज्ञाकरणात्संज्ञाप्रदेशेषु तेषां ग्रहणेऽपि संख्यापदस्यैकत्वादिषु लोकप्रसिद्धतया तेषामपि ग्रहणस्यौचित्यात्कथं बह्वादीनामेवेति नियमोऽत आह। [प्रकरणस्येत्यादिना।] अनेन कृत्रिमाकृत्रिमन्यायबीजं दर्शितम्। अभिधानियामकत्वं च तात्पर्यनिर्णायकत्वम्। ननु सैन्धवमानयेत्यादिवत्प्रकृते किं तत्प्रकरणम्। येन तद्वदत्रापि तात्पर्यनिर्णयो भवेदित्यत आह। [अस्ति चेति।] [प्रकृते इति।] संख्यापदग्रहणविषये इत्यर्थः।

संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम्। न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह।

उभयगतिरिह भवति॥ ९॥

---

[ज्ञानरूपं प्रकरणमिति।] एवं च संख्याप्रदेशेषु बह्वादीनां लोकप्रसिद्धैकद्व्यादीनां चाविशेषेण बोधेऽपि अत्र शास्त्रे बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपप्रकरणाद्वक्तृतात्पर्यनिर्णये तद्विषयकबोधेऽप्रामाण्यबुध्युदयेन तस्यानुपयोगाद्बह्वादीनामेवेति नियमोपपत्तिरिति बोध्यम्। एवव्यवच्छेद्यमेव दर्शयति। [नन्वित्यादिना।] ननु ज्ञायमानं प्रकरणं तात्पर्यग्रहनियामकमिति व्यवहारो, न तु ज्ञानरूपमेव प्रकरणमिति कथमेतद्ग्रन्थसंगतिरिति चेदत्रोच्यते। प्रकरणमेव तात्पर्यनिर्णयजनकं, तच्च ज्ञानरूपमेव। लोके सैन्धवमानयेत्यादौ भोजनादिविषयकं ज्ञानं तत्। प्रकृतशास्त्रे तु संकेतविषयकं ज्ञानं तत्। अत एव संख्यासंज्ञासूत्रे भाष्ये प्रकरणोपपादने जानाति त्वसौ बह्वादीनां संख्यासंज्ञा कृतेतीत्युक्तमिति बोध्यम्। यत्त्वभिधानियामकत्वं तात्पर्यनिर्णायकत्वं, शाब्दबोधे च तात्पर्यज्ञानं कारणम्। तत्र च सैन्धवमानयेत्याद्यनुरोधेन प्रकरणज्ञानस्य कारणता कृप्ता। प्रकृते च शास्त्रे संकेतकरणरूपं यत्प्रकरणं तद्विषयकं ज्ञानं बह्वादीनां प्रदेशवाक्यार्थबोधविषयकतात्पर्यग्रहजनकं, लोकप्रसिद्धानां तु न तथा बोधविषयतायां किंचित्तात्पर्यग्रहजनकं विना वक्ष्यमाणपरिभाषामित्याहुः, तन्न। तात्पर्यज्ञानस्य शाब्दबोधकारणताया अन्यत्र ग्रन्थकृता निराकृतत्वात्। अत एव "अस्मादर्थद्वयविषयकबोधो जायते। तात्पर्यं केति तु न जानीम" इति सार्वजनीनोऽनुभवः संगच्छते। किंच पय आनयेत्युक्ते ऽप्रकरणज्ञस्य दुग्धं जलं वा आनेयमिति प्रश्नोऽप्यत एव संगच्छते। अन्यथा तात्पर्यज्ञानकारणभूतप्रकरणज्ञानस्याभावेन तज्ज्ञानाभावे ततश्शाब्दबोधानुदयात्तादृशप्रश्नस्यासंगतिः स्पष्टैव। तात्पर्यज्ञानस्य तु जायमानबोधेऽप्रामाण्यनिश्चयद्वारा प्रवृत्तावुपयोग इत्यन्यत्र विस्तरः। एतेन यस्मिन् शब्दे ऽनेका शक्तिः, तत्र श्रोतुः कीदृशशक्तिज्ञानाधीनबोधेच्छया वक्त्रोच्चारितमिदमिति निश्चयाभावाच्छाब्दबोधे च समानविषयकनिश्चयस्य कारणत्वाच्छाब्दबोधानुपपत्तौ प्राप्तायां प्रकरणादिना तात्पर्यनिर्णयोत्तरं बोधो भवतीत्यादि मिश्रोक्तमप्यपास्तम्। परिभाषायामिहेत्यस्य संज्ञाविषय इत्यर्थभ्रमनिरासायाह।

इह शास्त्रे। संख्याया अतिशदन्ताया इति निषेधोऽस्या ज्ञापकः। नहि कृत्रिमा संख्या त्यन्ता शदन्ता

---

[शास्त्र इति।] अत्र भाष्योक्तं ज्ञापकं दर्शयति। [निषेधोऽस्या ज्ञापक इति।] तदेवोपपादयति। [नहीत्यादिना।] यदि तत्र संख्यापदेन कृत्रिमस्यैव ग्रहणं स्यात्तदा तेषु त्यन्तशदन्तयोरभावेन ततः कनोऽप्राप्तौ तत्पर्युदासो विफल एव स्यादिति भावः। ननु त्यन्तः कतिशब्दः कृत्रिमोऽस्तीति कथं तत्पर्युदासो ज्ञापकः। नचार्थवद्ग्रहणपरिभाषयाऽर्थवतस्तिशब्दस्य ग्रहणेन कतेस्तिशब्दस्यानर्थकत्वात्कृत्रिमसंख्यास्वर्थवत्त्यन्तभेदस्यव्यभिचरिततया व्यावर्त्याभावात्तद्विशेषणं व्यर्थं सज्ज्ञापकं भवत्येवेति वाच्यम्। अस्यामवस्थायां संख्यापदेन कृत्रिमानामेव ग्रहणात्तासु चार्थवत्त्यन्तानामभावादर्थवदनर्थकयोरुभयोरपिग्रहणसंभव एवार्थवद्ग्रहणपरिभाषाप्रवृत्त्याऽत्र तत्परिभाषाया अप्रवृत्तेरिति चेन्न। अतिशदन्ताया इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन संख्याविशेषणतयाऽन्वयस्य वाच्यतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोरुभयोरपि तिशब्दयोस्संभवेन पूर्वमर्थवद्ग्रहणपरिभाषयाऽर्थवतस्तिशब्दस्य ग्रहणे निर्णीते पश्चात्संख्यापदान्वयवेलायां जायमानानुपपत्तिज्ञानेन परिभाषाज्ञापनस्य सुवचत्वात्। अत एव संख्यासंज्ञासूत्रे यच्चापित्यन्तायाः प्रतिषेधं शास्तीत्यादिना त्यन्तपर्युदासस्यापि ज्ञापकत्वं भगवता सिद्धान्तितमिति बोध्यम्। यत्तु परिभाषाज्ञापनोत्तरमपि द्विदशशब्दात्तिप्रत्यये द्विदशशब्दस्य विंशादेशेन, शतिप्रत्यये विन्नादेशेन च विंशतिशब्दस्य साधनादर्थवतस्तेः सत्त्वाऽसत्त्वाभ्यां प्रसक्तस्य फलभेदस्य वारणायार्थवद्ग्रहणपरिभाषायाः प्रकृते ऽनुपस्थित्या कृत्रिमस्यैव ग्रहणेऽपि कतीत्येतद्व्यावृत्त्यर्थत्वसंभवेन नैतज्ज्ञापकमिति चेत्सत्यम्। इत एवारुचेः शदन्तपर्युदासस्य ज्ञापकत्वमुक्तमिति विजयाकाराः, तदविचारिताभिधानम्। कतिभिः क्रीतं कतिक इति रूपसिद्धये संख्याया अतिशदन्ताया इति सूत्रे आरब्धस्य "इटे इचे" तिवार्तिकस्यार्थवद्ग्रहणपरिभाषया भगवता प्रत्याख्यानात्। नच तत्रार्थवद्ग्रहणपरिभाषोपस्थितावुक्तरीत्या विंशतिशब्दे फलभेदः स्यादिति वाच्यम्। द्विदशशब्दात्तिप्रत्ययो द्विदशशब्दस्य विंशादेश इति मते "विंशतिकात्ख" इति कप्रत्ययान्तनिर्देशज्ञापकात्, विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायामिति सूत्रे योगविभागाद्वा तत्र कप्रत्ययस्य सिद्धतया तत्र फलभेदाभावात्। नच विंशतिशब्दादज्ञाताद्यर्थविवक्षायां कन्प्रत्यये विंशतिकशब्दः

**वास्ति॥ तेन कर्तरि कर्मव्यतिहारे कण्वमेघेभ्यः करणे विप्रतिषिद्धं चानधिकरणेत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः॥ तत्र क्वोभयगतिः क्वाकृत्रिमस्यैव क्व कृत्रिमस्यै-**

---

स्यादिति कथं तन्निर्देशो ज्ञापक इति वाच्यम्। स्वार्थके कन्प्रत्यये विंशतिशब्दस्य स्त्रीत्वा-त्स्वार्थिकानां प्रकृतिलिङ्गवचनानतिवर्तनाद्विंशतिकाया इति स्यान्न तु विंशतिकादिति तस्य ज्ञापकतायाः सुस्थत्वात्। किंचोक्तज्ञापकेन योगविभागेन च विंशतिक इति रूपसाधनपर-विंशतित्रिंशद्भ्यांड्वुनसंज्ञायामिति सूत्रस्थभाष्यप्रामाण्येन द्विदशशब्दात्तिप्रत्ययो द्विदशशब्दस्य विंशादेश इति प्रक्रियाश्रयणमेव युक्तमित्युद्द्योतकृता प्रतिपादितत्वेनोक्तफलभेदस्य वक्तु-मशक्यत्वात्। नच पङ्क्तिविंशतीति सूत्रे भाष्ये विंशतिशब्दस्य द्विदशशब्दप्रकृतिकशतिप्रत्ययान्ततया व्युत्पादनात्संख्याया इति सूत्रे ऽर्थवत्परिभाषोपस्थितौ विंशतिशब्दस्याऽर्थवत्त्यन्तभिन्नत्वेन कनः सिद्धतया ज्ञापकेन योगविभागेन च तत्साधनमसंगतमिति तेन तत्सूत्रे ऽर्थवद्ग्रहणपरिभाषाया अनुपस्थितिरेव वक्तुं युक्तेति वाच्यम्। तथासति कतिक इति रूपसिद्धये डते श्चेति वार्तिकस्या-वश्यकत्वेन गौरवात्। अर्थवद्ग्रहणपरिभाषया तत्प्रत्याख्यानपरभाष्यविरोधाच्च। पङ्क्तिविंशतीति सूत्रस्थं भाष्यं तु लाघवानादरेण प्रवृत्तमित्यवधेयम्। परिभाषाफलं दर्शयति। [तेनेत्यादिना।] [लौकिकक्रियाद्रव्याद्यवगतिरिति।] तत्राद्ययोः क्रियावगतिः। अन्त्ये द्रव्यावगतिः, न तु कर्तुरीप्सिततममित्यादिना सङ्केतितस्य कर्मकरणादेरिति भावः। क्रियापदेन वैदिकयागादिक्रिये-त्यर्थभ्रमवारणाय लौकिकेति। ननूभयगतिरिति प्रतिज्ञायात्रफलकथनमयुक्तम्। अत्रोभयग्रहणा-संभवात्। संख्यापदग्रहणस्थल एव फलप्रदर्शनस्य युक्तत्वादिति, चेन्न। परिभाषायामुभयगति-रित्यस्योभयोः कृत्रिमाकृत्रिमयोर्व्यस्तयोस्समस्तयोश्च विषयभेदेनैकत्र विषये गतिर्ग्रहणमित्यर्थेन त्रितयग्रहणलाभात्। यद्यप्यकृत्रिमस्यैव ग्रहणमित्येतन्मात्रज्ञापनेऽपि निषेधः स्सार्थकः निरुक्तफल-सिद्धिश्च, तथाप्याम्रेडितादिसंज्ञासु दोषापत्तेः संज्ञाकरणवैयर्थ्यापत्तेश्चाकृत्रिमस्यापीत्येवमेव ज्ञापयितुं युक्तम्। एवं च संख्याग्रहणेऽपि न दोष इति बोध्यम्। [तत्रेति] तेषां त्रयाणां मध्य इत्यर्थः।

वेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम्। अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्घुष्टमात्रस्य॥ स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये॥ यत्तु संज्ञाशास्त्राणामच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं कृत्रिमा-

---

[व्याख्यानमेवेति।] भाष्यकृदादीनामित्यर्थः। एवं च परिभाषाश्रयणेऽप्युक्ताभीष्टार्थव्यवस्थार्थं व्याख्यानस्यैव शरणीकर्तव्यतया प्रदेशेष्वकृत्रिमग्रहणेऽपि तदेव शरणमस्तु स्वरूपमिति सूत्रवन्मास्तु परिभाषेति गूढाशयः। तत्ध्वनयन्नाह। [अत एवेति।] तथा ग्रहणे व्याख्यानस्य शरणत्वादेवेत्यर्थः। [कृत्रिमस्यैवेति।] न विषयभेदेनापि शास्त्रेऽकृत्रिमस्य ग्रहणमित्यर्थः। उक्तमर्थं प्रमाणयति। [स्पष्टं चेदमिति।] प्रागुक्तं सर्वमित्यर्थः। तत्रहि संख्यापदेनैकद्व्यादीनामपि ग्रहणसिद्धये संख्यासंज्ञासूत्रे बह्वादिवत्संख्यापदमप्युद्देश्यसमर्पकतया निर्दिश्यैकद्व्यादीनामपि संख्यासंज्ञाविधेया। अन्यथाऽकृत्रिमत्वात्तेषां ग्रहणं न स्यादित्याशङ्क्योक्तपरिभाषाज्ञापनेन तत्प्रत्याख्यातमिति बोध्यम्। कैयटोक्तं कृत्रिमाकृत्रिमन्यायबीजमुपपाद्य खण्डयति। [यत्त्वित्यादिना।] अयमत्र कैयटाशयः। सर्वे सर्वार्थवाचका इति सिद्धान्तात्प्रत्येकं सर्वेषां शब्दानां सर्वेष्वप्यर्थेषु शक्तिः। तथापि यथा हर्यादिशब्दानां नानार्थत्वेऽपि तात्पर्यवशात्तत्तदर्थविषयकबोधजनकत्वमेवं तत्तच्छब्दानां तत्तदर्थविषयकबोधजनकत्वमेव, नतु सर्वार्थविषयकबोधजनकत्वम्। शक्तिश्च बोधजनकतारूपैव सा च लाक्षणिकेष्वप्यव्याहतैवेति मास्तु लक्षणारूपं वृत्त्यन्तरम्। शक्यो लक्ष्य इति प्रवादस्तु प्रसिद्ध्यप्रसिद्धिनिबन्धन एव। एवं च बह्वादिष्वपि संख्यादिपदानां बोधकतारूपायाश्शक्तेस्सत्त्वेन तस्याः शास्त्रैकसमधिगम्यत्वाभावाद्बहुगणेत्यादिसंज्ञाशास्त्राणां विधायकताया असंभवादेतच्छास्त्रेऽनेन शब्देनैत एव गृह्यन्त इति विशेषरूपेण तात्पर्यनिर्णायकत्वमेव वाच्यम्। एवं च तदेव कृत्रिमाऽकृत्रिमन्यायबीजमिति। उपाध्यायस्य तु सर्वेषां शब्दानां प्रत्येकं सर्वेष्वप्यर्थेषु बोधकतारूपायाः शक्तेः सत्त्वेऽपि विशिष्य सकलपदतत्तदर्थज्ञानस्यास्मदादीनामभावात्तस्याः शक्तेरस्मदादीनां दुर्ज्ञेयतया ऽज्ञातायाश्च तस्या अनुपयोगेनाऽगृहीतशक्तिग्राहकतया संज्ञाशास्त्राणां विधित्वे संभवति नियमत्वायोगः।

**कृत्रिमन्यायबीजमिति, तन्न। तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे संभवति नियमत्वायोगात्। सर्वे सर्वार्थवाचका इत्यभ्युपगमोऽपि योगिदृष्ट्या नत्वस्मद्दृष्ट्या विशिष्य**

---

विधिनियमसंभवे विधिरेव ज्यायानित्युक्तेः। सामान्यतः पदार्थत्वादिना सकलपदार्थज्ञानं तु न प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकबोधोपयोगि। एवं च संज्ञाशास्त्राणां नियामकताया असंभवान्न तदुक्तं न्यायबीजं, किन्तु प्रागुक्तमेवेत्याशयः। तदेतदाह। [तेषामित्यादिना।] संज्ञाशास्त्राणामित्यर्थः। [अगृहीतशक्तिग्राहकत्वेनेति।] अस्मदादिभिरगृहीता या शक्तिस्तद्ग्राहकत्वेनेत्यर्थः। नन्वेवं सर्वे सर्वार्थवाचका इति प्रवादस्य का गति रत आह। [सर्वे सर्वार्थवाचका इति।] [योगिदृष्ट्येति।] अयं भावः। कालवशात्प्राप्तपरिपाकैः सकलप्राणिकर्मभिः स्वफलप्रदानाय भगवतः परमेश्वरस्य "बहुस्यां प्रजायेयेति" सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। चिदंशोऽचिदंशो चिदचिन्मिश्रांश इत्यंशत्रयवानयं बिन्दुः। तत्र चिदंशाद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं चेतनमिश्रं नादमात्रमुत्पद्यते। एतच्च सर्वजगदुपादानं रवपरादिशब्दैर्व्यवह्रियते। तदुक्तं "बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्। स एव श्रुतिसम्पन्नैश्शब्दब्रह्मेति गीयत" इति "क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्। प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत्परा" इति च। अयं च पराशब्दः सर्वगतोऽपि प्राणिनां मूलाधारे संस्कृतपवनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्य पवनसंस्कारो नाम। अयं च पराशब्दः सूक्ष्मतमप्रणवरूपो योगिनां समाधौ निर्विकल्पकज्ञानविषय इत्युच्यते शब्दब्रह्मापरनामधेयस्यैकस्याप्यस्य पराशब्दस्य सर्वशब्दतदर्थोपादानत्वेनोभयरूपता वाच्या। एवं च सर्वशब्दतदर्थोभयरूपपराप्रत्यक्षस्य योगबलेन योगिनामेव सत्त्वेन तेषामेव विशिष्य सर्वशब्दतदर्थज्ञानसत्त्वात्सर्वशब्दानां सर्वैरर्थैः सम्बन्धस्तेषामेव सुग्रहो नास्मदादीनामिति तद्विषयक एव सर्वेसर्वार्थवाचका इति सिद्धान्तो नास्मद्विषयक इति। तदेतदाह। [विशिष्येति] ननु विशिष्य सर्वशब्दार्थज्ञानस्यास्मदादीनामशक्यत्वेऽपि सामान्यतः पदार्थत्वादिनातज्ज्ञानमस्मदादीना-

सर्वशब्दार्थज्ञानस्याशक्यत्वात्सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ६ ॥

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्वाद् गुणनिषेधः स्यादत आह ॥

---

मप्यस्त्येवेत्यत आह। [सामान्यज्ञानंत्विति।] [न बोधोपयोगीति] न प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकविशेषबोधजनकमित्यर्थः। सामान्यतः सकलपदार्थविषयकज्ञानात्सर्वेषां शब्दानां सर्वेष्वर्थेषु सामान्यरूपेण पदार्थत्वादिना शक्तिग्रहे जातेऽपि शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानाकारकत्वनियमात्पदार्थत्वादिनैव बोधः स्यात्। सच न प्रवृत्तिनिवृत्त्यन्यतरोपयोगीत्यव्यावर्तक इति भावः। नन्वेवं "व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्। नित्य एव तु संबन्धो डित्थादिषु गवादिवत्। वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः। अकृत्रिमोभिसंबन्धो विशेषणविशेष्यवदिति हरिग्रन्थविरोधः। तेन संज्ञाशास्त्राणां नियामकतायाः स्फुटं प्रतीतेरिति चेन्न। तद्ग्रन्थस्य तत्र संकेते कृते तत्तत्संकेतज्ञानरूपप्रकरणवशात्तस्यैवोपस्थितिर्नान्यस्येति फलितनियमपरत्वेनादोषात्। तदेतत्कारिकायां विशेषणविशेष्यवदित्यनेन सूचितम्। यथा नीलो घट इत्यनेन विद्यमान एव घटे नीलसंबन्धः पुरुषेण बोध्यते न तु नीलादियोगः क्रियते नील एव न पीत इति नियमश्च फलति तद्वदितितदर्थात्। तदेतद्ध्वनयन्नाह। [अन्यत्रेति।] मञ्जूषायामित्यर्थः।

सिंहावलोकनन्यायेनेत्संज्ञकवर्णविशिष्टविधौ विशेषं वक्तुं परिभाषामवतारयति। [नन्वित्यादिना।] [अध्येता शयितेति।] अधिपूर्वादिङः शीङश्च तृचि गुणे इमे रूपे। क्वचिच्छयित इति क्तान्तःपाठः। तदा निष्ठाशीङित्यादिना क्तस्य कित्त्वनिषेधाद्गुणे रूपसिद्धिरिति बोध्यम्। [गुणनिषेधः स्यादिति।] अयं भावः। क्ङिति चेत्यत्रेको गुणेत्यत इक इति गुणवृद्धी इति च पदद्वयमनुवर्तते। क्ङितीति च गुणवृद्धिविशेषणम्। निषेध्यत्वेन तयोः प्राधान्यात्। अनभिनिर्वृत्तयोश्च तयोः क्ङित्परत्वासंभवेन क्ङितीति भावलक्षणसप्तम्येव। न तु

परसप्तमी। सा च ज्ञापकत्वार्थिका। ज्ञापकत्वं च क्ङितोर्गुणवृद्ध्योश्च सम्बन्धं विनाऽनुपपन्नं सद्विधिशास्त्रकॢप्तनिमित्तत्वमादाय पर्यवस्यति। एवं च निमित्ततया क्ङिज्ज्ञाप्ये गुणवृद्धी नेति सूत्रार्थः। स्पष्टं चेदमुद्योते। एतत्फलितार्थकथनमेव मूले गित्क्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्त इति। निमित्तता चात्र कारणमात्रपरा न तु निमित्तकारणमात्रपरा। अस्यामवस्थायां परिभाषाया अभावेनान्यस्यापि निमित्तत्वे बाधकाभावात्। एवं चाध्येता शयितेत्यादौ ङितोऽङ्गस्यापि गुणहेतुत्वेन क्ङितिचेति गुणनिषेधः स्यादिति। यद्वा तन्निमित्तग्रहणं कर्तव्यमिति वार्तिकारम्भसामर्थ्यान्निर्दिष्टपरिभाषाबाधेन क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इत्यर्थात्स निषेधः स्यादिति बोध्यम्।

यत्तु क्ङितीति सति सप्तमी तत्र ज्ञाप्यज्ञापकभावस्य सप्तम्यर्थतया क्ङित्सत्ताज्ञाप्यो गुणवृद्ध्यभाव इति वाक्यार्थे ज्ञाप्यत्वस्य ज्ञानजन्यज्ञानविषयतारूपत्वेन जनकज्ञानविषयस्य जन्यज्ञानविषयापेक्षया सिद्धताया निर्विवादत्वेन सिद्धसाध्यसमभिव्याहारन्यायेन राहूपरागे स्नायादित्यादौ स्नानादीनां राहूपरागादिनिमित्तत्ववद्गुणवृद्ध्यभावस्य क्ङिन्निमित्तत्वं फलविधया भासत इति चन्द्रिकाकृतः, तदयुक्तम्। तथाहि। सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपदिश्यत इति न्यायशरीरम्। तस्य चायमर्थः। सिद्धं कारकादि साध्यं क्रियारूपम्। तयोः समभिव्याहारे सिद्धं साध्यायोपदिश्यते ज्ञाप्यते। अस्य साधनत्वेनेति शेषः। क्रियाकारकयोः समभिव्याहारे कारकं क्रियासाधनतया ज्ञाप्यत इत्यखण्डार्थः। दध्यादिनिष्ठमज्ञातं होमसाधनत्वं दध्ना जुहोतीत्यादिना ज्ञाप्यत इति भावः। अयं च न्यायः प्रवर्तनारूपविधिविषयत्वं क्रियाया एव न द्रव्यस्येति कथं दध्ना जुहोतीत्यादौ दध्नो होमसाधनतया विधानमित्याशङ्कायां तस्य विधेयतासम्पादनाय मीमांसकैः प्रदर्शितः। एवं च प्रकृते क्ङितोर्द्रव्यत्वाभावाद्द्रव्यविषयकतया मीमांसकैरुपदर्शितेन तेन न्यायेन तयोर्गुणवृद्धिनिषेधनिमित्तताया अलाभात्। शब्दस्य द्रव्यत्वमप्यस्तीति नागेशसिद्धान्तरीत्या कथंचित्तन्न्यायविषयत्वेऽपि राहूपरागे स्नायादिति दृष्टान्तदानं सुतरामयुक्तम्। राहूपरागस्य द्रव्यत्वाभावेन तन्न्यायाविषयत्वात्। किंच भाष्यस्वारस्येन यस्य च भावेनेति सूत्रस्य यत्र मानान्तरेण ज्ञातस्वरूपस्याऽर्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवृत्त्या राहूपरागे स्नायादित्यत्र स्नानस्यानेनैव विधानान्मानान्तरेणाऽसिद्धतया भावलक्षणसप्तम्यास्तत्र वक्तुमशक्यत्वात्। राहूपरागपदस्य ज्ञापकक्रियाश्रयवाचकत्वा-

## कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥

## स्थण्डिलाच्छयितरि इति निर्देशश्चास्यां ज्ञापकः।

---

भावात्तस्य निर्ज्ञातकालत्वाभावाच्च न तत्र तेन सप्तमी किन्त्वधिकरणसप्तम्येव। राहूपरागस्य स्नाननिमित्तत्वंत्ववच्छेदकावच्छेदेनाऽन्वयस्यौत्सर्गिकत्वाद्राहूपरागकालावच्छेदेन स्नानविधानात्फलतीति बोध्यम्। स्पष्टं चेदं सुबर्थवादे मञ्जूषायाम्। नच गितः प्रत्ययस्यैव संभवेन तत्साहचर्यात् क्ङितोरपि प्रत्यययोरेव ग्रहणान्नात्र गुणनिषेधप्रसङ्ग इति वाच्यम्। विनिगमनाविरहात्कृत्त्वेन आर्धधातुकत्वेन वा तद्ग्रहणापत्तावतिप्रसङ्गेन तत्परिभाषाया इहानाश्रयणस्यैव युक्तत्वात्। किंच तदाश्रयणेऽपि कामयत इत्यादौ गुणनिषेधाप्रवृत्तये उपायान्तरस्यैवान्वेषणीयतयाऽत्र तत्प्रवृत्तेरप्रयोजकत्वेनोपेक्षितत्वाच्चेति बोध्यम्। यत्तु यद्यपि कार्यकालपक्षे नात्र दोषः। तत्पक्षे हि पर्युदासन्यायेन क्ङिद्भिन्नयोः सार्वधातुकार्धधातुकयोरिगन्ताङ्गस्यगुणो भवतीत्येवं विधिशास्त्रीयो वाक्यार्थः। यदि वा प्रसज्यप्रतिषेधेन सार्वधातुकार्धधातुकयोर्गुणो भवति क्ङिति न भवतीति वाक्यैकवाक्यतया समूहालम्बनात्मको वाक्यार्थः। एवमपि विशिष्टबोधीयविषयतापन्नयोः क्ङितोः प्रत्यययोरेव ग्रहीतुमौचित्यान्नोक्तदोषावकाश, स्तथापि यथोद्देशपक्षमाश्रित्य दोषोपन्यासः। अत्र पक्षे लघूपधांशे निषेधप्रवृत्तये क्ङिति सति गुणवृद्धी न भवत इत्यर्थे प्रागुक्तरीत्या स्वीक्रियमाणे दोषप्रसङ्ग इति बोध्य "मिति चन्द्रिकाकाराः"। तन्न। अस्य ग्रन्थस्य क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यमिति वार्तिकानुसारेण प्रवृत्ततया तत्प्रत्याख्यानाय क्ङिति चेत्यस्य भगवता स्वीकृतेन "यत्र गुणवृद्धी विधीयेते तत्र क्ङिति नेत्युपतिष्ठत" इत्येवं रूपेण पदोपस्थापकपरिभाषात्वपक्षेणैतद्ग्रन्थासङ्गतेर्वक्तुमशक्यत्वात्। वार्तिकारम्भपक्षे क्ङितीत्यस्य भावलक्षणसप्तमीत्वेनौपश्लेषिकाधिकरणसप्तम्यन्तेन सार्वधातुकार्धधातुकयोरित्यनेनैकवाक्यताया असंभवादिति बोध्यम्। एतेन क्ङितीत्यस्य परसप्तमीत्वं स्वीकृत्याध्येतेत्यादौ दोषवारणादिदमवतरणमयुक्तमिति वदन्तोऽन्येऽपि परास्ताः। प्रकृतकार्योद्देश्यं कार्यानुभवे सति निमित्तत्वेन नाश्रीयत इति परिभाषार्थः। अत्रार्थे ज्ञापकं दर्शयति। [निर्देशश्चास्या ज्ञापक इति।] नच शीङ ईकारस्य गुणरूपकार्यानुभवसत्त्वेन तस्य निमित्तत्वाभावेऽपि विशिष्टस्य तदभावेन निमित्तत्वे बाधकाभावा

ऊर्णुनविषतीत्यादिसिद्धये कार्यमनुभवन्निति। अत्र हि द्विर्वचनेऽचीति नुशब्दस्य द्वित्वम्। अन्यथा सन्यङो-

---

ज्ज्ञापनोत्तरमपि स्वांशे चारितार्थ्यानुपपत्तिरिति वाच्यम्। प्रकृतकार्योद्देश्यतापर्याप्त्यधिकरणस्य यस्य साक्षादवयवद्वारा वा कार्यानुभवस्तस्य निमित्तत्वेनाऽनाश्रयणात्प्रकृतेऽवयवद्वारा विशिष्टस्यापि कार्यानुभवसत्त्वेन निमित्तताया असंभवात्। नचैवमरिरिषतीत्यस्याऽसिद्धिः, ऋ धातोः सनि स्मिपूङ्रञ्ज्वशां सनीत्यनेन सन इटि ऋ+इ स इत्यवस्थायां सन्यङोरित्यस्य षष्ठ्यन्तत्वेन द्वित्वरूपप्रकृतकार्योद्देश्यतापर्याप्त्यधिकरणताया विशिष्टे सत्त्वेन तस्यावयवद्वारा कार्यानुभवसत्त्वेन विशिष्टस्य द्वित्वनिमित्तत्वाभावेऽपि इसस्तन्निमित्तत्वे बाधकाभावाद्द्विर्वचनेऽचीति निषेधेन द्वित्वात्पूर्वं गुणाप्रवृत्तेरिति वाच्यम्। प्रकृतकार्योद्देश्यतातपर्याप्त्यधिकरणस्य यस्य साक्षादवयवद्वारा वा कार्यानुभवस्तस्य तदवयवस्य च निमित्तत्वं नेत्यर्थेन प्रकृते तदवयवस्येसोऽपि द्वित्वनिमित्तत्वाभावेन द्विर्वचनेऽचीत्यस्याप्रवृत्त्या गुणे रिस् शब्दस्य द्वित्वे तत्सिद्धेः। नचैवमूर्णुनविषतीत्याद्यसिद्धिः। ऊर्णुञ्धातोस्सनि सनीवन्तर्धेत्यादिना सन इटि ऊर्णु इस् इत्यवस्थायामुक्तरीत्या इस् इत्यस्य द्वित्वनिमित्तत्वाभावेन द्विर्वचनेऽचीति निषेधाप्रवृत्तौ गुणावादेशयोः कृतयो स्तदुत्तरं द्वित्वेऽभ्यासे उकारश्रवणानापत्तेरिति वाच्यम्। प्रकुतकार्योद्देश्यतापर्याप्त्यधिकरणस्य यस्य साक्षादवयवद्वारा वा कार्यानुभवस्तस्य प्रत्यासत्त्या तादृशतदवयवस्य च निमित्तत्वेनाऽनाश्रयणमित्यर्थाश्रयणेन प्रकृते कार्यभाजस्तदवयवस्य नु शब्दस्य द्वित्वनिमित्तत्वाभावेऽपि इसो निमित्तत्त्वे बाधकाभावाद्द्विर्वचनेऽचीति निषेधेन गुणस्याप्रवृत्तौ नुशब्दस्य द्वित्वे इष्टसिद्धेरिति बोध्यम्। निर्देशश्चेति चशब्देन निष्ठाशीङ्ित्यनेन निष्ठाप्रत्ययस्य विहितकित्त्वनिषेधस्य समुच्चयः। तद्धि शयितइत्यादौ गुणनिषेधाभावाय। एतत्परिभाषाऽभावे तु तेन तस्य कित्त्वनिषेधेऽपिशीङो ङित्त्वमादाय गुणनिषेधस्य दुर्वारतया तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम्। परिभाषाघटकं कार्यमनुभवन्निति विशेषणमेव निरुक्तप्रत्यासत्त्याश्रयणे बीजमिति सूचयन्नाह। [ऊर्णुनविषतीत्यादीति।] [अन्यथेति।]

रित्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् ॥ वस्तुतः समवायिकारणनिमितकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या। अत एव हिः प्रयुक्तः। स हि तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं

---

कार्यमनुभवन्निति विशेषणाभावे इत्यर्थः। [षष्ठीत्यादि।] अन्यथा प्रतीषिषतीत्यत्र सनोद्वित्वानापत्तिरिति भावः। [इसो द्वित्वनिमित्तत्वाभावादिति।] सन्नन्तस्य कार्यित्वे वृक्षप्रचलनन्यायेनेसोऽपि कार्यित्वान्निमित्तत्वं न स्यादिति भावः। न्यायसिद्धेऽर्थे ज्ञापकानुसरणं व्यर्थमित्याशयेनाह। [वस्तुत इति।] [समवायिकारणनिमित्तकारणयोरिति।] नन्ववयवावयविनोः संबन्धस्य समवायत्वमित्यनुभवाल्लोके निमित्तकारणस्य दण्डस्य समवायिकारणमृत्तिकायाश्च भेद इति शक्यते वक्तुम्। इह तु स्थान्यादेशयोः प्रसज्यप्रसञ्जकभावसत्त्वेऽप्यवयवावयविभावसंबन्धस्याऽभावात्कार्यिणः कार्यनिरूपितसमवायकारणताया वक्तुमशक्यतया कथं तस्य सकललोकतन्त्रप्रसिद्ध्या निमित्तत्वबाध इति चेन्न। घटपटादिरूपकार्यनिष्पत्त्यनन्तरं तत्समवायिकारणानां तन्तुकपालादीनां यथा व्यवहारतो निवृत्तिरेवं गुणादिरूपकार्यप्रवृत्त्यनन्तरं कार्यिणो व्यवहारतो निवृत्त्या समवायिकारणसाधर्म्येणारोपितं समवायिकारणत्वमाश्रित्य तेन तद्विरुद्धस्य निमित्तत्वस्य निवृत्तिरित्याशयात्। नचास्यारोपस्याशास्त्रीयत्वेन कथं शास्त्रव्यवस्थापकत्वमिति वाच्यम्। अशास्त्रीयारोपस्याप्येकदेशविकृतमनन्यवदित्यादिविषये शास्त्रव्यवस्थापकताया दृष्ट वात्। प्राग्दीव्यतोऽणित्यादिनिर्देशादशास्त्रीयस्यापि शास्त्रव्यवस्थापकत्वं शक्यते वक्तुमिति चेदत्रापि स्थण्डिलाच्छयितरि णेरध्यने वृत्तमित्यादिनिर्देशात्तस्य शास्त्रव्यवस्थापकत्वं सुवचमिति बोध्यम्। यद्वा सुवर्णस्य कुण्डलरूपेणेव कार्यिणः कार्यात्मना परिणामात्तन्निरूपितं समवायिकारणत्वं कार्यिणः शक्यते वक्तुम्। नचैवं शब्दानित्यत्वप्रसङ्ग इति वाच्यम्। कार्यिबुद्धेरेव परिणामाङ्गीकारेणादोषात्। परिणामिन इव परिणामिबुद्धिविषयस्यापि तदुपादानताया वक्तुं शक्यत्वात्। नह्यवयवावयविनोर्गुणगुणिनोर्जातिव्यक्त्योः क्रियाक्रियावतोरेव समवाय इति नियमः।

**द्योतयतीति तत्त्वम्॥ द्विर्वचनेऽचि इत्यत्र भाष्ये ध्वनितैषा॥ १०॥**

---

शब्दार्थयोरपि समवायस्य ग्रन्थकृताऽन्यत्र निरूपितत्वादिति बोध्यम्। यद्वा अत्रार्थेऽयं शब्द इति व्यवहारेण शब्दार्थयोराधाराधेयभावप्रतीत्या तयोरपि समवायः संबन्ध इति ग्रन्थकृता प्रातिपदिकार्थविचारे मन्जूषायां निरूपितत्वेन तद्वत् स्थानिन्यादेश इति प्रसिद्धव्यवहारेण स्थान्यादेशयोरप्याधाराधेयभावप्रतीत्या स्थान्यादेशयोरविनाभावाच्छब्दार्थयोरिव तयो रयुतसिद्धत्वस्य च सत्त्वात्तयोरपि समवायः संबन्ध इत्यादेशनिरूपितं समवायिकारणत्वं स्थानिनो वक्तुं शक्यत इति ग्रन्थकृदाशयो विभावनीयः। एतेन सर्वथा ज्ञापकसाध्यैवैषा न्यायसिद्धत्वं तु न युज्यत इति वदन्तः परास्ताः। भाष्यवार्तिकयोरुपनिबद्धानामेव परिभाषाणामत्र व्याख्येयत्वेन प्रतिज्ञानादस्या भाष्यारूढतां दर्शयितुमाह। [भाष्ये ध्वनितेति।] तत्र हि भाष्ये कार्यातिदेशपक्षे चक्रतुरित्यादावभ्यासरूपासिद्धिप्रयुक्तं दूषणमभिधायाज्ग्रहणसामर्थ्याद्रूपातिदेशपक्षज्ञापनेन तं दोषं परिहृत्य सिद्धान्तभूते तत्पक्षे "तत्र गाङः प्रतिषेधो वक्तव्यः। अधिजगे। इवर्णाभ्यासता प्राप्नोती" त्येवं रूपं दूषणमभिधाय गाङ्लिटीत्यत्र लकारप्रश्लेषेण लावस्थायामेव गाङादेशप्रवृत्त्या तस्य द्वित्वनिमित्तभूताज्निमित्तकत्वाभावान्न दोष इत्युक्तम्। तत्पक्षे अरिरिषतीत्यत्रापि दोषसत्त्वेनैवं रीत्या तत्रापि शङ्कासमाधानयोः करणस्यावश्यकत्वेऽपि तदकरणादत्र प्रकारान्तरेणोक्तदोषवारणं सुकरमिति तदाशयः प्रतीयते। तच्चैतत्परिभाषाश्रयणरूपमेवेत्येनां परिभाषां भाष्यकारः सूचयतीति भावः। नन्वेतत्परिभाषाभ्युपगमेऽज्ग्रहणस्य भाष्यकृदुक्ता रूपातिदेशपक्षज्ञापकता न संगच्छेत। ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावात्। तथा हि। जेघ्रीयते देध्मीयते इत्यादौ द्विर्वचनेऽचीति सूत्रस्याप्रवृत्ति र्हि तत्फलम्। यदि हि कार्यातिदेशः स्यात्तदा ईत्वोत्तरं तत्प्रवृत्तावपीकारसहितस्य द्वित्वे रूपसिद्ध्या तद्ग्रहणमनर्थकं सद्रूपातिदेशपक्षं ज्ञापयति। ज्ञापिते तु तस्मिन् तेन स्थानिरूपातिदेशाद् घ्राशब्दस्य द्वित्वे जेघ्रीयतइत्यादिरूपासिद्धिः, अतस्तत्र तदप्रवृत्तयेऽज्ग्रहणमावश्यकमिति स्थितम्। यदीयं परिभाषा स्यात्तदा नटभार्यावद्व्यञ्जनानि भवन्तीति षाष्ठभाष्यरीत्यात्र द्वितीयाजवधिकस्य घ्रीय्शब्दस्यैव द्वित्वप्राप्त्या अवयवद्वारा यङो द्वित्वकार्यित्वादनया परिभाषया यङो द्वित्वनिमित्तत्वाभावेना

ज्ग्रहणाभावेऽपि द्विर्वचनेऽचीत्यस्याप्रवृत्त्या इष्टसिद्धौ स्वांशे चारितार्थ्यं दुर्निरूपमेव स्यादिति चेत्सत्यम्। स्वरान्तरे व्यञ्जनान्युत्तरस्येति प्रातिशाख्यानुसारेण द्वितीयहल्पर्यन्तस्यैव द्वित्वमिति मते घ्राशब्दस्यैव द्वित्वप्राप्त्या यङो द्वित्वकार्यित्वाभावेन निमित्ततया निराबाधात् तत्र द्विर्वचनेऽचीति शास्त्रस्याप्रवृत्तयेऽज्ग्रहणस्यावश्यकत्वमित्याशयात्। अरिरिषतीत्यादौ तु रिशब्दस्य सनवयवत्वेनाऽवयवद्वारा सनोऽपि द्वित्वकार्यितया तन्निमित्तत्वाभावात्तदप्रवृत्तिरित्याशयः। नटभार्यावद्व्यञ्जनानीति षाष्ठभाष्यरीत्यात्वधिजगे इत्याद्येवाज्ग्रहणव्यावर्त्यमित्यवधेयम्। स्पष्टं चेदमुद्योते। यत्तु एतदनुपपत्तिमाशङ्क्य चन्द्रिकाकृतः। प्रकृतकार्योद्देश्यतापर्याप्त्यधिकरणस्य यस्य साक्षादवयवद्वारा वा कार्यानुभववत्तस्य तदीयतादृशावयवस्य च निमित्तत्वं नेति परिभाषार्थाङ्गीकारेण प्रकृते यङन्तस्य तदवयवस्य वा कार्यानुभववतो निमित्तत्वासंभवेऽपि यङो निमित्तत्वे बाधकाभाव इति समादधुः, तदयुक्तम्। तुल्यरीत्या अरिरिषतीत्यत्र सन्नन्तस्य कार्यानुभववतस्तदवयवस्येसो वा द्वित्वनिमित्तत्वाभावेन द्विर्वचनेऽचीत्यस्य प्रवृत्तौ रूपासिद्धेरिति बोध्यम्। नन्वियं परिभाषा निष्फला। क्ङितिचेत्यत्रोपपदविभक्तेरिति न्यायेन परसप्तमीत्वस्यैव न्याय्यत्वेनाध्येता शयितेत्यादौ गुणनिषेधस्याऽप्रसक्तेः। भिन्नमित्यादौ निषेधप्रवृत्तिस्तु क्तोः कित्त्वेनैकव्यञ्जनव्यवधानेऽपि निषेधप्रवृत्त्यभ्यनुज्ञानेन सिद्धेति तन्निमित्तग्रहणं कर्तव्यमिति वार्तिकं प्रत्याचक्षाणेन भगवता भाष्यकारेणैव स्फुटीकृतम्। द्विर्वचनेऽचीत्यत्र द्विरुच्यते यस्मिन्परतइति व्युत्पत्त्या द्वित्वकार्यिणः परत्र श्रूयमाणं यदजादिप्रत्ययात्मकं द्वित्वनिमित्तं तन्निमित्तकाजादेशस्यैव स्थानिरूपातिदेश इत्यर्थस्य पर्यवसन्नतया अरिरिषतीत्यत्र सनवयवभूतस्येकारस्य द्वित्वकार्यित्वेन ततः परत्र श्रूयमाणाजादिप्रत्ययस्याभावादेव रूपातिदेशस्याऽप्रवृत्त्या तस्याप्येतत्फलत्वाभावादिति 'चे' दत्र गुरुचरणाः। हर्यनुभव इत्यादौ रेफस्य द्वित्ववारणायेयं परिभाषा आवश्यकी। नच "अचो रहाभ्या" मित्यत्र विशेषविहितेन निमित्तत्वेन कार्यित्वस्य बाधान्न दोष इति वाच्यम्। आकडारादिति सूत्रस्यैवास्याः परिभाषायाः कार्यित्वनिमित्तत्वयो र्विरोधप्रतिसन्धायकत्वेनैतदभावे तयोर्विरोधस्य दुर्ज्ञेयतया असंभव एव बाधकत्वमिति वार्तिकनये तयो र्बाध्यबाधकभावस्य वक्तुमशक्यत्वात्। यद्यपि सत्यपि संभवे बाधनं भवतीति भाष्यनये न दोष, स्तथापि सूत्रवार्तिकमतानुसारेणेयं परिभाषा आरब्धा वर्णाश्रये नास्ति प्रत्ययलक्षण मित्यादिवत्। अत एव तन्निमित्तग्रहणं कर्तव्यमिति वार्तिकानुरोधेनैवेयं परिभाषाऽवतारितेति वदन्ति। अत्रत्यं तत्त्वं सुधियो विभावयन्तु यत्त्वत्र जयदेवमिश्राः। अरिरिषतीत्येतदस्याः

## ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह॥

---

परिभाषाया असाधारणं फलमिति वदन्तः अनन्तरं "वस्तुतस्तु अरिरिषतीत्यादावपि परिभाषाया नोपयोगः। द्वित्वनिमित्ततापर्याप्त्यधिकरणान्निमित्तककार्यस्यैव तेन निषेधात्प्रकृते इकारस्य द्वित्वनिमित्ततापर्याप्त्यनधिकरणत्वेन निषेधाप्रवृत्त्या इष्टसिद्धेः। चक्रतुरित्यादावकारस्य द्वित्वनिमित्ततापर्याप्त्यनधिकरणत्वेन निषेधाप्रवृत्त्या परत्वाद्यणि द्वित्वासिद्ध्यापत्तिरिति चे त्तथापि द्वित्वनिमित्ताश्रयाच्पर्याप्तनिमित्तताककार्यस्यैव निषेधस्वीकारेणोभयत्र सामञ्जस्यात्। नच जग्मतुरित्यादावुपधालोपीयनिमित्तता अतुसि पर्याप्ता, नाकार इति निषेधाप्रवृत्त्या प्रथममुपधालोपे रूपासिद्धिरिति वाच्यम्। अजादौ क्ङिति लोप इत्यर्थेनाच्त्वावच्छिन्ननिमित्ततााया अच्पर्याप्तत्वा" दित्यादिना शाखाचङ्क्रमणेन पाठकव्यामोहकं विचारमकुर्वन्। वस्तुतस्तु द्विर्वचनेऽचीत्यस्य अजादिद्वित्वनिमित्तभूतप्रत्ययनिमित्तक अच आदेशः स्थानिवद्रूपं लभत इति तादृशाजादेशो न भवति द्वित्वे कार्ये इति वा अर्थस्य भाष्यप्रदीपोद्योतैः स्फुटं प्रतीत्या तादृशकोलाहलस्य सुतरामनवकाशः। तत्र च निमित्तत्वं तद्भावभावितामात्रेणापि, नतु साक्षादेवेत्याग्रहः। अतो न चक्रतुरित्यादौ दोष इति स्पष्टमुद्द्योत इति सुधीभिर्विभावनीयम्।

घुसंज्ञाशास्त्रघटकनिषेधांशाव्याप्तिवारक नानुबन्धकृतमनेजन्तत्वमिति परिभाषानिरूपणानन्तरं मध्ये प्रसक्तानुप्रसक्त्या परिभाषान्तरनिरूपणेऽपि सिंहावलोकनन्यायेनेदानीं तच्छास्त्रघटकविध्यंशाव्याप्तिवारकस्य यदागमा इत्यस्य निरूपणमुचितमाकाङ्क्षितत्वादिति सूचयन्नाह। [नन्वित्यादिना।] [दापेर्न स्यादिति।] तथा च नेर्गदेति णत्वानापत्तिरिति भावः। ननु यथोद्देशपक्षे भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण धातुसंज्ञासमनन्तरमेव घुसंज्ञायां प्रवृत्तायां ततः पुकि तद्विशिष्टे घुसंज्ञाया अभावेऽपि दाशब्दे पूर्वप्रवृत्तघुसंज्ञास्मरणेनोपसर्गनकारस्य णत्वस्य सुवचतया कथमस्य संगतिः। कार्यकालपक्षेऽपि पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति सिद्धान्ता ण्णिचः प्रागेवोपसर्गयोगेन णत्वप्राप्तौ तद्विध्येकवाक्यतया घुसंज्ञायां णत्वे ततो णिचि पुगागमे चेष्टसिद्ध्या कथमस्य संगतिरिति चेन्न। पुगागमोत्तरं दाशब्दे निरुक्तरीत्या

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

## यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण

---

घुसंज्ञाबुद्धावप्यागमसमवधाने केवलस्य तस्य निरर्थकत्वेन आगमविशिष्ट एव क्रियावाचकत्वनिबन्धनधातुसंज्ञायाः सत्त्वाद्यक्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा इति न्यायेन दान्निरूपितोपसर्गत्वस्य प्रशब्दे निशब्दे च सत्त्वेऽपि घुसंज्ञावद्दाशब्दनिरूपितोपसर्गसंज्ञाया अभावान्नेर्गदेत्यत्र प्रत्यासत्त्या घुनिरूपितोपसर्गत्वस्यैव ग्रहणीयतया आद्यपक्षे तत्र पान्ते घुसंज्ञामन्तरा णत्वप्रवृत्ते दुर्वचत्वात्। द्वितीयेऽपि पूर्वं धातुरुपसर्गेण युज्यत इत्यस्योपसर्गद्योत्यार्थेन पूर्वं धातो योगः ततः साधनप्रयुक्तकार्येण क्रियायाः साध्यत्वेन प्रतीतेस्साध्यस्य च साधनाकाङ्क्षया तत्सम्बन्धं विना प्रतीतेरपर्यवसानादित्यर्थस्य ग्रन्थकृदभिमतत्वेनोपसर्गद्योत्यार्थविशेषविशिष्टस्य दाधातोः साधनप्रयुक्तकार्येण णिच्तिबादिना योगे प्रनि + दा + इ + ति इति स्थिते परत्वान्नित्यत्वाच्च घुसंज्ञातः पूर्वं पुगागमे ततः केवलदाशब्दस्य निरर्थकत्वेन घुसंज्ञाया अप्राप्तौ णत्वप्रवृत्तेर्दुर्वचत्वात्। नच बहिर्भूतणिन्निमित्तकपुगपेक्षया ऽन्तरङ्गत्वाद् घुसंज्ञा स्यादिति वाच्यम्। संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वस्य षट्संज्ञासूत्रे कृन्मेजन्त इति सूत्रे च ग्रन्थकृतोक्तत्वेन पुगपेक्षया अस्या अन्तरङ्गताया वक्तुमशक्यत्वात्। पूर्वं धातुरुपसर्गेण युज्यत इत्यस्य यथाश्रुतार्थकत्वमङ्गीकुर्वतां प्राचामपि मते सपादसप्ताध्यायीस्थकार्यप्रवृत्तिसंभावनायां पूर्वं त्रैपादिकस्याऽप्रवृत्तेर्णिजाद्युत्पत्तेः प्राङ्णत्वं दुर्लभमेवेति नावतरणग्रन्थासङ्गतिः। नच पान्ते घुत्वाभावेऽपि प्रकृतिग्रहणे ण्यधिकस्यापिग्रहणमिति परिभाषया णत्वं सुलभमिति वाच्यम्। स्थापयतीत्यादौ तिष्ठत्यादेशवारणाय धर्मिग्राहकसाजात्यात्तस्याः कुत्वमात्रविषयकत्वस्यावश्यकत्वात्। नच परिभाषासत्त्वेऽप्यादाबितिप्रतिषेधाद् घुत्वाप्रवृत्तौ णत्वं दुर्लभमिति वाच्यम्। तत्रौपदेशिकस्यैव दाप्शब्दस्य ग्रहणेनाऽदोषादिति बोध्यम्। परिभाषार्थं निरूपयति। [यमुद्दिश्येति।] यस्य आगमा यदागमा इति संबन्धसामान्यषष्ठ्यन्तेन समासे पाश्चात्यबोधविषयोऽयमुद्देश्यविधेयभावः। न तु तस्य षष्ठ्यर्थता। तथा सति नीलो घट इत्यादावपि षष्ठ्यापत्तेः। यद्वा यदुद्देश्यका आगमा यदागमा इति मध्यमपदलोपिसमासेन फलितोऽयमर्थ इति बोध्यम्। [आगम इति।] अस्य य इत्यादिः। [तद्गुणीभत इति।] अस्य यत इत्यादिः। अस्यैव विवरणं [शास्त्रेणेत्यादि।] आद्यन्तौ

तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः। तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्ग-

---

टकितावित्यादिनेत्यर्थः। [तदवयवत्वेनेति।] आरोपिततदवयवत्वेनेत्यर्थः। तद्गुणीभूत इत्यत्र गुणशब्दस्यावयवार्थकत्वेन च्विप्रत्ययस्यारोपितार्थकत्वेन चायमर्थो लभ्यत इति भावः। वास्तविकावयवत्वं तु न, शब्दानित्यत्वप्रसङ्गात्। परिभाषायां ग्रहणशब्दस्य भावल्युडन्तत्वे तस्य ज्ञानार्थकतया उच्चारणार्थकतया वा अर्थासङ्गतेराह। [तद्ग्राहकेणेति।] ग्रहणशब्दे बाहुलकात्कर्तरि ल्युडिति भावः। नन्वेवमपि तद्ग्राहकेण श्रोत्रेण तद्ग्रहणेऽपि प्रकृते इष्टासिद्धिरत आह। [तद्बोधकेनेति।] गृह्यत इत्यस्यैव विवरणं बोध्यत इति। अस्य समुदाय इति शेषः। एवंच यमुद्दिश्य य आगमो विहितः स यतः शास्त्रेण आरोपिततदवयवत्वेन बोधितः अतस्तद्विशिष्टस्तद्बोधकेन गृह्यत इत्यक्षरार्थः। आगमरहिते दृष्टानामविशेषेण सर्वेषामेव धर्माणामागमविशिष्टे यथाकार्यमतिदेश इति यावत्। अत्रोद्देश्यत्वं यथाकथंचित् नत्वतिदिदिक्षितधर्मावच्छेन तद्व्याप्यधर्मावच्छेदेन वेत्याग्रहः। अत एव प्रणिदापयतीत्यादौ घुत्वसिद्धिः। अन्यथा पुग्विधौ दात्वस्य तद्व्याप्यधर्मस्य वा उद्देश्यत्वेनाग्रहात्त न सिद्ध्येत्। पुग्विधावुद्देश्यत्वेन गृहीतमादन्तत्वं तु न दात्वव्याप्यमिति बोध्यम्। ननु यदागमास्तद्ग्रहणेन गृह्यन्त इत्येतावतैव सिद्धे तद्गुणीभूता इत्यनर्थकमित्याशङ्क्यास्या लोकन्यायसिद्धत्वं दर्शयितुं तत्साधकतया तद्विशेषणं सफलमित्याशयेनाह। [तत्रेति।] तद्ग्रहणेन ग्रहण इत्यर्थः। [तद्गुणीभूता इत्यंश इति।] अस्य परिभाषाघटक इत्यादिः। [बीजकथनमिति] हेतुप्रदर्शनपरमित्यर्थः। तद्ग्रहणेन ग्रहणे तद्गुणीभूतत्वं तत्र च तदुद्देशेनागमविधानं च बीजमिति बोध्यम्। तत्रेत्यस्य परिभाषायामित्यर्थे तु बीजकथनमित्यत्र तद्ग्रहणेन ग्रहण इति शेषपूरणं कार्यम्। अत्राद्यव्याख्याने तच्छब्दस्याव्यवहितपूर्वप्रक्रान्तार्थपरामर्शकतया तदेव स्वारसिकमिति भाति। तद्गुणीभूत इत्येकवचनान्तपाठे तु तत्रेत्यस्य व्याख्यान इत्यर्थः। अनेन परिभाषास्थस्यापि तदुक्तप्रायमेवेति भावः। परिभाषाघटकतद्गुणीभूता इत्यनेन सूचितं न्यायसिद्धत्वमस्या विशदयति। [लोकेऽपीत्यादिना।]

**धिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते ॥ यमुद्दिश्य विहित इत्युक्तेः प्रनिदारयतीत्यादौ न दारित्यस्य**

---

अत्रापिशब्दः शास्त्रसमुच्चायकः। [तद्विशिष्टस्यैवेति।] अधिकाङ्गविशिष्टस्यैवेत्यर्थः। एवेन तद्रहितस्य केवलस्य व्यावृत्तिः। लोके यथा गड्वादिविशिष्टे देवदत्ते तदुत्पत्तिप्राक्कालिकतद्व्यवहारस्तथा शास्त्रेऽपि केवले यो व्यवहारस्स आगमविशिष्टेऽपीति नैषा ज्ञापकसाध्या, नापि वाचनिकीत्याशयः। ननु यदागमा इत्यस्य यथाकथञ्चिद्यत्संबन्धिन आगमा इत्येवार्थोऽस्तु किमुद्देश्य विधेयभावपर्यन्तानुधावनपरिक्लेशेनेत्यत आह। [यमुद्दिश्येति।] [न दारित्यस्य घुत्वमिति।] यत्सम्बन्धिन आगमा इति सामान्यतः सम्बन्धनिवेशे करपादाद्यवयवानामङ्गुल्यदीनां शरीरावयवत्वव्यवहारलब्धेनावयवावयवः समुदायावयव इति न्यायेन दाशब्दावयवाकारोद्देश्यकोऽपि रेफागमः परम्परया दाशब्दसंबन्धी भवत्येवेति विशिष्टस्यानया परिभाषया दाशब्दत्वे घुत्वापत्तिः। यमुद्दिश्यविहित इत्युक्तौ तु यत्पर्याप्तोद्देश्यताक आगम इत्यर्थलाभाद्रेफस्य परम्परया दाशब्दसम्बन्धित्वेपि दापर्याप्तोद्देश्यकत्वाभावान्नातिप्रसङ्ग इति भावः। नच प्रमाणवैकल्यात्फलाभावाच्च तन्न्यायस्यात्र शास्त्रे ऽनाश्रयणाद्व्यर्थ एवायमुद्देश्यविधेयभावपर्यन्तानुधावनपरिक्लेश इति वाच्यम्। लोकप्रसिद्धस्य तस्यार्थस्य विना बाधकमत्र शास्त्रेऽ नाश्रयणे बीजाभावात्। भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तगुणनिषेधाय कृतेन दीधीवेवीटामिति सूत्रस्थेड्ग्रहणेनात्र शास्त्रे तन्न्यायाश्रयणबोधनाच्च। स्पष्टं चेदं क्नमेजन्तसूत्रे उद्द्योते। नच भवितेत्यादौ तन्मध्यपतितन्यायलब्धाङ्गावयवत्वमादाय प्राप्तस्य लघूपधगुणस्य वारणाय तत्रत्येड्ग्रहणस्य सार्थकतया नेदमत्र तदाश्रयणे मानमिति वाच्यम्। धर्मिग्राहकसाजात्याद्देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यत इति येनविधिरिति सूत्रस्थ भाष्योक्तदृष्टान्तानुरोधेन पतितपदस्वरस्येन चावयवत्वानवरुद्धतन्मध्यपतितस्यैव तेन न्यायेन समुदायग्रहणेनग्रहणमित्यर्थस्य स्वरसतः प्रतीत्याऽत्र तन्न्यायस्याऽप्रवृत्तेः। अत एव येन विधिरिति सूत्रे भाष्ये "अकच्क्ष्मवतः सर्वनामाव्ययधातुविधावुपसंख्यान" मित्यकच् क्ष्मोरेव विषये उपसंख्यानं कर्तव्यमित्युक्त्वा तन्मध्यपतितन्यायेन तत्सिद्धया तस्याकर्तव्यत्वमुक्तं वार्तिककृता। अन्यथा भवितेत्यादाविड्विशिष्टस्याऽङ्गत्वलाभाय "अकच्क्ष्मिड्वतः सर्वनामाव्ययधात्वङ्गविधावुपसंख्यान" मित्येव वक्तव्यं स्यात्। नचैवं क्ष्मोऽवयवत्वेन तद्विषयेप्येतन्न्यायाप्रवृत्तौ भिनत्तीत्यादौ

धातुत्वप्रयुक्तमन्तोदात्तत्व, मभिनोऽत्रेत्यत्र धातुत्वप्रयुक्तं रुत्वं च न स्यादिति वाच्यम्। तद्विषये ऽन्तावयव इत्यंशस्याप्रवृत्त्या तस्यावयवत्वे मानाभावात्। यस्य विहितस्तस्यैवान्तावयव इत्यर्थेना योग्यत्वात्तद्विषये तदंशाप्रवृत्तेः। स्पष्टं चेदं येन विधिरिति सूत्रे उद्द्योते। नचात्र शास्त्रे अवयवावयवन्यायस्याश्रयणे दुग्घट्टुग्घलोष्टित्त्वं व्यर्थं स्यात्। तुटष्टित्त्वेनैव समुदायस्यापि चिरन्तनीत्यादौ टित्त्वप्रयुक्तकार्यसिद्धेरिति वाच्यम्। धर्मिग्राहकसाजात्याल्लोकानुरोधेन च प्रयोगे श्रूयमाणस्यैवावयवावयवस्य समुदायावयवत्वमित्यर्थाङ्गीकारेण तत्र तदप्रवृत्त्या तत्सार्थक्यात्। अत्रार्थे तस्यैव मानत्वात्। अत एव पठितावित्येत्यादौ ङीबापत्तिरपि न। नचास्य न्यायस्यात्र शास्त्रे आश्रयणे फलाभाव इति वाच्यम्। प्रच्छदः परिच्छद इत्यादौ स्वरात्पूर्वं परत्वात्तुकि तद्विशिष्टस्य गतित्वलाभायस्यावश्यकत्वात्। अन्यथा गतिकारकेत्यादिकृदुत्तरपदकस्वरानापत्तेः। यदित्वत्र पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशोनेति परिभाषया स्वरात्पूर्वं तुकोऽप्रवृत्तिः, तत्रैकादेशपदस्य संहिताधिकारीयकार्यमात्रोपलक्षकत्वात्। अत एव रात्रिमट इत्यादौ मुमः पूर्वं यणोऽप्रवृत्तिः। एवंच नेदं फलं भवितुमर्हतीतिचे, दग्निचित् सोमसुदित्यादौ तुग्विशिष्टस्य तदादित्वलाभस्तत्फलं बोध्यम्। अन्यथा ततः परस्य सोर्हल्ङ्याब्भ्यादिलोपानापत्तिः, हलन्ततदादेरिति तदर्थात्। नन्ववयवविशिष्टेऽवयवावविशिष्टे वा अवयविधर्मारोपस्य यदागमन्यायेनैव वक्तव्यतया सिद्धान्ते प्रनिदारयतीत्यादाविव सोमसुदित्यादावपि तुग्विशिष्टे तदादित्वं दुर्लभमेवेति चेन्न। यमुद्दिश्यविहित इत्यस्य साक्षात्तद्भावभाविनामात्रेण वा स्वोद्देश्यतया गृहीतो यः समुदायस्तद्गतानामेव धर्माणामागमविशिष्टेष्वतिदेशो नेतरवृत्तीनामित्येवमाशयकतया सोमसुदित्यादौ समुदायस्य साक्षात्तुगुद्देश्यताया अभावेऽपि तुक्प्रवृत्तिकाले तस्य सत्त्वेन तद्भावभाविनामात्रेण तस्याप्युद्देश्यतया तद्वृत्तितदादित्वस्य तुग्विशिष्टे ऽतिदेशे बाधकाभावात्। प्रनिदारयतीत्यादौ तूरण् रपर इत्यनेन रेफस्याकारेण सहैव प्रवृत्त्या रेफप्रवृत्तिकाले दाशब्दस्यासंनिहितत्वेन तस्य तद्भावभावितामात्रेणाप्युद्देश्यताया वक्तुमशक्यतया न तद्वृत्तिधर्मस्य रेफविशिष्टेऽतिदेशः। अनेनाऽवयवावयवः समुदायावयव इत्यस्यापि स्वप्रवृत्तिकाले संनिहितो यस्तादृशसमुदायावयवत्वमित्यर्थस्य फलितत्वेन न तेन प्रत्येकमवयवावयवविशिष्टे समुदायधर्मारोपो बोध्यते। एवं चैधेतेत्यादौ तकारोद्देश्यकसुटो लिङ्स्सलोप इत्यादिना सलोपः एधिषीष्टेत्यादौ प्रत्ययावयवत्वनिबन्धनषत्वमित्यादिसर्वं च सिद्धमिति सुधियो विभावयन्तु। एतेन प्रमाणवैकल्यात्फलाभावात् दुग्घट्टुग्घलोष्टित्करणस्य व्यर्थत्वाच्चाऽवयवावयव इति न्यायस्य नात्र शास्त्रे आश्रयणमिति वदन्तः परास्ताः। नन्वेतत्परिभाषाभ्युपगमे जहारेत्यादौ रेफविशिष्टे आकारत्वातिदेशे

**घुत्वम् ॥ आने मुगिति मुग्विधानसामर्थ्यादेषाऽनित्या । अन्यथा पचमान इत्यादावकारस्य मुक्यनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव ।**

---

आत औ णल इत्यौकारापत्तिः। तथा हसिष्यतीत्यादाविड्विशिष्टे सकारादार्धधातुकत्वातिदेशे सस्सीति तादेशापत्तिरत आह। [आने मुगित्यादि।] [अन्यथेति।] अनित्यत्वानङ्गीकार-इत्यर्थः। [आकारस्य मुकीति] आने मुगित्यस्याङ्गाधिकारीयत्वेऽपि पचमान इत्यादौ तास्यनुदात्तेदिति स्वरसिद्धये तस्य वैयधिकरण्येनान्वयस्य वक्तव्यतया अकारमात्रोद्देश्यको मुगिति भावः। [विशिष्टस्य सवर्णदीर्घे इति।] मकारविशिष्टस्याकृत्वेन ग्रहणादिति भावः। नच मुग्विशिष्टस्यानया परिभाषया अक्त्वातिदेशेऽपि तस्य कण्ठोष्ठस्थानिकत्वेनाकारेण सावर्ण्या-भावात्कथं दीर्घापादनमिति वाच्यम्। अकारगतस्याकारनिरूपितसावर्ण्यस्य मुग्विशिष्टेऽतिदेशेन तत्प्राप्तेः सुवचत्वात्। नचैवमप्यातो ङित इतीयादेशस्य सवर्णदीर्घापवादतया स एवापादयितुं युक्तो न सवर्णदीर्घ इति वाच्यम्। इयादेशे कृतेऽप्यानुमानिकस्थानिवद्भावेन मुकः प्रवृत्तिसंभवात्तस्य तक्रकौण्डिन्यन्यायेनेयादेशापवादतया अपवादभूततक्रदानोत्तरं दधिदानस्येव मुक्प्रवृत्त्युत्तरमियादेशस्याऽप्रवृत्तेः। सवर्णदीर्घस्य तु मुगागमः सर्वथा निरवकाशत्वेन बाधको माठरकौण्डिन्यन्यायात्। एवं च तद्विषयेऽपवादभूत परिवेषणोत्तरमुत्सर्गस्य भोजनस्येवपावादभूत मुक्प्रवृत्त्युत्तरमुत्सर्गस्य सवर्णदीर्घस्य प्रवृत्तिरव्याहतैवेत्याशयात्। [तद्वैयर्थ्यमिति।] ननु मुगभावे सवर्णदीर्घं बाधित्वा इयादेशः स्यात्। मुकि तु तस्य तक्रन्यायेनेयादेशबाधकतया मुगुत्तरमियादेशस्याप्रवृत्तौ सवर्णदीर्घः स्यादिति विशेषसत्त्वेन कथं तद्वैयर्थ्यमिति चेन्न। मुकः पचमान इत्यादावियादेशाप्रवृत्तिसंपादनमात्रफलकत्वे आतो ङित इत्युत्तरं तन्निषेधकतया नानस्येति न्यासेनैव सिद्धे मुग्विधानस्य व्यर्थत्वमित्याशयात्। नचैवमपि मुग्विधाने कण्ठोष्ठस्थानिकः सवर्णदीर्घः स्यात् नानस्येति न्यासेनेयादेशनिषेधे केवलकण्ठस्थानिक एव सवर्णदीर्घः स्यादिति कथं तद्वैयर्थ्यमिति वाच्यम्। कण्ठोष्ठस्थानिकसवर्णदीर्घसंपादनायैव यदि मुग्विधानं स्यात्तदा ऽर्धमात्रालाघवानुरोधादुदानस्येति न्यासेनादेःपरस्येति आदेरुकारे गुणे च सति तादृशफलसिद्धौ मुग्विधानं व्यर्थमित्याशयात्। नच मुग्विधाने सवर्णदीर्घेणा

# तेन दिदीये इत्यादौ यणादि न,

---

ऽनुनासिकत्वगुणविशिष्टओकारः उकारादेशे तु शुद्ध एवेति फलभेदात्कथं तद्वैयर्थ्यमिति वाच्यम्। तथासत्यनुनासिकोकारादेशविधानेनैव तत्सिद्धौ मुग्विधानस्य व्यर्थत्वात्। नचानुनासिकोकारादेशविधाने इत्संज्ञालोपौ स्यातामिति वाच्यम्। फलाभावादित्संज्ञाया अप्रवृत्तेः। यत्र हि लोपातिरिक्तं किञ्चित्फलमस्ति तत्रैवेत्संज्ञायाः प्रवृत्तेः। नचोगिदचामिति नुम्संपादनेन, स्त्रियामुगितश्चेति ङीप्संपादनेन चेत्संज्ञासफलेति वाच्यम्। स्थानिवद्भावलब्धोगित्त्वप्रयुक्तङीब्वारणायोपाध्यायमते वक्ष्यमाणेत्यादिशानजन्तानामजादिगणपाठस्यावश्यकत्वेन त्यागिनौ रागिणावित्यादौ घिनुणन्ते नुम्वारणाय नपुंसकस्य झलच इत्यतो झल्ग्रहणमपकृष्य झलन्तानामेवोगिदन्तानां नुमित्यर्थस्याकरसंमततया च ङीप्नुमोरप्राप्त्या फलाभावादित्संज्ञालोपयोरप्राप्तेरुक्तप्रकारेणोदादेशविधानेनैव सिद्धौ मुग्विधानवैयर्थ्यस्य सुस्थत्वात्। नन्वेवमपि पूङ्यजोः शानन्निति सूत्रविहितशानजन्ते यजमान इत्यत्र स्त्रियामुगिल्लक्षणङीप्सम्पादकतया इत्संज्ञायाः सफलत्वादनुनासिकोकारादेशविधाने उकारस्येत्संज्ञा दुर्वारैवेति न मुग्विधानवैयर्थ्यमिति चेन्नैवम्। मुग्विशिष्टेऽकारनिष्ठस्याऽक्त्वस्येव दण्डाढकमित्यादावकारे दृष्टस्य निरनुनासिकाकाररूपदीर्घनिष्ठान्तरतम्यनिरूपकत्वस्यापि प्रकृतपरिभाषयाऽतिदेशबोधनात् स्थान्यन्तरसहायप्रयुक्तस्याऽनुनासिकत्वगुणवदोकारादिगतान्तरतम्यनिरूपकत्वस्य प्रकृतविषये दुर्वचत्वेन तदप्रवृत्त्या मुक्प्रवृत्तावप्रवृत्तौ चैकविधस्य शुद्धस्य दीर्घाकारस्यैव प्रवृत्त्या फल भेदाभावेन मुग्विधानवैयर्थ्यस्य सुवचत्वात्। नच शुद्धोदकमित्यादावकारे ओकाररूपदीर्घनिष्ठान्तरतम्यनिरूपकत्वस्यापि सत्त्वेन तादृशधर्मस्य प्रकृतेऽतिदेशे पचमान इत्यत्रान्तरतम्यादोकारोऽपि स्यादिति वाच्यम्। उक्तधर्मस्याकारोकाररूपस्थानिद्वये सत्त्वेऽप्यकारमात्रेऽसत्त्वेन तद्धर्मस्यातिदेष्टुमशक्यत्वादिति सुधियोविभवयन्तु। परिभाषानित्यत्वे फलं दर्शयति। [तेनेति।] [इत्यादाविति।] अत्रादिशब्देन बभूवतुरित्यस्य अग्रे यणादीत्यत्रादिपदेनोवङश्च संग्रहः। अन्यथा दिदीये इत्यत्र युड्विशिष्टे ऽच्त्वातिदेशे एरनेकाच इति यण् बभूवतुरित्यत्र वुग्विशिष्टे उवर्णान्तधातुत्वातिदेशे अचि श्नुधात्वित्यादिना उवङादेशश्च स्यादिति भावः। नन्वाद्ये युड्विधानसामर्थ्यादेव न यणिति वाच्यम्। युडभावो यणि तस्य यणो मय इति द्वित्वे द्वियकारकं युटि तु यणि

जहारेत्यादावात औ णल इति च न॥ न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्। वचनेनावयवत्वबोधनात्। तस्य चावयवसादृश्ये पर्यवसानं

---

तस्य द्वित्वे त्रियकारकमिति फलविशेषसत्त्वेन सामर्थ्याभावात्। हलो यमामिति यकारस्य लोपेऽपि तस्य वैकल्पिकतया पाक्षिकयकारत्रयश्रवणेन युग्विधानस्य सफलत्वात्। नन्वेवमपि वुग्युटावुवङ्यणोः सिद्धौ वक्तव्याविति वार्तिकारम्भसामर्थ्यान्न दिदीये इत्यत्र यण्, नापि बभूवतुरित्यत्रोवङिति नेदमनित्यत्वे फलमिति चेन्न। तत्सामर्थ्येन शास्त्रबाधकल्पनापेक्षया परिभाषानित्यत्वज्ञापनस्यैवौचित्यात्। फलान्तरमाह। [जहारेत्यादाविति।] रेफविशिष्टे ऽनेन न्यायेनात्वातिदेशो रेफान्ते आदन्तधातुत्वस्यार्थसमाजग्रस्ततया ततः परस्य णल औकारादेशापत्तिरिति भावः। किंचतत्रध.तुग्रहणानुवृत्तेरसंभवः णला तस्याक्षेपेऽप्याक्षिप्तस्य विशेषणतयैवान्वयस्यौचित्याद्धात्ववयवाकारात्परस्य णल औकारादेशइत्यर्थादनित्यत्वाङ्गीकारे दोषस्तत्र सुवच एवेति बोध्यम्। एवं हारयतीत्यादावादन्तत्वनिबन्धनः पुक् श्रीणामित्यादावियङ् हसिष्यतीत्यादौ सस्सीति तादेशश्च नेति बोध्यम्। [कथमिति।] शाखायाः शाखान्तरावयवत्वव्यवहारस्याङ्गुल्योः परस्परमवयवावयविभावस्य चादर्शनात्पदावयवयोर्वर्णयोः कथमवयवावयविभाव इति भावः। [वचनेनेति।] अद्यन्तौ टकितावित्यादिनेत्यर्थः। ननु गगनकुसुमवत्सर्वथाऽसंभवस्यार्थस्य वचनेनापि कथं बोधनमत आह। [तस्यचेति।] वचनेन बोधितस्याऽवयवत्वस्येत्यर्थः। [अवयवसादृश्य इति।] तत्राद्यन्तशब्दयोस्तत्सादृशे लक्षणेति भावः। नन्वेवमादिसदृशो भवत्यन्तसदृशो भवतीत्यर्थे ऽन्यत्र जायमानस्यापि तत्सादृश्यबोधनसंभवेन देशविशेषव्यवस्थानापत्तिरिति वाच्यम्। पूर्वत्वविशिष्टावयवत्वस्यादिपदार्थत्वेन परत्वविशिष्टावयवत्वस्यान्तपदार्थत्वेन चाद्यन्तपदाभ्यां विशिष्टविधानेऽपि वर्णस्य वर्णान्तरावयवत्वस्य बाधितत्वाल्लक्षणया पूर्वः सन्नवयवसदृशो भवति, परः स न्नवयवसदृशो भवतीत्यर्थस्य पर्यवसन्नत्वेनोक्तदोषस्याप्रसरात्। ननु नासूया कर्तव्या यत्रानुगमः क्रियत इति पङ्क्तिविंशतीति सूत्रस्थभाष्येणानुगमसंभवेऽननुगतार्थकल्पनाया अनौचित्यमित्यर्थस्य लाभेनाननुगतमनित्यत्वं विहायोक्तज्ञापकबलाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति प्रचीनोक्तदिशा अनुगतरूपेणैवकुतो न कल्प्यत इत्यत-

बोध्यम्॥ न चोक्तज्ञापकाद्वर्णग्रहणे ऽस्या अप्रवृत्तिरिति वाच्यम्। आने मुगिति सूत्रभाष्ये ऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र तास्यनुदात्तेदिति स्वरो न स्यादित्याशङ्क्याप्युपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः। किंच ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य यदागमा इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात्पदान्तस्येति निषेध इत्य-

---

आह। [नचेत्यादिना।] [वर्णग्रहण इति।] विशेषणतया विशेष्यतया वा वर्णस्य ग्रहणइत्यर्थः। यथाकथंचिदपि वर्णत्वव्याप्यो धर्मो ऽनया परिभाषया नातिदिश्यत इति तदाशयः। तत्राद्यं दूषयति। [आनेमुगित्यादिना।] [इत्यर्थे इति]। सिद्धान्तभूत इत्यर्थः। [असङ्गत्यापत्तेरिति।] तत्रहि भाष्ये अदन्ताङ्गस्य मुगिति सामानाधिकरण्येन सम्बन्धे मुकः समुदायभक्तत्वेनादुपदेशग्रहणेनाऽग्रहणा त्तस्या व्यवधायकतया स्वरानापत्तिरित्याशङ्क्याङ्गावयवस्य मुगिति वैयधिकरण्यमाश्रित्यादुपदेशभक्त स्तद्ग्रहणेन ग्राहिष्यत इत्यभीष्टसिद्धि रित्युक्तम्। यदि विशेषणतया वर्णत्वव्याप्यधर्मस्यानया परिभाषया नातिदेश इत्युच्यते तदा मुग्विशिष्टे अदन्तोपदिश्यमानताया अभावात्तदसङ्गतिः स्पष्टैवेति भावः। भाष्ये अदुपदेश इत्यस्यादन्तोपदिश्यमान-इत्यर्थः। स्वरविधौ तथैव सिद्धान्तितत्वात्। अत एव हतो हथ इत्यादौ नानुदात्तत्वम्। शुद्धाकारे तु व्यपदेशिवद्भावेनादन्तोपदिश्यमानत्वं बोध्यम्। द्वितीयं दूषयति। [किञ्चेति।] [इत्यर्थ इति।] असिद्धान्तभूत इत्यर्थः। [णत्वप्राप्तिमिति।] नुडागमनकारस्येत्यर्थः। तस्य पूर्वत्वेनापदान्तत्वान्निषेधाप्रवृत्तेरिति भावः। [पदान्तग्रहणेन ग्रहणादिति।] पदान्तनकारभक्तस्य नुटः पदान्तग्रहणेन

नया परिभाषयाऽगमानामागमिधर्मवैशिष्ट्यमपि बोध्य-

---

ग्रहणात्पदान्तस्येति निषेध इत्याशयः। नन्वनया परिभाषया आगमविशिष्टे आगमिधर्मातिदेशलाभेऽपि केवलागमे तदलाभेन कथं तन्निषेधप्रवृत्तिरित्यत आह। [अनयेति।] [वैशिष्ट्यमपीति।] अपि भिन्नक्रमः। आगमाना मित्यनन्तरं योज्यः। तथाचागमानामप्यागमिधर्मवैशिष्ट्यं बोध्यत-इत्याशयकेत्यर्थः। अपिना समुदायसमुच्चयः। अयं भावः। यदागमा इत्यस्य तन्त्रेणार्थद्वयम्। यमुद्दिश्यागमा विहितास्ते यतः शास्त्रेण तदवयवत्वेन बोधिताः, अत स्तेऽपितद्ग्रहणेन तद्ग्राहक-धर्मेण गृह्यन्ते विषयीक्रियन्त इति, यमुद्दिश्यागमा विहितास्ते यतः शास्त्रेण तदवयत्वेन बोधिताः, अतस्तद्विशिष्टस्तद्ग्रहणेन तद्ग्राहकधर्मेण गृह्यते विषयीक्रियत इति च। तत्र द्वितीये गृह्यन्त इत्यस्य वचनविपरिणामेनान्वयः। आगमी येन धर्मेण गृह्यते तेन धर्मेणागमानामागमविशिष्टस्य च ग्रहणमिति भावः। तत्र समुदायस्य तेन बोधनं लोकन्यायसिद्धमिति प्रागुक्तम्। केवलागमस्य तेन बोधनमपि लोकन्यायसिद्ध मेव। अङ्गुल्यादौ व्रणादिसद्भावे तदवच्छेदेनाप्यङ्गुल्यादिव्यवहारस्य लोके दर्शनात्। अत एव तद्गतव्रणच्छेदनेऽप्यङ्गुलिच्छेदनव्यवहारः संगच्छते। परं त्वनयोरर्थयोः कार्यानुरोधेन व्यवस्था। तेन नातिप्रसङ्ग इति। नचागमानामागमिग्रहणेन ग्रहणे फलाभाव इति वाच्यम्। स्तृञ्-आच्छादन इत्यस्मादाशीर्लिङि ञित्वात्तङि सीयुटि स्तृ + सीय् + त इत्यवस्थायां "ऋतश्च संयोगादे" रिति इट्सिद्धेः फलत्वात्। अन्यथा सीयुड्विशिष्ट एव लिङ्त्वातिदेशे तस्य तङ्परत्वाभावेन तदसिद्धेः। एवं वरिषीष्टेत्यत्र "लिङ्सिचो रात्मनेपदेष्वि" तीट् सिद्धिरपि फलम्। तथा पपिथेत्यत्र "आतो लोप इटि चे" त्याकारलोपोऽपि फलम्। अन्यथा केवलस्येट आर्धधातुकत्वाभावेन तन्न स्यात्। तत्रार्धधातुक इत्यस्येड्विशेषणत्वाभावे तु व्यतिपूर्वक रा दाने इत्यस्माद्धातोर्लङुत्तमैकवचने इटि व्यतिरै इत्यत्राकारलोपापत्तिरिति बोध्यम्। एतेन फलाभावाद्ग्रामाणामित्यादावाम्वृत्ति पदान्तत्वस्य नकारेऽतिदेशेन पदान्तस्येति निषेधापत्त्या णत्वानापत्तेश्चेदमयुक्तमित्यपास्तम्। फलस्योक्तत्वात्। अर्थद्वयस्य कार्यानुरोधेन व्यवस्थिततयाऽतिप्रसङ्गाभावाच्च। अनित्यत्वेनाति-प्रसङ्गस्य वारयितुं शक्यत्वाच्च। ननु ह्रस्वात्परपदावयवङमः परस्याजादेः पदस्य ङमुडित्यर्थस्यैव सिद्धान्तत्वेनास्यैकदेश्युक्तमतावलम्बनकत्वेन तद्विरोधोऽकिञ्चित्करः। किंचान्तत्वं चरमावयवत्वम्।

त इत्याशयकडम्मुट्सूत्रस्थभाष्यासङ्गतेः ॥ किञ्च गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम्। अन्यथा ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् तच्च वर्णग्रहणे एतदप्रवृत्तौ न सङ्गच्छते। अत एव रदाभ्यामिति सूत्रे भाष्यं

---

तच्च न वर्णत्वव्याप्यम्। अन्यथा अलोऽन्त्यस्येति सूत्रेऽल्ग्रहणमनर्थकमेव स्यात्। एवं च न तद्भाष्यासंगतिरत्र पक्षे इत्यत आह। [किंचेति।] [गुणत्वादीति।] आदिना वृद्धित्वम्। [अन्यथेति।] रेफविशिष्टे गुणत्ववृद्धित्वयोरभाव इत्यर्थः। [नियमो न स्यादिति] सर्वत्रान्तरतम्याभावस्य तुल्यत्वेन पर्यायतया प्रवृत्तेरौचित्यादरारावेवेति नियमो न सिद्ध्येत्। रेफविशिष्टे गुणत्वादिसत्त्वेत्वान्तरतम्यादृकारस्य स्थाने अरारावेव गुणवृद्धी भवत इति नियमोपपत्तिरिति भावः। [तच्चेति] रेफविशिष्टे गुणत्वाद्येषणमित्यर्थः। [एतदप्रवृत्ताविति।] एतस्य यदागमन्यायस्याप्रवृत्तावित्यर्थः। ननु रेफविशिष्टे गुणत्वाद्यनङ्गीकारेऽपि तदुपपत्तेर्भगवता भाष्यकृता "अनान्तर्यमेवैतयो रान्तर्यम्। संप्रयोगो वा नष्टाश्वदग्धरथवदि" त्यादिना स्थानेऽन्तरतम इति सूत्रे भाष्ये प्रतिपादितत्वेन न तद्भाष्यासंगतिः। अतो रेफविशिष्टे गुणत्वादिसत्त्वेमानान्तरमाह। [अत एवेति।] [रदाभ्यामिति सूत्रे इति।] तत्र हि भाष्ये कृतस्यापत्यं कार्तिः, क्षितस्यापत्यं क्षैतिरित्यादौ रदाभ्यामिति क्षियो दीर्घादिति च प्राप्तस्य निष्ठानत्वस्य वारणायारब्धे वृद्धिनिमित्तात्प्रतिषेध इति वार्तिके वृद्धिनिमित्तादित्यत्र वृद्धिरेव निमित्तं वृद्धिनिमित्तं तस्मादिति तत्पुरुषो वा? उत वृद्धिर्निमित्तमस्य सोऽयं वृद्धिनिमित्तस्तस्मादिति बहुव्रीहिर्वेति विचार्य तत्राद्य पक्षे वृद्धिसंज्ञकैकारदीर्घरूपनिमित्तात्परत्वेन क्षैतेः संग्रहेऽपि कार्तेरसंग्रहः। तत्र नत्वनिमित्तभूतरेफस्य वृद्धिसंज्ञकत्वाभावेन वृद्धिरूपनिमित्तात्परत्वाभावादित्युक्त्वा कार्तिश्च संगृहीतः कथं, गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तत इत्युक्तम्। तच्च रेफविशिष्टे वृद्धित्वाभावे न संगच्छते। न चैवमपि रेफस्यैव नत्वनिमित्तत्वेन तस्य च वृद्धिसंज्ञकत्वाभावान्निष्ठातकारस्य वृद्धिरूपनिमित्तात्परत्वाभावेन कथं तत्संगतिरिति वाच्यम्। रेफरूपावयवद्वारा समुदायस्यैव वृद्धिसंज्ञकस्य नत्वनिमित्ततया ततः परत्वेन निषेधप्रवृत्त्या तत्संगतेः। एतेनेदमपि

# "गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञको ऽभिनिर्वर्तत" इति॥ अत एव नेटि णेरनिटीत्यादि

---

भाष्यं नैव विरुणद्धि गुणवृद्धिसंज्ञकोऽकारादिः, रेफशिरा अभिनिर्वर्तत इत्यर्थात्। रेफशिरा इत्यत्र चातद्गुणसंविज्ञानो बहुव्रीहिरिति वदन्तो वारणासेयाः परास्ताः। रेफविशिष्टस्य वृद्धित्वाभावे ऽवयवद्वारापि वृद्धिरूपनिमित्तात्परत्वाभावेन निषेधाप्राप्त्या तद्भाष्यासंगतेर्दुर्वारत्वात्। यत्तु "केचित्तु गुणत्ववृद्धित्वातिरिक्तवर्णत्वव्याप्यो धर्मः प्रकृतपरिभाषया नातिदिश्यत इत्येव पूर्वोक्तज्ञापकबलात्कल्प्यते। अनुगमसंभवे तत्परित्यागस्यायुक्तत्वादित्याशय मुपवर्ण्य प्राचीनमत-परिपालनपक्षपातेन समुदायभक्तत्वेऽपि मुगागमस्य बहिरङ्गतया पूर्वमन्तरङ्गतया स्वरप्रवृत्तेरव्याघाता-ज्जघन्येन वैयधिकरण्येन तत्समर्थनपरमानेमुगिति सूत्रस्थं भाष्यमेकदेशिन एवेति न तद्विरोधो दोषायेत्याहु" रिति चन्द्रिकाकृतः। तन्न। वर्णत्वव्याप्यधर्मस्यानया परिभाषयाऽनतिदेश-इत्यर्थज्ञापनेनापि मुग्विधानस्य सार्थक्यसंभवे गुणवृद्ध्यतिरिक्तेति विशेषणविशिष्टतादृशार्थज्ञाप-नस्याऽयुक्तत्वात्। यदि तु रदाभ्यामिति सूत्रस्थभाष्यविरोधपरिहाराय वर्णत्वव्याप्यधर्मे गुणवृद्धि-भिन्नत्वरूपविशेषणं निवेश्यते तदा गौरवम्। किंचैवमप्यानेमुगिति सूत्रस्थभाष्यविरोधो दुर्वार एव। न चोक्तरीत्या तद्भाष्यमेकदेश्युक्तमिति वाच्यम्। मुक्स्वरयोः प्रकृतिप्रत्ययोभयापेक्षत्वस्य तुल्यत्वेन मुगपेक्षया स्वरस्याऽन्तरङ्गताया वक्तुमशक्यतया परत्वान्मुकि तस्य समुदायभक्तत्वे स्वरानापत्त्या वैयधिकरण्येनैव तस्य समर्थनीयतया तद्भाष्यस्यैकदेश्युक्तित्वकथनस्याऽयुक्तत्वात्। अपरनिमित्तकत्वेन तु स्वरस्य नान्तरङ्गत्वम्। अपूर्वनिमित्तकत्वे सत्यपरनिमित्तकस्यैवान्तरङ्गत्वा-दिति दिक्। ननु पुरुषारम्भस्य लोकन्यायनिवर्तकतया मुग्विधानरूपपुरुषारम्भेण लोकसिद्धाया अस्याः परिभाषायास्सर्वथाऽत्रशास्त्रे ऽनाश्रयणमित्येव लभ्यत इति महदनिष्टमत आह। [अत एवेति।] प्रकृतपरिभाषाया अत्र शास्त्रे आश्रयणादेवेत्यर्थः। [इत्यादिचरितार्थमिति] नेटीति सूत्रं णेरनिटीत्यत्रानिटीति निषेधश्च चरितार्थ इत्यर्थः। अन्यथा मा भवानतीत् कारयितव्यमित्यादाविटा व्यवहितत्वादेव वृद्धिणिलोपयोरप्राप्तौ किं निषेधाभ्यामिति भावः। एवं च न केवलमियं लोकन्यायसिद्धा अपि तु शास्त्रीयप्रमाणसिद्धापीति मुग्विधानसामर्थ्या-न्नास्याः परिभाषायाः सर्वथाऽत्र शास्त्रेऽनाश्रयणं किंतु तत्सामर्थ्येनाऽनित्यत्वात्क्वचिदप्रवृत्ति

चरितार्थम्॥ अनागमकानां सागमका आदेशा इत्यस्य त्वयमर्थः। आर्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्या अर्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति। एवं चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः। स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात्। किंचैवं सति

---

रित्येव कल्पनीयमिति भावः। यद्यपि परिभाषाज्ञापनोत्तरमेवानित्यत्वज्ञापनं वक्तुमुचितं, तथापि न्यायसिद्धेऽर्थे प्रथमतो ज्ञापकान्तरस्याऽनपेक्षणादनित्यत्वज्ञापनोत्तरमुक्तरीत्या तस्यापेक्षितत्वेन च तदुत्तरं तदुक्तिरिति बोध्यम्। नन्वनागमकानां सागमका आदेशा इति भाष्यकारीयसिद्धान्तादागमविशिष्टेष्वागमिधर्माणां स्थानिवद्भावेनैव सुलभतया न नेटीत्यादीनां ज्ञापकतासंभवः। किंचानेन तन्त्रेणागमविशिष्टे आगमिधर्मारोपबोधनं च निष्फल मित्यतआह। [अनागमकानामित्यादि।] [अनुपपत्त्येति।] प्रकृत्यादित्वादभेदे तृतीया। तदभिन्ना या अर्थापत्तिस्तन्मूलकेत्यर्थः। [कर्तव्येतीति।] अस्य पूर्वेणायमर्थ इत्यनेनान्वयः। [एवं चेति।] तस्य तादृशार्थकत्वे चेत्यर्थः। [बुद्धिविपरिणाम इति।] तन्मात्रमित्यर्थः। [न नित्यत्वहानिरिति।] आदेशविषये स्थानिनो निवृत्तेरभावाद्यथा न शब्दनित्यताहानिस्तथा आगमविषयेऽपूर्ववर्णोपजननस्याप्यभावान्न नित्यत्वभङ्ग इति भावः। नन्वेतावतापि स्थान्यादेशभावस्याऽपरित्यक्तत्वान्न निरुक्ताशङ्काया निस्तार इत्यत आह। [स्थानिवत्सूत्रे चेति।] [ईदृशादेशेति।] अर्थापत्तिमूलकवाक्यान्तरकल्पनेनानुमितस्यादेशस्येत्यर्थः। तादृशस्याऽग्रहणे हेतुमाह। [साक्षादिति।] ननु नेटीत्यादिज्ञापकबलादागमस्थलीयस्याप्यानुमानिकादेशस्य स्थानिवत्सूत्रे ग्रहणमित्येव कल्प्यतां, लाघवात्। किमतिरिक्तपरिभाषाश्रयणेनेत्यत आह। [किंचैवमिति।] ईदृशादेशस्यापि

स्थानिबुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्येति परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या लावस्थायामडिति भाष्योक्तसिद्धान्तासंगतिः। स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासंगतिः॥

---

तत्र ग्रहणे सतीत्यर्थः। [स्थानिबुद्ध्यैव कार्यप्रवृत्त्येति।] इदं निर्दिश्यमानपरिभाषाया अप्राप्तौ हेतुः। [सिद्धान्तासंगतिरिति।] अयं भावः। यद्यागमविषयेऽपि स्थानिवत्सूत्रस्य प्रवृत्तिः स्यात्तदा स्थानिवृत्तिनिर्दिश्यमानत्वस्याप्यागमविशिष्टेऽतिदेशेन स्थानिवत्सूत्रविषयेऽनिर्दिश्यमानस्य कस्याप्यभावेन व्यावर्त्याभावान्निर्दिश्यमानस्येति परिभाषाया अप्राप्तौ लावस्थायामडिति भाष्यकारीयसिद्धान्तेऽपिबदित्यादौ विकरणात्पूर्वमडागमे ततो विकरणे अपा + अ + त् इत्यवस्थायां स्थानिवद्भावेनाड्विशिष्टे पाधातुत्वस्य निर्दिश्यमानत्वस्य च सत्त्वेन विशिष्टस्य पिबाद्यादेशापत्तौ भाष्यकारीयतत्सिद्धान्तासङ्गतिरिति। ननु लावस्थायामडिति भाष्यकारीयसिद्धान्तबलात्स्थानिवत्सूत्रबोधितस्य निर्दिश्यमानत्वं नेत्येव कुतो न कल्प्यत इत्यत आह। [स्थानिवद्भावविषय इति।] [परिभाषायाः प्रवृत्ताविति।] उक्तरीत्या कल्पने आदेशस्यानिर्दिश्यमानत्वाद्व्यावर्त्यलाभेन परिभाषायाः प्रवृत्तावित्यर्थः। [परत्वादिति।] त्रयादेशापेक्षयेत्यर्थः। भाष्यासङ्गतिरिति।] तिस्रादेशोत्तरं स्थानिवद्भावेन त्रिशब्दत्वेऽपि तस्य निर्दिश्यमानत्वाभावान्निर्दिश्यमानस्येति परिभाषया त्रयादेशस्याऽप्राप्त्या त्रयादेशशङ्काया एवानवकाशात्तादृशशङ्काकरणस्य कथंचित्परिभाषाऽज्ञानेन तत्करणेऽपि तं विहाय प्रकारान्तरेण समाधानकरणस्य चासंगतिरिति भावः। नन्वेतावता स्थानिवत्सूत्रे आनुमानिकादेशस्याग्रहणमित्यर्थलाभादेरुरित्यादौ परिकल्प्यमानस्थान्यादेशभाव विषयेऽपि तदप्रवृत्तौ पचत्वित्यादौ तु शब्दे तिङ्त्वाभावेन विशिष्टस्य

एरुरित्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठित-वाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानिवत् सूत्रे ग्रहणेन न दोषः। आनुमानिकस्थान्यादेश-भावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इत्यचः परस्मिन् इत्यादेर्नासंगतिः। एतेन यदागमा इति

---

तिङन्तत्वनिबन्धनपदत्वानापत्तिरत आह। [एरुरित्यादाविति।] [तदन्तपरतयेति।] श्रौतस्थान्या-देशयो रेवशब्दनित्यत्वानुपपत्तिमूलकलक्षणया तदन्तपरत्वेनेत्यर्थः। [पठितवाक्यस्यैवेति।] अष्टाध्यायीपठितैरुरित्यादिवाक्यस्यैवेत्यर्थः। एवेनापठितागमस्थलीयानुमानिकवाक्यसदृशवाक्य-व्यावृत्तिः। [समुदायादेशपरत्वेनेति।] उक्तरीत्या लक्षणया समुदाययोः स्थान्यादेशभाव-बोधकत्वेनेत्यर्थः। [आदेशग्रहणसामर्थ्यादिति।] स्थानिवदित्युक्तावपि स्थानिशब्दस्य ससंबन्धिकत्वादादेशलाभे पुनरादेशग्रहणसामर्थ्यादित्यर्थः। [तस्येति] लक्ष्यार्थबोधविषयस्य तादृशसमुदायादेशस्येत्यर्थः। [न दोष इति।] पचत्वित्यादौ पदत्वानापत्तिरूपो दोषो नेत्यर्थः। एवंचाष्टाध्यायीपठितवाक्यबोधितानुमानिकस्थान्यादेशभावविषये स्थानिवद्भावप्रवर्तनेनादेशग्रहणस्य कृतार्थत्वादपठितवाक्यबोधितागमस्थलीयानुमानिकस्थान्यादेशभावविषये स्थानिवत्सूत्रस्य प्रवृत्तौ मानाभावः। तथाचागमविशिष्टे आगमिधर्मलाभस्य प्रकृतपरिभाषैकसाध्यतया नेयं निष्फला, नापि पूर्वोक्तज्ञापकत्वानुपपत्तिरित्यवधेयम्। नन्वेवमपि यथा स्थानिवद्भावविषये श्रौतस्थान्या-देशभावस्य त्यागादचः परस्मिन्नित्यादेरसंगतिरेवं श्रौतावयवावयविभावस्याप्यत्रत्यागाद्यदागमा इत्यस्या यसंगतिरेवेत्यत आह। [आनुमानिकेति।] अस्य यथेत्यादिः। [न त्याग इति।] आवृत्त्या वर्णमात्रपरत्वेन पठितवाक्यलब्धस्य न त्याग इत्यर्थः। [नासंगति रिति।] एतदुत्तरं तथात्रापि श्रौतावयवावयविभावस्य न त्याग इति न यदागमा इत्यस्यासंगतिरिति शेषः। अन्यथा आनुमानिकेत्यादिग्रन्थस्य प्रकृतानुपयुक्तत्वं स्पष्टमेव। अस्य ग्रन्थस्य प्रासङ्गिकत्वकल्पनापेक्षया इत्थमेव व्याख्यानमुचितमिति बोध्यम्। [एतेनेति।] उक्तरीत्या आगमविषये स्थानिव-

परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम्॥ एतत्सर्वं दाधाघ्वदाविति सूत्रे भाष्ये स्पष्टम्॥ ११॥

नन्वेवमुदस्थादित्यादावुदःस्थास्तम्भोः पूर्वस्य इति पूर्वसवर्णापत्तिरत आह॥

## निर्दिश्यमानस्यादेशा भवन्ति॥ १२॥

---

द्धावस्याप्रवृत्त्येत्यर्थः। उक्तमर्थं प्रमाणयति। [एतत्सर्वमिति।] परिभाषा तद्व्याख्यानमनागमकानामित्यादि सर्वं चेत्यर्थः। अयमत्र संग्रहः। परिभाषेयं लोकन्यायसिद्धा, नेटि णेरनिटीत्यादिज्ञापकसिद्धा च। प्रणिदापयतीत्यादौ पुग्विशिष्टस्य दारूपत्वाद्घुसंज्ञायां नेर्गदेति णत्वसिद्धिरस्याः फलम्। यमुद्दिश्यागमो विहितस्तादृशागमविशिष्टस्य तत्त्वेन ग्रहणमिति परिभाषार्थः। आने मुगिति मुग्विधानसामर्थ्यादेषाऽनित्या तत्फलं तु जहारेत्यादावात औ णल इत्यौकारादेशस्य दिदीये इत्यादौ एरनेकाच इति यणादेशस्य चाप्रवृत्तिः। आनेमुगित्यादिसूत्रस्थभाष्यविरोधाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति प्राचीनोक्तमयुक्तम्। आगमस्थलीयानुमानिकस्थान्यादेशविषये स्थानिवत्सूत्रस्याप्रवृत्त्या नेयं स्थानिवत्सूत्रेण गतार्थेति।

पूर्वेणास्य संगतिं प्रदर्शयन्नवतारयति। [नन्वेवमिति।] यदागमा इत्यस्याङ्गीकार इत्यर्थः। [पूर्वसवर्णापत्तिरिति।] यदागमा इति न्यायेनागमविशिष्टे उद्देश्यतावच्छेदकसमानाधिकरणयावद्धर्मातिदेशबोधनात्प्रकृतेऽडागमविशिष्टे स्थाधातुत्वातिदेशे आदेः परस्येति परिभाषया तदादेरकारस्य जायमानः पूर्वसवर्ण आन्तरतम्याद्दकारः स्यात्। इकारस्यान्तर्यतो दकार इति सुपां सुलुगिति सूत्रस्थभाष्यप्रामाण्यात्परः संनिकर्ष इति सूत्रस्थभाष्यप्रामाण्याच्चाचां घोषसंवारनादाल्पप्राणप्रयत्नत्वस्य सिद्धान्तितत्वात्। सिद्धान्ते तु निमित्तस्य निर्दिश्यमानविशेषणत्वात्तस्य चाटा व्यवधानान्न तदापत्तिरिति बोध्यम्। एतेन पूर्वस्य तकारस्य सवर्णः प्रथमोपस्थितत्वात्तकारोऽकारस्य स्थाने स्यादिति चन्द्रकलाद्युक्तमपास्तम्। नेयं परिभाषान्तरवज्ज्ञापकलोकतन्त्रान्तरस्थन्यायसिद्धा, किंतु पाणिन्युपदिष्टपरिभाषासूत्रार्थभूते-

षष्ठीस्थानेयोगेति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः। षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपित-

---

त्याह। [षष्ठी स्थान इति।] [आवर्तत इति।] यद्यपि षष्ठीस्थान इति सूत्रमन्तराप्यन्तरङ्गत्वा-द्व्याख्यानतो वा इको यणचीत्यादौ षष्ठ्या अभीष्टस्थानपदार्थनिरूपितसंबन्धार्थकतालाभात्तदर्थं तत्सूत्रमनावश्यकमिति सामर्थ्यात्तदेवेदृशार्थकं सम्पद्यत इति षष्ठीस्थान इति सूत्रे पादः पदिति सूत्रे च भाष्ये उक्तम्, तथाचावृत्तिरनावश्यकी। तथापि मन्दबुद्धिवैशद्याय सूत्रकृता तस्यारब्धत्वा-त्तदनुसारेणेदमिति बोध्यम्। तत्रैकस्य प्रसिद्धार्थकत्वादाह। [तत्र द्वितीयस्येति।] तयोर्मध्ये द्वितीयस्येत्यर्थः। [अयमिति।] वक्ष्यमाण इत्यर्थः। तमेवाह। [षष्ठ्यन्तमित्यादिना।] अत्र सूत्रे षष्ठीपदं प्रत्ययग्रहणपरिभाषया तदन्तपरमिति भावः। [निर्दिश्यमानमिति।] एतच्चा-ध्याहारलभ्यम्। तदर्थमाह। [उच्चार्यमाणमिति।] सूत्रोच्चारितजराशब्दादेरादेशासंभवादध्याहृतं निर्दिश्यमानपदं लक्षणया तत्सजातीयपरमित्याशयेनाह। [उच्चार्यमाणसजातीयमिति।] असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायादाह। [एवेति।] एवेन तद्भिन्नस्य तदन्तादेर्व्यावृत्तिः। ननूक्तरीत्या सुपद उदस्थादित्यादिसिद्धावप्यतिस्य इत्याद्यसिद्धिः। तदोः सः सावित्यत्र तकारद-कारयोरपि निर्दिष्टत्वेन त्यदाद्यन्ताङ्गावयवयोर्निर्दिश्यमानयोस्तकारदकारयोः सकारादेशइत्यर्थे उपसर्गतकारस्यापि सत्वापतेरत आह। [निर्दिश्यमानावयवरूपमेव वेति।] उच्चार्यमाणसजातीयो-यस्तदवयवरूपमेवेत्यर्थः। अत्रैवशब्देन तद्भिन्नावयवस्यातिस्य इत्यादावुपसर्गतकारस्य व्यावृत्तिः। एतच्चाध्याहृतनिर्दिश्यमानपदस्यावृत्त्या द्वितीयस्य तत्सजातीयावयवपर्यन्तमपि लक्षणाश्रयणेन च लभ्यत इति भावः। वस्तुतस्तु आवृत्तिरनावश्यकी। अध्याहृतं च निर्दिश्यमानपदं तत्सजातीयावयवलाक्षणिकमेव। एवं च निर्दिश्यमानसजातीयावयवरूपा षष्ठीप्रकृतिः स्थानेन युज्यत इत्येवार्थः। सुपद इत्यादौ षष्ठीप्रकृतेः पाच्छब्दस्य निर्दिश्यमानावयवरूपत्वं तु व्यपदेशि-वद्भावेन सिद्धम्। मूले निर्दिश्यमानावयवरूपमेव वेत्यत्र वा ग्रहणं कुर्वन् ग्रन्थकारोऽप्यमुमेवार्थं सूचयति। अन्यथा अवयवरूपमपीत्येव ब्रूयादिति बोध्यम्। स्थानस्यासंबन्धताया अन्यत्र प्रतिपादितत्वादाह। [स्थाननिरूपितेति।] निवर्त्यनिवर्तकभावेनेत्यर्थः। सूत्रे योगशब्दः

# संबन्धेन युज्यते न तु प्रतीयमानमित्यर्थस्तेनेदं सिद्धम् ॥

---

कर्मधज्न्त इत्याशयेनाह। [युज्यत इति।] अध्याहृतनिर्दिश्यमानपदस्यावधारणपरतया व्याख्याने फलमाह। [न प्रतीयमानमिति।] प्रतीयमानं तदन्तादि निर्दिश्यमानावयवभिन्नतदवयवो वा न स्थानेन युज्यत इत्यर्थः। [इतीति] अस्य पूर्वेणायमर्थ इत्यनेनान्वयः। [तेनेदं सिद्धमिति।] आवृत्तद्वितीयसूत्रस्योक्तार्थकत्वेनेदं वचनं सिद्धमित्यर्थः। अत्र निर्दिश्यमानसजातीयं निर्दिश्यमानसजातीयावयवरूपं च षष्ठ्यन्तं स्थानेन युज्यत इत्यन्वयः। यद्यपि षष्ठ्यन्तस्य न कार्यप्रवृत्तिः। तथापि षष्ठ्यन्तस्य कार्यासंभवाद्युष्मदस्मदोः षष्ठी चतुर्थीद्वितीयास्थयोर्वान्नावावित्यादौ तत्संभवेऽपि तत्र पदस्येत्यधिकारसामर्थ्यादेव विशिष्टस्य कार्यसिद्ध्या तदर्थमस्यानावश्यकत्वेन, "षष्ठ्यन्तं स्थानेन युज्यते यतः षष्ठ्युच्चारितेति षष्ठीस्थान इति सूत्रस्थभाष्यप्रामाण्येन चोपस्थितस्य तदन्तांशस्याविवक्षितत्वात्तदादेरेव स्थानेन योगो बोध्यः। षष्ठ्यन्तमित्यत्रातद्गुणसंविज्ञानो बहुव्रीहिरिति तु न युक्तम्। सूत्रे अन्तपदाभावेन सौत्रषष्ठीपदस्यैव प्रत्ययग्रहणपरिभाषया तदन्तपरत्वेन तद्विषये प्रत्ययचरमावयवकस्यैव सर्वत्र ग्रहणदर्शनेन च तथा वक्तुमशक्यत्वात्। परिभाषाचेयमिको गुणवृद्धी इत्यादिवदादेशविधायकेषु निर्दिश्यमानस्येति पदमुपस्थाप्य पदैकवाक्यतया विध्युपकारिका। आदेशविधायकशास्त्रीयषष्ठ्यन्तपदश्रुतिरस्या लिङ्गम्। तथा च पादः पदित्यादौ स्थानषष्ठ्यन्तपदश्रुत्योपस्थितस्य निर्दिश्यमानपदस्य तेनैव सामानाधिकरण्येनान्वयात्पाच्छब्दान्तं यदङ्गं भं तदवयो निर्दिश्यमानो यः पाच्छब्दस्तस्य पदादेश इत्यर्थान्न तदन्तस्य पदादेशः। तदोः सस्सावित्यादौ तु त्यदादीनामित्यवयवषष्ठ्यन्तपदश्रुत्योपस्थितस्य तस्य तेनैव सामानाधिकरण्येनान्वयात्त्यदाद्यन्ताङ्गावयवो निर्दिश्यमानो-यस्त्यदादिस्तदवयवयोस्तकारदकारयोः सकारादेश इत्यर्थलाभादतिस्य इत्यादावुपसर्गतकारस्य न सत्वम्। यद्यपि तत्र सूत्रे तदोरित्यपि षष्ठ्यन्ततया निर्दिष्टस्तथापि न तेन निर्दिश्यमानस्येति पदसंबन्धः व्यावर्त्याभावादिति बोध्यम्। निर्दिश्यमानत्वं चात्र स्वरूपमिति शास्त्रातिरिक्तशास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्यप्रतीतिविषयत्वम्। एवं च विसर्जनीयपदबोध्यस्य बिन्दुद्वयात्मकस्य शास्त्रान्तरासहकारेणैव प्रतीयमानत्वेन निर्दिश्यमानताया अव्याघातान्न तस्य निर्दिश्यमानत्वप्रतिपादनपरवक्ष्यमाणहयवरडिति सूत्रस्थभाष्यविरोधः। सुपद उदस्थादित्यादौ

तदन्तादेर्येन विधिरित्यादिशास्त्रान्तरसहकारेणैव प्रतीयमानत्वान्निर्दिश्यमानत्वाभावेन न तयोरेतत्परिभाषोदाहरणत्वप्रतिपादनपरभाष्यासंगतिः। एवमस्य च्वावित्यादौ दीर्घादीनां ग्रहणकशास्त्रसहकारेणैवोपस्थितत्वान्निर्दिश्यमानत्वाभावेन न तेषामनिर्दिश्यमानत्वप्रतिपादनपरवक्ष्यमाणस्वग्रन्थासंगतिः नचैवं धातुपदेन भ्वादीनां भूवादय इति शास्त्रान्तरसहकारेणैव प्रतीयमानतयाऽङ्गपदबोध्यस्येव निर्दिश्यमानताया वक्तुमशक्यतया तेषां निर्दिश्यमानत्वप्रतिपादनपरधात्वादीनामपि निर्दिष्टत्वादित्यादिवक्ष्यमाणस्वग्रन्थविरोध इति वाच्यम्। तद्ग्रन्थस्य धातोरादिर्धात्वादिः, धातुरादिर्ययो स्तौ धात्वादी धात्वादिश्च धात्वादी च धात्वादयस्तेषामिति तत्पुरुषातद्गुणसंविज्ञानबहुव्रीह्योरेकशेषेण श्नुभ्रुस्त्रीणां निर्दिष्टत्वादित्याशयकतया विरोधाभावात्। नन्वेवं लिङ्गविशिष्टपरिभाषाबोधितस्य तन्मध्यपतितन्यायबोधितस्य च स्वं रूपमिति शास्त्रातिरिक्तशास्त्रान्तरसहकारेणैव प्रतीयमानतया तयोरुक्तरूपनिर्दिश्यमानत्वाभावे महतीप्रिय इत्यत्र लिङ्गविशिष्टपरिभाषया "आन्महत" इत्यात्वमाशङ्क्यानित्यत्वेन समाधानपरङ्याप्सूत्रस्थभाष्यासङ्गतिः। तथा कादेशः खल्ववश्यं वक्तव्यः साकच्कार्थ इति त्यदादीनाम इति सूत्रस्थभाष्यासङ्गतिश्च स्यात्। देवीमञ्चतीति देवद्र्यङित्यत्र विष्वग्देवयोरित्यद्र्यादेशानापत्तिः, अकज्विशिष्टस्य किंशब्दस्य कादेशानापत्तिश्च स्यदिति चे, न्न। तयोरुक्तरूपनिर्दिश्यमानत्वाभावेऽपि स्थानिवत्सूत्रेण स्थानिवृत्तिनिर्दिश्यमानत्वस्यादेशे इव स्वप्रकृतिवृत्तिनिर्दिश्यमानत्वस्य लिङ्गबोधकप्रत्ययविशिष्टेऽकज्विशिष्टे चातिदेशसंभवेन निरुक्तभाष्यविरोधस्य लक्ष्यदोषस्य चाप्रसरात्। स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन तद्बुध्यैव कार्यजननादिति वक्ष्यमाणग्रन्थेनास्यैवार्थस्य नागेशाभिप्रेतत्वध्वननात्। आगमविशिष्टे तु न निर्दिश्यमानत्वातिदेशः। ळवस्थायामडिति भाष्योक्तसिद्धान्तासङ्गतेरिति बोध्यम्। न चैवमपि द्विपात्सुपदो जराजरसावित्यादौ षष्ठीसमासे पूर्वोत्तरयोरुभयोरपि पाच्छब्दजराशब्दयोर्निर्दिश्यमानत्वाविशेषादुत्तरयोरिव पूर्वयोरपि पाच्छब्दजराशब्दयोः कुतो नादेश इति वाच्यम्। पञ्चम्यन्तपदबोध्यस्येव सप्तम्यन्तपदबोध्यस्यापि निमित्तस्य निर्दिश्यमान एवान्वयात्पूर्वयोर्निर्दिश्यमानत्वेऽपि विभक्तिपरत्वाभावेनादेशाप्रसक्तेः। निमित्तस्याङ्गविशेषणत्वेऽपि पाच्छब्दान्तं यदङ्गं भं तदवयवो यो निर्दिश्यमानः पाच्छब्दस्तस्य पदादेश इत्यादिरूपेणार्थे प्रत्यासत्त्योत्तरयोरेव पाच्छब्दजराशब्दयोर्ग्रहणान्नातिप्रसङ्ग इति बोध्यम्। नचैवमपि जराजरसावित्यादि पदद्वित्वस्थले विशिष्टस्य जरसादेशानापत्तिरिति वाच्यम्। तत्रानस्तमितावयवभेदस्यैव द्वित्वस्य प्रवृत्तेः सिद्धान्तितत्वादवयवयोः स्थानिवद्भावेन विशिष्टस्य च निर्दिश्यमानताया जराशब्दत्वस्य च सत्त्वेऽप्येकाज्द्विर्वचनन्यायेन विशिष्टस्यैवादेश-

न चास्य च्वावित्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्। जातिपक्षे दोषाभावात्॥ किं च न भूसुधियोरिति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः॥ इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि

---

प्रवृत्त्येष्टसिद्धेः। न च नाभिनभं चेत्यादौ षष्ठ्या अभावादुक्तरूपनिर्दिश्यमानत्वाभावादतिप्रसङ्ग इति वाच्यम्। नाभिशब्दस्य षष्ठ्यन्तत्वाभावेऽपि षष्ठीप्रकृतित्वेनानुसन्धीयमानतायाः सत्त्वेनादोषादिति दिक्। व्यक्तिपक्षे दोषमाशङ्कते। [नचेति।] [इत्यादाविति।] इत्यादिविषये मालीभवतीत्यादावित्यर्थः। [निर्दिश्यमानत्वाभावादिते।] ग्रहणकशास्त्रसहकारेण तेषां प्रतीयमानत्वात्तत्त्वाभाव इति भावः। [जातिपक्षे दोषाभावादिति।] तत्पक्षेऽकारेण शास्त्रान्तरासहकारेणैवात्वजातेरुपस्थित्या तस्या निर्दिश्यमानत्वं सुवचम्। तस्यां च स्वत आदेशासंभवात्तदाश्रयव्यक्तिषु प्रवर्तमान आदेशोऽविशेषाद्ध्रस्वेष्विव दीर्घादिष्वपि भवतीति न दोष इति भावः। नन्वेवमपि व्यक्तिपक्षे दोषस्तदवस्थ एवेत्यत आह। [किंचेति।] [निर्दिश्यमानकार्यबोधनादिति।] एरनेकाच इत्यत्र ओःसुपीत्यत्र च ह्रस्वयोरेव निर्दिष्टत्वेन ततो ग्रहणकशास्त्रसहकारेणैव दीर्घादीनामुपस्थित्या तेषां निर्दिश्यमानत्वाभावाद्यणोऽप्राप्तौ स निषेधो व्यर्थस्सन्सामान्यत इममर्थं ज्ञापयतीति भावः। नन्वचिश्नुधात्वित्यत्र य्वोरित्यनेनेकारोकारयोर्निर्दिष्टत्वादनया परिभाषया तयोरेव कार्यप्रवृत्त्या समुदायस्य प्रसक्तेरेवाभावात्समुदायस्यादेशवारणाय कृतमियङुवङोर्ङित्त्वं व्यर्थं स्यादत आह। [इयङुवङोरिति।] [इवर्णोवर्णान्तश्नुधातुभ्रुवामिति।] अत्र धातुश्नुभ्रुवामिति पाठो गदासंमतः। अयमेव युक्तः। इवर्णोवर्णान्तत्वस्य संभवव्यभिचाराभ्यामिति न्यायेन धातावेवान्वयस्य न्याय्यत्वात्। अन्ययोरिवर्णान्तत्वस्यासंभवादुवर्णान्तत्वस्याव्यभिचरितत्वेन चान्वयासंभवात्। सर्वमूलभूतत्वेनाभ्यर्हितत्वात्तस्यैव पूर्वनिपातस्य न्याय्यत्वाच्च। अत एवाग्रे धात्वादीनामित्युक्तिः संगच्छते। सूत्रे तु सौत्रत्वात्तदविवक्षयाऽल्पाच्तरत्वेन तथा प्रयोग इति बोध्यम्। [इत्यर्थेनेति।] अचिश्नुधात्वित्यस्येति शेषः। [धात्वादीनामिति।] धातुरादि-

निर्दिष्टत्वादन्त्यादेशत्वाय, रीङ्रिङोर्ङित्वं तु स्पष्टार्थमेव। एतेनेदं ङित्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्॥ हयवरट्सूत्रस्थेनायोगवाहानामुपदेशो ऽलो ऽन्त्यविधिः प्रयोजनम्॥ वृक्षस्तत्र। नैतदस्ति प्रयोजनं, निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात्॥ अनया परिभाषया येन विधिरिति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं यदागमा इति

---

येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः। सौत्रक्रमाश्रयणे तु धातोरादिर्धात्वादिः, धातुरादिर्ययो स्तौ धात्वादी धात्वादिश्च धात्वादी च धात्वादय इति तत्पुरुषातद्गुणसंविज्ञानबहुव्रीह्योरेकशेषः। एवंच श्नुभ्रुस्त्रीणामित्यर्थः। [निर्दिष्टत्वादिति।] एवंचेवर्णोवर्णान्तधातुस्थलेऽनया परिभाषया अन्त्यादेशत्वसिद्धावपि श्नुप्रत्ययान्तादिविषयेऽनया परिभाषया समुदायस्यैव कार्यप्रसक्त्या तद्वारणाय ङित्त्वमावश्यकमिति भावः। यथाश्रुतं तु न युक्तम्। धातुपदेन भ्वादीनां भूवादय इति शास्त्रसहकारेणैवोपस्थित्या तेषां निर्दिश्यमानताया अभावात्। नन्वेवमपि रीङ्रिङोर्ङित्त्वं व्यर्थम्। तद्विधौ वर्णस्यैव निर्दिष्टत्वेन समुदायस्य कार्यव्यावृत्तये तस्यानावश्यकत्वादत आह। [रीङ्रिङोर्ङित्त्वन्त्विति।] [स्पष्टार्थमेवेति।] एवेन फलान्तरव्यवच्छेदः। केन चिदुक्तं तदेव फलान्तरं खण्डयति। [एतेनेति।] वक्ष्यमाणभाष्यविरोधेनेत्यर्थः। तमेवाह। [हयवरट्सूत्रस्थेनेति।] अस्याग्रिमेण भाष्येणेत्यनेनान्वयः। [विरोधादिति।] यद्यस्य वर्णग्रहणेऽप्रवृत्तिः स्यात्तदा विसर्गस्यापि वर्णत्वेन तद्विषयेऽनया परिभाषया सिद्धिप्रतिपादनमसंगतं स्यादिति भावः। उक्तरीत्या स्थानिवत्सूत्रबोधितस्य ग्रहणकशास्त्रगृहीतस्य, लिङ्गविशिष्टपरिभाषातन्मध्यपतितन्यायगोचरयोश्च निर्दिश्यमानकार्यप्रवृत्त्या तत्राऽस्याः परिभाषाया अप्रवृतौ परिशेषादस्याः प्रवृत्तिस्थलमाह। [अनयेति।] [स्थानित्वाभावबोधनमिति।] तयो र्येनविधिरिति यदागमा इति च

## लब्धस्य च। तेन सुपद उदस्थादित्यादिसिद्धिः॥

---

शास्त्रान्तरसहकारेणैवोपस्थित्या निर्दिश्यमानत्वाभावादिति भावः। एवं स्थिते परिभाषाफलं दर्शयति। [तेनेति।] तदुभयबोधितस्य स्थानित्वाभावबोधनेनेत्यर्थः। [इत्यादिसिद्धिरिति] अन्यथा आद्ये विशिष्टस्यादेशापत्त्या द्वितीयेऽडागमाकारस्य पूर्वसवर्णापत्त्या च तदसिद्धिरिति भावः। नन्वङ्गभसंज्ञानिमित्तभूतप्रत्ययसंबन्धं वैयधिकरण्यान्वयं चाश्रित्य पादः पदित्यादेर्भसंज्ञ-काङ्गावयवस्य यजाद्यसर्वनामस्थानस्वादिप्रत्ययपरकस्य पाच्छब्दस्य पदादेश इत्येवं व्याख्यानेन विनैव परिभाषामिष्टसिद्ध्या न सुपद इत्यादिरस्याः परिभाषायाः प्रयोजनम्। एवमुदः स्थास्तम्भोरित्यत्र सकारं प्रश्लिष्योदः परस्य स्थास्तम्भोस्सकारस्य पूर्वसवर्ण इत्यर्थाश्रयणेनोदस्था-दित्यत्र पूर्वसवर्णस्य वारयितुं शक्यतया न तदप्यस्याः प्रयोजनमिति चेदत्राहुः। अङ्ग संज्ञा-निमित्तभूतप्रत्ययसंबन्धः संज्ञानां कार्यकालत्वमाश्रित्य यचि भमित्यादे विधिप्रदेशे उपस्थितिं पदैकवाक्यतां चाश्रित्य वा अर्थापत्तिमूलकाक्षेपाद्वा वाच्यः। तत्र नाद्यः। आकडारीयसंज्ञासु कार्यकालत्वाभावस्य प्रागुपदर्शितत्वात्। तदभ्युपगमेऽप्यन्यतरपदवैयर्थ्येन संज्ञाशास्त्राणां पदैक-वाक्यताया वक्तुमशक्यतया निरुक्तार्थस्य दुर्लभत्वात्। न द्वितीयः। इरियानित्यादावङ्गमन्तरा प्रत्ययोपलम्भात्। वृषण्वसुरित्यादौ प्रत्ययमन्तरा भत्वोपलम्भाच्च ताभ्यां प्रत्ययाक्षेपस्य वक्तु मशक्यत्वात्। कथंचिदाक्षेपेऽपि पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुतया आक्षिप्तस्य तस्य शाब्दान्वयासंभवात्। तदभ्युपगमेऽप्यङ्गभसंज्ञाक्षिप्तप्रत्ययस्योत्थिताकाङ्क्षया तत्रैवान्वयस्य न्याय्यतयाऽन्यत्रान्वयस्याऽनौचित्यात्। पदाङ्गाधिकार इति परिभाषाव्यतिरेकेण वैयधिकरण्यान्वयस्य सुतरामयुक्तत्वाच्च। तस्मात्परिभाषामन्तरा न सुपद इत्यादिसिद्धिः। नच परिभाषाभ्युपगमेऽपि द्विपात्सुपद इत्यादौ पूर्वपाच्छब्दस्य पदादेशवारणाय कथंचिदुक्तरीतेरेवाश्रयणीयतयाऽ तयैव सुपद इत्यादिसिद्धौ न तदर्थं परिभाषा आवश्यकीति वाच्यम्। पाच्छब्दान्तं यदङ्गं भं तदवयवो निर्दिश्यमानो यः पाच्छब्द इत्यर्थे प्रत्यासत्त्या चरमपाच्छब्दस्यैव ग्रहणेन तद्दोषस्यात्र पक्षे वारयितुं शक्यत्वात्। वैयधिकरण्यान्वयवादिनामपि सुपद इयान् तेनेत्यर्थे सुपादियतेत्यत्र टामादाय भसंज्ञकाङ्गावयवत्वं वतुपमादाय यजाद्यसर्वनामस्थानप्रत्ययपरकत्वं चाश्रित्य प्राप्तपदादेश-वारणाय प्रकारान्तरेण प्रत्यासत्त्याश्रयणमावश्यकमेवेति बोध्यम्। उदस्थादित्यत्र सकारप्रश्लेषेण

## अनया च स्वस्वनिमित्तसंनिधापितानामलोऽन्त्यस्येत्यादीनां समावेश एव न बाध्यबाधकभावो विरोधाभावात्।

---

वारणमपि न युक्तम्। एवमपि तस्यै यस्यै इत्यादौ स्याटि कृते तद्विशिष्टस्य स्यैभाववारणाय, क्रियास्तां क्रियास्तेत्यादौ यासुड्विशिष्टस्य तामादेशवारणाय लावस्थायामडिति भाष्यकारीयसिद्धान्ते अपिबदित्यादावागमविशिष्टस्य पिबाद्यादेशवारणाय, प्रकृत्य प्रहृत्येत्यादौ क्तान्तस्य ल्यबाद्यादेशवारणाय च परिभाषाया अवश्यकतया तयैवात्रापि निर्वाहे प्रश्लेषादिपरिक्लेशस्यायुक्तत्वात्। उदस्थादित्यस्य प्रकृतपरिभाषाप्रयोजनत्वप्रतिपादनपरपादः पदिति सूत्रस्थभाष्यविरोधश्चेति। ननु यदागमन्यायगोचरस्य निर्दिश्यमानत्वाभावे तदोरिति सूत्रस्थशेखरग्रन्थासङ्गतिः, तत्र हि "तो रिति तु नोक्तम्। अनेष इत्यादौ सत्वापत्ते" रित्युक्तम्। यदि च यदागमन्यायगोचरस्य निर्दिश्यमानत्वाभावस्तदा कथं नुटः सत्वापादनम्। तद्विशिष्टस्य निर्दिश्यमानत्वभावादिति, चेन्न। विशिष्टस्य निर्दिश्यमानत्वाभावेऽप्याद्यन्तौ टकिताविति शास्त्रबोधितस्य निर्दिश्यमानत्यदाद्यवयवत्वस्याव्याघातात्। अत एव चलीकॢप्यत इत्यादौ रीको रेफस्य लत्वसिद्धिरित्यवधेयम्। अलोन्त्यस्य आदेः परस्येत्येतावारम्भसामर्थ्यादस्य बाधकौ अनेकालित्यनेन तु सहाविरोधादस्य समुच्चयेन प्रवृत्तिरिति षष्ठीस्थान इति सूत्रस्थकौस्तुभोक्तं निराचिकीर्षुः सिद्धान्तमाह। [अनया चेति।] सहेति शेषः। [स्वस्वनिमित्तसंनिधापितानामिति।] स्वेन स्वेन लिङ्गेन विधिसंनिधिं प्रापितानामित्यर्थः। [अलोन्त्यस्येत्यादीनामिति।] आदिना ङिच्च, आदेः परस्य, अनेकाल् शित्सर्वस्येत्येतेषां संग्रहः। समावेश एवेति। यथा अतो दीर्घोयञीत्यादौ षष्ठीस्थान इत्यनेनादन्ताङ्गस्य स्थाने प्रसक्तस्यादेशस्याऽन्त्येऽल्युपसंहारः क्रियते, यथा वा सर्वधातुकार्धधातुकयोरित्यादाविक्परिभाषासहकृतेन षष्ठीस्थान इत्यनेनेगन्ताङ्गस्य स्थाने प्रसक्तस्यादेशस्यान्त्येऽल्युपसंहारः क्रियते, एव मुदः स्थास्तम्भोस्त्यदादीनाम इत्यादौ षष्ठीस्थान इत्येतदर्थभूतेन निर्दिश्यमानइत्यनेन निर्दिश्यमानस्य स्थाने प्रसक्तस्यादेशस्य आदेः परस्य अलोन्त्यस्येताभ्यामाद्यन्तयोरलोरुपसंहारः क्रियत इत्यनया सह तेषां समावेश एवेति भावः। एवव्यवच्छेद्यमाह। [न बाध्यबाधक भाव इति।] परत्वादिनेति भावः। तत्र हेतु माह। [विरोधाभावादिति।]

**नाप्येतयोरङ्गाङ्गिभावः उभयोरपि परार्थत्वेन तदयोगात्। अनेकाल्शिदिति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते॥ यत्त्वादेः परस्यालोऽन्त्यस्येत्येतावेतद्बाध-**

---

सत्येव हि विरोधे परेण पूर्वस्य वा निरवकाशेन सावकाशस्य वा बाधो वक्तुं शक्यः। यथा अलोन्त्यस्य आदेः परस्य ङिच्च अनेकाल्शित्सर्वस्येत्येतेषाम्। एतद्विषयेत्वेतद्बोधितस्थानिव्यवस्थापकतया तेषां समावेशसंभवेन विरोधाभावा न्न बाध्यबाधकभाव इति भावः। नन्वनया सह तेषां समावेशोऽङ्गाङ्गिभावेन विध्युपकारकत्वापत्तौ निर्दिश्यमानस्येति परिभाषाऽविषये ह्रस्वस्य गुण इत्यादावलोन्त्यस्येत्यादेरप्रवृत्त्यापत्तिरत आह। [नापीति।] [उभयोरपीति।] निर्दिश्यमानस्येत्यस्य, अलोऽन्त्यादिषु चतुर्ष्वन्यतमस्य चेत्यर्थः। [परार्थत्वेनेति।] विध्युपकारार्थत्वेनेत्यर्थः। [तदयोगादिति।] गुणानां च परार्थत्वादसंबन्धः समत्वादिति न्यायेनाङ्गाङ्गिभावेनान्वयासंभवादित्यर्थः। नन्वेवमपि येन विधिरिति यदागमा इत्युभयबोधितस्थानिनोरनेकालित्यत्र सर्वपदेन ग्रहणादस्याश्च तदुभयबोधितस्य स्थानित्वाभावबोधकत्वेनाऽनया च सह तस्य विरोधेन बाध्यबाधकभावापत्तौ परत्वादनेकालित्यस्य प्रवृत्तौ सुपदो निर्जरसावित्याद्यसिद्धिरत आह। [अनेकालिति।] [सर्वश्चेति।] सर्वोऽपीत्यर्थः। [एतत्परिभाषाबोधित एवेति।] एवेन येन विधिरित्याद्युभयबोधितस्य व्यावृत्तिः। यथा अलोन्त्यस्येत्यादिभिरेतत्परिभाषाबोधितस्थानिसंबन्ध्यन्त्याद्योरेव ग्रहणमेवमनेनाप्येतत्परिभाषाबोधितस्यैव सर्वस्य ग्रहणेन तैरिवानेनाप्यस्याः समावेश एवाविरोधादिति भावः। नचैवं पद्दन्न इत्यादौ दोषः, तत्र स्थानिनामनुच्चारणेन निर्दिश्यमानपरिभाषाया अप्रवृत्त्या तेषां सर्वपदेन ग्रहीतुमशक्यतयाऽनेकालित्यस्याप्रवृत्तावन्त्यादेशत्वापत्तेरिति वाच्यम्। तत्राप्यादेशैः पाणिनिकृतस्थान्युच्चारणानुमानात्सिद्धान्ते तेषां प्रयोगनियमार्थत्वेन चादोषात्। कौस्तुभोक्तिं खण्डयति। [यत्त्विति।] [एतद्बाधकाविति।] निर्दिश्यमानपरिभाषाबाधकावित्यर्थः। यशांसि, पयांसीत्यादौ स्थानेयोगत्वस्य अन्त्यादचः परत्वस्य च संभवे सत्यपि यथा मिदचोऽन्त्यात्पर इत्येषा तक्रन्यायेन स्थानेयोगत्वस्य बाधिका, एवमेतदप्राप्तियोग्यस्थलेऽचारितार्थ्यस्य एतत्प्रवृत्युत्तरं चारितार्थ्यस्य चानयोः सत्त्वेनैतौ तक्रन्यायेन निर्दिश्यमानपरिभाषाबाधकाविति भावः।

कावििति, तन्न। उदस्थादिति सूत्रविषये ऽस्याः पादः पदिति सूत्रे भाष्ये संचारितत्वात्। नाप्येतयोरियं

---

परत्वादेतद्बाधकाविति केश्चिदुक्तं तु न युक्तम्। विरोधाभावादिति पूर्वग्रन्थेन तयोर्निर्विषयत्वापत्तेरित्युत्तरग्रन्थेन च विप्रतिषेधशास्त्रप्रवृत्तेर्निराकरणात्। कौस्तुभे आरम्भसामर्थ्या-देतद्बाधकावित्युक्त्या तदर्थस्य तदनभिमतत्वाच्च। नन्वेतत्परिभाषाऽप्राप्तियोग्ये सार्वधातुकार्ध-धातुकयोः सनूलिटोर्जेरित्यादावनयोश्चारितार्थ्यात्कथं बाधकत्वमिति चे, न्न। त्यदादीनामः, उदः स्थास्तम्भोरित्यादौ स्वस्वलिङ्गेनोपस्थापितयोस्तयोरचारितार्थ्यमिति तदाशयात्। कथंचित्तयोरे-तद्व्यवस्थापकत्वे संभवति बाधकत्वकल्पनमनुचितमित्याशयेनाह। [तन्नेति।] तत्रैव प्रमाणमाह। [उदः स्थादिति।] पादः पदिति सूत्रे भाष्ये एतत्परिभाषाप्रयोजनगणनावसरे उदः स्थेति सूत्रस्य विषयभूते उदस्थादितिलक्ष्ये आदेः परस्येति सूत्रविषयेऽस्याः संचारितत्वा-दित्यर्थः। तयोस्तक्रन्यायेन निर्दिश्यमानपरिभाषाबाधकत्वे तु तद्विषयेऽस्याः प्रयोजन प्रतिपादनमसंगतं स्यात्। अतस्तेन कथञ्चिद्व्यवस्थापकत्वे संभवति परिभाषाणां परस्परं बाध्यबाधकभावोऽनुचित इत्ययमर्थो लभ्यत इति भावः। ननु तिविंशतेर्डितीति सूत्रस्थभाष्येण निर्दिश्यमानपरिभाषाया अलोन्त्यपरिभाषाबाधकत्वस्य स्फुटं प्रतीत्या कथमनया सह तेषां समावेशः। तत्र हि भाष्ये " तिग्रहणं किमर्थम्? विंशतेर्डिति लोप इत्येव कुतो नोच्येतेत्याशङ्क्य तिग्रहणाभावेऽलोन्त्यपरिभाषया विंशतेरिकारस्य लोपः प्रसज्येतेति समाधाय " अन्त्यस्य यदि लोपः स्यात्तदा तस्य यस्येति लोपेनैव सिद्धे सूत्रारम्भसामर्थ्यादेव तिशब्दस्य लोपो भविष्यतीति तिग्रहणमनर्थकमेवेति पुनराशङ्क्य तदुत्तरमेवं तर्हि अनन्त्यार्थमारब्धेनानेन सामर्थ्यादनन्त्यस्य तिशब्दस्येवाऽङ्गस्यापि लोपः प्रसज्येत। अतस्तिग्रहणं कर्तव्यमिति सिद्धान्तयित्वा, " अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति " इत्याशङ्क्य निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यतीति समाहितम्। अनेन च तयोरसमावेशः स्पष्ट एवेत्यत आह। [नापीति।] [एतयो रिति।]

**बाधिका। एतयोर्निर्विषयत्वप्रसङ्गादिति ति विंशतेरिति सूत्रे कैयटः॥ अकज्विषये नायं न्यायः स्थानिवद्भावेनेव**

---

अलोन्त्यस्य आदेः परस्येत्येतयोरित्यर्थः। [बाधिकेति।] अन्तरङ्गत्वादिति भावः। अस्याः षष्ठीस्थान इत्येतदर्थभूतत्वेन तत्तद्वाक्यार्थबोधात्पूर्वं पदार्थसमन्वयकाल एव प्रवृत्त्याऽन्तरङ्गत्वम्। तयोश्च वाक्यार्थबोधोत्तरं स्थानषष्ठीत्वनिर्णये सति प्रवृत्त्या बहिरङ्गत्वमित्याशयः। [निर्विषयत्वप्रसङ्गादिति।] त्यादादीनामः, उदः स्थेत्यादौ स्वस्वलिङ्गेनोपस्थापितयोस्तयोरचारितार्थ्यादित्यर्थः। [कैयट इति।] तेन हि निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यतीति प्रागुक्तभाष्यप्रतीकमुपादाय नानेन परिभाषाया व्यापारः कथ्यते। न हि निर्दिश्यमानपरिभाषा अलोन्त्यस्यादेः परस्येत्येतयोर्बाधिका। एतयोर्निर्विषयत्वप्रसङ्गात्। तस्मात्तिग्रहणसामर्थ्यादलोन्त्यस्येत्यस्यानुपस्थाने सर्वस्य तेर्लोपो भविष्यतीत्ययमस्य भाष्यस्यार्थ इत्युक्तम्। अत्र कैयट इत्यनेनारुचिः सूचिता। तद्बीजंत्वनया येन विधिरिति यदागमा इति च परिभाषालब्धस्येव स्थलविशेषेऽलोन्त्यपरिभाषालब्धस्यापि स्थानिनः स्थानित्वाभावो बोध्यते। उक्तभाष्यप्रामाण्यात्। नैतावता तयो निर्विषयत्वप्रसङ्गः। सामर्थ्यसहकारस्थल एव तथाऽङ्गीकारात्। युक्तं चैतत्। निर्दिश्यमानत्वस्योक्तपरिमाणधर्मतया संख्यादिवन्न्यूनाधिकयोरसत्त्वेनाधिके स्थानित्वव्यवच्छेदसंभवात्। एवंचैवं भाष्यसंगतावन्यथा वदन् कैयटश्चिन्त्य एवेति बोध्यम्। ननु येन विधिरिति यदागमा इति च शास्त्रबोधितस्येव तन्मध्यपतितन्यायबोधितस्यापि स्वरूपमिति शास्त्रातिरिक्तशास्त्रान्तरासहकारेण प्रतीयमानत्वरूपनिर्दिश्यमानत्वाभावादनया तस्यापि स्थानित्वाभावबोधनस्य न्याय्यतया पूर्वत्र तयोर्द्वयोरेवोपादानमयुक्तमत आह। [अकज्विषय इति।] तत्रैतन्न्यायाप्रवृत्तौ हेतुमाह। [स्थानिवद्भावेनेति।] यथा स्थानिवद्भावेनादेशे स्थानिभूतनिर्दिश्यमानबुद्ध्यैव कार्यप्रवृत्तिस्तथा तेन न्यायेन तद्बुद्ध्यैव कार्यजननादित्यर्थः। स्थानिवत्सूत्रेण स्थानिवृत्तिनिर्दिश्यमानत्वस्याऽऽदेशेऽतिदेशेन तद्विषयेऽनिर्दिश्यमानस्याभावाद्यथा अस्य न्यायस्याऽप्रवृत्तिस्तथा तेनाप्यकज्रहिते दृष्टस्य निर्दिश्यमानत्वस्य तद्विशिष्टेऽतिदेशेन न तद्विषयेऽप्यस्य न्यायस्य प्रवृत्तिरित्याशयः। अत एव त्यदादीनाम इति सूत्रस्थं भाष्यं संगच्छते। तत्रहि कादेशः खल्ववश्यं वक्तव्यः। साकच्कार्थ इत्युक्तम्। अन्यथाऽकज्विशिष्टस्य निर्दिश्यमानत्वाभावेन

तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात्॥ इयं चावयवषष्ठीविषयेऽपि। अत एव तदोः सः साविति सत्वमतिस्य इत्यत्रोपसर्गतकारस्य न। निर्दिश्यमान-युष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम्॥ पादः पदिति

---

कादेशविधानेऽपि विशिष्टस्यादेशाप्रवृत्त्या तस्यावश्यकत्वकथनमसंगतं स्यात्। तथा नेदमदसोरिति ककारवत्पर्युदासस्य तन्मध्यपतितन्यायज्ञापकत्वप्रतिपादनपरं येन विधिरिति सूत्रस्थं भाष्यमप्यत एव संगच्छते। अन्यथा साकच्कयोरिदमदसोर्निर्दिश्यमानत्वाभावेन त्यदाद्यत्वाप्राप्त्या स्वांशे चारितार्थ्यायोगात्तदसंगतिस्स्पष्टैवेति बोध्यम्। नचैवं हुझल्भ्यो हेर्धिरिति सूत्रस्थभाष्यासंगतिः। तत्रहि भिन्दकीत्यत्र भिन्द्+हि इत्यवस्थायामकचि कृते निर्दिश्यमानस्य हेरभावाद्धित्वं न प्राप्नोतीत्याशङ्क्य परत्वाद्धित्वमिति समाहितम्। त्वद्रीत्याऽकज्विशिष्टस्य निर्दिश्यमानत्वसत्त्वेन तदसंगतिः स्पष्टैवेति वाच्यम्। अन्तरङ्गत्वात्प्राप्तस्याकचः परत्वाद्बाधप्रतिपादनेन तस्यैकदेश्युक्ति-तया तद्विरोधस्याकिञ्चित्करत्वादित्यवधेयम्। नन्वस्याः षष्ठीस्थान इत्येतत्परिभाषामूलकत्वेन स्थानषष्ठीविषय एव प्रवृत्तेर्न्याय्यतया प्रागुक्तो द्वितीयार्थोऽयुक्त इत्यतिस्य इत्याद्यसिद्धिरत आह। [इयं चेति।] [अवयवषष्ठीविषयेऽपीति।] लक्ष्यानुसारिव्याख्यानादध्याहृतस्य निर्दिश्यमान-पदस्यावयवपर्यन्तलक्षणयेति भावः। तत्राप्यस्य न्यायस्य प्रवृत्तौ फलं दर्शयति। [अतिस्य इति।] अतिशयितः स्य इत्युत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यथोपसर्जनत्वेनाऽत्वसत्वयोरप्राप्तिः। [उपसर्गत-कारस्य नेति।] अन्यथाऽङ्गाधिकारात्तदन्तविधौ त्यदाद्यन्ताङ्गावयवयोस्तकारदकारयोस्स इत्यर्थे तदापत्तिः स्पष्टैवेति भावः। अनन्त्यविकारपरिभाषया तु नात्र निर्वाहः। अन्त्यवर्णतद्वर्णयो-रितराव्यवधान एव तत्प्रवृत्तेः। फलान्तरमाह। [अतियूयमित्यादाविति।] त्वामतिक्रान्ता इति विग्रहः। अत्र निर्दिश्यमानस्येति परिभाषाया अप्रवृत्तौ युष्मदाद्यन्ताङ्गावयवमपर्यन्तस्ये-त्यर्थेनाऽतियुष्मित्यस्यादेशः स्यादिति भावः। अत्र मानमाह। [पादः पदिति।] तत्र

सूत्रे षष्ठीस्थाने इति सूत्रे च भाष्ये स्पष्टैषा ॥ १२ ॥
ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत अन्तर्या-

---

सुपदः, अतिस्य इत्युभयविधोदाहरणदानादुभयविषयिणीयं परिभाषा भाष्ये स्पष्टेति भावः। यद्यपि षष्ठीस्थान इति सूत्रस्य प्राथमिकत्वेनास्य न्यायस्य तन्मूलकत्वेन च तस्यैव प्रथमत उपादानं युक्तं, तथाप्यस्यावयवषष्ठीविषयकतायास्ततः स्पष्टमलाभान्निरुक्तपादः पदिति सूत्रस्थभाष्येण तदर्थस्य स्फुटं प्रतीत्या इदानीं तस्यैव प्रस्तुतत्वेन च प्रथमतस्तदुपादानमिति बोध्यम्। यत्त्ववयवषष्ठीविषये तु नास्याः प्रवृत्तिः। प्रदेशेषु स्थानिसमर्पकस्यैव परिभाषोपस्थापकतया स्वोपस्थापकसामानाधिकरण्यानुरोधेन स्थानषष्ठीविषयकताया एव युक्तत्वात्। परिभाषाया आवृत्तिवशेनार्थद्वयपरत्वाश्रयणेनोभयविषयकत्वमिति चायुक्तमेव। गौरवात्। तदोः सस्साविप्यादौ तु लक्ष्यानुसारिणा वैयधिकरण्यान्वयेनैव निर्वाहोऽङ्गावयवत्यदादीनां तदोः सकार इति। पादः पदित्यादौ च सर्वस्यै इत्यादौ स्मायादिवारणार्थं प्रपञ्च्येत्यादौ तदन्तस्य ल्यब्वारणार्थं चावश्यस्वीकर्तव्यया प्रकृतपरिभाषयैव सामनाधिकरण्येनोपपत्तौ जघन्यस्य वैयधिकरण्यस्यायुक्तता निमित्तसंनिधानाभावश्चेति सुपद इत्यादेर्नैतदुदाहरणत्वप्रदर्शनपरभाष्यासङ्गतिः। तस्मादवयव षष्ठीविषये प्रकृतपरिभाषाविषयत्वोपपादनं भाष्यस्थमेकदेशिन एवेति पादः पदितिसूत्रस्थकैयटात्प्रतीयत इति। एवं चानुवर्तमानत्यदादिपदबोध्यानामनिर्दिश्यमानत्वेऽप्यतिस इत्यादावभीष्टसिद्धिरिति चन्द्रिकाकृतः, तन्न। निर्दिश्यमानपदस्यावृत्तेरनावश्यकतायाः प्रागुक्तत्वेन तादृशगौरवस्याभावात्। निर्दिश्यमानपदस्य तत्सजातीये लक्षणायास्तवाप्यावश्यकत्वेन लक्षणाश्रयणप्रयुक्तगौरवस्यात्र वक्तुमशक्यत्वात्। पदाङ्गाधिकार इति परिभाषयाऽङ्गस्य विशेष्यताया एव न्याय्यतया वैयधिकरण्यान्वयस्याऽयुक्तत्वात्। विना विरोधमतिस्यः अतियूयमित्यादीनां प्रकृतपरिभाषोदाहरणत्वप्रतिपादनपरपादः पदिति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनाया अनौचित्यात्। तत्रत्यकैयटस्यैवमाशयकताया एवोद्द्योते स्पष्टमुक्तत्वादिति बोध्यम्।

स्थानिप्रयुक्तातिप्रसङ्गवारणाय षष्ठीस्थान इत्येतत्परिभाषामूलिकां परिभाषामुक्त्वा इदानीमादेशप्रयुक्तातिप्रसङ्गवारणाय तदुत्तरसूत्रस्थस्थानेग्रहणमूलिकां परिभाषामवतारयति। [नन्विति।

# दकारोपि स्यादत आह॥

# यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः॥१३॥

## अनेकविधं स्थानार्थगुणप्रमाणकृतम्॥

---

[अकारोऽपीति।] अपिना स्थानत आन्तर्यप्राप्तैकारसमुच्चयः। स्थानिनिरूपितान्तर्यस्यैङ्कारोभयसाधारणत्वेनैतत्परिभाषाभावे स्थानत आन्तर्येणैकारवत्प्रमाणत आन्तर्येणाऽकारोऽपि पक्षे स्यादिति भावः। परिभाषायामान्तर्यमित्यस्य सादृश्यमित्यर्थः। यत्र लक्ष्ये स्थानतद्भिन्नकृतमनेकविधमान्तर्यं मिथोविरुद्धादेशसम्पादकतया नियामकत्वेन प्रसक्तं, तत्र लक्ष्ये तयोर्मध्ये स्थानत आन्तर्यं बलीय इति परिभाषार्थः। वाग्घरिरित्यादौ तु स्थानकृतान्तर्यस्य गुणकृतान्तर्यस्य च परस्परविरुद्धादेशसम्पादकताया अभावेन न तत्रास्याः प्रवृत्तिरिति नातिप्रसङ्गः। यद्यपि तत्र स्थानकृतान्तर्येण कादीनां पञ्चानामपि वर्णानां प्राप्तिः। गुणकृतान्तर्येण तु घकारमात्रस्यैव, तथापि परस्परसहकारेणाऽविरुद्धादेशप्रवर्तकतायाः संभवेन न तत्रास्याः प्रवृत्तिः। चेतेत्यादौ तु स्थानकृतान्तर्येणैकारौकारयोः प्रमाणत आन्तर्येणाऽकारस्य च प्राप्तिरिति तत्रानया स्थानत आन्तर्यस्य प्राबल्यबोधनान्न तत्राऽकारापत्तिरिति बोध्यम्। परिभाषाघटकस्यानेकविधमित्यस्यार्थमाह। [स्थानेत्यादि।] अस्य प्रायेणेति शेषः। तेन कर्ता हर्तेत्यादौ स्थान्यादेशयो ऋकाराकारयोः सदृशसंबन्ध्यभावकत्वरूपसादृश्यस्य सत्त्वेन ऋकारस्याकारो गुणो भवतीत्याशयकेन "अनान्तर्यमेवैतयोरान्तर्य" मिति स्थानेन्तरतम इतिसूत्रस्थभाष्येण न विरोधः। अन्यथा सदृशसंबन्ध्यभावकत्वरूपस्यानान्तर्यस्योक्तेषु चतुर्ष्वभावात्तदसंगतिः स्पष्टैव। अत एव पाददन्तेत्यादिनाऽर्थकृतेन वर्णसाम्यकृतेन चान्तर्येण पादशब्दस्यैव पदादेशो, न तु चरणशब्दादेः। अन्यथार्थकृतान्तर्यस्य तत्रापि सत्त्वेन तस्यापि तदापत्तिः। एवं रामेष्वित्यादौ विवृतत्वरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्च सकारस्य तादृश एव षकारो मूर्धन्य आदेशः। अन्यथा केवलबाह्यप्रयत्नसाम्येन ढकारोऽपि स्यादिति बोध्यम्। यत्त्वेतद्भाष्यविरोधपरिहारायाऽत्र गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रं गृह्यत इत्याहु, स्तन्न। नहि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं, रूपान्तरेणापि सादृश्यसंभवात्परिग्रहाच्चेति भाव इत्यनान्तर्यमेवेत्यादिभाष्यव्याख्यानभूतेन कैयटग्रन्थेन गुणपदस्य बाह्यप्रयत्नमात्रार्थकताया एव स्वरसतः प्रतीत्या तद्विरोधात्। अस्य वचनस्य

अत्र मानं षष्ठी स्थाने इत्यत एकदेशानुवृत्त्या स्थानेग्रहणे-ऽनुवर्तमाने पुनःस्थानेऽन्तरतम इति सूत्रे स्थानेग्रहणमेव। तद्धि तृतीयया विपरिणमय्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानस्सति संभवे स्थानत एवान्तरतम इत्यर्थकम्।

---

निर्मूलत्वशङ्कावारणायाह। [अत्रेति।] [एकदेशानुवृत्त्येति।] संख्याव्ययादेरित्यादिवदेक-देशानुवृत्तिप्रयोजिकया स्वरितत्वप्रतिज्ञयेत्यर्थः। [स्थाने ग्रहण इति।] प्रसङ्गवाचिस्थानेग्रहण इत्यर्थः। [स्थानेग्रहणमेवेति।] ताल्वादिस्थानवाचकं स्थाने इति पदमेवेत्यर्थः। एवकारेण ज्ञापकादिनिवृत्तिः। ननु कथं तदुक्तार्थे मानमत आह। [तद्धीति।] हि=यतः। तत=ताल्वादिस्थानपरमिहस्थं स्थानेग्रहणमित्यर्थः। अस्योत्तरेणेत्यर्थकमित्यनेनान्वयः। यतः स्थानेग्रहणं तृतीयान्तत्वेन विपरिणमय्योक्तार्थकमतस्तदेवात्र मानमिति संबन्धः। [तृतीययेति।] तदन्तत्वेनेत्यर्थः। [विपरिणमय्येति] विपरिणामं प्राप्येत्यर्थः। अनुवृत्तस्थानेग्रहणेनास्य प्रसङ्गे सति स्थानेनान्तरतम इत्येकवाक्यतायां वाग्घरिरित्यादावव्यवस्थापत्ते राह। [वाक्यभेदेनेति।] अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यम्। तत्र तमबर्थस्याविवक्षया प्रसङ्गे सति सदृश आदेशो भवतीत्यर्थः। ताल्वादिस्थानवाचीहस्थस्थानपदेनापरम्। अनुवृत्तप्रसङ्गवाचिस्थानशब्दस्य चात्रापि संबन्धः। इहस्थस्थानशब्दस्य च तृतीयान्तत्वेन विपरिणामः। पूर्वेणैव सिद्धे इदं वाक्यं नियमार्थम्। एवं च प्रसङ्गे सति स्थानेनैवान्तरतम आदेशो भवतीत्यर्थः। अस्य च यत्र स्थानकृतस्य तद्भिन्नकृतस्यचान्तर्यस्य परस्परवैयधिकरण्येनैव कार्यनियामकत्वं प्रसक्तं तत्रैव प्रवृत्तिः। सार्वत्रिकत्वे पूर्ववाक्यस्य वैयर्थ्यापत्तेः। तदेतदाह। [सति संभवे इति।] एतेनासंभवे पूर्ववाक्येना-न्यस्याप्यान्तर्यस्यादेशनियामकत्वमिति सूचितम्। तेन वाग्घरिरित्यादिसिद्धिः। यद्यप्यत्र स्थानत आन्तर्यस्यापि संभवोऽस्ति, तथापि तस्य गुणकृतान्तर्यस्य च परस्परसामानाधिरण्येना-प्यादेशनियामकतायाः संभवेन वैयधिकरण्येनैव कार्यनियामकताया अभावा न्न तत्र स्थानत-आन्तर्यस्य प्राबल्यमनेन बोध्यते। तथा च गुणादिकृतमान्तर्यमादाय पूर्ववाक्येन तत्रादेशव्यव-स्थितिरित्याशयः। [स्थानत एवेति।] एवकारेणान्यानन्तर्यस्य व्यावृत्तिः। [इत्यर्थकमिति।]

**तमब्ग्रहणमेवानेकविधान्तर्यसत्त्वागमकम्। स्थानतः स्थानेनेत्यर्थः। तत्र स्थानत आन्तर्यमिको यणचित्यादौ**

---

एतदुत्तरं संपद्यत इति शेषः। अतो न विपरिणमय्येति ल्यबन्तस्यानुपपत्तिः। नन्वनेकविधान्तर्यस्य प्रमाणसिद्धत्वे वाग्घरिरित्यादावन्यानन्तर्यप्रयुक्तकार्यसमर्पणाय वाक्यभेद आवश्यक इति वक्तुं शक्यम्। तत्रैव च प्रमाणाभावाद्वाक्यभेदो विफल एव। नच स्थाने ग्रहणेऽनुवर्तमाने पुनः स्थानेग्रहणमेव वाक्यभेदे तद्द्वाराऽनेकविधान्तर्यसत्त्वे च मानमिति वाच्यम्। प्रसङ्गे सति स्थानकृतान्तर्यवानित्येवमेकवाक्यतयाऽन्वयेनापि स्थानेग्रहणस्य सार्थकतया तस्य तत्रामानत्वादत आह। [तमब्ग्रहणमेवेति।] यदि स्थानकृतमेकमेवान्तर्यं स्यात्तदोत्कर्षस्य स्वसजातीयेतरसापेक्षत्वेनेतरस्य चासत्त्वेनान्तर इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। एवं च वाग्घरिरित्यादौ गुणादिकृतान्तर्येणादेशव्यवस्थितये वाक्यभेद आवश्यक इति परम्परया तमब्ग्रहणमेव वाक्यभेदे मानमिति बोध्यम्। नन्वनेकविधान्तर्यस्याऽसत्त्वेऽपि स्थानकृतान्तर्यस्यैवान्यूनानतिरिक्तत्वरूपातिशयलाभाय तमब्ग्रहणस्यावश्यकतया कथं तदनेकविधान्तर्यसत्त्वे तन्मूलकवाक्यभेदे च मानम्। नच तमब्ग्रहणेन तादृशातिशयसम्पादने फलाभाव इति वाच्यम्। लाकृतिरित्यादौ वकारव्यावृत्तेर्हरीणां गुरूणामित्यादावेकारौकाररूपदीर्घव्यावृत्तेश्च फलत्वादिति चे, न्न। अन्तरेणापि तमब्ग्रहणं स्थानेऽन्तर इत्युक्तावप्यस्यामवस्थायां सादृश्यान्तरस्यासत्त्वेनान्तर इत्येव सिद्धे स्थानेग्रहणसामर्थ्यादेवान्यूनानतिरिक्तत्वरूपातिशयविशिष्टताल्वादिस्थानकृतमेवान्तर्यमित्यर्थस्य सुलभतया तेनैवोक्तदोषवारणसंभवादवशिष्टं तमब्ग्रहणमभीष्टसाधकमेवेत्याशयात्। किंचान्यूनानतिरिक्तस्थानिकस्यादेशस्य संभवे तद्विधानेन चरितार्थस्य शास्त्रस्य न्यूनाधिकस्थानकस्याप्यादेशस्य विधायकत्वे मानाभावाच्चेति बोध्यम्। ननु सूत्रे स्थान इत्यस्य तृतीयान्तार्थकत्वेन परिभाषायां स्थानत इति पञ्चम्यन्तस्य सत्त्वेनार्थभेदापत्तिरत आह। [स्थानेनेत्यर्थ इति।] स्थानत इत्यत्राद्यादित्वात्तृतीयान्तात्तसिरिति भावः। एवमुत्तरवाक्येन परिभाषासिद्धिं प्रदर्श्य पूर्ववाक्यफलं क्रमेण दर्शयति। [तत्रेति।] चतुर्णां मध्ये इत्यर्थः। [इको यणचीति।] नन्वत्र सिद्धान्तभूते जातिपक्षे यथासंख्यसूत्रेण निर्वाहस्यान्यत्र ग्रन्थकृता सिद्धान्तितत्वेन नेदं स्थानत आन्तर्यस्यादेशनियामकत्वे फलमत आह। [आदाविति।] तेनाकः सवर्णे इत्यस्य संग्रहः। श्रीश इत्यादावकः सवर्णे

प्रसिद्धमेव। अर्थतः पद्दन्नित्यादौ। स्थान्यर्थाभिधान-समर्थस्यैवादेशतेति सिद्धान्तात्तदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते। तृजन्वत् क्रोष्टुरिति च। गुणतो वाग्घरिरित्यादौ। प्रमाणतो

---

इत्यनेन विधीयमानो दीर्घः स्थानत आन्तर्यादीकार एव भवति। नत्वन्य इति भावः। अर्थत आन्तर्यस्यादेशनियामकत्वे फलमाह। [पद्दन्नित्यादाविति।] यद्यपि स्थानेऽन्तरतम इति प्रथमान्तपाठेऽस्य सूत्रस्य विसदृशादेशव्यावर्तकत्वेन प्रकृते च विसदृशस्थानिव्यावृत्तेरावश्यकतया न तेनात्र तत्संभवः, तथापि विसदृशस्थानिव्यावृत्तिफलके सप्तम्यन्तपाठेऽत्र तत्प्रवृत्तिसंभवात्तदनु-रोधेनेदमुदाहरणमिति बोध्यम्। तद्ध्वनयन्नाह। स्थान्यर्थाभिधान इत्यादिना। [सिद्धान्तादिति।] अस्य सिद्धान्तस्यार्थवत आन्तर्यस्य स्थान्यादेशभावप्रयोजकत्वमूलकतया तदनङ्गीकारेऽत्र व्यवस्थानापत्तिरित्याशयः। ननु चरणशब्दस्यापि पाच्छब्दसमानार्थकत्वेन कुतस्तस्य न पदादेश इत्यत आह। [तत्समानवर्णेति।] आदेशसमानवर्णेत्यर्थः। एवंच वर्णकृतान्तर्यसहकृतेनार्थत आन्तर्येण पादादीनामेव त आदेशा, न तु चरणशब्दादेरिति भावः। यद्यपि वर्णकृतमान्तर्यमुक्तेषु चतुर्षु नास्ति, तथापि तस्य प्रायिकत्वस्य प्रागुक्तत्वेनानान्तर्यरूपान्तर्यस्येव क्वचिदस्यापि परिग्रहः। स्पष्टं चेदं स्थानेऽन्तरतम इति सूत्रे प्रदीपोद्योतयोरिति बोध्यम्। ननु सिद्धान्तेऽस्य सूत्रस्य प्रयोगनियामकत्वेन तत्र स्थान्यादेशभावस्यैवाभावान्नेदमुदाहरणमत आह। [तृज्वदिति।] अर्थत आन्तर्येण क्रोष्टुशब्दस्य तृजन्तः क्रोष्टृशब्द एवादेशो नतु पक्तृशब्द इति भावः। अस्यापि प्रयोगनियामकत्वे तु पुंवद्भावविषये दारदबृन्दारिका, वातण्ड्ययुवतिरित्यादीन्युदाहरणानि द्रष्टव्यानि। दरदोऽपत्यं स्त्रीत्यर्थे दरच्छब्दाद् द्व्यञ्मगधकलिङ्गसूरमसादणित्यनेनाणि तस्य स्त्रिया-मिति लुकि निष्पन्नस्य दरच्छब्दस्य बृन्दारिकाशब्देन कर्मधारये पुंवत्कर्मधारयेत्यनेन दरच्छब्दस्य जायमानं पुंवद्रूपमर्थत आन्तर्याद्दारदेत्येतदेव भवति नत्वन्यत्। एवं वातण्ड्ययुवतिरित्यत्र वतण्डशब्दादपत्यार्थे गर्गादित्वाद्यञि तस्य स्त्रियामतश्चेति लुकि वतण्डा च सा युवतिरिति कर्मधारये प्राग्वज्जायमानं पुंवद्रूपं वातण्ड्येत्येतदेव भवति अर्थत आन्तर्येणेति बोध्यम्। [गुणत इति।]

ऽदसोऽसेरित्यादौ ॥ स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

नन्नु प्रोढवानित्यत्र प्रादूहोढेति वृद्धिः स्यादत आह।

---

बाह्यप्रयत्नानां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं तेषामिति भावः। [अदसोऽसेरिति।] अत्र प्रामाणत आन्तर्येण दकारात्परयोर्ह्रस्वव्यञ्जनयोर्ह्रस्वः। दीर्घस्य दीर्घ इति भावः। व्यञ्जनेन सह ह्रस्वोकारस्य प्रमाणत आन्तर्यंत्वेकमात्राधिककालशून्यत्वरूपं बोध्यम्। अस्य न्यायस्य भाष्योपनिबद्धत्वं दर्शयति। [स्थानेऽन्तरतम इति।] यद्यपि तत्सूत्रे भाष्ये योगश्चाप्ययमशिष्यः। कुतः। स्वभावसिद्धत्वादेव। तद्यथा। समाजेषु समावायेषु समाशेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते। न पाण्डवः पाण्डुभिः। येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासत इत्यादिनेदं सूत्रं प्रत्याख्यातम्। सूत्राभावेऽपि लोकस्वभावादेवान्तरतमादेशप्रवृत्तिरनेकविधान्तर्यसत्त्वे स्थानत आन्तर्यस्य प्राबल्यं च लभ्यत इति तदाशयः। एवं चान्तरतमो भवतीति यत्रानेक-विधमिति च न्यायसिद्धमिति भाव इति तत्रत्योद्द्योतग्रन्थेन चायमर्थः स्फुटीकृतः, तथापि मन्दबुद्धिवैशद्याय सूत्रस्यारब्धत्वेन तदनुरोधेन प्रागुक्तं सर्वमिति बोध्यम्। एतेन केचित्तु कवयः कविभिरित्यादि भाष्यकारोदीरितलोकदृष्टान्तबलादेव विसदृशादेशव्यावृत्तावारभ्यमाणं सूत्रमनावृत्तमेव प्रकृतमर्थं संगृह्णातीति न सूत्रावृत्तिमूलकवाक्यभेदस्योपयोग इत्यादिना वदन्त-श्चन्द्रिकाकृतः परास्ताः। प्रत्याख्यानपक्षेऽस्याप्यर्थस्य न्यायसिद्धत्वस्यैवोद्द्योते स्पष्टमुक्तत्वा-दित्यवधेयम्। १३

एवं स्थान्यादेशभावविषये प्रसक्तमतिप्रसङ्गं परिहृत्य निमित्तनिमित्तिभावविषये प्रसक्तमतिप्रसङ्गं वारयितुं परिभाषामवतारयति। [नन्विति।] एवमपीति शेषः। [प्रोढवानिति।] प्रपूर्वाद्वहेः क्तवतुप्रत्यये संप्रसारणे पूर्वरूपे ढत्वधत्वष्टुत्वढलोपदीर्घेषु गुणे प्रोढवानिति रूपम्। अत्र प्र+ऊढवानित्यवस्थायां क्तवत्वन्तैकदेशोढशब्दे परे गुणं बाधित्वा वृद्धिः स्यादिति भावः। अर्थवतो ग्रहणे संभवत्यनर्थकस्य ग्रहणं नेति परिभाषार्थः। एवं

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

**विशिष्टरूपोपादाने, उपस्थितार्थस्य शब्दं प्रति विशेषणतयान्वयसंभवे त्यागे मानाभावो ऽस्या मूलम्। अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयो ऽपि**

---

चार्थवदनर्थकयोर्द्वयोरप्यूढशब्दयोस्सत्त्वेऽपि प्रादूहोढ इत्यत्रानया परिभाषयाऽर्थवत एवोढशब्दस्य ग्रहणात् क्तवत्वन्तैकदेशोढशब्दस्य च काल्पनिकार्थस्याप्यभावान्न तस्मिन्परे वृद्धिप्रसङ्ग इति भावः। सिद्धान्तभूते स्वंरूपमिति सूत्रप्रत्याख्यातृभाष्यनये परिभाषासिद्धिप्रकारं दर्शयति। [विशिष्टरूपोपादान इति।] वृत्तिनिरूपकतावच्छेदकीभूतानुपूर्वीविशेषविशिष्टवर्णसमूहात्मकशब्दस्वरूपस्योपादान इत्यर्थः। तदानीमेवार्थोपस्थितेरिति भावः। [मानाभावोऽस्या मूलमिति।] अयं भावः। यथा लोके गामानयेत्यादौ गवादिशब्दानां गोरूपार्थबोधजनकत्वान्यथानुपपत्त्या परिकल्पितया शक्त्या गवादिशब्दैर्गोरूपार्थस्य प्रतीतिरेवं शास्त्रेऽप्यग्नेर्ढगित्यादावग्न्यादिशब्दैर्वह्न्यादिरूपार्थस्योपस्थितावर्थात्परत्वेन प्रत्ययस्य विधानासंभवात्साहचर्यात्तद्वाचिनस्सर्वस्यापि शब्दस्य ग्रहणप्रसक्तौ तद्वाचकस्य तस्यैव शब्दस्य ग्रहणं यथा स्यादित्येवमर्थं स्वं रूपमिति सूत्रं सूत्रकृताऽरब्धम्। भगवता भाष्यकृता च शब्दज्ञानपूर्वकमेवार्थप्रतीतेरनुभवसिद्धतया ज्ञानसामान्ये शब्दानुगमस्य दृष्टतया च शास्त्रे कुत्रचिदर्थे कार्यासंभवे प्रत्यासत्त्या प्रथमोपस्थितस्य तस्यैव शब्दस्य ग्रहणं सिध्यति, नतु तत्पर्यायादीनामिति सूत्रमनारम्भणीयमित्युक्तम्। ईदृशप्रत्यासत्तिन्यायसिद्धार्थानुवादकमेवेदं सूत्रं मन्दबुद्ध्यनुग्रहाय पाणिनिनाऽरब्धमिति तदाशयः। एवं चार्थे कार्यासंभवात्तत्र प्रथमोपस्थितस्य शब्दस्य ग्रहणेऽप्युपस्थितार्थस्य विशेषणतयाऽन्वयसंभवे तस्य सुतरां परित्यागे मानाभावात्तस्य शब्दविशेषणतयान्वयेऽर्थविशिष्टश्शब्दो गृह्यत इत्येषा परिभाषा सिद्धेति। ननु सिद्धान्ते पदस्य वाक्यस्य वार्थवत्त्वं नतु पदैकदेशस्य। एवंच प्रौढ इत्यादौ क्तान्तोढशब्दस्याप्यनर्थकत्वेनात्र विषयेऽर्थवतो ग्रहणासंभवात्प्रकृतपरिभाषाया अप्रवृत्तौ प्रोढवानित्यत्र दोषस्तदवस्थ एवेत्यत आह। [अत्रार्थ इति।] [कल्पितान्वयव्यतिरेककल्पित इति।] शास्त्रप्रक्रियानिर्वाहाय शास्त्रकृ-

गृह्यत इति संख्याया इति सूत्रे भाष्ये स्पष्टम्॥ इयं वर्णग्रहणेषु नेति लस्येत्यत्र भाष्ये स्पष्टम्॥ अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः। एतन्मूलकमेव येन विधिरित्यत्र भाष्ये पठ्यतेऽलैवानर्थकेन तदन्त-

---

त्कल्पितौ यावन्वयव्यतिरेकौ ताभ्यां कल्पितः प्रकृतिप्रत्ययादीनां शास्त्रैकसमधिगम्योऽर्थस्सोऽपीत्यर्थः। अपिना लौकिकसमुच्चयः। तत्र शास्त्रीयार्थग्रहणे मानमाह। [संख्याया अतिशदन्ताया इति।] तत्रहि भाष्ये कतिभिः क्रीतं कतिक इत्यत्र त्यन्तपर्युदासेन कनोऽप्राप्तिरित्याशयेन तत्सिद्धये वार्तिककृताऽरब्धं डतेश्चेति, वचनमनया परिभाषया भगवता प्रत्याख्यातम्। अर्थवत्त्यन्तस्यैव पर्युदासात्कतेश्च तेरनर्थकत्वान्निषेधाप्राप्त्या सूत्रेणैव कनस्सिद्धतया वार्तिकमनावश्यकमिति तदाशयः। एवं चात्र शास्त्रीयार्थस्यापि ग्रहणमिति स्पष्टमेव। लौकिकार्थवतस्तिशब्दस्य क्वाप्यभावादिति बोध्यम्। नन्वस्याः परिभाषाया उपस्थितार्थस्य कथं चिदन्वयसंभवे तत्परित्यागस्यान्याय्यत्वमूलकतया अर्थोपस्थितेश्च विशिष्टरूपोपादानविषय इव क्वचिद्वर्णग्रहणेऽपि सत्त्वात्तत्रापि तत्प्रवृत्तेर्वाच्य त्या विशिष्टरूपोपादान इत्ययुक्तमत आह। [इयं चेति।] [लस्येति सूत्रे भाष्ये इति।] तत्रहि लस्येत्यत्राकारस्योच्चारणार्थत्वाद्वर्णमात्रग्रहणे लादेशो विशेषानुपादानाल्लुनाति, लभत इत्यादौ विद्यमानस्य सर्वस्यापि लकारस्यादेशः प्राप्नोतीत्याशयकं 'लादेशे सर्वप्रसङ्गोऽविशेषा' दिति कात्यायनवचनमर्थवद्ग्रहणपरिभाषया प्रत्याख्याय तदुत्तरमर्थवद्ग्रहणासिद्धमिति चेत्तन्न। किं कारणं, वर्णग्रहणमिदम्। नचैतद्वर्णग्रहणे भवत्यर्थवद्ग्रहणे नानर्थकस्येति। तस्माद्विशिष्टग्रहणं कर्तव्यमित्युक्तम्। अकारविशिष्टस्य लकारस्य ग्रहणं कर्तव्यमिति तदर्थः। तथा सति वर्णग्रहणाभावादनया परिभाषया निरुक्तदोषवारणसंभव इति तदाशयः। अनेन वर्णग्रहणेऽस्या अप्रवृत्तिरिति भगवता कण्ठत एवोक्तमिति बोध्यम्। अत्रार्थे प्राचीनसम्मतिं दर्शयति। [अत एवेति।] [वृद्धाः]=वृत्तिकारादयः। उक्तार्थे कात्यायनानुकूल्यमपि दर्शयति। [एतन्मूलकमेवेति।] वर्णग्रहणे एतत्परिभाषाऽप्रवृत्तिमूलकमेवेत्यर्थः। [अलैवानर्थकेनेति।] अनर्थकेन यदि

विधिरिति ॥ किं च स्वं रूपमिति शास्त्रे स्वशब्देनात्मीयवाचिनार्थो गृह्यते रूपशब्देन स्वरूपमेवं च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासंभवात् किंतु शब्दविशेषणम्। एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

---

तदन्तविधिः स्यात्तदा अत्रैव, नान्येनेति तदर्थः। तथा च वर्णसमुदायेन चेत्तदन्तविधिस्तदाऽर्थवतैवेति फलितम्। तेन हन्ग्रहणे प्लीहन् शब्दस्य, स्त्रीग्रहणे शस्त्रीशब्दस्य च ग्रहणं नेति तदाशयः। यदि च वर्णग्रहणेऽप्यस्याः परिभाषायाः प्रवृत्तिः स्यात्तदाऽनर्थकेनेति विशेषणमसंबद्धमेव स्यादेतत्परिभाषाविरोधादिति भावः। एवं भाष्यरीत्या परिभाषासिद्धिप्रकारं प्रदर्श्य सूत्ररीत्या तद्दर्शयति [किंचेति।] [तदुभयमिति।] अर्थः, शब्दस्वरूपं चेत्यु भयमित्यर्थः। [शब्दस्य संज्ञीति।] शब्दस्य बोध्यमित्यर्थः। [तत्रेति।] तयोर्मध्य इत्यर्थः। [शास्त्रीयकार्यासंभवादिति।] अर्थस्य प्रत्ययेन पौर्वापर्यासंभवात्प्रातिपदिकादित्यनेनान्वयासंभवाच्चेति भावः। [शब्दविशेषणमिति।] शब्दस्य विशेषणमित्यर्थः। [एव चेति।] अर्थस्य विशेषणतयाऽन्वये चेत्यर्थः। [तेनेति।] सूत्रस्योक्तरीत्या निरुक्तार्थस्य फलितत्वेनेत्यर्थः। सूत्रमते एवंरीत्या परिभाषासिद्धौ मानमाह। [भाष्ये इति। स्वं रूपमिति सूत्रे इति शेषः। एतेन व्रश्चेति सूत्रे राजेः पृथक् भ्राजिग्रहणमस्यां ज्ञापकम्। अन्यथा राजिग्रहणेनैव भ्राजन्तर्गतस्यापि तस्य षत्वविधानसंभवात्किं तेन ? नच फणादिना राजिना साहचर्यात्फणाद्यन्तर्गतस्यैव भ्राजतेर्ग्रहणार्थं तदिति वाच्यम्। तावन्मात्रफलकत्वे भ्राजभासेति सूत्रे भ्राजग्रहणाकरणलाघवानुरोधेन फणादिव्यतिरिक्तेऽकारानुबन्धोच्चारणेन व्रश्चादिसूत्रे राजृ इति पाठेन च निर्वाहात्। नचैवमनुबन्धनिर्देशाद्यङ्लुकि राराष्टीत्यादौ षत्वं न स्यादिति वाच्यम्। यङ्लुकश्छान्दसत्वात्। श्तिपा शपेति निषेधस्यानित्यत्वात्। भाष्ये तस्यानुक्तत्वाच्चेत्यादिसीरदेवाद्युक्तमपास्तम्। उक्तरीत्या

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्रान्महत इत्यात्त्वापत्तिरत आह।

---

स्वसिद्धान्तेऽस्याः परिभाषायाः प्रत्यासत्तिन्यायमूलकतायाः, सूत्रमते स्वंरूपमित्येतत्सूत्रमूलकतायाश्च भगवता स्पष्टमुक्तत्वेन तत्र ज्ञापकान्तरानुसरणस्य व्यर्थत्वात्। किंच व्रश्चेति सूत्रे राजृ इति पाठे राशब्दपूर्वकजॄधातोः क्विपि निष्पन्नराजृशब्दे नपुंसके षत्वापत्तिः। यद्यत्र षत्ववारणाय राजृ इत्यत्रानुनासिकर्कारस्य ग्रहणमित्युच्यते, तदा इत्संज्ञकर्कारावयवस्य राजतेरित्यर्थाद्विभ्राडित्यादावपि षत्वानापत्तिः। ऋकारस्य समुदायानुबन्धत्वेन तदवयवस्य राजते ऋकारानुबन्धत्वायोगात्। किञ्च व्रश्चादिसाहचर्येण धातुसंज्ञकराजतेर्ग्रहणं स्यादिति भ्राजन्तर्गतस्य राजतेष्षत्वं दुर्लभमेवेति भ्राजिग्रहणमावश्यकमतो न ज्ञापकत्वासंभव इत्यपि बोध्यम्। १४

अर्थवद्ग्रहणपरिभाषया अस्याः संगतिं दर्शयन्नाह। [नन्वेवमपीति।] उक्तपरिभाषयाऽर्थविशिष्टस्य शब्दस्य ग्रहणेऽपीत्यर्थः। [आत्वापत्तिरिति।] तस्यार्थस्य मुख्यस्यैव ग्रहणमित्यत्र मानाभावादित्याशयः। अयं भावः। महद्भूत इत्यत्राऽमहान् महान् संपन्न इति विग्रहः। महच्छब्दात्कृभ्वस्तियोगे संपद्यकर्तरीत्यनेन च्विः। तत्र संपद्येत्यादेः संपद्यकर्तरि वर्तमानादित्यर्थः। अस्मादेव निपातनात्संपदेर्भावे शः। दिवादित्वात् श्यन्। संपत्तिश्चान्यथाभवनम्। विकार इति यावत्। स चात्रारोपितो विवक्षणीयः। अभूततद्भाव इति वक्तव्यमिति तत्रत्यकात्यायनवचनात्। यो वस्तुतो येन रूपेण प्रागभूतस्तस्यारोपिततद्रूपेण भवने इति तदर्थात्। वास्तविकतद्रूपेण भवनस्यैव विवक्षितत्वे वास्तविकप्रकृतिविकृतिभावस्यैव पर्यवसन्नतया तदर्थस्य सौत्रेण संपद्यकर्तरीत्यनेनैव लाभसंभवाद्वार्तिकस्य वैयर्थ्यापत्तेः। कर्तृपदं चाश्रयपरम्। एवं च समभिव्याहृतकाद्यर्थक्रियान्वये सत्यारोपितविकारप्रकारकप्रकृतिविशेष्यकप्रतीतिजनकाद्विकृतिवाचकाच्च्विरिति पर्यवसितोऽर्थः। तथा च प्रकृते च्व्यन्तस्य महच्छब्दस्यारोपितमहत्त्वपुरस्कारेणामहदर्थबोधकतया आत्वविधावर्थवतो महच्छब्दस्य ग्रहणे तस्यार्थस्य

मुख्यस्यैव ग्रहणमित्यत्र मानाभावादात्वापत्तिर्दुर्वारैवेति। ननु च्विविषये प्रकृतिः कर्त्री। अत एवासङ्घो ब्राह्मणाः सङ्घस्संपद्यते सङ्घीभवन्ति, अपटस्तन्तवः पटस्संपद्यते पटीभवन्तीत्यादौ प्रकृतिसंख्याश्रयं बहुवचनम्, अत्वं त्वं संपद्यते त्वद्भवतीत्यादौ प्रकृतिसंख्याश्रयः प्रथमपुरुषश्च सिध्यति। नतु विकृतिसंख्याश्रयमेकवचनं मध्यमपुरुषश्च भवति। तथाच भूत इति निष्ठाप्रत्ययस्य भवनक्रिया-कर्तर्यमहत्युत्पन्नत्वेन महच्छब्दस्य भूतशब्देन सामानाधिकरण्याभावात्कथमात्वप्रसक्तिरिति चेन्न। च्विविषये सादृश्यवशेन प्रकृतिविकृत्योरभेदस्यैव विवक्षणान्महच्छब्दस्यापि गौण्या वृत्त्या अमहदर्थबोधकतया तस्य च कर्तृत्वाद्भूतशब्दस्य च तदर्थकत्वेन सामानाधिकरण्यलक्षणात्वप्राप्ते-र्दुर्वारत्वात्। अत एवामहती महती संपन्ना महद्भूताब्राह्मणीत्यादौ पुंवत्त्वसिद्धिः। तदुक्तं कात्यायनेन "अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम्। तस्मात्सिध्यति पुंवत्त्व" मिति। यद्यप्यत्र परिभाषामन्तराप्यात्वं वारयितुं शक्यम्। तथाहि, प्रकृतिविकृतिभावविषये प्रकृतिविकृत्योरुभयोरपि कर्तृत्वं दृश्यते। यथा सुवर्णं कुण्डले भवत इत्यादौ विकृतेः। अत एव तदाश्रयं वचनम्। सङ्घीभवन्ति ब्राह्मणा इत्यादौ तु प्रकृतेरेव कर्तृत्वम्। च्व्यन्तस्य गतित्वाद्गतीनां च क्रियाविशेषकत्वात्सङ्घीभवनलक्षणायां विशिष्टक्रियायां ब्राह्मणानां कर्तृत्वात्। असङ्घो ब्राह्मणास्सङ्घस्संपद्यत इत्यादौ तु वाक्ये जन्ममात्रस्य सङ्घः कर्ता। यथा व्याकरणस्य सूत्रं करोतीत्यादौ करोतिमात्रे सूत्रस्य कर्मत्वं, व्याकरणं सूत्रयतीत्यादौ सूत्रविशिष्टक्रियायां व्याकरणस्य कर्मत्वमेवमिहापि वृत्तिविग्रहयोर्भिन्नक्रियाविषयं कर्तृत्वं, तेन च वृत्तौ प्रकृतिसंख्याश्रयस्य, विग्रहे विकृतिसंख्याश्रयस्य च वचनस्योपपत्तिः। अत्वं त्वं संपद्यते त्वद्भवतीत्यादौ तु वृत्तौ वाक्ये च प्रकृतेरेव कर्तृत्वमिति तदाश्रयः प्रथमपुरुष एव भवति नतु मध्यमः। नचेदृशे विषये प्रकृतिविकृत्योर्मध्ये एकस्यैव कर्तृत्वे परस्य क्रियान्वयो न स्यादिति वाच्यम्। कर्तृत्वेन विवक्षितस्य प्राधान्येन, परस्य गुणभावेन च क्रियान्वयस्य सुवचत्वात्। तथाचेदृशेविषये प्रकृतिविकृत्योरुभयोरपि कर्तृत्वं, किन्तु क्वचित्कस्य चित्प्राधान्यं, कस्य चिद्गुणभाव इत्येतावानेव विशेष इति तत्त्वम्। सर्वत्र चात्र प्रयोगानुसारिणी शब्दशक्तिरेव मानम्। एवंच महद्भूत इत्यत्र प्रकृतेरेवामहतः प्राधान्येन कर्तृत्वाश्रयणाद्भूत इत्यत्र च निष्ठाप्रत्ययस्य तत्रैवोत्पत्तेर्महच्छब्दस्य भूतशब्देन सामानाधिकरण्याभावादात्वाप्रसङ्गः, तथाप्यत्र प्रकृतपरिभाषारूपपरिहारान्तरस्य संभवा-दमहती महती संपन्ना महद्भूता ब्राह्मणीत्यादौ पुंवत्त्वसिद्ध्ये विकृतेः प्राधान्येन कर्तृत्वमाश्रित्य सामानाधिकरण्यस्य प्रकृतेः कर्तृत्वमाश्रित्य वैयधिकरण्यस्य च वक्तव्यतया एकस्मिन्नेव प्रयोगे परस्पर-

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः १५

गुणादागतो गौणः। यथा गोशब्दस्य जाड्यादि-गुणनिमित्तो ऽर्थोवाहीकः। अप्रसिद्धश्च संज्ञादिरपि

---

विरुद्धयोस्तयोर्वक्तुमनौचित्यात्स नाश्रित इति बोध्यम्। स्पष्टं चैतत्सर्वमाकरे। गौणमुख्ययोरुभयोरपि कार्यप्रसङ्गे मुख्य एव कार्यप्रवृत्तिनिश्चय इति परिभाषार्थः। नन्वेतत्परिभाषास्वीकारे प्रियत्रयाणामित्यत्र त्रयादेशो न स्यात्। अत्र परिभाषायां गौणपदस्य मुख्यपदप्रतिद्वन्द्वितया अप्रधानार्थकत्वेन त्रिशब्दस्य चान्यपदार्थं प्रत्युपसर्जनत्वेनाप्रधानत्वादित्याशङ्क्यात्रत्यगौणपद-स्यार्थमाह। [गुणादागत इति।] तत आगत इत्यणन्तोऽत्र गौणशब्दः। तथा च मुख्यार्थ-गतगुणसजातीयगुणादिहेतुकारोपविषयीभूतप्रवृत्तिनिमित्ताश्रयोऽत्र गौणपदार्थो न त्वप्रधानमिति न पूर्वोक्तातिप्रसङ्ग इति भावः। तमेवार्थं सदृष्टान्तमाह। [यथेति।] [जाड्यादिगुणनिमित्तोऽर्थ इति।] जडत्वादिरूपं साधारणधर्मं निमित्तीकृत्यारोपितगोत्वादिप्रकारकप्रतीतिविषयो वाहीको गोशब्दस्यार्थ इत्यर्थः। अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यश्शब्देषु न तदुक्तिष्विति वक्ष्यमाणाभियुक्तोक्तार्थसंग्रहायाह। [अप्रसिद्धश्चेति।] चो हेतौ। यतोऽप्रसिद्धस्संज्ञादिरपि तद्गुणारोपादेव बुध्यते, अतस्सोऽपि गौण इति वाक्यार्थः। [संज्ञादिरिति।] अत्र संज्ञाशब्दे आतश्चोपसर्ग इति कर्मण्यङ्। तेन संज्ञायमानः संज्ञीत्यर्थः। आदिशब्देनानु-करणपरिग्रहः। अत एव युष्मद्युपपद इत्यादौ त्वमावेकवचन इत्यादि न। अपिः पूर्वोक्तार्थ-समुच्चायकः। यद्वा संज्ञा सङ्केत आदिः प्रथमबोधको यस्य स संज्ञीति तदर्थः। नचायं तत्-पूर्वमस्तीत्यादिशब्दोऽप्रसिद्धत्वस्फोरणाय। अपिः प्राग्वदुक्तार्थसमुच्चायकः। नचैवं व्याख्यानेऽनु-करणासंग्रहाद्युष्मद्युपपद इत्यादौ त्वाद्यादेशापत्तिरिति वाच्यम्। अनुकरणस्वरूपभङ्गभिया तत्र त्वाद्यादेशवारणस्य सुकरत्वात्। किञ्च तद्विषये प्रसिद्धगतगुणारोपस्य वक्तुमशक्यतया तद्गुणा-रोपादेवेति हेतोरसाङ्गत्यापत्तिरतोऽत्र द्वितीयव्याख्यानमेव युक्तम्। अत एवाग्रे "गौणलाक्षणिक-संज्ञयोरुभयोरेव गौणत्व, मिति ग्रन्थकृतोक्तमित्यवधेयम्। ननु संज्ञाशब्दानां शब्दप्रवृत्ति-निमित्तकत्वेन डित्थमानयेत्यादौ डित्थादिपदवत्त्वेनैव बोधात्कथमाधुनिकसङ्केतविषयाणां गौणत्वमत

तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्॥ तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव। तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात्।

---

आह। [तद्गुणारोपादेवेति।] येषां गुणक्रियादिप्रवृत्तिनिमित्तकत्वं तद्वाच्यगुणक्रियाद्यारोपादेवेत्यर्थः। यद्वा पूर्वपूर्वडित्थादिगतप्रशस्तगुणारोपादेवेत्यर्थः। एवं पूर्वपूर्वडित्थादिगतप्रशस्तगुणक्रियाद्यारोपेण तत्प्रवृत्तिनिमित्तक एवाधुनिकडित्थदिशब्देभ्यो बोधः। प्राथमकल्पिके डित्थे तु तद्व्यक्तेरेव प्रकारताविशेष्यतारूपविषयताद्वयेन भानमिति प्रकारत्वावच्छिन्ना सैव व्यक्तिः प्रवृत्तिनिमित्तमपीति तस्य भाव इति सूत्रे भाष्ये स्पष्टम्। मुख्यपदं व्याचष्टे। [मुखमिवेति।] शाखादित्वादिवार्थे यः। इवार्थसादृश्यमाह। [प्राधानत्वादिति।] तच्चात्रार्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वम्। तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम्। [प्रथम इति।] शक्तिज्ञानजन्योपस्थितिविषय इत्यर्थः। प्राथम्यमेवोपपादयति। [गौणे ह्यर्थ इति।] वाहीकादिरूपेऽर्थे इत्यर्थः। [शब्द इति।] गवादिशब्द इत्यर्थः। [मुख्यार्थारोपेणेति।] मुख्यार्थप्रवृत्तिनिमित्तारोपेण मुख्यार्थगतगुणाद्यारोपेण चेत्यर्थः। एवं चारोपाय पूर्वं शक्यार्थोपस्थितेरावश्यकत्वात्तस्य प्राथम्यम्। इतरस्य तु तत्प्रतीतिसापेक्षप्रतीतिविषयत्वेनाप्रधानत्वाद्गौणत्वमिति भावः। एवं परिभाषाघटकगौणमुख्यपदयोरर्थं निरुच्य प्रकृते पर्यवसितं गौणत्वमाह। [अप्रसिद्धत्वं गौणलाक्षणिकत्वं चेति।] यद्यप्यप्रसिद्धस्याधुनिकसङ्केतविषयस्याप्युक्तरीत्या गौणलाक्षणिकत्वं प्रतीयते, मञ्जूषायां च शक्तिवादे पाणिन्यादिप्रणीतस्मृतिबोधितसङ्केतस्यैव वाचकतानियामकत्वात्तस्य चाधुनिकसङ्केतविषयेऽभावादाधुनिकसङ्केतस्थले द्वादशेऽह्नि क्रियमाणनामस्थले च लक्षणेत्येवोक्तम्। तथापि स्पष्टप्रतिपत्तये तयोः पृथगुपादानमिति बोध्यम्। अत्र परिभाषायामीदृशस्यैव गौणत्वस्य ग्रहणे फलमाह। [तेनेति।] [उक्तरूपेति।]

किं चायं न्यायो न प्रातिपदिककार्ये किंतूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव।

---

अप्रसिद्धत्वगौणलाक्षणिकत्वरूपेत्यर्थः। अत एवोपसर्जनप्रतिषेधः सर्वादिसूत्रे वार्तिककृताऽरब्धः। अन्यथाऽनेनैवोपसर्जनस्य सर्वनामसंज्ञाप्रयुक्तकार्यव्यावृत्तौ तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम्। नन्वेवमपि "संज्ञोपसर्जनप्रतिषेध" इति वार्तिके संज्ञाप्रतिषेधवैयर्थ्यं दुर्वारमेवेत्यत आह। [किञ्चेति।] यद्वा एतादृशगौणत्वस्य ग्रहणेऽपि गौर्वाहीक इत्याद्यसिद्धिरेव तत्र गोशब्दस्य गौणलाक्षणिकत्वेन गोतो णिदित्यस्याप्रवृत्तेरत आह [किञ्चेति। न प्रातिपदिककार्य इति।] ननु यदि वस्तुतः प्रातिपदिकसंबन्धिकार्येऽस्या अप्रवृत्तिरित्युच्यते, तदा आन्महत इत्यात्वस्यापि तत्त्वेन तद्विषयेऽस्या-अप्रवृत्तौ महद्भूत इत्यत्रात्वापत्तिः। यदि प्रातिपदिकसंज्ञावच्छिन्ननिमित्तताककार्येऽप्रवृत्ति-रित्युच्यते, तदा राजश्वशुराद्यदिति सूत्रविहितयतोऽपि प्रातिपदिकाधिकारीयतया तद्विषयेऽस्या-अप्रवृत्तौ गौणलाक्षणिकश्वशुरशब्दादप्यपत्यार्थे यति श्वशुर्य इति स्यादतो वक्ष्यमाणपदकार्याति-रिक्तमिह प्रातिपदिककार्यत्वेन विवक्षितमित्याशयेनाह। [किन्त्वित्यादिना।] [उपात्तमिति।] प्रकृतशास्त्रीयवाक्यार्थसमर्पकत्वेनोच्चरितमित्यर्थः। उच्चारणं च न तत्सूत्र एवेति नियमः। गोऽभवदित्यादावनेन न्यायेन प्रगृह्यत्ववारणपरौत्सूत्रस्थभाष्यासङ्गतेः। तत्सूत्रे निपातपदस्या-नुच्चारणात्। [विशिष्यार्थोपस्थापकमिति।] विशेषधर्मप्रकारकोपस्थितिजनकमित्यर्थः। तत्त्वं च साक्षात्संज्ञाद्वारकपरम्परया वा विवक्षितम्। तेन गोऽभवदित्यादावनया परिभाषया प्रगृह्यत्ववारणपरेणौत्सूत्रस्थभाष्येण न विरोधः। निपातपदस्य तथात्वात्। इदं चाग्रे स्फुटी-भविष्यति। [विशिष्टरूपमिति।] अर्थवद्वर्णसमूहात्मकमित्यर्थः। अर्थवद्ग्रहणपरिभाषा-मूलकत्वादस्या अपि विशिष्टरूपोपादानविषय एव प्रवृत्तेर्न्याय्यत्वादिति भावः। [यत्रेति।] यत्र कार्ये उद्देश्यमित्यर्थः। अत्रेदृशं विशिष्टरूपं यत्र कार्ये उद्देश्यं तत्रैवेत्येतावन्मात्रोक्तौ पदकार्येऽयं न्याय इत्यभियुक्तोक्त्यसंगत्यापत्तिः। तत्र पदकार्य एवेत्युक्तौ तु पदसंज्ञावदुद्देश्यककार्य एव प्रवृत्तिरित्यर्थभ्रमः स्यादत आह। [तादृशपदकार्य एवेति।] पदकार्यत्वं चात्र स्त्रीत्वा-निमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययमात्रानिमित्तकत्वं ग्राह्यम्। स्थौल्यगुणयोगादन्यत्र

प्रयुज्यमानाद्गजवाचकनागशब्दान्नागी स्त्रीत्यादौ जानपदेति ङीष्सिद्धये सत्यन्तं विशेषणम्। अन्यथा तत्र ङीषः प्रातिपदिकप्रकृतिकप्रत्ययानिमित्तकत्वेनोक्तरूपपदकार्यत्वस्य सत्त्वादनया परिभाषया तत्र ङीष् न स्यात्। न चारम्भसामर्थ्यात्तत्र ङीष्सिद्धिरिति वाच्यम्। जातिवाचकनाग-शब्दाज्जातेरस्त्रीविषयादित्यादिना सर्वत्र प्राप्तस्य ङीषः स्थौल्ये नियामकतया तत्सार्थक्यात्। तथाच नागी हस्तिनीत्यत्रैव स्यात्। नागी सर्पिणीत्यत्र नागी स्त्रीत्यत्र च न स्यात्। सत्यन्तविशेषणे मानं तु 'शूद्रा चामहत्पूर्वा जाति' रित्यत्र जातिग्रहणम्। तद्धि शूद्रस्य स्त्री शूद्रीत्यत्र टाप् माभूदित्येतदर्थम्। एतद्विशेषणाभावेतूक्तपदकार्यत्वस्यात्रापि सत्त्वादनेनैव न्यायेन टापोऽप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेव। गौर्वाहीक इत्यादौ गौणलाक्षणिके गोशब्दे गोतो णिदित्यस्य सिद्धये विशेष्यदलम्। अन्यथा तस्य स्त्रीत्वानिमित्तकत्वेन पदकार्यत्वादनया परिभाषया तदनापत्तिः। भूशब्दप्रकृतिकाचारक्विबन्ताल्लिटि बुभावेत्यादौ भवतेरः, भुवो वुगित्यनयोर्लुङि अभावीदित्यादौ गातिस्थेति लुकश्चानेन न्यायेनाप्रवृत्तये प्रत्यये प्रातिपदिकप्रकृतिकेति विशेषणदानम्। अन्यथा तेषां लिडादिरूपप्रत्ययनिमित्तकत्वेन पदकार्यत्वाभावादेतन्न्यायाप्रवृत्तौ तदसिद्धिः। तत्रानेन न्यायेन लुगादिवारणपरनामधातुस्थकौमुदीग्रन्थासङ्गतिश्च। अत्वं त्वं संपद्यते त्वद्भवतीत्यादौ प्रत्ययोत्तरपदयोश्चेत्यनेन विहितयोस्त्वमाद्यादेशयोः प्रातिपदिकप्रकृतिकच्विप्रत्ययनिमित्तकत्वेन पदकार्यत्वाभावात्तद्विषयेऽस्य न्यायस्याप्रवृत्त्या तत्र त्वमाद्यादेशसिद्धिरिति बोध्यम्। यत्तु स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययमात्रानिमित्तकत्वं पदकार्यत्वम्। हरितादिभ्यो-ऽञित्यस्यापि पदकार्यत्वसिद्धये मात्रपदनिवेशः। अन्यथा समुदायान्तर्गतस्याञोऽपि निमित्तत्वेन पदकार्यत्वाभावेनोक्तन्यायाप्रवृत्तौ हरितसदृशस्य गोत्रापत्यमित्यर्थकेभ्योऽपि तेभ्यो हरितादिभ्यो-ऽञिति फक् दुर्वारः स्यात्। तन्निवेशे तु हरितादिप्रकृतिकाञन्ताद्यून्यपत्ये फगिति तदर्थात्तत्र हरितादिरूपप्रातिपदिकानामपि निमित्तत्वेनाश्रयणान्निरुक्तप्रत्ययमात्रनिमित्तकत्वाभावेन पदकार्यत्वस्य सत्त्वान्न दोष इत्याहुः, तन्न। मात्रपदानिवेशेऽपि सदृशलाक्षणिकश्वशुरशब्दाद्यत इव सदृशलाक्षणिकहरितशब्दादञोऽप्यनेन न्यायेनाप्रवृत्त्या तत्र हरितादिभ्योऽञित्यस्याप्रवृत्तेः। यदपि वस्तुभूतसुबन्तत्वव्याप्योद्देश्यताकमिह पदकार्यत्वेन विवक्षितमिति चन्द्रिकाकृतः, तदप्ययुक्तम्। भवतेरः, भुवो वुग्लुङ्लिटोः गातिस्थाघुपाभूभ्य इत्यादीनां तदुक्तपदकार्यत्वाभावेन तद्विषये प्रकृतन्यायस्याप्रवृत्तौ भूशब्दप्रकृतिकाचारक्विबन्ताल्लिटि, लुङि च, बुभाव, अभावीदित्यदौ वुगाद्या-पत्तेर्दुर्वारत्वात्। तत्रानेन न्यायेन वुगादिवारणपरनामधातुस्थकौमुदीग्रन्थविरोधाच्च। एकाच्याति-

परिनिष्ठितस्य पदान्तरसंबन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्ग-त्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे

---

पदिकेभ्य आचारक्विपोऽनभिधानं तु न नागेशाभिमतमिति कास्प्रत्ययादिति सूत्रस्थशेखरग्रन्थेन, नामधातुस्थशेखरग्रन्थेन च स्पष्टमेवावगम्यत इति बोध्यम्। अस्य न्यायस्य प्रातिपदिककार्येऽप्रवृत्तौ बीजं दर्शयति। [परिनिष्ठितस्येति।] स्वार्थे परिपूर्णं पदमिति न्यायात्स्वार्थादिप्रयुक्तकार्यैः संस्कृतस्येत्यर्थः। [पदान्तरसंबन्धे हीति।] पदान्तरसंबन्धे सत्येव हीत्यर्थः। अत्र हिशब्दः प्रसिद्धिद्योतकः। तस्य यत इत्यर्थकत्वं तु न युक्तम्। अग्रिमस्य हेतुवाचकेतिशब्दस्य नैरर्थक्यापत्तेः। तेन द्योतितां प्रसिद्धिमेव दर्शयितुमाह। [गौर्वाहीक इत्यादाविति।] [गौणत्व-प्रतीतिरिति।] एतदुत्तरं दृश्यत इति शेषः। तदानीमेव मुख्यार्थबाधादिरूपलक्षणाबीजस्य सत्त्वादिति भावः। [प्रातिपदिकसंस्कारवेलायामिति।] स्वार्थादिप्रयुक्तकार्यैर्गवादिरूपप्रातिपदिकस्य संस्कारकाले इत्यर्थः। अत्रेतिशब्दो हेत्वर्थकः। [अन्तरङ्गत्वादिति।] गौणत्वप्रतीतेः पूर्वकालप्राप्तिकत्वादित्यर्थः। [जातसंस्कारेति।] तदानीं गौणत्वप्रतीतेरभावेन तद्विषये गौणमुख्यन्यायस्याप्रवृत्त्या जातस्य वृद्ध्यात्वादिरूपकार्यस्येत्यर्थः। [बाधायोग इति।] भुक्तवन्तमिति न्यायविरोधादिति भावः। अन्वयाद्यनुपपत्तिमूलिकायाः प्रकृतपरिभाषाप्रवृत्तिप्रयोजिकाया गौणार्थप्रतीतेः पदस्य पदान्तरेण सह संबन्धोत्तरमेव गौर्वाहीक इत्यादौ प्रसिद्धतया तस्य च संबन्धस्य स्वार्थे परिपूर्णं पदमर्थान्तरे-णोपसंक्रामतीति न्यायात्स्वार्थादिप्रयुक्तकार्यैस्तत्तत्प्रातिपदिकानां संस्कारोत्तरमेव वक्तव्यतया तादृशप्रातिपदिकसंस्कारवेलायामेतत्परिभाषाप्रवृत्तिप्रयोजकगौणार्थप्रतीतेरसत्त्वात्प्रकृतन्यायाप्रवृत्ताव-न्तरङ्गत्वाज्जातस्य वृद्ध्यात्वादिरूपसंस्कारस्य पदान्तरसंबन्धोत्तरकालिकप्रतीतिविषयगौणत्वज्ञान प्रयोज्यप्रवृत्तिकगौणमुख्यन्यायेन बहिरङ्गेण बाधायोगोऽस्य न्यायस्य प्रातिपदिककार्ये प्रवृत्त्यभावे बीजमिति निर्गलितार्थः। नन्वस्तु पदकार्यविषयत्वमस्याः, विशेषविषयत्वे च किं फलमत आह।

बीजम्। श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्या-दावत इञः सिद्धये उपात्तमित्यादि। न च प्रातिपदिक-पदं तादृशमिति वाच्यम्। तेन हि प्रातिपदिकपदवत्वे-नोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात्। निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके ओदित्यादावेतत्प्रवृत्त्या गोऽभ-

---

[श्वशुरसदृशस्येति।] [उपात्तमित्यादीति।] अत्रादिपदेन त्रयाणामपीदमेव कृत्यमिति ध्वनितम्। तथाहि। अत इत्यस्य सूत्रे उपादानेऽपि न तस्य विशिष्टरूपता। प्रातिपदिकादित्यस्य विशिष्टरूपताया उपात्तत्वस्य च सत्त्वेऽपि न विशिष्यार्थोपस्थापकत्वम्। श्वशुरशब्दस्य विशिष्ट-रूपताया विशिष्यार्थोपस्थापकत्वस्य च सत्त्वेऽपि न तस्य कथं चिदपि सूत्रे उपादानमित्यत इञित्यस्य निरुक्तपदकार्यत्वस्याभावात्तद्विषयेऽस्य न्यायस्याप्रवृत्त्या सदृशलाक्षणिकश्वशुरशब्दादप्यपत्यार्थे इञि श्वाशुरिरित्यादिरूपसिद्धिरिति बोध्यम्। नन्वत्रोपात्तस्य प्रातिपदिकपदस्य ओत्सूत्रोपात्तनिपातपद-तुल्यत्वेन तद्वदत्रापि विषये कुतो न गौणमुख्यन्यायप्रवृत्तिरित्यत आह। [नचेति।] [तेन हीति।] अत्र हिः प्रसिद्धौ। [प्रातिपदिकपदवत्त्वेनेतीति।] अत्रेतिशब्दो हेत्वर्थकः। यावत्प्राति-पदिकानां चानुगतस्य कस्यचिदखण्डधर्मस्याप्रसिद्धेस्तत्तद्रूपाणां चानन्त्येन दुर्ज्ञेयत्वात्स्वरूपमेव प्रातिपदिकपदस्य प्रवृत्तिनिमित्तमिति तेनैव रूपेण निखिलप्रातिपदिकोपस्थितेर्न तस्य विशेषरूपे-णार्थोपस्थापकत्वमिति भावः। निपातपदस्य प्रातिपदिकपदवैलक्षण्यं दर्शयति। [निपातपदं त्विति।] [चादित्वेनैवेति।] चत्वादिनैवेत्यर्थः। तद्वाच्यानां परिमितधर्मवत्तया तत्तद्रूपेण वाचकतायाः संभवादिति भावः। यद्यपि च्व्यन्तांशे निपातपदं न विशिष्यार्थोपस्थापकं, किन्तु च्व्यन्तत्वेनैव, तथापि चादीनादाय विशिष्यार्थोपस्थापकतायाः सत्त्वेन तत्र प्रकृतपरिभाषाप्रवृत्तिः सुवचेति बोध्यम्। [तदुद्देश्यकेति।] निपातपदोद्देश्यकेत्यर्थः। [एतत्प्रवृत्त्येति।] गौणमुख्यन्याय-

वदित्यादौ दोषो न॥ अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे, आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। अत एवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरमग्नेः स्तुत्स्तोमसोमा इति सूत्रस्थं भाष्यं संगच्छते॥ गां

---

प्रवृत्त्येत्यर्थः। [न दोष इति।] प्रगृह्यत्वप्रयुक्तप्रकृतिभावापत्तिरूपो दोषो नेत्यर्थः। नन्वेतत्परिभाषास्वीकारे अग्नीषोमौ माणवकावित्यत्रापीत्वषत्वे न स्यातामित्यत आह। [अग्नीषोमाविति।] [प्रसिद्धदेवताद्वन्द्वेति।] प्रसिद्धदेवताद्वयेत्यर्थः। [भवत एवेति।] प्रसिद्धदेवतावाचकयोरग्निसोमपदयोर्द्वन्द्वसंज्ञायाः तत्प्रयुक्तकार्याणां च प्रवृत्त्युत्तरं माणवकपदसंबन्धाद्विशिष्टे गौणत्वप्रतीत्या गौणार्थप्रतीतिप्राक्कालिकप्रवृत्तिकत्वेनान्तरङ्गयोरीत्वषत्वयोरनेन बाधायोगाद्भवत एव ताविति भावः। नन्वेवमग्निसोमौ माणवकावित्यत्रानेन न्यायेन षत्ववारणपराग्नेस्स्तुत्स्तोमसोमा इति सूत्रस्थभाष्यासंगतिरत आह। [सदृशलाक्षणिकेति।] [इत्यर्थकेति।] इत्यर्थके द्वन्द्वे चेत्यर्थः। [न षत्वमिति।] ईदग्नेस्सोमवरुणयोरित्यत्र देवताद्वन्द्वे इत्यस्यानुवृत्त्याऽस्य देवताद्वन्द्वत्वाभावादीत्त्वस्य प्राप्तिरेव नेति तदनुल्लेखः। एवमग्रेऽपि। नेत्वषत्वे इति पाठे तु यथोक्तहेतोरीत्वं न, तथानेन न्यायेन षत्वमपि नेत्यर्थः। [आद्ये] = सदृशलाक्षणिकयोर्द्वन्द्वे। [अन्त्ये] = तन्नामकयोर्द्वन्द्वे। तदेव भाष्यमाह। [अत एवेति।] ईदृशे विषये तयोरनिष्टत्वादेवेत्यर्थः। एवं चास्य भाष्यस्यैवमाशयकतया प्रागुक्ते अग्नीषोमावित्यत्र तयोरङ्गीकारे न भाष्यविरोध इत्याशयः। ननु वाक्यसंस्कारपक्षे गां पाठयेत्यादौ गोशब्दार्थस्यपाठनक्रियाकर्मत्वेनान्वयमन्तरा गोपदाद्विभक्त्युत्पत्तेर्वक्तुमशक्यतया मुख्यगोपदार्थस्य च तदसंभवेन विभक्त्युत्पत्तेः प्रागेव लक्षणया गौणार्थप्रतीतेरावश्यकत्वात्त्वदुक्तहेतोरभावेन पदकार्येष्वेवायं न्ययो न प्रातिपदिककार्य इति नियमोऽयुक्त इत्यत आह। [गां पाठयेत्यादाविति।]

पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासंभवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोध्दृभिः सर्वत्र पदस्यैव गौणार्थकत्वग्रहेणात्वं त्वं संपद्यते अमहान् महान् भूतस्त्वद्भवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम्। अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः॥ किञ्च शुक्लामित्युक्ते कर्म निर्दिष्टं, कर्त्ता क्रिया चानिर्दिष्टे इत्याद्युक्त्वा इहेदानीं गामभ्याज

---

[विभक्त्युत्पत्तिवेलायामिति।] तदुत्पत्तिप्राक्काल इत्यर्थः। [गौणार्थत्वस्य प्रतीतावपीति।] अत्र समस्तपाठोऽयुक्तः। तत्रोभयप्राप्तौ कर्मणीत्यनेन षष्ठ्या वक्तव्यतया तस्य च कर्मणि चेत्यनेन समासप्रतिषेधात्। अत एव प्रयोक्तृभिरिति कर्तरि तृतीया। एवं गौणार्थत्वस्य ग्रहेणेत्यत्रापि बोध्यम्। [बोद्धृभिः सर्वत्रेति।] प्रयोक्तृणां पूर्वं पश्चादपि गौणत्वग्रहणस्य संभावितत्वेऽपि प्रयोगस्य बोद्धृबोधोपायतया तदीयगौणत्वग्रहस्यैव प्रयोगनियामकता युक्तेति भावः। ननु प्रयोगस्य वक्त्रधीनतया प्रातिपदिकसंस्कारकालिकत्वेनान्तरङ्गत्वाच्च वक्तृगतगौणत्वग्रहस्यैव परिभाषाप्रवृत्तिप्रयोजकत्वमित्यपि वक्तुं शक्यमत आह। [अत्वं त्वं संपद्यत इत्यादि।] एवं चैतद्भाष्यप्रामाण्याद्बोद्धृगौणत्वग्रहस्यैव प्रयोगनियामकत्वमाश्रयणीयमित्याशयः। इदं च प्रयोक्तृणां तथा गौणार्थप्रतीतिमभ्युपेत्य। वस्तुतः सैव नेत्याह। [किञ्चेति।] [इत्याद्युक्त्वेति।] अत्रादिना देवदत्तेत्युक्ते कर्ता निर्दिष्टः, कर्मक्रिये चानिर्दिष्टे। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी अनिर्दिष्टे इत्यस्य संग्रहः। यद्यप्यत्र भाष्ये शुक्लामित्युक्ते गुणो निर्दिष्टः। कर्तृकर्मणी क्रिया चानिर्दिष्टाः इति स्थितम्। तथापि कटं भीष्मं कुर्वित्यादौ कटोऽपि कर्म भीष्मादयोऽपीत्यन्यत्र

कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त-एव कर्ता अभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि। एवमेतन्मूलकोऽ"भिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्यविषयकः। ध्वनितं चेदं सर्वादीनीतिसूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्तिककृता पूर्वपरेति सूत्रेऽसंज्ञायामिति वदता सूत्रकृतान्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता

---

भगवतोक्तत्वेनात्र शुक्रस्यापि कर्मत्वात्तथोक्तमिति बोध्यम्। [सर्वं निर्दिष्टमिति।] अस्य इत्युक्तेनेति शेषः। तस्य चाग्रिमेण भाष्येणेत्यनेनान्वयः। अत एव क्त्वाप्रत्ययस्योपपत्तिः। [गामेव कर्मेति।] गामिति शब्दवाच्यमेव कर्म नान्यदित्यादिक्रमेणार्थः। [कारकादीति।] आदिना क्रियापरिग्रहः। [योग्यसर्वक्रियेति।] इदमुपलक्षणं, योग्यसर्वकारकस्यापि। [क्रियावाचकादीति।] आदिना कारकवाचकस्य संग्रहः। [सामान्यतः क्रियाजन्येति।] क्रियात्वेन क्रियाजन्येत्यर्थः। मात्रपदेन विशेषक्रियाव्यावृत्तिः। एवमस्य कैयटाद्युक्तपदकार्यविषयकत्वं समर्थ्य, 'अभिव्यक्तपदार्था ये' इत्यादि परिभाषान्तरमिति भ्रमनिरासाय तत्राप्येवमेवेत्याह। [एवमिति।] [एतन्मूलकमिति।] अनेन तस्यातिरिक्तपरिभाषात्वं निरस्तम्। एवं युक्तिसिद्धेऽत्रार्थे मानान्तरमप्याह। [ध्वनितं चेदमिति।] चोऽप्यर्थे। अस्य पदकार्यविषयकत्वं मुनित्रयेण ध्वनितमपीत्यर्थः। [भाष्यकृता चेति।]

च ॥ अर्थाश्रय एतदेवं भवति शब्दाश्रये च वृद्ध्यात्त्वे इति ओत्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय- एष न्यायस्तद्राहितशब्दाश्रये च ते इत्यर्थः। गोत इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १४ ॥

---

यद्यस्याः प्रातिपदिककार्येऽपि प्रवृत्तिः स्यत्तदा तेषां सर्वनामसंज्ञाप्रतिषेधमन्तराप्यनेनैव न्यायेन सर्वनामकार्यवारणसंभवे सूत्रवार्तिककृतोः प्रतिषेधकथन, मनेनैव तत्प्रत्याख्यानसंभवेऽन्वर्थसंज्ञाव- लम्बनेन भगवतस्तत्प्रत्याख्यानं चासंगतं स्यादिति भावः। नन्वोत्सूत्रे भाष्येऽगौर्गौस्संपद्यते गोऽभवदित्यादावोदित्यनेन प्रसक्तं प्रगृह्यत्वं गौणमुख्यन्यायेन परिहृत्य यद्येवं सदृशलाक्षणिके गौर्वाहीक इत्यादावनेन न्यायेन वृद्ध्यात्वे न स्यातामित्याशयेन 'कथं तर्हि वाहीके वृद्ध्यात्वे भवत' इत्याशङ्क्य अर्थाश्रये एतदेवं भवति। शब्दाश्रये च वृद्ध्यात्वे इति समाहितम्। विशिष्टरूपोपादानविषये एवार्थोपस्थित्या तत्रार्थाश्रय इत्यनेनास्य न्यायस्य विशिष्टरूपोपादनमात्र- विषयतायाः स्फुटं प्रतीत्या पदकार्यविषयत्वप्रतिपादनमयुक्तमित्याशङ्क्य तद्वारणाय तदाशयमाह। [अर्थाश्रय इति।] वास्तविकलौकिकार्थवत्त्वस्य वाक्ये एव सत्त्वादाह। [योग्य इति।] भाष्येऽर्थ- पदस्यार्थवत्त्वयोग्ये लक्षणेति भावः। एतदेवमित्यस्यार्थमाह। [एष न्याय इति।] [तद्रहितेति।] लौकिकार्थवत्त्वयोग्यपदत्वव्यपदेशरहितेत्यर्थः। अयं भावः। स्वार्थे परिपूर्णं पदमिति न्यायेन स्वार्थे वृत्तात्प्रातिपदिकाद्विभक्त्यावुत्पन्नायां कार्येषु कृतेषु पदान्तरसंबन्धेन मुख्यार्थ बाधप्रतिसंधाने सति गौणार्थप्रतीत्या तस्य च स्वार्थस्य न मुख्यव्यपदेशः। मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वा- द्गौणस्य बुद्ध्यसन्निधाने मुख्यव्यपदेशस्यासंभवात्। एवं च शब्दाश्रये चेति भाष्यस्य मुख्यव्यपदेश- रहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः। मुख्यव्यपदेशसहितार्थबोधकपदाश्रये कार्येऽस्य न्यायस्य प्रवृत्त्या वृद्ध्यात्वयोश्चातादृशत्वात्तद्विषयेऽस्य न्यायस्याप्रवृत्तिरिति। एवं चानेनाप्यस्य न्यायस्य पदकार्यविषयत्वमेव लभ्यत इति बोध्यम्। ननु नायमर्थोऽक्षरमर्यादालभ्य इत्यत आह। [गोत इति।] [यथाश्रुतसूत्र इति।] गकारस्याविवक्षायामित्यर्थः। [व्याख्येयत्वादिति।]

## अर्थवद्ग्रहण इत्यस्यापवादमाह।

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

## येन विधिरित्यत्र भाष्ये वचनरूपेण पठितैषा॥

---

अन्यथा सिद्धान्तभूते तत्पक्षे तत्र विशिष्टरूपोपादानसत्त्वेन तस्याप्यर्थाश्रयत्वादनेन न्यायेन णिद्वद्भावाप्रवृत्तौ सदृशलाक्षणिकगोशब्दे वृद्ध्यनापत्तिरिति भावः। १५

[अपवादमाहेति।] अनेनास्याः पूर्वपरिभाषया सङ्गतिः सूचिता। नन्वेवमर्थवद्ग्रहणपरिभाषोत्तरमेवास्या निरूपणमुचितं, नतु गौणमुख्यन्यायोत्तरमिति चेन्न। तत्र परिभाषायामर्थस्य प्रधानन्यायेन मुख्यस्यैव ग्रहणेन गौणमुख्यन्यायस्य सिद्धतया तस्य तदनतिरिक्तत्वेन तदुत्तरमेवैतन्निरूपणस्य युक्तत्वात्। तदुक्तिं विना तदर्थस्यानिश्चितत्वेनास्यास्तदपवादत्वस्यैव दुर्वचत्वादिति बोध्यम्। [अनिनस्मन्ग्रहणानीति।] अनिनस्मनां ग्रहणं यैस्तानीति विग्रहादल्लोपोऽनः, इनह्न्पूषेति, अत्वसन्तस्य, मन इत्यादिषु वर्तमानानि अनादिपदानीत्यर्थः। [अर्थवता चेति।] तृतीयान्तमेतद्विशेषणेनेत्यर्थकस्य सौत्रस्य येनेत्यस्य विशेषणम्। तद्ध्वनयन्नाह। [येनेति।] एवं चानिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च विशेषणेन तदन्तविधिं प्रयोजयन्ति ग्राहयन्तीति परिभाषार्थः। अत्रार्थवन्ति, अनर्थकानि च विशेषणानि तदन्तविधिं प्रयुञ्जते। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च प्रयोज्यकर्त्रा तदन्तविधिं प्रयोजयन्तीत्यर्थात्प्रयोज्ये कर्तरि तृतीया बोध्या। यद्वा, अर्थवता चानर्थकेन चेत्यत्र धान्येन धनवानिति वत्प्रकृत्यादित्वादभेदे तृतीया। प्रयोजयन्तीत्यत्र निवृत्तप्रेषणाद्धातोर्हेतुमण्णिच्। एवं चार्थवदनर्थकाभिन्नान्यल्लोपोऽन इत्यादिसूत्रघटकान्नादिपदानि तदन्तविधिं प्रयुञ्जते प्राप्नुवन्तीत्यर्थः। [वचनरूपेण पठितेति।] एवं च वाचनिकीयं परिभाषेति भावः। यद्यपि कार्मस्ताच्छील्य इति निपातनमेकदेशानुमत्या अस्यां ज्ञापकम्, अन्यथाऽनर्थकत्वात्कार्म इत्यत्रान्निति प्रकृतिभावाप्राप्त्या नस्तद्धित इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। तथापि स्वीयप्रतिज्ञावाक्ये ज्ञापकन्यायसिद्धानीत्यस्य ज्ञापकसिद्धत्वादिना भाष्यकारादि-

15

तेन राज्ञा सम्नेत्यादावल्लोपो दण्डी वाग्मीत्यादाविन्हन्निति नियमः सुपयाः सुस्रोता इत्यादौ अत्वसन्तस्येति दीर्घः सुशर्म्मा सुप्रथिमेत्यादौ मन इति ङीब्निषेधश्च सिद्धः॥ अन्येतु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणादिणः षीध्वमित्यत्राङ्गग्रहणादर्थवत्परिभाषा ऽनित्या तन्मूलक-

---

सम्मतार्नीत्यर्थकतया तथाविधानामेवेह ज्ञापकसिद्धत्वादिव्यवहारस्यौचित्यादस्यास्तु वचनरूपेणैव पाठस्य भाष्ये दर्शनाद्युक्तमेवास्या ग्रन्थकृदुक्तं वाचनिकत्वमिति बोध्यम्। परिभाषाफलं दर्शयति। [तेनेति।] [अल्लोप इति।] अस्याल्लोपोऽन इतीत्यादिः। [दण्डी वाग्मीति।] इदमुपलक्षणं, दण्डिनौ, वाग्मिनावित्यस्य। अत्र सौचेति दीर्घविधानेन नियमस्यानुपयुक्तत्वात्। यद्वा नियमपदेन तत्प्रतिप्रसवभूतस्य सौचेति दीर्घस्य ग्रहणं बोध्यम्। [सुस्रोता इति।] स्रुरिभ्यां तुट्चेत्युणादिसूत्रेण स्रुधातोरसुन्प्रत्यये तुटि च रूपम्। आगमसमवधाने आगमविशिष्टस्यैवार्थवत्त्वादत्रासोऽनर्थकत्वमिति भावः। नन्वत्रासोऽनर्थकत्वेऽपि यदागमपरिभाषया अस्ग्रहणेन विशिष्टस्यैव ग्रहणात्तस्य चार्थवत्त्वेन नेदमुदाहरणं युक्तमिति चेन्न। निर्दिश्यमानपरिभाषाया अवयवषष्ठीविषयेऽपि प्रवृत्त्या अर्थवत्परिभाषालभ्यांशस्य निर्दिश्यमानविशेषणताया औचित्यादत्वसन्तस्येत्यस्य धात्ववयवभिन्नार्थवन्निर्दिश्यमानास उपधाया अचो दीर्घ इत्यर्थेनात्र निर्दिश्यमानस्यासोनिरर्थकत्वेनास्योदाहरणस्य युक्तत्वात्। अत एव भगवता इदमुदाहृतम्। तस्प्रत्ययान्तमेतदिति तु कैयटाद्यसम्मतत्वादुपेक्ष्यम्। प्राचोक्तं परिभाषामूलं दर्शयति। [अन्येत्विति।] [परिवेविषीध्वमिति।] परिपूर्वाद्विषेर्विधिलिङि ध्वमि सीयुटस्सकारस्य लोपे शपि श्लौ द्वित्वे निजां त्रयाणामित्यभ्यासस्य गुणे च रूपमिदम्। [अनित्येति।] अत्र धात्ववयवषकारमादायेणः परस्य षीध्वमः संभवाड्ढत्वप्रसङ्ग इति तद्वारणाय तत्र सूत्रेऽङ्गग्रहणं कृतम्। तत्रार्थवद्ग्रहणपरिभाषया अर्थवत्षीध्वमो ग्रहणादेवात्र ढत्वव्यावृत्तौ तद्वारणाय कृतमङ्गग्रहणं व्यर्थीभूयार्थवत्परिभाषाया अनित्यतां ज्ञापयतीति भावः [तन्मूलेति।] अर्थवद्ग्रहणपरिभाषानित्यत्वमूलेत्यर्थः।

मिदमित्याहुः॥ विभाषेट इत्यत्रानर्थकस्यैव षीध्वमः संभवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादितिपरे॥ १६ ॥

ननु उश्च इत्यत्र लिङ्सिचावित्यत आत्मनेपदेष्वित्येव संबध्येतानन्तरत्वादत आह॥

एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः॥१७॥

वाशब्द एवार्थे। परस्परान्वितार्थकपदानां सहैवानु-

---

अन्येत्वित्यनेन सूचितामरुचिं दर्शयति। [विभाषेट इति।] [संभवादिति।] आगमसमवधाने आगमविशिष्टस्यैवार्थवत्त्वादिटः परस्य षीध्वमः सर्वथा निरर्थकत्वमिति भावः। [तस्यैवेति।] निरर्थकस्यैवेत्यर्थः। अर्थाधिकारानुरोधादिति भावः। एवं च वाचनिकत्वमेवास्या इति सिद्धम्। १६

नन्विणष्षीध्वमित्यत्रार्थवत्परिभाषयाऽर्थवत एव षीध्वमो ग्रहणमस्तु। विभाषेट इत्यत्र च तादृशस्यासंभवात्तत्र तस्या असंबन्ध एवास्तु। एवंच युक्तमेवाङ्गग्रहणस्यार्थवत्परिभाषानित्यत्वज्ञापकत्वमित्याशङ्क्य, तथा सतीण इत्यस्यापि तत्रासंबन्धः स्यात्। तथाच बभासिध्वे इत्यत्रापि विभाषेट इत्यस्य प्रवृत्तिः स्यादिति ध्वनयंस्तद्बोधिकां परिभाषामवतारयति। [नन्विति।] [अनन्तरत्वादिति।] तत्पदस्यैवाव्यवहितत्वादित्यर्थः। विकल्पार्थकवाशब्दस्यात्रान्वयासंभवादाह। [वाशब्द इति।] एकयोगनिर्दिष्टानामिति पदस्यार्थमाह। [परस्परान्वितार्थकपदानामिति।] एतेनैकयोगेत्यादेरेकसंबन्धनिर्दिष्टानामिति शाब्दोऽर्थस्सूचितः। एवं चैकसूत्रनिर्दिष्टानामपि परस्परानन्वितार्थकपदानां नायं नियम इति बोध्यम्। एतेन एकस्मिन्नर्थे योग एकार्थीभावेन संबन्धो येषां ते एकयोगास्ते च ते निर्दिष्टाश्चेति बहुव्रीहिगर्भकर्मधारयाश्रयणेन समासविषय-

वृत्तिनिवृत्ती इत्यर्थः। एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः॥ यत्त्वत्र ज्ञापकं नेड्वशीत्यत-इडित्यनुवर्त्तमाने अर्धधातुकस्येडित्यत्र पुनरिड्ग्रहणं, तद्धि नेत्यस्यासंबन्धार्थमिति, तन्न। दीधीवेवीटामिति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणे ऽनुवर्त-माने पुररिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्यो-क्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु क्वचिदेकदेशो-

---

एवायं नियमो नतु वाक्यविषये, इति कैयटाद्युक्तमपास्तम्। तथासति औतोऽम्शसोरिति सूत्रस्थभाष्यविरोधात्। तत्र ह्यचिनवमित्यत्रात्ववारणाय वासुपीत्यतो वाशब्दं विहाय सुपीत्यस्यानु-वृत्तिमुक्त्वा कथं पुनरेकयोगनिर्दिष्टानामेकदेशोऽनुवर्तते? एकदेशोऽपि, एकयोगे चैकदेशानुवृत्तिः। नावश्यमिहैव अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रगङ्गाधिकरादित्युक्तम्। एवं च दृष्टान्तदार्ष्टा-न्तिकाभ्यामस्य न्यायस्य वाक्यविषयता स्पष्टमेवाभिहितेति बोध्यम्। अस्य लोकन्यायसिद्धत्वमाह। [एककार्येति।] एतेन हनस्सिजिति सूत्रे सिज्ग्रहणमत्र ज्ञापकम्। अन्यथा लिङ्सिचावात्मनेपदे-ष्वित्यतस्सिजनुवृत्त्यैव सिद्धे किं तेनेति सीरदेवाद्युक्तमपास्तम्। न्यायसिद्धेऽर्थे ज्ञापकान्तरानुसरणस्य व्यर्थत्वात्। अन्योक्तं ज्ञापकत्वमपि खण्डयति [यत्त्विति।] तत्त्वमुपपादयति। [तद्धीति।] पुनरिड्ग्रहणं हीत्यर्थः। एतत्परिभाषाभावे तदसंबन्धार्थं पुनरिड्ग्रहणं व्यर्थमेव स्यादिति भावः। [तत्रत्येति।] दीधीवेवीटामिति सूत्रस्थेत्यर्थः। इड्ग्रहणेऽनुवर्तमान इति। अस्य नेड्वशीत्यत-इत्यादिः। [पुनरिड्ग्रणस्येति।] आर्धधातुकस्येडित्यत्र पुनरिड्ग्रहणस्येत्यर्थः। विकारान्तर-स्येष्टत्वादाह। [गुणरूपविकारेति।] [तद्विरोधादिति।] भगवता तत्रत्येड्ग्रहणस्य फलान्तर-प्रतिपादनात्तस्य केनचिदुक्तं प्रकृतपरिभाषाज्ञापकत्वं सर्वथा भाष्यविरुद्धमिति भावः। ननु नञो-निवृत्त्यर्थं तदावश्यकताया नेड्वशीति सूत्रे भाष्ये स्पष्टतया कथं तेन तादृशार्थलाभोऽत आह। [नञो निवृत्तिस्त्विति।] प्रागुक्तज्ञापकत्वस्य सर्वथाऽसाङ्गत्यध्वननाय सिद्धान्तमाह।

ऽप्यनुवर्त्तत इति न्यायेन सिद्धा। वस्तुतस्तु दीधीवेवीटामिति सूत्रस्थभाष्यमेकदेश्युक्तिः। आर्धधातुकस्येति सूत्रस्थेड्ग्रहणस्य नेड्वशीति सूत्रे भाष्ये प्रत्याख्यानात्। तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

नन्वलुगधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात्। तथा दामहायनान्ताच्च इत्यादौ संख्याव्ययादेरित्यतः संख्यादेरित्यनुवर्तते ऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह॥

---

[वस्तुतस्त्विति।] [प्रत्याख्यानादिति।] नञो निवृत्तेरुक्तरीत्यैव सिद्धत्वान्न तदर्थं तदिति तदाशयः। ननु दीधीवेवीटामिति सूत्रस्थभाष्यादस्यैवैकदेश्युक्तित्वं कुतो नेत्यत आह। तत्करणेनेति। आर्धधातुकस्येडित्यत्रेड्ग्रहणकरणेनेत्यर्थः। [गुरुतरयत्नमिति।] इड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणादिडिडेव भवति, नतु विक्रियत इति नियमरूपं यत्नमित्यर्थः। [एतत्प्रत्याख्यानस्येति।] दीधीवेवीटामिति सूत्रस्थेड्ग्रहणप्रत्याख्यानस्येत्यर्थः। १७

[नन्विति।] अस्यैवमिति शेषः। उक्तपरिभाषाङ्गीकारे इति तदर्थः। तथाच पूर्वपरिभाषयाऽस्याः सङ्गतिः सूचिता। परस्परान्वितार्थकपदानां क्वचिदेकदेशोऽप्यनुवर्तत इति परिभाषार्थः। अत्रैकयोगनिर्दिष्टानामित्येतत्पूर्वतोऽनुवृत्तिलभ्यम्। अपिरुक्तार्थसमुच्चायकः। तथाच विरोधान्नैकत्रोभयम्। किन्तु लक्ष्यानुरोधाद्व्यवस्थितमित्यर्थः। अस्य न्यायस्य कैयटोक्तमर्थं

## क्वचिदेकदेशो ऽप्यनुवर्तते ॥ १८ ॥

एकत्रार्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति पक्षात्तिरिति सूत्रे कैयटः ॥ तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम् ॥ स्पष्टा चेयं दामहायनान्ताच्चेति सूत्रे औतो ऽम्शसोरिति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥

---

दर्शयति। [एकत्रेत्यादिना।] [कैयट इति।] अनेनारुचिस्सूचिता, तद्बीजं तु प्रागुक्तौतोऽम्शसोरिति भाष्यविरोधः। तेनास्य न्यायद्वयस्य समासव्याससाधारण्येन प्रवृत्तेः स्पष्टत्वात्। एतत्परिभाषासिद्धिप्रकारं दर्शयति। [तावदिति।] मात्रशब्दोऽत्रावधारणे। तावदंश एवेत्यर्थः। दोषविशेषरूपमज्झल्साधारणं स्वरितत्वं यत्र प्रतिज्ञायते तस्यैवोत्तरत्र संबन्धो नान्यस्य, स्वरितेनाधिकार इति वचनादित्येतत्परिभाषासिद्धिरित्याशयः। यद्यपि स्वरितेनाधिकार इत्युक्त्या सर्वत्रानुवृत्तिनिवृत्त्योः स्वरितत्वप्रतिज्ञावशादेव वक्तव्यतया एकदेशे स्वरितत्वप्रतिज्ञाबलादेकदेशस्यैव, समुदाये तद्बलात्समुदायस्यैवानुवृत्तिर्भविष्यतीतीदं परिभाषाद्वयं स्वरितत्वप्रतिज्ञाविशेषसिद्धमेव। अतएव क्वचित्पदद्वये भिन्नप्रतिज्ञाबलाद्भिन्नावधिकतया पदद्वयस्यानुवृत्तिः। यथाऽलुक्पदस्यानङः प्रागुत्तरपदशब्दस्याङ्गाधिकारात्प्रागनुवृत्तिरिति च व्यवस्था। एवमेकदेशे तद्बलात्तन्मात्रस्यैवानुवृत्तिः। यथा संख्याव्ययादेरिति। विशिष्टे तद्बलात्समानावधिकतदनुवृत्तिः। यथा लिङ्सिचावात्मनेपदेष्वित्यादावित्यादिव्यवस्था सिद्ध्यति; तथापि पूर्वपरिभाषासिद्धौ लोकन्यायसहकारोऽप्यस्तीति सूचनाय पूर्वं तदुक्तिरिति बोध्यम्। भाष्यारूढत्वमनयोर्दर्शयति। [स्पष्टा चेयमिति।] [औतोऽम्शसोरिति।] [सूत्रे चेति।] चेन पक्षात्तिरिति सूत्रसंग्रहः। एवं चोक्तसूत्रत्रयादौ पूर्वेणाशङ्क्य परेण समाधानादुभयं स्पष्टमिति बोध्यम्। १८

ननु त्यदादीनाम इत्यादिनेममित्यादावनुनासिकः स्यादत आह।

## भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥

---

अपवादसङ्गत्या स्थानिप्रयुक्तातिप्रसङ्गवारिकां षष्ठीस्थाने योगेति परिभाषामूलिकां निर्दिश्यमानपरिभाषां निरूप्य तत आदेशप्रयुक्तातिप्रसङ्गवारणाय तदुत्तरभूतस्थानेऽन्तरतम इति परिभाषामूलिकां यत्रानेकविधमिति परिभाषां मध्ये प्रसक्तानुप्रसक्त्या परिभाषान्तराणि च निरूप्य पुनःसिंहावलोकनन्यायेनादेशप्रयुक्तातिप्रसङ्गवारणाय परिभाषान्तरमवतारयति। [ननु त्यदादीनाम-इत्यादिना।] [अनुनासिकः स्यादिति।] विधेयभूतेनाकारेण ग्रहणकशास्त्रबलादनुनासिकस्य ग्रहणे स्थानेऽन्तरतम इति परिभाषया मकारस्य स्थानेऽनुनासिकाकारः स्यादिति भावः। यद्यपि प्राथम्यात्प्रथमाविभक्तावेवोदाहरणदानमुचितं, तथापि प्रथमाद्विवचनेऽनुनासिकाकारस्य विधानेऽप्यैचोऽनुनासिकस्याभावेन शुद्धस्यैवौकारस्य वृद्धिरेचीत्यनेन विधानादिमे इत्यत्र परस्येकारस्य द्विमात्रिकत्वेन तत्सदृशगुणकस्यैवैकारस्याद्गुण इत्यनेन विधानाद्दोषाभावेन विभक्तिविधायकेषु प्रथमापेक्षया द्वितीयाया एव प्राथम्याच्चात्रैवोदाहरणं दत्तमिति बोध्यम्। [भाव्यमानेन सवर्णानां-ग्रहणं नेति।] भाव्यमानेनेत्यत्र कर्तरि तृतीया। ग्रहणमिति भावे ल्युट्। सवर्णानामित्यत्रोभयप्राप्तौ कर्मणीति कर्मणि षष्ठी। भाव्यमानेनेत्यस्य विधीयमानेनेत्यर्थः। विधीयमानकर्तृकं सवर्णकर्मकं ग्रहणं बोधनं नेत्यक्षरार्थः। विधीयमानस्सवर्णान्न गृह्णातीति यावत्। नन्वणुदित्सूत्रेऽण्पदेनाक्षरसमाम्नायिकानामेव ग्रहणेन व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेनात्र सवर्णग्रहणाप्रसक्त्या निषेधो व्यर्थ-इति चेन्न। अस्य च्वावित्यादाविवात्रापि स्वसदृशबाच्यलक्षणया जातिपक्षेण गुणाभेदकतया वा प्रसक्तस्य सवर्णग्रहणस्य वारणायास्यावश्यकत्वात्। व्यक्तिपक्षेऽणुदित्सूत्रस्य लक्ष्यतावच्छेदकज्ञान-संपादनमात्रफलकताया एवान्यत्र ग्रन्थकृतोक्तत्वात्। नचैवमपि सूत्रोपात्तस्याकारस्य विधीयमानत्वाभावेन सत्यामप्यस्यां परिभाषायामत्र निषेधो दुर्वचः। तथाचेममित्यादौ दोषो दुर्वार एवेति वाच्यम्। तस्य स्वतो विधीयमानत्वाभावेऽपि तद्बोध्यस्य लक्ष्यस्थस्य विधीयमानत्वेन बोध्यबोधकयोस्तादात्म्यादस्यापि तत्त्वेनानया परिभाषया तत्र सवर्णग्रहणनिषेधस्य सुस्थत्वात्। एवमिको यणचीत्यादौ

**अणुदित्सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः।**

---

यण्पदबोध्ययकारादीनां विधीयमानत्वेन तदभिन्नस्य यण्पदस्यापि विधीयमानत्वात्तेन तद्वाच्यवाच्यलक्षणया प्रसक्तस्य जातिपक्षगुणाभेदकत्वपक्षप्राप्तस्य वा सवर्णग्रहणस्यानेन निषेधान्न कश्चिद्दोषः। नचैवं यण्पदवाच्याक्षरसमाम्नायिकयकारादिवाच्यानां शुद्धयकारादीनामपि तेन ग्रहणानापत्तौ महान्दोषइति वाच्यम्। सवर्णपदेनात्र समानजातीयस्य भिन्नधर्मण एव ग्रहणेन तादृशानुनासिकयकारादीनामेव तेन ग्रहणनिषेधेनादोषात्। अत एव ग्रन्थकृता सवर्णपदेन समानजातीयो भिन्नधर्मोच्यतइत्युक्तं शेखरे। अत एव त्यादादीनामः, इको यणचीत्यादीनां न वैयर्थ्यम्। नचैवं विधेयविषये उदात्तादीनामपि ग्रहणं न स्यात्। तथाच वृक्षेभ्य इत्यादावुदात्तानुदात्तयो स्थान्यन्तरतमयोर्विधानं न स्यात्। इष्यते तु गुणानामभेदकतया सर्वेषामुदात्तादीनामेकाराणां विधानमिति वाच्यम्। सवर्णपदेन समानजातीयस्य स्वरत्वव्याप्यधर्मेतरधर्मवत एव ग्रहणेनादोषात्। अत एवास्थिदधीति सूत्रस्थोदात्तग्रहणस्य गुणा अभेदका इति पक्षज्ञापकत्वप्रतिपादनपरवृद्धिरादैजिति सूत्रस्थभाष्यसङ्गतिः। अन्यथाऽनया परिभाषया तत्पक्षप्राप्तसवर्णग्रहणस्यापि निषेधेन ज्ञापनोत्तरमप्युदात्तग्रहणस्य स्वांशे चारितार्थ्याभावेन तदसङ्गतिः स्पष्टैव। नच तत्रानित्यस्य विधीयमानत्वेऽपि तदवयवस्याकारस्य तत्वाभावादेतन्निषेधाप्रवृत्त्या चारितार्थ्यं सुस्थमेवेति वाच्यम्। समुदायद्वारावयवस्यापि वृक्षप्रचलनन्यायेन विधीयमानत्वात्। अत एव याड्यासुडादौ पाक्षिकानुनासिकयकारघटितस्यागमस्याप्रसङ्गइति बोध्यम्। अत्र ज्ञापकमाह। [अणुदित्सूत्रे इति।] [सामर्थ्यादिति।] अयं भावः। अत्र सूत्रेऽप्रत्यय इति योगो विभज्यते। तद्बलादत्राणित्यस्यासंबन्धः। तत्र च प्रत्ययपदं प्रकृतशास्त्रसङ्केतितप्रत्ययमात्रपरम्। नतु विधीयमानार्थकम्। कृत्रिमाकृत्रिमन्यायबाधे मानाभावात्। प्रतिपूर्वकेण्धातोर्विधानार्थकतायाः काप्यदृष्टत्वाच्च। एवं च प्रत्ययस्सवर्णग्राहको नेति तदर्थः। अयं च सूत्रप्राप्तसवर्णग्रहणस्येव जातिपक्षगुणाभेदकत्वपक्षप्राप्तसवर्णग्रहणस्याप्यणनण्साधारण्येन निषेधकः। अन्यथा योगविभागमन्तरा लाघवात्पर्युदासपरतया व्याख्यानेनापि तदर्थसिद्धौ योगविभागाश्रयणं प्रसज्यप्रतिषेधपरतया व्याख्यानं च निरर्थकं स्यादिति। तदाह। [सूत्रेण प्राप्तमित्यादिना।] [प्राप्तं नेति।] प्राप्तं सवर्णग्रहणं नेत्यर्थः। [इत्यर्थ इति।] अस्य

अत एवाणुदित्सूत्रे प्रत्ययागमादेशेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वा एवं तर्हिसिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन

---

बोध्यत इति शेषः। एवं च भाव्यमानस्य प्रत्ययागमादेशरूपांशत्रयात्मकतया तत्र प्रत्ययांशे सवर्णग्रहणनिषेधस्योक्तरीत्या प्रमितत्वेन तेनैकदेशानुमत्या प्रचीनवैयाकरणपठिता संपूर्णेयं परिभाषा ज्ञाप्यत इति भावः। ननु कर्तरि कर्मव्यतीहार इत्यादौ क्वचिदकृत्रिमग्रहणस्यापि शास्त्रे दृष्टतया प्रकृते प्रतीयते विधीयत इति व्युत्पत्त्या विधीयमानस्सवर्णग्राहको नेत्यर्थकेनाप्रत्यय इत्यनेनैव प्रकृतपरिभाषार्थस्य संगृहीततया नेयमपूर्वा ज्ञापकसिद्धा परिभाषा। किन्तु दीक्षिता द्युक्तदिशा अप्रत्यय इत्येतदर्थानुवादिकैव कुतो नेत्याशङ्क्यात्र प्रत्ययपदेन कृत्रिमस्यैव ग्रहणे मानमाह। [अत एवेति।] प्रत्ययपदेन कृत्रिमस्य ग्रहणादेवेत्यर्थः। [प्रत्ययागमादेशेष्विति।] सनाशंसभिक्ष उः, अप्रत्ययात्। आर्धधातुकस्येट्, इदम इशित्यादिष्वित्यर्थः। [प्रकारान्तरेणेति।] वार्तिककृदुक्तप्रकारादन्येन प्रकारेणेत्यर्थः। वार्तिककृता तु सूत्रेऽप्रत्यय इत्युक्त्या प्रत्ययांशे सवर्णग्रहणनिषेधस्य सिद्धत्वेऽप्यागमादेशयोस्तदसिद्धिरिति तत्र सवर्णग्रहणनिषेधायाप्रत्ययादेश-टित्किन्मित इति वक्तव्यमित्युक्तम्। भाष्यकृता त्वेवमपि सूत्रप्राप्तसवर्णग्रहणस्यैव तेन निषेधः स्यान्न तु जातिपक्षगुणाभेदकत्वपक्षप्राप्तस्यापीति तादृशसवर्णग्रहणनिषेधायावश्यक्या प्रचीनवैया-करणपठितभाव्यमानेनेति परिभाषयैव सकलेष्टसिद्धै तद्वार्तिकमनावश्यकमित्युक्तमिति बोध्यम्। [एवं तर्हि सिद्धे इति।] आगमादेशरूपसर्वविधेयसंग्राहकेण पक्षान्तरप्राप्तसवर्णग्रहणनिषेधार्थ-मवश्याश्रयणीयेन भाव्यमानेनेत्यनेनैव सिद्धे इत्यर्थः। [तज्ज्ञापयतीति।] एकदेशानुमतिद्वारैनां परिभाषां ज्ञापयतीत्यर्थः। [नेतीति।] एतदुत्तरमित्युक्तं भाष्य इति शेषः। अणुदित्सूत्रे इत्यस्या-त्रान्वयः। एतेन भाष्यवार्तिकग्रन्थसंदर्भेण सौत्रं प्रत्ययपदं न विधीयमानार्थकमपितु प्रत्ययमात्र-परमिति स्फुटमवगम्यत इति बोध्यम्। ननु प्रत्ययपदस्य योगार्थापरिज्ञानेन तद्वार्तिकप्रवृत्त्या न तद्विरोधः। तज्ज्ञापयतीति भाष्यस्यापि योगेन परिभाषार्थं बोधयतीत्येव तात्पर्यमिति न

16

सवर्णानां ग्रहणं नेति॥ किं च ज्याद् ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादिति दीर्घोच्चारणमस्या ज्ञापकम्॥ अणुदित्सूत्रे ज्यादादितिसूत्रे च भाष्ये स्पष्टैषा। चोःकुरित्यादौ भाव्यमानेनापि सवर्णग्रहणं विधेये उदिदुच्चारणसामर्थ्यात्। एतदेवाभिप्रेत्य भाव्यमानोऽण् सवर्णान्न गृह्णातीति नव्याः पठन्ति ॥ १९ ॥

---

तद्विरोधोऽपीत्यत आह। [किञ्चेति।] [ज्ञापकमिति।] एतदुत्तरमित्युक्तं भाष्ये इति शेषः। तत्र हि "किमर्थमिदमुच्यते, ज्याद इत्येवोच्यताम्। का रूपसिद्धिः। आन्तर्यतो दीर्घस्य दीर्घो भविष्यति। एवं तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेनेत्यादी" त्युक्तम्। प्रत्ययपदस्य त्वदुक्तार्थकत्वे पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिरिति बोध्यम्। न चाणुदित्सूत्रस्थवार्तिकवदिदमपि प्रत्ययपदस्य योगार्थापरिज्ञानेन प्रवृत्तमिति वक्तुं शक्यतया न विरोध इति वाच्यम्। विना विरोधं भाष्यवार्तिककृतोरज्ञानकल्पनापेक्षया बलीयस्या अपि रूढेस्त्यागापेक्षया चोक्तरीत्या परिभाषाया ज्ञापकसिद्धताया एव न्याय्यत्वात्। ननु ज्ञापनोत्तरमप्यप्रत्ययग्रहणस्य स्वांशे चारितार्थ्याभावाज्ज्ञापकत्वानुपपत्तिरिति चेत्सत्यम्। विपरीतार्थकल्पनानिरासायैव स्वांशे चारितार्थ्यस्यापेक्षितत्वेन यत्र तादृशार्थकल्पनाप्रसक्तिस्तत्रैव तदपेक्षा, नान्यत्र। सा च प्रसक्तिर्यत्र सर्वथाऽसिद्धस्यैवार्थस्य शास्त्रेण बोधनं तत्रैव स्वांशे चारितार्थ्यमन्तरा-अपूर्वार्थकल्पनायां विनिगमनाविरहादर्थान्तरकल्पनापि कुतो नेति शङ्कायास्तत्रैव संभवात् प्रकारान्तरेण सिद्धस्यार्थस्य बोधने तु न विपरीतार्थकल्पनाप्रसक्तिः। कृतस्यार्थस्य कल्पनापेक्षया सर्वथा असिद्धार्थस्य कल्पनायां प्रतिपत्तिगौरवस्य सत्त्वेन तादृशशङ्काया अनुदयात्। एवं चास्यार्थस्यांशतः सूत्राक्षरैस्सिद्धतया विपरीतकल्पनाया असिद्ध्या न स्वांशे चारितार्थ्यापेक्षेत्यन्यत्र विस्तर इति बोध्यम्। ननूदिदंशेऽप्ययं किं न स्यादत आह। [चोः कुरित्यादाविति।] [एतदेवेति।] अनण्णुदितिसामर्थ्यादप्रवृत्तिमभिप्रेत्यैवेत्यर्थः। न तु वास्तवस्तथा पाठः। भाष्ये

नन्वेवमदसो ऽसेरित्यादिनामू इत्यादौ दीर्घविधानं न स्यादत आह॥

भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति॥ २० ॥

दिव उत् ऋत उदिति तपरकरणमस्या ज्ञापकम्॥

---

तादृशपाठस्य क्वाप्यनुपलम्भात्। तेनाष्टन आ विभक्ताविति आदावनण्यप्यस्य प्रवृत्त्या अष्टाभिरित्यादौ विधीयमान आकार आन्तरतम्यादनुनासिको नेति बोध्यम्। १९

पूर्वपरिभाषयाऽस्याः सङ्गतिं दर्शयति। [एवमिति।] विधीयमानेन सर्वथा सवर्णग्रहणनिषेधे इत्यर्थः। [दीर्घविधानं न स्यादिति।] नच ह्रस्वदीर्घयोस्समाहरद्वन्द्वेन निर्देशात्तद्विधानं सुलभमिति वाच्यम्। तथासति समासोत्तरं प्रातिपदिकत्वेऽन्तर्वर्तिसुपोर्लुकि उऊइति स्थिते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तौ दीर्घस्य शब्दान्तरप्राप्त्यानित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाद्वा पूर्वं ह्रस्वे कृते पश्चाद्दीर्घे उ इति रूपासिद्धेः। अत एवोकाल इति निर्देशः सङ्गच्छते। अन्यथा उकाल इत्येव वदेदिति बोध्यम्। अत्र ज्ञापकमाह। [दिव उदिति।] नच संप्रसारणसंज्ञासूत्रस्थकैयटोक्तदिशा द्युभ्यामित्यादावुत्वोत्तरं प्राप्तस्य हल इति दीर्घत्वस्य वारणाय तपरकरणं स्यादिति कथं तज्ज्ञापकमिति वाच्यम्। संप्रसारणसंज्ञासूत्रे तद्भावितानामेव ग्रहणस्य सिद्धान्तितत्वेन दिव उदित्यनेन विहितस्योकारस्य संप्रसारणत्वाभावात्तस्य दीर्घाप्राप्त्या तदर्थं तपरकरणस्यानावश्यकत्वात्। संप्रसारणसंज्ञासूत्रस्थकैयटस्तु चिन्त्य एव। एतत्तपरकरणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरतित्स्वरितमिति सूत्रस्थभाष्यविरोधादिति बोध्यम्। ननु ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावः। उकारेण सवर्णग्रहणेऽपि वकारस्य स्थाने आन्तरतम्याध्द्रस्वस्यैव प्रवृत्तेः। नच च्छ्वोश्शूडित्यत्र क्ङितीत्यस्याननुवृत्तिरिति पक्षे द्युभ्यामित्यादावुत्वात्पूर्वमूठि कृते प्रसक्तस्य द्विमात्रिकस्य वारणाय तच्चरितार्थमिति वाच्यम्। एव मपि प्रतिपदविधित्वेनान्तरङ्गत्वात्तत्र पूर्वमेवोत्वप्रवृत्त्या फलाभावादिति चेन्न। दिव्शब्दादाचारक्विबन्तात् क्यजन्ताद्वा क्विपि निष्पन्नस्य द्यूशब्दस्य पदान्तविषये मात्रिकादेशविधानाय तत्सार्थक्यसंभवादित्यवधेयम्। इतोऽपि सुगमं ज्ञापकमाह। [ऋत उदिति।] नच पितू राज्यमित्यादौ

तित्स्वरितमितिसूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह ॥

---

भाविद्धिमात्रव्यावृत्त्यर्थं तपरकरणं स्यादिति कथं तज्ज्ञापकमिति वाच्यम्। ऊ रपर इत्युरण्रपर इति सूत्रस्थभाष्यप्रयोगविरोधात्तत्रत्यतपरकरणस्य भाविदीर्घव्यावर्तकताया वक्तुमशक्यत्वात्। धर्मिग्राहकसाजात्यादियमादेशमात्रविषयिणि। तेन सनाशंसभिक्ष उरित्यादौ न दोषः। अनभिधानं तु न लक्षणैकचक्षुष्काणां युक्तमुत्तरमिति बोध्यम्। अस्या भाष्यारूढत्वं दर्शयति। [तित्स्वरितमिति।] तत्र हि ऋत इदित्यादावेतदप्रवृत्तये वार्तिककृदुक्तं तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिकमादेशेषु दित्त्वमाश्रित्य प्रत्याख्याय तत्पक्षे ऋत इदित्यादाविकारेण प्राप्तं सवर्णग्रहणं भाव्यमानपरिभाषया वारयित्वा तदाश्रयणेऽदसोऽसेरित्यत्र विधीयमानेनोकारेण सवर्णग्रहणाभावमाशङ्क्य दिव उदिति तपरकरणेनैनां परिभाषां ज्ञापयित्वा तत्र सवर्णग्रहणमुपपादितमिति बोध्यम्। २०

निषेधस्य प्रक्रान्तत्वात्प्रत्ययलक्षणनिषेधभूतां परिभाषामवतारयति। नन्वित्यादिना। द्विवचनान्तेन बहुवचनान्तेन वा समासेऽवादेशाप्राप्त्यात्रैकवचनान्तेन समास इति सूचनाय विग्रहं दर्शयति। [गवे हितमिति।] [अवाद्यादेशापत्तिरिति।] नन्वन्तरङ्गानपीति न्यायेन ङेप्रभृतीनामित्संज्ञालोपाभ्यां प्रागेव लुकः प्रवृत्त्या सत्यपि प्रत्ययलक्षणेऽच्परत्वाभावान्नोक्तदोषावकाश-इति चेन्न। तस्य न्यायस्येत्संज्ञालोपातिरिक्तविषयकत्वेन प्रकृते तदप्रवृत्तिरित्याशयात्। अत-एव 'लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यान' मिति न लुमतेति सूत्रस्थवार्तिकतद्भाष्ययोः सङ्गतिः। तद्धि गर्गा बिदा इत्यादावपत्यार्थकस्य यञो बहुत्वे यञञोश्चेति लुकि प्रत्ययलक्षणेन प्राप्तस्य ञित्स्वरस्य वारणार्थमारब्धम्। यदि तत्रानेन न्यायेनेत्संज्ञातः प्रागेव लुक् स्यात्तदा सत्यपि प्रत्ययलक्षणे ञिदन्तत्वाभावात्स्वराप्राप्त्या तद्विषये प्रत्ययलक्षणनिषेधकं तद्वार्तिकमानावश्यकं स्यात्। किञ्च गवे हितं गोहितमित्यादेरेतत्परिभाषोदाहरणत्वप्रतिपादनपरं प्रत्ययलक्षणसूत्रस्थं भाष्यमप्यत्रार्थे

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत्। तत्त्वं च प्रत्ययलोप इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थ-

---

प्रमाणमिति बोध्यम्। नन्वत्र न लुमतेति प्रत्ययलक्षणनिषेधेनैवावाद्यादेशवारणसंभवादियमनावश्यकी परिभाषेति चेन्न। लुप्तप्रत्ययनिरूपिताङ्गसंज्ञावदुद्देश्यकतादृशप्रत्ययनिमित्तकविधावेव तन्निषेधप्रवृत्त्या प्रकृतेऽवादेशस्याङ्गसंज्ञावदुद्देश्यकत्वाभावेन तन्निषेधाप्रवृत्तेः। ननु स्थानिवत्सूत्रवत्प्रत्ययलक्षणस्यापि वर्णाश्रये विधावप्रवृत्तौ स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलक्षणसूत्रं व्यर्थं स्यादत आह। [वर्णप्राधान्यविषयमेतदिति। एवं चाप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमावश्यकम्। अत एवातृणेडित्यत्र हलादिसार्वधातुकनिमित्तकेमागमस्य, मित्रशीरित्यत्र हलादिक्ङिन्निमित्तकस्य शास इदङ्हलोरितीत्वस्य च सिद्धिः। स्थानिवत्सूत्रेण तु नैतत्सिद्धिः। यथा कथं चिदप्यलाश्रये स्थानिवद्भावस्याप्रवृत्तेरिति बोध्यम्। अस्य न्यायस्य वर्णप्राधान्यविषयकत्वे बीजं दर्शयति। [तत्त्वं चेति।] वर्णप्राधान्यविषयकत्वं चेत्यर्थः। अस्य 'इत्येतत्सिद्ध' मित्यनेनान्वयः। [प्रत्ययलोप इति सूत्रे इति।] अस्य प्रत्ययलक्षणग्रहणमित्यनेनान्वयः। इत्येतत्सिद्धमिति। इत्येतेन प्रकृतन्यायसिद्धिप्रकारेणार्थत इदं सिद्धमित्यर्थः। यद्वा प्रत्ययलोप इति सूत्रे इत्यस्य यत इत्यादिः। इत्येतत्सिद्धमित्यस्यातस्सिद्धमित्यन्तः। यतः इतिउक्तप्रकारेण। एतत्=वर्णाश्रये नास्ति प्रत्ययलक्षणमित्येतत् सिद्धम्=अतोऽस्य वर्णप्राधान्यविषयकत्वं सिद्धमित्यक्षरार्थः अयं भावः। स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलक्षणसूत्रमल्विध्यर्थमिति वार्तिककृदाशयः। तत्र यथाकथंचिदप्यलाश्रये विधावस्य प्रवृत्तिः स्यात्तदाचः परस्मिन्नित्यत्रेवात्रापि स्थानिवदित्यनुवर्त्य प्रत्ययलोपे स्थानिवत्कार्यं भवतीत्युक्तावपीष्टसिद्धौ प्रत्ययलक्षणग्रहणमनर्थकं स्यात्। अतस्तत्सामर्थ्याद्यत्र प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण प्रत्ययस्य प्राधान्येन निमित्ततयाऽश्रयणमलश्चाप्राधान्येनाश्रयणं तत्कार्यं प्रत्ययलोपे सति भवतीत्यर्थो लभ्यते। एवं च

मित्येतत्सिद्धम् ॥ वर्णप्राधान्यं च वर्णस्येतराविशेष-

---

प्राधान्येनालाश्रये प्रत्ययविधौ प्रत्ययलक्षणं न प्रवर्तत इतीयं परिभाषा अस्या वर्णप्राधान्याविषयता चार्थसिद्धेति। ननु विनिगमनाविरहात्प्रत्ययलक्षणग्रहणसामर्थ्येन प्राधान्येनालाश्रये प्रत्ययविधौ प्रत्ययलक्षणसूत्रस्य प्रवृत्तिरित्येव कुतो न कल्प्येत, तावतापि तच्चारितार्थ्यादिति चेन्न। अप्राधान्येनालाश्रये विधावनल्विधाविति निषेधबाधकतया प्रत्ययलक्षणग्रहणस्य चारितार्थ्यसंभवे प्राधान्येनालाश्रये विधौ तन्निषेधबाधकताया अनौचित्यात्। प्रत्ययलक्षणग्रहणसामर्थ्येन प्राधान्येन प्रत्ययाश्रये विधावित्यर्थलाभस्यैव स्वारसिकत्वाच्च। नच प्रत्ययलक्षणग्रहणसामर्थ्येन प्रत्ययत्व-तद्व्याप्यान्यतरधर्मपुरस्कारेण यत्र प्रत्ययस्याश्रयणं, तत्कार्यं प्रत्ययलोपे सति भवतीत्यर्थलाभेऽपि न निरुक्तप्राधान्येनेत्यर्थलाभ इति वाच्यम्। एवमप्यस्यानल्विधिविषयत्वे सूत्रस्यैव वैयर्थ्यापत्त्या, अल्विध्यर्थत्वे तूक्तरीत्याऽप्राधान्येनालाश्रयविधिविषयकताया एव न्याय्यत्वेन च निरुक्तार्थसिद्धे-रिति बोध्यम्। यद्यपि प्रत्ययलोप इति सूत्रे भाष्ये "अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात्, वर्णलक्षणं माभूदिति, गवे हितं गोहित" मित्युक्तम्। तेन च द्वितीयप्रत्ययग्रहणेनैवास्यार्थस्य लाभ इति प्रतीयते। कैयटेनापि तद्व्याख्यानावसरे 'प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाश्रयेण वर्णरूपताश्रयेण वा तत्सर्वं स्यात्। सर्वनाम्नो वस्तुमात्रपरामर्शित्वात्। प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे सति भवति, न वर्णरूपतानिमित्तमित्युक्तम्।' तथापि तद्भाष्यस्य प्रत्ययपदघटितं प्रत्ययलक्षणग्रहणं किमर्थम्? स्थानिवदित्यनुवृत्त्यैव सिद्धेरित्येवाशयः। कैयटव्याख्या तु चिन्त्या। प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरिति बोध्यम्। स्पष्टं चेदमुद्योते। एवमेतत्परिभाषासिद्धिप्रकारमस्या वर्णप्राधान्याविषयकत्वे बीजं च प्रदर्श्यैतत्परि-भाषाप्रवृत्तिप्रयोजकं वर्णप्राधान्यं विवेचयति। [वर्णप्राधान्यं चेति।] [इतराविशेषणत्वरूपमिति।] अभेदसंबन्धावच्छिन्नेतरनिरूपितविशेषणताराहित्यमित्यर्थः। तेनैचोऽयवायाव इत्यत्राजुपश्लिष्टस्यैच-इत्यर्थेनाचो भेदसंसर्गावच्छिन्नविशेषणतावत्त्वेऽपि न क्षतिः। नन्वेवमपि टिड्ढाणञित्यत्राणो योऽकारस्तदन्तात्प्रातिपदिकादित्यर्थादकारस्याभेदेन प्रातिपदिकविशेषणत्वादुक्तरूपवर्णप्राधान्या-भावात्प्रकृतनिषेधाप्रवृत्तौ चित्रायां जाता चित्रेत्यादौ प्रत्ययलक्षणेन ङीबापत्तिरत आह।

णत्वरूपं प्रत्ययानिरूपितविशेष्यतारूपं च, तेन गोहितमित्यदाववादि न चित्रायां जाता चित्रेत्यादावण्यो ऽकारस्तदन्तान् ङीबिति ङीप् च न॥ इयमल्विधौ स्थानिवत्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति

---

[प्रत्ययनिरूपितविशेष्यतारूपं चेति।] तत्र वर्णस्येतराविशेषणत्वरूपवर्णप्राधान्याश्रयणे फलं दर्शयति। [तेनेति।] [इत्यादाविति।] अत्रादिशब्देन रायः कुलं रैकुलमित्यस्य, अवादीत्यत्रादिशब्देनायादेशस्य च संग्रहो बोध्यः। द्वितीयस्य फलमाह। [चित्रायां जातेति।] सन्धिवेलाद्यृतुनक्षत्रेऽभ्योऽणित्यनेन जातार्थे विहितस्याणः चित्रारेवतीरोहिणीभ्यस्स्त्रियामुपसंख्यानमित्यनेन लुकि, लुक्तद्धितलुकीत्यनेन स्त्रीप्रत्ययस्य लुकि, पुनष्टापि रूपम्। उक्तलक्ष्यद्वयसंग्राहकं वर्णप्राधान्यं तु वर्णस्य प्रत्ययनिरूपितविशेषणताराहित्यरूपमिति बोध्यम्। ननु भाष्यकारमते स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलोप इति सूत्रस्य प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते, तत्रैव प्रत्ययलक्षणं नान्यत्रेत्येवं नियामकतया वर्णाश्रये विधावनल्विधाविति निषेधात्प्रत्ययलक्षणाप्राप्त्या परिभाषेयं व्यर्थेत्यत आह। [इयमल्विधाविति।] यथाकथंचिदप्यलाश्रये विधावित्यर्थः। प्राप्तप्रत्ययलक्षणविधेरिति। वार्तिकमतेऽचः परस्मिन्निति वदस्यानल्विधाविति निषेधबाधकत्वेनालाश्रये विधौ प्राप्तप्रत्ययलक्षणविधेरित्यर्थः। [निषेधिकेति।] प्रत्ययलोप इति सूत्रस्याचः परस्मिन्नितिवद्यथाकथंचिदप्यलाश्रये विधौ यदि प्रवृत्तिः स्यात्तदा तत्रेवात्रापि स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणमनर्थकं स्यात्। अतस्तत्सामर्थ्याद्यत्र प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण प्रत्ययस्य प्राधान्येनाश्रयणमलश्चाप्राधान्येनाश्रयणं तादृशे प्रत्ययलक्षणविधावेव तस्य प्रवृत्तिरित्यर्थलाभात्प्राधान्येनालाश्रये प्रत्ययलक्षणविधौ तदप्रवृत्तिरर्थसिद्धेति तादृशार्थसिद्धप्रत्ययलक्षणाप्रवृत्तिबोधिकेयं प्राचीनपठिता परिभाषा, नापूर्वेति भावः। एवं च 'प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्ये' ति प्रत्ययलोप इति सूत्रस्थवार्तिकमतानुसारेणेयं परिभाषेति बोध्यम्। अथैतन्मते शोभना दृषदो यस्य स सुदृषत्प्रासाद इत्यत्र सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तमित्यर्थकेन सोर्मनसी,

## स्पष्टं भाष्ये ॥ २१ ॥

---

अलोमोषसी' इति सूत्रेणाद्युदात्तत्वं स्यात्। तत्र प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण प्रत्ययस्यानाश्रयणात्प्रत्ययलक्षणाप्रवृत्तावपि स्थानिवद्भावेनासन्ततायास्सुलभत्वात्। एवं यङ्लुकि बोभवीतीत्यत्र स्थानिवत्त्वेन ङित्त्वनिबन्धनमात्मनेपदं स्यादिति चेत्सत्यम्। आद्ये मन्साहचर्येणालोमोषसीति पर्युदासेन वा श्रूयमाणासन्त एव स्वरप्रवृत्त्या दोषाभावात्। द्वितीये क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्त्या दोषाभावात्। यद्वा अनल्विधावित्यस्य प्रसज्यप्रतिषेधपरतया व्याख्यानेन स्थानिवद्भावनिषेधकत्वात्तस्य चापवादभूतप्रत्ययलोप इति सूत्रविषयपरिहारेण वाक्यार्थस्य वक्तव्यतया तत्र संबध्यमानस्यादेशपदस्य प्रत्ययलोपातिरिक्तपरताया न्याय्यत्वादर्थाधिकारानुरोधेन विधिकोटावपि तादृशस्यैवादेशस्यग्रहीतुमौचित्यात्प्रत्ययलोपविषये स्थानिवद्भावाप्रवृत्तेरित्यवधेयम्। भाष्यमते तु नेयमावश्यकी परिभाषा। तन्मते प्रत्ययलोप इति सूत्रस्य स्थानिवत्सूत्रप्राप्तस्थानिवद्भावनियामकतया वर्णाश्रये विधावनल्विधाविति निषेधेन तदप्रवृत्त्यास्य निषेधस्य व्यर्थत्वात्। नच हलादिपित्सार्वधातुकनिमित्तकतृणह इमित्येतद्विषयेऽतृणेडित्यत्र हलादिक्ङिन्निमित्तकेत्वविधायके, शास इदङ्हलोरित्येतद्विषये क्विबन्तामित्रशीरित्यत्र च हल्ङ्यादिलोपोत्तरमपृक्तलोपोत्तरं चेमागमेत्वयोः प्रवृत्तये प्रत्ययलक्षणसूत्रस्यावश्यकतया कथं तस्य नियाकत्वम्? स्थानिवद्भावेन तु न तत्र सिद्धः। विशेणतयालाश्रयणेनानल्विधाविति वाच्यम्। तत्राद्ये तृणह इमित्यत्र हल्ग्रहणाननुवृत्त्या तस्य वर्णाश्रयत्वाभावेन स्थानिवद्भावेनैव सिध्द्या तदर्थं प्रत्ययलक्षणसूत्रस्यानावश्यकत्वात्। न चैवं तृणहानि, अतृणहमित्यादावपीमागमः स्यादिति वाच्यम्। नाभ्यस्तस्याचीत्यतोऽचीति नेति चानुवर्त्याजादौ पिति सार्वधातुके इमागमो न भवतीति व्याख्यानेनादोषात्। अन्त्येऽपि शास इदित्येव सामान्यतः सूत्रं क्रियते। शास उपधाया इत्स्यात् क्ङितीति तदर्थः। ततोऽङीति। अजादौ क्ङितिचेदङ्येवेति नियमार्थमिदम्। एवं च पूर्वसूत्रस्य हलादावेव प्रवृत्तिसिद्ध्या तत्रापि हल्ग्रहणस्यानावश्यकत्वात्तस्यापि वर्णाश्रयत्वाभावेन तद्विषयेऽपि स्थनिवत्सूत्रेणैव सिद्धेरिति बोध्यम्। २१

प्रत्ययलोप इति सूत्रप्रसङ्गेन प्रत्ययत्वज्ञानादुपस्थितं प्रत्ययग्रहणपञ्चकं व्याचिख्यासुरादौ सूचीकटाहन्यायेन तदेकदेशभूतोणादिप्रत्ययविषये भगवतः पाणिनेस्सिद्धान्तबोधिकां

नन्वतः कृकमीत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह ॥

उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः ॥ कंसेस्तु न कंसो ऽनभिधानात् ॥ प्रत्ययस्य लुगित्यादौ भाष्ये स्पष्टा ॥ ण्वुल्तृचावित्यादौ भाष्ये व्युत्पन्नानीत्यपि।

---

परिभाषामवतारयति। [नन्वित्यादिना।] [कमिग्रहणेन सिद्धे इति।] विष्वग्देवयोरिति सूत्रेऽप्रत्ययग्रहणेन धातुग्रहणे तदादिविधिरित्यर्थज्ञापनादयस्कंस इत्यत्रापि कमिग्रहणेनैव सत्वसिद्धावित्यर्थः। उणादिप्रत्ययान्तत्वेन व्याकरणान्तराभिमतानि प्रातिपदिकानि वक्षसादि-वत्प्रकृतिप्रत्ययविभागशून्यानीति परिभषार्थः। अत्र मानमाह [इदमेवेति।] कंसग्रहणमेवेत्यर्थः। [कैयटादय इति।] भाष्याननुगृहीतत्वमरुचिः। ननु कसि गतिशासनयोरित्यतः पचाद्यचि नुमि निष्पन्नकंसशब्दे परे सत्वसिद्धये तत्र कंसग्रहणस्यावश्यकत्वात्कथं तज्ज्ञापकमत आह। [कंसेरिति।] कसेरिति युक्तः पाठः। कृतनुमागमस्य तस्यानुकरणं वा। भाष्यारूढत्वमस्या-दर्शयति। [प्रत्ययस्य लुगिति।] युवोरनाकावितित्वपपाठः। तत्रास्यार्थस्यास्पष्टत्वात्। तत्र हि भाष्ये कंसीयपरशव्ययोर्यञञौ लुक्चेति सूत्रविहितो लुक् प्रकृत्यवयवयोरुप्रत्ययसप्रत्य-ययोर्माभूदित्येतदर्थं प्रवृत्तं विशिष्टनिर्देशात्सिद्धमिति वार्तिकं प्रकृतपरिभाषया प्रत्याख्यातमिति बोध्यम्। [ण्वुलतृचावित्यादाविति।] तत्रहि तृचश्चकारोऽप्तृन्नित्यत्र विशेषणार्थः। अन्यथा मातरावित्यादावपि दीर्घः स्यादित्युक्त्वा नप्त्रादिग्रहणस्य नियमार्थत्वेन समाहितम्। अन्यथो-णादिनिष्पन्नेषु मात्रादिशब्देषु प्रकृतिप्रत्ययविभागाभावेनाप्तृन्नित्यत्र चकाराभावेऽपि दीर्घाप्राप्त्या तृचश्चकारस्य तत्र विशेषणार्थत्वोक्तिरसंगता स्यादिति भावः। वस्तुतो नायं भाष्यकारीयसिद्धान्त-

**इदं शाकटायनादिरीत्या। पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्॥ आयनेयीति सूत्रे भाष्ये स्फुटमेतत्॥ २२॥**

---

इत्याह। [इदं शाकटायनादिरीत्येति।] आदिना नैरुक्तसंग्रहः। नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमित्युणादयो बहुलमिति सूत्रस्थभाष्येण तन्मते सर्वेषामपि व्युत्पन्नत्वलाभादिति भावः। सिद्धान्तमाह। [पाणिनेरिति।] [अव्युत्पत्तिपक्ष एवेति।] एवेन पक्षान्तरनिरासः। [शब्देन्दुशेखरे = कृवापेत्याद्युणादिसूत्रव्याख्यारम्भे इत्यर्थः। उणादयो बहुलमिति सूत्रे इति तु न युक्तं, तत्र सूत्रेऽस्यार्थस्य शेखरेऽस्पृष्टत्वात्। अत्र मानमाह। [आयनेयीति] [सूत्रे इति।] तत्र हि भाष्ये उणादिप्रत्ययान्तत्वेन पराभिमतेषु शङ्खः शण्ठ इत्यादिप्रातिपदिकेषु खादेरीनाद्यादेशवारणाय वार्तिककृता 'तत्रोणादिप्रतिषेधः, धातोर्वा इयङ्वचना' दिति वचनद्वयमुक्तम्। तत्राद्यस्य स्पष्टोऽर्थः। द्वितीयस्य तु ऋतेरुछङित्येव सिद्धे ईयङ्विधानसामर्थ्यान्न धातुविहितप्रत्ययानामायन्नादयो भवन्तीति ज्ञाप्यत इत्यर्थः। अनन्तरं 'प्रातिपदिकविज्ञानाच्च पाणिनेस्सिद्ध' मिति तृतीयं वचनमारब्धम्। व्याख्यातं च तद्भगवता पतञ्जलिना "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानी" ति। तत्र प्रातिपदिकविज्ञानादित्यादेरुणाद्यन्तत्वेन शाकटायनाद्यभिमतप्रातिपदिक-विषये भगवतः पाणिनेराचार्यस्य प्रकृतिप्रत्ययविभागशून्यकेवलरूढप्रातिपदिकज्ञानात्तदनुरोधेनैव स्वशास्त्रप्रवृत्त्या शङ्ख इत्यादावीनाद्यादेशवारणं सिद्धमित्यर्थः। अत्र पाणिनेरित्युक्त्याऽद्यं वचनद्वयं व्याकरणान्तररीत्या प्रवृत्तमिदं च पाणिनिमतानुसारेणेति स्पष्टमेव लभ्यते। एवं च पाणिनेस्सर्वथा अव्युत्पत्तिपक्ष एवाभिमतः। अयामन्तेत्यादिसूत्राणि च व्याकरणान्तररीत्यैव। उणादयो बहुलमिति च व्याकरणान्तरव्यवस्थापकम्। उणाद्यन्ता ये शास्त्रान्तरे व्युत्पादिता-श्शब्दास्तत्र बहुलमिति वक्तव्यम्। वर्तमानाधिकारे च ते वक्तव्याः। भूतेऽपि च वक्तव्यमिति तदर्थः। एतावता च तेषां स्वशास्त्रे साधुत्वबोधनं कृतम्। अन्यथा पाणिनिशास्त्रबोधितानामेवेदानीं साधुत्वात्तेषामसाधुत्वापत्तिः। तत्र बहुलग्रहणस्य वार्तिककृता 'बाहुलकं प्रकृतेस्तनुदृष्टेः,

## ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्त-धातुत्वाद्यापत्तिरत आह ॥

---

प्रायसमुच्चयनादपि तेषाम् । कार्यसशेषविधेश्च तदुक्तम् । नैगमरूढिभवन्ति सुसाध्विति' प्रयोजनमुक्तम् । तस्यायमर्थः । शास्त्रान्तरे तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते । प्रत्यया अपि प्रायेण समुच्चिताः । न सर्वे विहिताः । तथा कार्याण्यपि सशेषाणि कृतानि, अतो-बहुलग्रहणमिति । ननु यावदुक्तमेव प्रकृतिप्रत्ययकार्यमस्तु । किं बहुलग्रहणेनेत्यत आह । नैगमेति । वैदिकानां रूढानां संज्ञाशब्दानां च प्रातिस्विकरूपेण साधुत्वबोधनस्याशक्यत्वाच्छास्त्रान्तरे प्रायस्समुच्चयनादिकृतं, तेषां सर्वेषां साधुत्वाभ्यनुज्ञानायानेनाचार्येण बहुलग्रहणं कृतमित्यर्थः । एवं च प्रागुक्तभाष्यवार्तिकग्रन्थसन्दर्भेण सर्वथा पाणिनेरव्युत्पत्तिपक्ष एवाभिमत इति लभ्यते । नन्वेवं सर्पिषा यजुषेत्यादौ कथं प्रत्ययावयवत्वनिबन्धनं षत्वमिति चेन्न । क्वचिदन्यदेवे-त्यर्थकाद्बहुलग्रहणादव्युत्पन्नत्वेऽपि प्रत्ययावयवत्वनिबन्धनकार्यप्रवृत्तिबोधनेनादोषात् । एतेन जातिव्यक्तिपक्षवदिदं पक्षद्वयमत्र शास्त्रे व्यवस्थितमिति हर्युक्तमपास्तमिति बोध्यम् । २२

प्रत्ययप्रसङ्गेन सापवादप्रत्ययग्रहणपरिभाषानिरूपणस्य प्रस्तुतत्वादिदानीं तां परिभाषा-मवतारयति । [ननु देवदत्तश्चिकीर्षतीत्यादाविति ।] अत्रादिशब्देनाङ्गसंज्ञासूत्रभाष्योक्तस्य देवदत्तो गार्ग्य इत्यस्य संग्रहः । एवमुत्तरत्रादिशब्देन यञन्तत्वप्रयुक्तप्रातिपदिकत्वसंग्रहः । सति च धातुत्वे प्रातिपदिकत्वे च सुपो धातुप्रातिपदिकयोरिति लुगापत्तिः । वाक्यसंस्कारपक्षे च देवादेस्सन्नन्तत्वप्रयुक्तद्वित्वापत्तिश्चेति भावः । ननु मूलकेनोपदंशमित्यादौ कृदन्तत्वप्रयुक्तप्राति-पदिकसंज्ञाया इव देवदत्तो गार्ग्य इत्यत्र तद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया अपि समासग्रहण-कृतनियमेन परत्वाद्बाधः स्यादिति कथं देवदत्तो गार्ग्य इत्यादौ प्रातिपदिकत्वापत्तिरिति चेन्न । अस्यामवस्थायां प्रत्ययग्रहणपरिभाषाया असत्त्वात्सर्वेषामपि समासानां प्रत्ययान्तत्वेनाप्रत्यय इति निषेधादप्राप्तप्रातिपदिकसंज्ञाविधायकतया कृतार्थस्य समासग्रहणस्य नियामकताया असंभवेन दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि प्रातिपदिकत्वापत्तेर्दुर्वारत्वात् । यदि त्वेतत्परिभाषाया अभावेऽप्यर्थ-वत्सूत्रेऽप्रत्यय इत्यत्र न विद्यते प्रत्ययो यस्मादिति तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन प्रत्ययविधा-

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

यस्मात्प्रत्ययविधिरितिसूत्रे यस्मात्प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते। गृह्यमाणउपतिष्ठत इति शेषः।

---

नावध्याद्यवयवकप्रत्ययचरमावयवकभिन्नस्यैव तत्राप्रत्ययपदेन ग्रहणात्समासस्य च तादृशाप्रत्ययत्वेन पूर्वसूत्रेण प्रातिपदिकसंज्ञायास्सिद्धतया समासग्रहणस्य नियमार्थत्वं युज्यत एवेत्युच्यते, तथापि नागेशमते तस्यार्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्योक्त्या यत्र संघाते पूर्वो भागः स्वातन्त्र्येणापि प्रयोगार्हार्थवान्, उत्तरः स्वातन्त्र्येणापि प्रयोगार्हार्थवान्, विशिष्टोऽप्यर्थवान् तस्य यदि स्यात्तर्हि समासस्यैवेत्येवं नियमपरतया देवदत्तो गार्ग्य इत्यत्र पूर्वभागस्य तादृशार्थवत्त्वसत्त्वेऽप्युत्तरस्य गार्ग्येत्यस्य तादृशस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावाद्विशिष्टस्य चार्थवत्सूत्रोक्तार्थवत्त्वाभावान्नियमेनाव्यावृत्तेः। नियम्यकोटिप्रविष्टं स्वातन्त्र्येणापि प्रयोगार्हार्थवत्त्वं च स्वप्रकृतिकप्रत्ययप्रकृत्येतदन्यतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपं विवक्षितम्। एतच्च सर्वेषामपि समासघटकभागानामपेक्षितम्। विशिष्टस्य त्वर्थवत्सूत्रोक्तं पारिष्कृतमेवार्थवत्त्वमित्युत्तरखण्डस्य गार्ग्येत्यस्य स्वप्रकृतिकसुप्रत्ययसमभिव्याहारापेक्षयैव लोकेऽर्थबोधकत्वेनोक्तरूपस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावाद्विशिष्टस्य चार्थवत्सूत्रोक्तपारिष्कृतार्थत्वाभावाच्च नियमेन न व्यावृत्तिरिति बोध्यम्। नचैवं देवदत्तो गार्ग्येति समुदायस्यार्थवत्वाभावादेव प्रातिपदिकसंज्ञाया अप्राप्तौ तस्य प्रकृतपरिभाषाफलत्वप्रतिपादनं भगवतोऽसङ्गतं स्यादिति वाच्यम्। तद्भाष्यस्य कृत्तद्धितेत्यस्यार्थवदन्तं यत्कृत्तद्धितान्तमित्यर्थ इत्याशयेन प्रवृत्ततयाऽदोषात्। अस्ति च गार्ग्येत्यस्य सूत्रद्वयसाधारणं पारिष्कृतमर्थवत्त्वम्। अत एव च सिद्धान्ते तस्य प्रातिपदिकसंज्ञा। नियम्यकोटिप्रविष्टमुक्तरूपमर्थवत्त्वं तु तस्य नेत्यन्यदेतदिति बोध्यम्। स्फुटीकृतं चैतत्कृत्तद्धितेति सूत्रे मदीये गुरुप्रसादशेषे। प्रकृतपरिभाषासिद्धिप्रकारं दर्शयति। [यस्मात्प्रत्ययविधिरित्यादिना।] विभक्तस्यास्य सूत्रस्य साकाङ्क्षत्वादाकाङ्क्षापूरणायाह। [गृह्यमाण इति।] तथाच प्रत्यये गृह्यमाणे

**तेन तदाद्यन्तांशः सिद्धः। तदन्तांशस्तु येन विधिरित्यनेन सिद्धः स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्वे॥**

---

यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठत इति वाक्यार्थस्संपद्यते। [तेनेति।] योगविभागेनेत्यर्थः। [ तदाद्यन्तांश इति।] परिभाषाघटकतदादेरित्यन्तोंऽशोऽवयवस्सिद्ध इत्यर्थः क्वचित्तदाद्यंश-इति पाठः। तस्याप्ययमेवार्थः। अवशिष्टांशलाभोपायमाह। [तदन्तांशस्त्विति।] [येन विधिरिति सूत्रेणेति।] प्रमाणान्तरसिद्धस्यापूर्वत्वकल्पनाया अयुक्तत्वादिति भावः। अत-एवोगितश्चेति सूत्रे तदन्तांशविकलैवैषा परिभाषा भाष्ये पठितेति बोध्यम्। ननु ङ्याप्प्राति-पदिकादित्यादौ विशेष्यानुपादानात्कथं तेन तल्लाभोऽत आह। [स चेति।] तदन्तविधिरित्यर्थः। शब्दानुशासनप्रस्तावादाह। [शब्दस्वरूपमिति।] [विशेष्यान्तरासत्त्व इति।] तेन यञिञोश्चेत्यादौ प्रातिपदिकरूपविशेष्यान्तरसद्भावान्न शब्दस्वरूपविशेष्याध्याहारमूलकस्तदन्तविधिः। किन्तु तद्विशेषणत्वेनैक एव तदन्तविधिरिति भावः। क्वचित्तु तत्सत्त्वेऽपि नित्यं समास इति सूत्रस्थानुत्तरपदग्रहणाज्ज्ञापकाल्लक्ष्यानुरोधाच्च शब्दस्वरूपं विशेष्यमध्याहृत्य तदन्तविधिः। अत एव वनो र चेत्यादावध्याहृतं शब्दस्वरूपं विशेष्यमादायैकः, प्रातिपदिकरूपं विशेष्यमादाया-परश्चेति तदन्तविधिद्वयेन वन्नन्तात्तदन्तादित्यर्थलाभः तेनातिधीवरीत्यादिसिद्धिरित्यन्यत्र विस्तरः। ननु ङ्याप्प्रातिपदिकादित्यादावनया परिभाषयोपस्थितं तदाद्यंशमेव विशेष्यतया स्वीकृत्य ङ्यापोस्तद्विशेषणत्वेनैव तदन्तविधिसंभवाच्छब्दरूपविशेष्याध्याहारो विफल एवेति चेन्न। उपस्थिततदादिशब्दस्य बहुव्रीहित्वेन विशेष्यान्तरसाकाङ्क्षतया न ह्युपाधेरुपाधिर्भवतीति न्यायेन ङ्यापोस्तद्विशेषणत्वासंभवात्। किञ्चाङ्गसंज्ञाबोधकवाक्यान्तरे तदादिशब्दस्य प्रत्ययप्राग्वर्तिबोधकतया प्रकृतेऽप्यर्थाधिकारानुरोधाद्धर्मिग्राहकसाजात्येन वा तथैव न्याय्यत्वात्। येन विधिरित्यस्य च यत्र विशेष्यविशेषणयोस्तदन्तविधेः प्राक्तदुत्तरं वा सामानाधिकरण्यं, तत्रैव प्रवृत्त्या प्रकृते च तयोस्तदन्तविधेः प्राक्तदुत्तरं वा सामानाधिकरण्यासंभवेन तद्विशेषणतया तदन्तविधेर्दुर्वचत्वात्। न चाध्याहृतं शब्दस्वरूपं विशेष्यमादाय तदन्तविधिस्वीकारेऽपि प्रत्ययग्रहणेषूपस्थितस्य तदादिशब्दस्य प्रत्ययप्राग्वर्तिबोधकतया ङ्यन्तं यच्छब्दस्वरूपं तदादीत्युक्तावनन्वयापत्तिरिति वाच्यम्।

# यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेष-

---

तदन्तविध्युत्तरमगत्या तत्रोपस्थितस्य तदादिशब्दस्य प्रत्ययविशिष्टपरत्वाश्रयणेनादोषात्। उपस्थित-तदादेर्विशेष्यत्वे तु तदन्तविधेरेवासंभव इति बोध्यम्। यद्यपि हल्ङ्यादिसूत्रशेखरे हलन्तादिति प्रतीकमुपादाय "सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्स विहितस्तदादेरित्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः। एवं ङ्याबंशे द्वेधा तदुपस्थित्या ङ्याबन्तान्तादित्यर्थो द्रष्टव्य" इत्युक्तम्। तेन च ङ्याब्ग्रहणेनोपस्थिततदादेर्विशेष्यत्वेनैकः, सुतिसीत्यनेनोपस्थिततदादेर्विशेष्यत्वेनापरस्तदन्त-विधिरित्यर्थ आपाततः प्रतीयते, तथापि तस्यायमाशयः। तत्र सुतिसीनां पञ्चम्यन्तात्परत्वेनो-पादानात्प्रत्ययग्रहणे चापञ्चम्या इति परिभाषया तदन्तांशनिषेधात्तदाद्यंशमात्रोपस्थितौ तद्विशेष्यतया तदन्तविधौ हलन्तादित्यर्थलाभः। तत्र तदादिपदस्य प्रत्ययप्राग्वर्तिपरत्वेऽपि न सामानाधि-करण्यानुपपत्तिः। ङ्याबंशे तु प्रत्ययग्रहणपरिभाषया तदादितदन्तांशयोरुभयोरप्युपस्थितिः। तत्र तदन्तांशः शब्दस्वरूपविशेष्याध्याहारमूलकः। एवं च ङ्याबन्तादित्यर्थलाभः। तस्य च सुतिसीत्यनेनोपस्थिततदादेर्विशेष्यतयाऽपरस्तदन्तविधिः। अत्र सुतिसीत्यनेनोपस्थिततदादिरूप-विशेष्यान्तरसद्भावेऽपि लक्ष्यानुरोधाद्भनो रचेत्यादिवच्छब्दस्वरूपविशेष्याध्याहारमूलकस्तदन्त-विधिरिति। तत्रोपस्थितस्येत्यस्य प्रत्ययग्रहणपरिभाषयोपस्थितस्येत्यर्थः द्वेधा तदुपस्थित्येत्यस्य द्विप्रकारेण प्रत्ययग्रहणपरिभाषोपस्थित्येत्यर्थः। तत्सूत्रस्थगुरुप्रसादशेषग्रन्थस्तु मतान्तरपर इति विभावनीयम्। एतेनोपस्थिततदादिरूपशब्दस्वरूपं विशेष्यमादाय तदन्तविधिरितिवदन्त-औत्तराहाः परास्ताः। ननु न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्यय इति न्यायेन प्रकृतिमन्तरा केवलप्रत्ययस्य प्रयोगासंभवादर्थापत्तिमूलकाक्षेपेण प्रत्ययग्रहणस्थलेषु स्वप्रकृत्यवयवक-समुदायलाभात्तद्विशेषणत्वेन तदन्तविधेस्सुलभत्वेन वृथैवायं योगविभागादिपरिक्लेश इति प्राचीनोक्तिं खण्डयति। [यत्त्विति।] [समुदायाक्षेपादिति।] नन्वेवं सनाद्यन्ता इत्यादौ सन्नन्तो यस्सन्प्रकृत्यवयवकसमुदाय इत्यर्थे देवदत्तश्चिकीर्षतीत्यस्यापि तदवयवकत्वेन सन्नन्तत्वाद्धातुत्वापत्ति-स्तदवस्थैव। न च स्वप्रकृत्याद्यवयवकसमुदायाक्षेपान्न दोष इति वाच्यम्। श्नमकज्बहुषु स्वप्रकृत्याद्यवयवकत्वस्य व्यभिचरिततया प्रत्ययेन तदाक्षेपासंभवादिति चेन्न। स्वप्रकृतितत्प्र-कृतिकप्रत्ययैतदुभयपर्याप्तसमुदायस्याक्षेपेणादोषात्। नचैवमपि पचतकीत्यादौ तिङश्चेति

णत्वेन तदन्तविधिरिति, तन्न। इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासंभवात्॥ यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदादीत्यन्तांशमात्रोप-

---

विधीयमानस्याकचः समुदायप्रकृतिकत्वेऽपि तिङ्प्रत्ययप्रकृतिभूतधातुप्रकृतिकत्वाभावादकज्घटित-समुदायस्य तिङ्प्रत्ययेनाक्षेपासंभवात्सुतिङन्तमिति पदत्वानापत्तिरिति वाच्यम्। सुप्तिङन्तमित्यत्र तिङन्तो यस्तिङ्प्रकृतितत्प्रकृतिकप्रत्ययैतदुभयपर्याप्तसमुदाय इत्यर्थात्पचतीत्यादौ दृष्टायास्तादृश-समुदायपर्याप्तेस्तन्मध्यपतितन्यायेनाकज्विशिष्टेऽतिदेशेन तत्र पदसंज्ञायाः सिद्धत्वादिति बोध्यम्। [आक्षेपासंभवादिति।] यदि प्रत्ययः स्वप्रकृत्यव्यभिचारि स्यात्तदोक्तरूपसमुदायाक्षेपेण तदादित-दन्तांशयोरुभयोरपि लाभः स्यात्। परं त्वियानित्यादौ प्रकृतिमन्तरापि प्रत्ययस्य संभवान्न तेन निरुक्तसमुदायाक्षेपसंभव इति भावः। किञ्च प्रत्ययानां प्रकृतिपरत्वेनैव विधानात्प्रत्ययस्योत्पत्तौ प्रकृत्यपेक्षासत्त्वेऽपि तज्ज्ञाने तदपेक्षत्वाभावेन कृत्तद्धितेत्यादिशास्त्रेषु कृत्त्वादिज्ञानस्यैवापेक्षितत्वेन तत्र तेन तदाक्षेपासंभवः। यथाकथंचिदाक्षिप्तस्य वा शाब्दान्वयित्वासंभव इति बोध्यम्। एतेन प्रत्ययस्य स्वप्रकृत्यव्यभिचरितत्वमस्त्येव। न हीयानित्यादावपि प्रकृतिमन्तरोत्पन्नस्सः। उत्पन्ने तस्मिन् शास्त्रवशात्प्रकृत्यदर्शनेऽपि न तस्य तद्व्यभिचरितत्वम्। तस्मादियानित्यादौ प्रकृतेरभावेऽपि प्रत्ययेनैव भूतपूर्वप्रकृतेरनुमानान्न व्यभिचार इति कैश्चिदुक्तमपास्तम्। अत्र तदादितदन्तांशयोरुक्तदिशाऽसन्नियुक्तत्वेन निष्पत्तेः फलमाह। [यत्रेति।] सुपि च, स्यतासीलृलुटोरित्यादावित्यर्थः। [तदादीत्यंशमात्रेति।] मात्रपदेन तदन्तांशव्यवच्छेदः। तादृशे विषये सुपि परे लृलुटोः परयोरित्यादिरीत्यार्थे कस्मादित्यवध्याकाङ्क्षाया नियमेन सत्त्वा-दुपस्थिताङ्गधात्वादेरवधित्वेनान्वयात्प्रत्ययस्य पञ्चम्यन्तात्परत्वेन प्रत्ययग्रहणे चापञ्चम्या इति निषेधात्तदन्तांशानुपस्थितिः। किन्तु तदाद्यंशमात्रोपस्थितिः। तयोरसन्नियुक्तत्वेन तदंशानुपस्थितौ मानाभावादिति भावः। यद्यप्यत्र तदाद्यंशोपस्थितौ न फलम्। अङ्गस्य धातोरित्यनयोस्सत्त्वेन तयोस्तदादित्वाव्यभिचारात्। तथाप्यचः कर्तृयकीत्यादौ तदुपस्थित्या तेन विधीयमानमाद्यु-दात्तत्वं यक्प्रत्ययतदादेरेव नान्यस्येति न केदारो लूयत इत्यादौ ककारोत्तरैकारस्य तदापत्तिः।

स्थितिरिति अङ्गस्येति सूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः परन्तु तत्र पञ्चम्यन्तता। अत एवैङ्ह्रस्वादितिसूत्रे एङन्तादित्यर्थलाभः। अस्याः परि-

---

एवमान्महतस्समानाधिकरणजातीययोरित्यत्र तदुपस्थितौ तद्विशेषणत्वेन महच्छब्दस्य तदन्तविधावतिमहाजातीय इत्यत्रात्वसिद्धिरिति बोध्यम्। [अङ्गस्येतीति।] तत्र हि भाष्ये अङ्गाधिकारप्रत्याख्यानाय स्वीकृते प्रत्यये इति न्यासे प्राकरोदित्यादावुपसर्गात्पूर्वमडाटौ प्राप्नुत इत्याशङ्क्य 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीत्येवमुपसर्गात्पूर्वमडाटौ न भविष्यतः' इति समाहितम्। कैयटेन च "यत्र प्रत्ययो निमित्तत्वेनोपादीयते, तत्र पूर्वः कार्यित्वेन गृह्यमाणो यस्माद्विहितस्तदादिर्गृह्यत" इत्युक्तम्। उद्योतकृता च तत्र पूर्व इतीति कैयटप्रतीकमुपादाय प्रत्ययविधौ चापञ्चम्या इति निषेधात्तदन्तविधेरभाव इति भाव इत्युक्तम्। अनेन च ग्रन्थसंदर्भेणोक्तस्थले वक्ष्यमाणपरिभाषया तदन्तविधेर्निषेधात्तदाद्यंशमात्रोपस्थितिरिति स्पष्टं लभ्यते। येन विधिरिति सूत्रे उद्योते च स्फुटमेतदिति बोध्यम्। उक्तरीत्यान्यत्रापि तदादीत्यंशमात्रोपस्थितिरित्याह। [एवमिति।] [तदाद्यन्तांशोपस्थितिरिति।] वक्ष्यमाणपरिभाषया तदन्तांशनिषेधात्परिभाषाघटकतदादेरित्यन्तांशमात्रस्यैवोपस्थितिरित्यर्थः। एवमुभयत्र तन्मात्रोपस्थितेस्तुल्यत्वेऽपि पूर्वापेक्षयात्र कंचिद्विशेषमाह। [परं त्विति।] [पञ्चम्यन्ततेति।] एङ्ह्रस्वात्, रदाभ्यमित्यादिपञ्चम्यन्तेन सामानाधिकरण्यान्वयानुरोधादिति भावः। सुपि चेत्यादौ तु षष्ठ्यन्तत्वमेवेति बोध्यम्। अत्र तदाद्यंशोपस्थितावुपस्थितस्य च तस्य पञ्चम्यन्तत्वे च फलं दर्शयति। [अत एवेति।] [अर्थलाभ इति।] अन्यथा विशेष्याभावाद्विशेष्यविशेषणयोः सामानाधिकरण्याभावाच्च तदन्तविधिर्न स्यादिति भावः। सनाद्यन्ता धातव इत्यत्र संज्ञाविधाविति निषेधेनानया परिभाषया तदन्तांशस्यानुपस्थितौ तदाद्यंशमात्रस्यैवोपस्थित्या प्रागुक्तं देवदत्तश्चिकीर्षतीति प्रयोजनं न संपूर्णपरिभाषायाः, किन्तु तदादेरित्यन्तांशस्यैवेत्याशयेन संपूर्णपरिभाषायाः

**भाषायाः प्रयोजनान्तरं येन विधिरित्यत्र भाष्य-उक्तं परमगार्ग्यायण इति, परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न विशिष्टात्। निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव।**

---

प्रयोजनमाह। [अस्याः परिभाषाया इति।] समुदितायाा इत्यर्थः। [प्रयोजनान्तरमिति।] प्रागुक्तप्रयोजनापेक्षयान्यत्प्रयोजनमित्यर्थः। [भाष्ये उक्तमिति।] तत्र हि पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते, तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमित्यर्थकस्य तत्सूत्रप्रयोजनप्रतिपादनपरस्य प्रत्ययग्रहणं चापञ्चम्या इति वार्तिकस्य गार्ग्यायणः परमगार्ग्यायण-इति चोदाहरणं दत्तम्। एवं च यञिञोश्चेत्यादिप्रत्ययग्रहणेषु येन विधिरित्यनेन सिद्ध एव तदन्तांशोऽत्र परिभाषायामनूद्यते। तत्र यस्मात्प्रत्ययविधिस्तदादेरिति नियमबोधनायेति बोध्यम्। [परमगार्ग्यायण इति।] परमश्चासौ गार्ग्यश्च, तस्यापत्यं परमगार्ग्यायण इत्यर्थः। यञिञोश्चेत्यत्रा-नया परिभाषया तदादितदन्तांशयोरुभयोरप्युपस्थित्या परमगार्ग्यशब्दे गार्ग्यशब्दस्यैव यञन्ततदा-दित्वेन तत एव प्रत्ययो, न विशिष्टात्। तदाद्यंशानुपस्थितौ तु परमगार्ग्यशब्दस्यापि यञन्तत्वेन कदाचित्ततोऽपि फकि पारमगार्ग्यायण इत्यपि स्यादिति भावः। तदेतदाह। [गार्ग्यशब्दादेव प्रत्ययो न विशिष्टादिति।] ननु परमत्वविशिष्टगार्ग्यशब्दार्थस्यापत्येन योगाद्यदर्थस्यापत्येन योगस्तस्मादेव प्रत्ययोत्पत्तेर्न्याय्यतया कथमेकदेशात्प्रत्यय इति चेन्न। विशिष्टस्यापत्येन योगे विशेष्ये तदयोगस्य वक्तुमशक्यतया केवलगार्ग्यशब्दार्थस्याप्यपत्येन योगस्य सुवचतया ततः प्रत्ययोत्पत्तेर्बाधकाभावात्। ननु विशिष्टार्थस्य तद्धितार्थेनापत्येन योगात्तद्धितवृत्तिप्रयोजकै-कार्थीभावस्य विशिष्ट एव कल्पनीयतया केवलगार्ग्यशब्दे तादृशसामर्थ्यस्यापर्याप्तत्वात्कथं ततः प्रत्ययोत्पत्तिरत आह। [निष्कृष्येति।] समुदायात्पृथक्कृत्येत्यर्थः। [तावन्मात्रेणेति।] तत्पर्याप्तेत्यर्थः। [वृत्तिर्भवत्येवेति।] निष्कृष्यैकार्थीभाव एव वृत्तौ निमित्तमित्यत्र मानाभावा-द्विशिष्टैकार्थीभावेऽवयवेनापि तस्य सत्त्वादिति भावः। अत एव तद्धितार्थेत्यनेनोत्तरपदे परे समासविधानं सङ्गच्छते। अन्यथा तुल्ययुक्त्या समासेऽपि तथात्वापत्तावुत्तरपदे परतस्समास-

अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः। प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्ययग्रहण इति उगितश्चेति सूत्रे भाष्ये॥ इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥

---

विधानमनुपपन्नं स्यात्। पञ्चगवधन इत्यादिषु त्रिपदबहुव्रीहिसमासप्रयोजकैकार्थीभावमादायैवोत्तरपदनिमित्तकावान्तरतत्पुरुषस्य प्रवृत्त्या तत्रावयवेषु पृथगेकार्थीभावस्यानङ्गीकारादिति बोध्यम्। [अत्र चेति।] उक्तार्थे इत्यर्थः। [इदं भाष्यमेवेति।] प्रागुक्तं येन विधिरिति सूत्रस्थं भाष्यमित्यर्थः। नन्वेवं परमगार्ग्यायण इति समुदायस्य तद्धितान्तत्वाभावात्फगन्तस्य समासत्वाभावाच्च प्रातिपदिकत्वं दुर्लभमिति चेन्न। विशिष्टस्य प्रत्ययान्तभिन्नत्वेनार्थवत्सूत्रेण तल्लाभसंभवात्। न च तत्र गार्ग्येत्यस्य षष्ठ्यन्तत्वाभावात्कथं ततः प्रत्ययोत्पत्तिरिति वाच्यम्। यञिञोश्चेत्यत्र प्रातिपदिकादित्यधिकारेण यञन्तात्प्रातिपदिकादित्येवार्थलाभात्तदन्तस्य षष्ठ्यन्ततायाा अनावश्यकत्वात्। स च जायमानः स्वार्थे परिपूर्णं पदमिति न्यायेन सुपा व्यवहितस्सन्भवतीत्यन्यदिति बोध्यम्। नन्वेतत्परिभाषाभ्युपगमे बहवो गोमन्तो यस्यां नगर्यां सा बहुगोमती नगरीत्यत्रोगितश्चेति ङीप्, बहुगोमान्ग्राम इत्यत्रोगिदचामिति नुम् च न स्यात्। विशिष्टस्योगिदन्तत्वाभावादित्यत आह। [प्रत्ययमात्रग्रहण इति। भाष्ये इति।] तत्र हि निर्गोमतीत्यादौ प्रकृतपरिभाषया ङीपोऽप्रवृत्तिमाशङ्क्य प्रत्ययग्रहण इत्युच्यते, न चेदं प्रत्ययग्रहणं, वर्णोऽप्युगित्, प्रत्ययोऽप्युगित् प्रातिपदिकमप्युगिदित्युक्तम्। तेन निरुक्तार्थः स्पष्ट एवेति बोध्यम्। ननु सन्नन्तेशेखरे प्रतीषिषतीत्यत्राज्झनेति दीर्घमाशङ्क्यागन्तूनामन्ते निवेश इति न्यायेनोत्तरखण्डस्य द्वित्वनिष्पन्नतया तस्य प्रत्ययाधिकारे पाठाभावेन प्रत्ययत्वाभावात्पूर्वस्य तन्निरूपिताङ्गत्वाप्रसक्त्या न दीर्घ इति समाहितम्। एवं च तद्रीत्या सन्त्वस्य प्रत्ययाप्रत्ययसाधारणतया सनाद्यन्ता इत्यत्र प्रकृतपरिभाषाप्रवृत्तेर्वक्तुमशक्यतया देवदत्तश्चिकीर्षतीत्यादौ दोषो दुर्वार एवेति चेन्मैवम्। प्रत्ययमात्रग्रहण इत्यस्य यत्र प्रत्ययस्यैव बोधकं पदमुपादीयते, तत्रैवास्याः परिभाषायाः प्रवृत्तिरित्याशयेन सनाद्यन्ता इत्यत्र क्यजादिना साहचर्यात्सनः प्रत्ययस्यैव ग्रहणेन प्रकृतपरिभाषाप्रवृत्तेस्सुवचत्वात्। चन्द्रिकाकृतस्तु प्रतीषिषतीत्यत्रोत्तरखण्डभूतस्यापि सनः प्रत्ययत्वमस्तीत्येव

युक्तम्। षाष्ठद्वित्वस्य द्विःप्रयोगरूपतया द्वित्वनिष्पन्नस्यापि प्रत्ययाधिकारपठितत्वप्रत्यभिज्ञाने बाधकाभावात्। कथमन्यथा दयतेर्दिगीति सूत्रे प्रामाण्याभ्युपगतो धातुद्वित्वेषूत्तरखण्डस्यैव धातुत्वमिति तनादिशेषस्थशेखरोक्तसिद्धान्तः संगच्छेत? उत्तरखण्डस्य प्रत्ययप्राग्वर्तित्वेन क्रियावाचित्वेऽपि भ्वादिपाठाभावेन धातुत्वस्य दुर्वचत्वात्। किञ्च प्रत्ययत्वाभावे सन्प्रत्ययान्तत्वप्रयुक्तधातुत्वप्रयुक्तो लडादिः, क्विपि प्रतीषीरित्यादौ दीर्घश्च दुर्लभः। अपि च सन्यत इत्यत्र प्रत्ययस्यैव ग्रहणमुत्तरत्र तस्यैव संज्ञादिति वक्तुं युक्तम्। अन्यथा सनोतेर्लिडुत्तमैकवचनेससनेत्यत्रापि तत्प्रवृत्तिप्रसङ्गात्। तस्माद्युक्तिविरोधात्स्वोक्तिविरोधाल्लक्ष्यविसंवादाच्च चिन्त्य एवायं सन्नन्तशेखर इति वदन्ति। ग्रन्थतत्त्वविदस्तु प्रतीषिषतीत्यादावुत्तरखण्डस्य प्रत्ययत्वं वक्तुमशक्यम्। प्रत्यय इत्यस्य संज्ञाधिकारत्वेन धातोः कर्मण इत्यादिष्वधिकृतस्य तस्य धातोः परत्वेन विहितसनादीनां वाक्यभेदेन प्रत्ययसंज्ञाविधायकतया द्वितीयोच्चारणविषयस्यागन्तुकस्योत्तरखण्डस्य प्रत्ययसंज्ञाप्रवृत्तिकालेऽभावेन तस्य प्रत्ययसंज्ञाया विधातुमशक्यत्वात्। न च द्वित्वोत्तरं पुनस्तस्य प्रत्ययसंज्ञास्त्विति वाच्यम्। तस्य प्रत्ययाधिकारबहिर्भूतसन्यङोरित्येतच्छास्त्रविधेयत्वेन तत्र प्रत्ययसंज्ञायाः प्रत्यय इत्यनेन विधातुमशक्यत्वात्। न च षाष्ठद्वित्वस्य द्विःप्रयोगरूपतयोत्तरखण्डेऽपि प्रत्ययत्वप्रत्यभिज्ञा सुलभेति वाच्यम्। प्रत्याहाराद्यवर्णेषु णकारादिचिह्नेनाक्षरसमाम्नायिकत्वप्रत्यभिज्ञानवदत्र प्रत्ययत्वप्रत्यभिज्ञाजनकधात्वव्यवहितपरत्वादिरूपचिह्नाभावेन तत्रागन्तुकत्वज्ञानेन च तस्या दुर्लभत्वात्। प्रत्यभिज्ञाया भ्रमात्मिकाया अपि सत्त्वेन सति विरोधे तन्मात्रस्य कार्यसाधकत्वाभावाच्च। अत एव सिषेचेत्यादौ द्वित्वोत्तरं सेचेत्यादेर्न पदत्वम्। उत्तरखण्डे आगन्तुकत्वज्ञानेन प्रत्ययविधानावधित्वरूपप्रकृतित्वप्रत्यभिज्ञाया अभावेन तद्विशिष्टस्य तिङन्तत्वाभावात्। अत एवैकाचो द्वे इति सूत्रे भाष्ये द्विःप्रयोगो द्विर्वचनमिति पक्षे सिषेच, सुष्वापेत्यादावुत्तरखण्डविशिष्टस्य तिङन्तत्वात्पदत्वे सात्पदाद्योरिति षत्वनिषेधमाशङ्क्य 'तावेव सुप्तिङौ यौ ततः परौ, सैव च प्रकृतिराद्या। आदिग्रहणं च कृतम्। समुदायपदत्वमेतेने' ति समाहितम्। यौ ततो विधानावधेः परौ, तावेवेमौ सुप्तिङौ। यतो विहितौ सा प्रकृतिराद्यैव। न द्वितीयोच्चारणविषया। आगन्तूनामन्ते निवेश इति न्यायेन द्वितीयोच्चारणस्यैव विधेयत्वाद्द्वितीयोच्चारणस्य प्रत्ययोत्पत्तिकालेऽभावात् पदसंज्ञाविधावादिग्रहणस्य सत्त्वेन तिङ् यस्माद्विहितस्तदादितदन्तस्यैव पदसंज्ञाविधानात्सिषेचेत्यादिसमुदायस्यैव पदत्वं, नतु सेचेत्यादेरिति तदर्थः। यदि प्रतीषिषतीत्यादावुत्तरखण्डस्य प्रत्ययत्वप्रत्यभिज्ञा स्यात्तदा सिषेचेत्यादावुत्तरखण्डे

प्रकृतित्वप्रत्यभिज्ञाया अपि सुवचतया तदसङ्गतिः स्पष्टैव। न च प्रतीषिषतीत्यादावुत्तरखण्डस्य प्रत्ययत्वाभावेऽभ्यासस्य सन्यत इतीत्त्वानापत्तिः। प्रत्यासत्त्या सन्निमित्तकाङ्गावयवाभ्यासस्य तेनेत्वविधानादिति वाच्यम्। तस्येत्संज्ञकनकारोपलक्षिते सशब्दे परेऽङ्गावयवाभ्यासस्यात इत्वमित्यर्थस्यान्यत्र ग्रन्थकृतोक्तत्वेन वस्तुतस्तादृशसशब्दस्य प्रत्ययत्वेऽपि तत्त्वेन तत्र तस्यानुपादानात्तादृशप्रत्यासत्तेरभावात्तिङ्निरूपिताङ्गत्वमादाय तत्रेत्वप्रवृत्तेस्सुलभत्वात्। श्रुत्या सशब्दत्वस्य षाष्ठद्वित्वस्य द्विःप्रयोगरूपतया इत्संज्ञकनकारोपलक्षितत्वप्रत्यभिज्ञायाश्चोत्तरखण्डे सत्त्वात्। अत एव स्तौतिण्योरेवेति सूत्रे 'सन एव द्विर्वचनविधाना' दिति कैयटप्रतीकमुपादाय स्थाने द्विर्वचन इदम्। तदा हि स्थानिवत्त्वेन समुदायस्य सन्त्वम्। द्विःप्रयोगे तु न दोषः। उत्तरखण्डस्य सन्त्वात्। अत एवाटिटदित्यादावुत्तरखण्डे णिलोपसिद्धिरित्युद्योतग्रन्थस्सङ्गच्छते। ससनेत्यादौ तु नातिप्रसङ्गः। इत्संज्ञकनकारोपलक्षितसशब्दपरत्वस्य तत्राभावात्। नचैवं पिपठिषतीत्यादावुत्तरखण्डादिना व्यवधानादित्वानापत्तिः। सूत्रं तु प्रतीषिषतीत्यादौ चरितार्थमिति वाच्यम्। तत्र निर्दिष्टपरिभाषयोत्तरखण्डातिरिक्तव्यधानराहित्यस्यैव बोधनेनादोषात्। अत एव तत्राकारग्रहणं चरितार्थम्। तद्धि जुगुक्षतीत्यादावित्ववारणाय। अन्यथा तत्रोत्तरखण्डेन व्यवधानाद्वित्वस्य प्राप्तेरेवाभावात्तद्व्यर्थमेव स्यात्। भ्राजभासेति सूत्रे काण्यादीनां वेति वार्तिकस्याचकणदिति भाष्योदाहरणमप्युक्तार्थे मानमिति बोध्यम्। नच यत्किञ्चिन्निरूपिताङ्गावयवाभ्यासस्यात इत्वमित्यर्थे यंयम्यतेस्सनि यंयमिषतीत्यादौ यङ्निरूपितं तिङ्निरूपितं वाङ्गत्वमादायेत्वापत्तिरिति वाच्यम्। प्रत्यासत्त्या सन्निरूपिताभ्यासस्य तेनेत्वविधानेनादोषात्। किञ्च सनीत्यस्याकारविशेषणत्वेन तस्योत्तरखण्डातिरिक्तनुका व्यवधानेनादोषात्। नचैवमप्युत्तरखण्डस्य प्रत्ययत्वाभावे विशिष्टस्य प्रत्ययान्तत्वनिबन्धनधातुत्वानापत्तिः। ततश्च धातोर्लडाद्यनापत्तिः। क्विपि प्रतीषीरित्यादौ धातुत्वप्रयुक्तदीर्घानापत्तिः। अप्रत्ययादित्यनेन प्रत्ययान्तत्वनिबन्धनाकारप्रत्ययस्याप्यनापत्तिरिति वाच्यम्। सन्यङोरित्यत्र धातोरित्यस्यानुवृत्त्या द्वित्वात्पूर्वं सनाद्यन्ता इति धातुसंज्ञाप्रवृत्तेरावश्यकतया द्वित्वोत्तरं भूतपूर्वधातुत्वमादाय धातुत्वप्रयुक्तलडादेः, भूतपूर्वप्रत्ययान्तत्वमादायाप्रत्ययादित्यस्य च प्रवृत्तेस्सुवचत्वात्। अत एव स्तौतिण्योरेवेति सूत्रस्थः अत्रेषिषति प्रतीषिषतीत्यादि भाष्यप्रयोगः संगच्छते। नच प्रतीषिषतीत्यादावभ्यासस्य निरर्थकत्वात्कथं तस्यापि प्रत्ययत्वमिति वाच्यम्। द्वित्वोत्तरं तस्य निरर्थकत्वेऽपि ततः पूर्वमर्थवत्त्वे बाधकाभावेन तदानीमेव प्रत्ययसंज्ञाप्रवृत्त्या द्वित्वोत्तरं तत्रागन्तुकत्वज्ञानाभावेन धात्वव्यवहितपरत्वेन धातुविहितत्वज्ञानेन च तत्र प्रत्ययत्वप्रत्यभिज्ञायास्सुवचत्वात्।

नच प्रतीषिषतीत्यादावुत्तरखण्डस्य प्रत्ययत्वाभावे प्रत्ययावयवत्वनिबन्धनषत्वानापत्तिरिति वाच्यम्। पूर्वत्रासिद्धीयमद्विर्वचन इति षत्वोत्तरमेव द्वित्वप्रवृत्त्या दोषाभावात्। किञ्च तुष्यतु दुर्जन इति न्यायेन द्वितीयसशब्दस्य प्रत्ययत्वाङ्गीकारेऽपि सन्यङोरित्येतद्विधिविधेयस्यागन्तुकस्य तस्येण्धातोरविधानात्तदादित्वस्याभ्यासान्तेऽभावात्तस्याङ्गसंज्ञाया वक्तुमशक्यतया तस्याङ्गत्वमूरीकृत्य साहचर्यादिना दीर्घवारणप्रयासस्य सुतरामसङ्गतत्वात्। धातुत्वं तूत्तरखण्डस्यैव। लोके केवलस्याभ्यासस्यार्थबोधाभावात्। नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकार इत्यत्रानभ्यासविकार इति निषेधेनाभ्यासस्य निरर्थकतायाः स्फुटं प्रतीत्या चाभ्यासस्य क्रियावाचकत्वनिबन्धनधातुत्वस्य वक्तुमशक्यत्वात्। उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्तिनः केवलस्याप्यन्यत्रार्थबोधकताया दृष्टत्वाद्धिप्सति पेचतुरित्यादावभ्यासाभावेऽप्यर्थबोधदर्शनेन च क्रियावाचकत्वनिबन्धनधातुत्वस्य सुवचत्वात्। नच तस्य क्रियावाचकत्वेऽपि भ्वादिगणपठितत्वाभावात्कथं धातुत्वमिति वाच्यम्। भू इत्यानुपूर्वीविशेषाणामेव तत्र पाठेन तादृशानुपूर्व्यास्तत्रापि सत्त्वात्। अत एव भूवादय इति सूत्रे क्रियावाचिन इत्यस्याभावे विकल्पार्थकवाशब्दस्य धातुत्वापादनं ग्रन्थकृतां संगच्छते। एवं च धातुत्वप्रत्ययत्वयोरीदृशात्यन्तवैलक्षण्यसत्त्वादुत्तरखण्डस्य प्रत्ययत्वाभावप्रतिपादनपरसन्नन्तशेखरग्रन्थस्य, उत्तरखण्डस्य धातुत्वं सिद्धान्तयतस्तनादिशेखरग्रन्थस्य च न परस्परविरोधः। ननु पपाचेत्यादावभ्यासस्य निरर्थकत्वादुत्तरखण्डस्यार्थवत्त्वेऽप्येकाचो द्वे इति सूत्रभाष्योक्तरीत्या प्रकृतित्वाभावात्प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गः। किञ्च पेचतुरित्यादौ तिङ्प्रत्ययप्रकृतेर्लुप्ततया विशिष्टस्य तिङन्तत्वनिबन्धनपदत्वानापत्तिरिति चेन्मैवम्। व्युत्पत्तीनामनुभवानुरोधितया पपाचेत्याद्यनुरोधात्प्रत्ययानां स्वप्रकृतितत्कर्मकद्विरुच्चारणविषयैतदन्यतरार्थान्वितस्वार्थबोधकत्वमितिनियमाङ्गीकारेणाद्यदोषस्य सुवारत्वात्। पेचतुरित्यादावभ्यासलोपात्पूर्वं प्रवृत्तायाः पदसंज्ञायाः अभ्यासलोपोत्तरमेकदेशविकृतन्यायेन सुलभतयाऽदोषात्। यत्तु णिजन्ते शब्दरत्ने 'वस्तुतस्तु आटिटदित्यादौ णिज्निमित्ताङ्गसंज्ञा प्रथमणिचः प्राचीनस्यैव। नतु तद्विशिष्टस्ये' त्याद्यिमनोरमाग्रन्थव्याख्यावसरे शब्दरत्नकृता "परे त्वन्तरङ्गस्य प्रथमोपस्थितस्याभ्यासावयवणिचः आनर्थक्यात्प्रत्ययत्वाभावेन तमादायाङ्गत्वं दुर्लभम्। किञ्चैवं प्रतीषिषतीत्यादावित्वानापत्तिः। प्रत्यासत्त्या सन्निमित्तकाङ्गावयवाभ्यासस्यातस्तेनेत्वविधानात्। अज्झनेति दीर्घस्तु न। हनादिसाहचर्येणार्थवदजन्ताङ्गस्यैव तेन दीर्घविधानात्। द्वितीयशब्दपूर्वभागस्याङ्गत्वेऽप्यनर्थकत्वात्। अङ्गत्वं तु विकरणविशिष्टेऽनर्थकेऽपि दृष्टमेव। तस्मादेकाचो द्वे इति सूत्रशेषभाष्योक्तन्याये-

नोत्तरणिचमादाय प्राक्तनसमुदायस्यैवाङ्गत्वमुचितम्। द्विःप्रयोगत्वाद्द्वितीयेऽपि ततो विहितत्व-बुद्ध्यनपायात्। आटिटदित्यादौ गुणस्तु बहिरङ्गस्य चङ्निमित्तद्वित्वस्यासिद्धत्वान्न" त्युक्तम्। तत्तु निरुक्तसन्नन्तशेखरविरोधादेकाचो द्वे इति सूत्रभाष्यविरोधाच्च मतान्तरपरमिति बोध्यम्। "तावेव सुप्तिङौ यौ ततः परा" वित्येकाचो द्वे इति सूत्रशेषभाष्येण द्वित्वानिष्पन्नसुप्तिङ्षु तत्त्वबुद्ध्यनपायत्वलाभेऽपि द्वित्वनिष्पन्नत्वेनागन्तुकद्वितीयटिशब्दावयवणिचि प्रत्ययत्वबुद्धेरनपाय-इत्यर्थस्य ततोऽलाभेन स्वोक्तार्थे तद्भाष्यसम्मतिलेखस्यायुक्तत्वात्। यदि तदुक्तदिशा द्वित्व-निष्पन्नद्वितीयटिशब्दावयवणिचि धातुविहितत्वबुद्ध्या प्रत्ययत्वबुद्धिः स्यात्तदा सिषेचेत्यादावुत्तर-खण्डेऽपि तुल्यन्यायेन प्रकृतित्वबुद्धेस्सुवचतया 'सैव च प्रकृतिराद्ये' ति तदुत्तरभाष्यसङ्गतं स्यात्। तत्रोत्तरखण्डसहितस्य पदत्वे सात्पदाद्योरिति षत्वनिषेधापत्तिश्च। किञ्चाटिटदित्यादौ प्रथमटिशब्दावयवणिचोऽनर्थकत्वकथनं निर्युक्तिकम्। धातुटकारसहितस्य प्रथमटिशब्दस्य निरर्थकत्वेऽपि षाष्ठद्वित्वस्य द्विःप्रयोगरूपतया प्रकृतिप्रत्ययसंमोहाभावेन तदवयवस्य णिचोऽनर्थकत्वे मानाभावात् तन्मात्रस्याभ्यासत्वाभावात्। निरर्थकसमुदायावयवस्यापि निरर्थकत्वमिति तु वक्तुमशक्यम्। तथा सति दश दाडिमानीत्यादौ निरर्थकपदसमुदायावयवपदानामपि नैरर्थक्यापत्तेः। एवमर्थवत्समु-दायावयवस्यार्थवत्त्वमित्यपि न। तथा सति धनं वनमित्यादिसमुदायावयवधकारादीनामप्यर्थवत्त्वेन प्रातिपदिकत्वापत्तेः। अतोऽभ्यासावयवणिचोऽनर्थकत्वमिति शब्दरत्नग्रन्थो मतान्तरपरतयैव यथाकथंचिन्नेयः। किञ्चात्यन्तस्वार्थिकेषु शबादिषु च पङ्कजशब्दस्य स्थलपङ्कजइव योगार्थपरित्यागेन प्रत्ययसंज्ञाप्रवृत्तेर्दृष्टतया तस्यानर्थकत्वात्प्रत्ययत्वाभाव इति सुतरामसंगतम्। किञ्च धातुटकारसहित-स्योत्तरटिशब्दस्यापि निरर्थकत्वेन तदुक्तदिशा तदवयवस्यापि णिचः प्रत्ययत्वाभावेन तमादायाङ्गत्वं दुर्लभम्। किञ्चाभ्यासस्य निरर्थकत्वमुत्तरखण्डस्यैवार्थवत्त्वमित्येतद्यत्र संपूर्णस्यापि धातोरेकाचो द्वे इत्यनेन द्वित्वं, यथा पपाच, सिषेचेत्यादौ तद्विषयमेव। यत्र तु धात्ववयवसहितस्य णिजादेः केवलधात्ववयवस्य वा अजादेर्द्वितीयस्येत्यनेन द्वित्वं, यथाआटिटत्, औननदित्यादौ, तत्र प्रकृत्येकदेशसहितस्य प्रत्ययस्य प्रकृत्येकदेशस्य वा काल्पनिकार्थवत्त्वस्याप्यभावेन तत्कर्मकद्विरुच्चा-रणविषयस्योत्तरखण्डस्यार्थवत्त्वमयुक्तम्। तस्माद्युक्तिविरोधात्सन्नन्तशेखरविरोधादेकाचो द्वे इति सूत्रभाष्यासम्मतत्वाच्च निरुक्तशब्दरत्नग्रन्थो मतान्तरपरतयैव कथंचिन्नेयः। एवं चैकाचो द्वे इति सूत्रभाष्यानुगृहीतत्वादुक्तरीत्या सोपपत्तिकत्वाल्लक्ष्यविसंवादाभावाच्च युक्त एवायं सन्नन्तशेखरः। तस्य चिन्त्यत्वकथनं तु केवलमाकरग्रन्थापरिशीलनमूलकमेवेति नागेशगूढाशयमुद्भावयन्ति। यत्तु

येन विधिरिति सूत्रे भाष्यएतद्घटकतदन्तांशस्याप-वादः पठ्यते ॥

प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय

---

यागेश्वरपण्डिताः हैमवत्यां प्रतीषिषतीत्यादौ दीर्घवारणाय " वस्तुतोऽत्रोत्तरखण्डस्यार्धधातुकत्वे-नेटि तदुपदेशे पूर्वखण्डस्यादन्तत्वेनातो लोपेऽजन्ताङ्गत्वाभावादज्झनेति दीर्घप्राप्तिरेव नेति बोध्यमित्याहुः, तदयुक्तम्। स्तौतिण्योरेवेति सूत्रे कैयटेऽधीषिषतीति भाष्यप्रतीकमुपादायाजादे-र्द्वितीयस्येति सशब्दस्य द्वित्वं, सन्यत इतीत्वमित्युक्तत्वेन तद्विरोधात्। एकाच इति निषेधेनेट्प्रवृत्तेर्दुर्वचत्वाच्च। नचोत्तरखण्डस्यैकाचः परत्वं नास्तीति वाच्यम्। ततः परत्वाभावेऽपि ततो विहितत्वेन तत्प्रवृत्तेः। तत्र विहितविशेषणताया एव सिद्धान्तितत्वादिति बोध्यम्। अस्या भाष्यारूढत्वं दर्शयति। इयमिति। २३

[एतद्घटकेति।] प्रत्ययग्रहणे यस्मादित्येतद्घटकेत्यर्थः। [अपवाद इति।] निषेध इत्यर्थः। अनेनास्याः पूर्वेण सङ्गतिर्दर्शिता। [पठ्यत इति।] यद्यपि तत्र तदन्तविधिप्रयोजनप्रतिपादनावसरे पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमित्यर्थकं 'प्रत्ययग्रहणं चापञ्चम्या, इति पठितम्' तथापि तेनायमर्थः फलतीत्याशयेनैवमुक्तम्। यद्वा तत्रापञ्चम्या इत्यस्य प्रसज्यप्रतिषेधपरतया व्याख्याने प्रत्ययग्रहणं तदन्तविधिं प्रयोजयतीत्येकं वाक्यम्। ततः पञ्चम्यन्तात्परं प्रत्ययग्रहणं तदन्तविधिं न प्रयोजयतीत्यपरं वाक्यम्। एवं च तत्र द्वितीयेन वाच्य एवायमर्थ इति बोध्यम्। परिभाषार्थ-माह। [यत्र पञ्चम्यन्तात्परः प्रत्यय इति।] यत्र शास्त्रे पञ्चम्यन्तार्थावधिकपरत्वविशिष्टः प्रत्यय इत्यर्थः। यत्र पञ्चम्यन्तार्थात्परत्वेन स्वस्यैव विधानाय प्रत्ययस्योपादानं, यथा ऋन्नेभ्यो ङीबित्यादौ, तत्र तस्य वाक्यार्थबोधात्पूर्वं प्रत्ययत्वज्ञानाभावेन तदन्तविधिप्राप्तेरेवाभावात्तत्र निषेधो-ऽनावश्यक इत्याशयेनाह। [कार्यान्तरविधानाय परिगृह्यत इति।] कार्यान्तरविधानायानूद्यत-

परिगृह्यते तत्र तदन्तविधिर्नेत्यर्थः। यथा रदाभ्यां निष्ठातो न इत्यत्र। तेन दृषत्तीर्णेत्यादौ धातुतकारस्य न नत्वम्। तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योप-

---

इत्यर्थः। एवंच पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताप्रयोजकं पदं तदन्तविधिं न प्रयोजयतीति परिभाषार्थः फलित इति बोध्यम्। परिभाषाफलं दर्शयति। [यथेत्यादिना।] तत्र हि तदन्तविधौ रेफदकाराभ्यां परीभूतो यो निष्ठान्ततदादिस्तदवयवस्य तकारस्य नत्वं स्यात्तथा च दृषत्तीर्ण इत्यत्र दृषच्छब्दावयवदकारात्परनिष्ठान्तावयवधातुतकारस्य, ततः पूर्वस्य दृषच्छब्दावयवदकारस्य च नत्वं स्यादिति भावः। मूले धातुतकारस्येत्युपलक्षणं, तत्पूर्वदकारस्यापीति बोध्यम्। पदसंस्कारपक्षे चायं दोषः। यदि च वाक्यसंस्कारपदसंस्कारयो-र्व्यवस्थितत्वादिह लक्ष्यानुरोधाद्वाक्यसंस्कार एवाश्रीयते, ततश्चानन्त्यविकारपरिभाषया धातुतकारस्य नत्वं वारयितुं शक्यत इत्युच्यते, तदा दृषत्तीर्णवानित्यत्र धातुतकारस्य नत्वापत्तिर्दोष इति बोध्यम्। नात्रोक्तपरिभाषया नत्वं वारयितुं शक्यम्। अन्त्यवर्णतद्वर्णयोरितराव्यवधान एव तत्प्रवृत्तेरिति बोध्यम्। नन्वेतत्परिभाषानङ्गीकारेऽपि निर्दिश्यमानपरिभाषया निष्ठान्तावयवी-भूतनिर्दिश्यमाननिष्ठावयवतकारस्य रेफदकाराभ्यां परस्य नत्वमित्यर्थलाभान्न दृषत्तीर्ण इत्यादौ धातुतकारस्य नत्वापत्तिः। विशिष्टस्य निर्दिश्यमानत्वाभावात्। तथाच निष्फलैवेयं परिभाषेति चेन्न। रदाभ्यां निष्ठातो न इति सूत्रस्थभाष्यप्रामाण्येन तत्परिभाषाया इहाप्रवृत्तेः। तत्रहि रदाभ्यामित्यस्य चरितं मुदितमिति प्रत्युदाहरणं दत्त्वा ननु च रदाभ्यामित्युच्यमानेऽप्यत्र प्राप्नोति, अत्रापि हि रेफदकाराभ्यां परा निष्ठा, इति पुनस्तत्रातिप्रसङ्गमाशङ्क्य न रेफदकाराभ्यां निष्ठा विशेष्यते, किंतर्हि? तकारो विशेष्यते। रेफदकाराभ्यामुत्तरस्य तकारस्य नो भवति, स चेन्निष्ठाया, इति समाहितम्। यद्यत्र निर्दिश्यमानपरिभाषायाः प्रवृत्तिः स्यात्तदा रदाभ्यामित्यस्य निष्ठाविशेषणत्वेऽपीडागमविशिष्टस्य निर्दिश्यमानत्वाभावात्तद्रहितस्य चेटा व्यवधानेन च दोषाभावा-त्तादृशशङ्कासमाधानयोरपि निर्दलत्वापत्तिः। अतस्तत्प्रामाण्येन तत्परिभाषाया अत्र सर्वथाऽप्रवृत्तिर्वाच्येति बोध्यम्। यत्तु जयदेवमिश्राः "क्तक्तवतू निष्ठेति सूत्रे षष्ठ्याअभावेन निर्दिश्यमानपरिभाषाया-

स्थितौ रेफदान्तात्परस्य निष्ठान्तस्येत्यर्थ इति न दोषस्त-दंशानुपस्थितौ मानाभावात्। तदन्तांशोपस्थितौ तूभयो-

---

अप्राप्त्याऽगमविशिष्टस्यापि क्तादेर्निष्ठासंज्ञायां रदाभ्यामित्यत्रत्यनिष्ठापदीयनिर्दिश्यमानत्वमागम-विशिष्टस्यैवेति निष्ठापदीयनिर्दिश्यमानविशेषणत्वेऽपि दोषतादवस्थ्येन तकारविशेषणत्वं भगवता स्वीकृतमिति नैतद्भाष्यं निर्दिश्यमानपरिभाषाप्रवृत्तौ विरुणद्धीत्यस्य अनुपस्थितौ मानाभावेनावतरण-मसङ्गतमेवे" त्युक्त्वाऽस्याः परिभाषायाः कल्पितमुदाहरणान्तरं प्रादर्शयन्। तदयुक्तम्। संज्ञाशास्त्रे निर्दिश्यमानपरिभाषाया अप्रवृत्त्या यदागमन्यायेनागमसहितस्य निष्ठासंज्ञासत्त्वेऽपि रदाभ्यामित्यत्र तत्परिभाषाप्रवृत्तौ निष्ठापदेन निर्दिश्यमानस्यैव ग्रहणात्तत्त्वस्य चागमरहित एव सत्त्वेन रदाभ्या-मित्यस्य निष्ठाविशेषणत्वेऽपि दोषाभावात्तकारविशेणत्वप्रतिपादनपरतद्भाष्यविरोधस्य दुर्वारत्वात्। नन्वनया परिभाषया तदन्तांशनिषेधेऽपि तदाद्यंशस्य निषेधाभावान्निष्ठापदोपस्थापितस्य तस्य निष्ठायामेवान्वयस्यौचित्याद्रेफदकारान्ततदादेः परा या निष्ठा, तदवयवस्य तकारस्य नत्वमित्यर्थ-लाभाच्चरितं मुदितमित्यादौ दोषो दुर्वारः। निर्दिश्यमानपरिभाषया तु न निस्तारः। तस्या-इहाप्रवृत्तेः प्रागुपपादितत्वादित्यत आह। [निष्ठातस्येति।] निष्ठावयवतकारस्येत्यर्थः। एङ्ह्रस्वादित्यत्रेव लक्ष्यानुरोधाद्भाष्यप्रामाण्याच्चान्योपस्थापितस्यापि तदादेरन्यत्रान्वयः स्वीकार्य इति भावः। ननु तदन्तांशस्यानुपस्थितौ तत्सन्नियुक्तस्य तदाद्यंशस्याप्यनुपस्थितिरेव स्यादिति कथमी-दृशार्थलाभ इत्यत आह। [तदंशानुपस्थिताविति।] तदाद्यंशानुपस्थितावित्यर्थः। [मानाभावादिति।] गुणानां च परार्थत्वादिति न्यायात्तदादितदन्तांशयोरसन्नियोगशिष्टतायाः प्रागुपदर्शितत्वाच्च सन्नियोगशिष्टन्यायाप्रवृत्तेरिति भावः। अत एवादावेतद्घटकतदन्तांशस्यापवादः पठ्यत इत्युक्तम्। अत एव चैङ्ह्रस्वादित्यादावेङन्तादित्यर्थलाभ इति बोध्यम्। नन्वेवं रदाभ्यामित्यत्र तदन्तां-शोपस्थितावपि रेफदकारान्ततदादेः परस्य निष्ठान्तावयवतकारस्य नत्वमित्यर्थान्न दृष्टत्तीर्ण इत्यादौ दोषः धातुतकारस्य तदादेः परत्वाभावादत आह। [तदन्तांशोपस्थितौत्विति।] तुना तदुपस्थित्य-नुपस्थित्योरर्थवैलक्षण्यं सूचितम्। तदाह। [उभयोरिति।] तदादितदन्तांशयोर्द्वयोरित्यर्थः।

रेकविषयत्वमेव स्यादिति दृषत्तीर्ण इत्यादौ दोषः स्यादेव। स्यतासीलृलुटोरित्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः।

---

[एकविषयत्वमेवेति।] तदन्तविधिंप्रयोजकप्रत्ययाक्षिप्तशब्दस्वरूपस्यैव तदाद्यंशोऽपि विशेषणं स्यादन्यत्र तथा क्लृप्तत्वादिति भावः। तथाच रेफदकाराभ्यां परीभूतो यो निष्ठान्ततदादिस्तदवयवस्य तकारस्य तत्पूर्वस्य च दस्य नत्वमित्यर्थः स्यात्। एवं च दृषत्तीर्ण इत्यादावेव तत्प्रवृत्तिः स्यान्न तु केवले तीर्ण इत्यादौ। ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेः। सूत्रस्य च दृष्टत्तीर्ण इत्यादौ चारितार्थ्यसंभवादिति बोध्यम्। नन्वेवमपि स्यतासी लृलुटोरित्यादौ लृलुडन्ते तदादावित्यर्थापत्तिः। तत्राधिकृतस्य धातोरित्यस्य स्यतासिविशेषणत्वेन लृलुटोः पञ्चम्यन्तार्थावधिकपरत्ववैशिष्ट्येनानुपादानात्प्रकृतपरिभाषाया अप्रवृत्तेरित्यत आह। [स्यतासी इति।] आदिना सुपि च रोस्सुपीत्यादेस्संग्रहः। [परयोरित्यर्थ इति।] तस्मिन्निति परिभाषयेति भावः। [नियमेनावधिसाकाङ्क्षत्वेनेति।] परशब्दस्य दिक्शब्दत्वेन कस्मादित्यवध्याकाङ्क्षाया नियमेन सत्त्वादिति भावः। [उपस्थितधातोरित्यस्यैवेति।] स्वस्मात्परत्वेन स्यतासिविधानायाधिकृतस्य धातोरित्यस्यैवेत्यर्थः। [अवधित्वेनान्वयादिति।] अर्थत, आवृत्त्या शब्दतो वा तत्त्वेनान्वयादिति भावः। [न तदन्तविधिरिति।] अनया परिभाषया तदन्तविधिनिषेधादिति भावः। अत्र धातोरित्यधिकारादपञ्चम्या इति निषेधात्तदन्तविध्यभाव इति कैयटोक्तं तु न युक्तम्। तस्य स्यतासिविशेषणत्वादिति स्पष्टमुद्योते। ननु स्यतासी लृलुटोरित्यादौ निर्दिष्टपरिभाषया लृलुटोरव्यवहितपूर्वाद्धातोः स्यतासी भवत इत्यर्थलाभाद्लृलुटोः परयोरित्यर्थस्य फलविधया भासमानत्वेऽपि शाब्दत्वाभावेन पञ्चम्यन्तार्थात्परत्वेन शाब्दान्वये प्रवर्तमानस्य प्रकृतनिषेधस्य प्रवृत्त्ययोगाच्चिन्त्योऽयं ग्रन्थ इति चेदत्रोच्यते। स्यतासी लृलुटोरित्यादौ लृलुटोरित्येतदुपश्लिष्टपदाध्याहारेणौपश्लेषिकाधिकरणसप्तमी, नतु सति सप्तमी। उपपदविभक्तेरिति न्यायात्। तथा च लृलुडुपश्लिष्टाद्धातोः स्यतसी

हल्ङ्याब्भ्य इत्यादौ तु न दोषः। तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात्। अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे

---

भवत इति तदर्थः। उपश्लेषस्य पूर्वपरसाधारणत्वेन व्यवहिताव्यवहितसाधारणत्वेन चानियमेन कार्यप्रसङ्गे निर्दिष्टपरिभाषया लृलुटोरव्यवहितयोरेव, पूर्वस्यैवेति च नियम्यते। तत्फलं च लृलुटोः पराद्व्यवहिताच्च धातोः प्रत्ययनिवृत्तिः। सा च प्रदेशेषु परशब्दाध्याहारेणापि संभवतीति धातोः स्यतासी भवतः लृलुटोः परयोरिति वाच्यार्थलाभाद्युक्त एव मूलोक्तार्थ इति। अत एव तस्मिन्निति सूत्रे भाष्ये सप्तमीपञ्चम्युभयनिर्देशेषु सन्देहनिरूपणावसरे तास्यादिभ्यः परस्य लसार्वधातुकस्य, लसार्वधातुके परतस्तास्यादीनां वेत्युक्तिः स्वरसतः संगच्छते। अत एव चैतत्परिभाषाविषयभूतायास्सप्तम्याः परसप्तमीत्वव्यवहारो भाष्यकारादीनामुपपन्नं स्यात्। अत एव च निर्दिष्टपरिभाषाविषयाणामिको यणचीत्यादीनामचि परे इत्येव वृत्तिलेखनं सर्वग्रन्थकृतामुपपद्यते। स्वादिष्वसर्वनामस्थान इत्यादावप्युपस्थिततदादेरेवाकाङ्क्षावशादवधित्वेन चान्वयान्न तदन्तविधिरिति बोध्यम्। नन्वेवं हल्ङ्याभ्य इत्यादावपि ङ्याप्प्रत्ययगतपरत्वस्यावध्याकाङ्क्षायामुपस्थितप्रातिपदिकादित्यस्यावधित्वेनान्वयादनया परिभाषया तदन्तांशनिषेधे सुतिसीत्यनेनोपस्थिततदादिं विशेष्यीकृत्यैक एव तदन्तविधिरिति ङ्याबन्तात्तदादेः परं सुतिसीत्येतदपृक्तं हल्लुप्यत इत्यर्थलाभाद्बहुश्रेयसीत्यादौ सुलोपानापत्तिः। उपसर्जनस्त्रीप्रत्यये तदादिनियमेन विशिष्टस्य ङ्यन्तत्वाभावात्। तदन्तविधिद्वयस्य चोक्तरीत्याऽलाभादत आह। [हल्ङ्याभ्य इति।] [अवध्याकाङ्क्षाया अभावेनेति।] ङ्याप्प्रत्यये वस्तुतः परत्वस्य सत्त्वेऽपि तस्याशाब्दतया नियमेन तत्र शाब्दावध्याकाङ्क्षाया अभावान्न कस्याप्यवधित्वेनान्वय इति नानेन तदन्तविधिनिषेधः। अतस्तदन्तविधिद्वयेनेष्टसिद्धिरिति भावः। [पञ्चम्यन्तस्येति।] प्रातिपदिकादिति पञ्चम्यन्तस्येत्यर्थः। [प्रत्ययविशेषणत्वाभावादिति।] ङ्याब्विशेषणत्वाभावादित्यर्थः। नन्वेवं प्रत्ययसामान्यग्रहणेऽङ्गसंज्ञासूत्रेऽपि पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात्प्रकृतनिषेधाप्रवृत्त्या तदन्तविधिर्दुर्वारोऽत आह। [अङ्गसंज्ञासूत्रे त्विति।]

**पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव। अत एवोत्तमैकाभ्यामित्यादिनिर्देशाः संगच्छन्ते ॥ २४ ॥**

**नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूपेतिह्रस्वापत्तिरत आह ॥**

---

[विशेषणत्वं स्पष्टमेवेति।] उक्तरीत्या तत्र परत्वस्य शाब्दत्वेन स्यतासी इत्यादाविव तत्रापि कस्मादिति नियतावध्याकाङ्क्षायाः सत्त्वेन सूत्रे उपस्थितस्य तदाद्यंशस्यावधित्वेनान्वयात्तदादेरिति पञ्चम्यन्तस्य प्रत्ययविशेषणत्वं स्पष्टमेवेति भावः। अत्र मानमाह। [अत एवेति।] सप्तमीनिर्देशेषूक्तरीत्या परशब्दाध्याहारेण प्रकृतपरिभाषया तदन्तांशनिषेधाभ्युपगमादेवेत्यर्थः। [संगच्छत इति।] अन्यथा सुबन्तपरत्वाभावादेकशब्दे दीर्घानापत्तिरिति भावः। तत्सामर्थ्येन सप्तमीनिर्देशेष्वपूर्वतया तदन्तांशनिषेधज्ञापनापेक्षया तत्र परशब्दाध्याहारबोधनद्वारा तस्य प्रकृतनिषेधविषयत्वबोधनमेव ज्यायो लाघवादित्याशयः। अयं निषेधोऽध्याहृतशब्दस्वरूपस्य विशेषणविशेष्यभावव्यत्याससूचक इति येन विधिरिति सूत्रशेषे भाष्यप्रदीपोद्योतयोः स्पष्टम्। एवं च रदाभ्यामित्यादावध्याहृतशब्दस्वरूपापेक्षया निष्ठायाः प्राधान्येनाश्रयणान्न तदन्तविधिः। उत्तमैकाभ्यां चेत्यादिनिर्देशादयश्चात्रैव तात्पर्यग्राहका इति बोध्यम्। २४

शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरेवोक्तपरिभाषया निषेधो, न तूपात्तविशेष्यनिबन्धनस्येत्यर्थध्वननायानन्तरोक्तपरिभाषाविषये घरूपेत्यादौ प्रत्ययग्रहणपरिभाषयातिप्रसङ्गमाशङ्क्य तदपवादभूतं परिभाषान्तरमवतारयति। [नन्वेवमिति।] प्रत्ययग्रहणपरिभाषया तदन्तविध्यङ्गीकारे इत्यर्थः। [कुमारी ब्राह्मणिरूपेति।] अत्र ब्राह्मणीशब्दाद्रूपपि तसिलादिष्विति पुंवत्त्वस्य जातेश्चेत्यनेन निषेधे घरूपेति ह्रस्वे ब्राह्मणिरूपेत्यस्य सिद्धिः। ततः कुमारीशब्देन बहुव्रीहौ वयोवाचिनां वैकल्पिकजातिकार्यस्य जातेरिति सूत्रस्थभाष्यसम्मतत्वेन जातेश्चेत्यनेन पुंवत्त्वनिषेधे कुमारीब्राह्मणिरूपेति समस्तरूपम्। [ह्रस्वापत्तिरिति।] प्रत्ययग्रहणपरिभाषया रूपबन्ते

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

हृदयस्य हृल्लेखयदण्लासेष्वित्यत्र लेखग्रहणात्। तत्र लेखेति न घञन्तमनभिधानात्। इयं च

---

उत्तरपदे इत्यर्थलाभात्कुमारीशब्दे ह्रस्वापत्तिः। ब्राह्मणीशब्दे तदनापत्तिश्च। रूपबन्तोत्तरपदपरकत्वाभावात्। ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः। कर्मधारये तु प्रतिप्रसवभूतेन पुंवत्कर्मधारयेत्यनेन पुंवद्भावे कुमारब्राह्मणिरूपेत्येव रूपम्। अस्याः परिभाषायाः कुमारीगौरितरेति प्रयोजनं प्रतिपादयतो हृदयस्य हृल्लेखेति सूत्रस्थभाष्यस्याप्ययमेवाशयो बोध्यः। एतेन कुमारीगौरितरेति प्रतीकमुपादाय 'असमस्तस्य प्रयोग, इत्याशयेन "उदाहरणदिगियम्। समस्तस्तूदाहार्यः। कुमारगौरितरेति। अत्र हि घान्त उत्तरपदे पुंवद्भावं बाधित्वा ह्रस्वः स्यात्" इति कैयटोक्तमपास्तम्। स्पष्टं चेदमुद्योते। अत्र ज्ञापकमाह। [हृदयस्येति।] अन्यथाऽणन्ते उत्तरपदे इत्यर्थलाभाल्लेखशब्दस्य चाणन्तत्वादणैव सिद्धे तत्र सूत्रे लेखग्रहणमनर्थकं स्यादिति भावः। ननु तत्र लेखशब्देन घञन्तस्य ग्रहणान्नेदं ज्ञापकमत आह। [तत्रेति।] हृदयस्येति सूत्र इत्यर्थः। [अनभिधानादिति।] अत्र च लेखग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरं भाष्यमेव मानमिति बोध्यम्। नन्वण्पदेन प्रत्ययग्रहणपरिभाषया तदन्तविधावपि लेखग्रहणस्य न वैयर्थ्यम्। लेखशब्दस्याधिकृतेनोत्तरपद इत्यनेन विशेषणात्तदन्तविधौ लेखान्ते उत्तरपद इत्यर्थलाभात् हृदयस्य परमलेखो हृत्परमलेख इत्यत्र हृदादेशसंपादनाय तदावश्यकत्वात्। परमलेखशब्दस्य चाण्णन्तत्वाभावेनाण्ग्रहणेन तत्रासिद्धेरिति चेन्न। विशेषणविशेष्यभावे कामचारादधिकृतस्योत्तरपद इत्यस्य लेखपदविशेषणत्वेनैवान्वयादुत्तरपदभूते लेखशब्दे पर इत्येव तत्रार्थेन निरुक्तस्थले हृदादेशस्याप्रवृत्त्या तत्र लेखग्रहणस्य सार्थक्यासंभवाल्लेखग्रहणस्य प्रकृतपरिभाषाज्ञापनपरहृदयस्येति सूत्रस्थभाष्येण चास्यार्थस्य ध्वननात्। किञ्च ष्यङस्संप्रसारणमिति सूत्रे भाष्ये तत्पुरुषेण सन्निधापितमुत्तरपदं विशेष्यीकृत्य पुत्रपतिशब्दाभ्यां तदन्तविधौ पुत्रपत्यन्ते उत्तरपदे संप्रसारणं प्राप्नोति। कारिषगन्ध्यापरमपुत्रः। कारीषगन्ध्यापरमपतिरित्याशङ्क्य "सिद्धं तूत्तरपदवचनादि"

ति समाहितम्। कैयटेन च सिद्धंन्त्विति भाष्यप्रतीकमुपादाय " तत्पुरुषे नियतसन्निधाने पूर्वोत्तरपदे। विशेष्यविशेषणभावे च कामचारदुत्तरपदेन पुत्रपती विशेष्येते। तत्रोत्तरपदान्तयोः पुत्रपत्योरसंभवादुत्तरपदे एव पुत्रपतीगृह्येते। पुत्रपतिभ्यां तूत्तरपदं न विशेष्यत इति तदन्तविध्यभावः" इत्युक्तम्। उद्योतकारोऽपि सिद्धंत्विति वार्तिकम् ' उत्तरपदस्य = सामर्थ्यात्सन्निहितस्य, वचनात = विशेषणत्वेन व्याख्यानात्सिद्धमिति योजयित्वा कैयटोक्तार्थस्य तद्वार्तिकाल्लाभोपायमाह। एवं च तुल्यन्यायादत्रापि तथैवोचितमिति न ज्ञापकत्वानुपपत्तिः। लेखग्रहणस्य ज्ञापकत्वप्रतिपादनपरभाष्यस्य चायमेवाशय इति बोध्यम्। यत्तु वाराणसेया उक्तरीत्या लेखग्रहणस्य ज्ञापकत्वानुपपत्तिमाशङ्क्य तत्परिहाराय गिलेऽगिलस्येत्यत्र तदन्तविधिनैव सिद्धे गिलगिले चेत्यारम्भसामर्थ्यादुत्तरपदाधिकारे प्रातिपदिकग्रहणे तदन्तग्रहणं नेति परिभाषान्तरं ज्ञापयामासुः। चन्द्रिकाकारा अन्ये च तथैवाहुः, तदयुक्तम्। तादृशपरिभाषान्तरस्य भाष्यादिषु क्वाप्यनुपलम्भात्। इष्टकेषीकामालानामित्यादिषु सर्वत्र मदुक्तरीत्यैव तदन्तवारणसंभवेनेष्टकपरिचितामित्यादावदोषात्। तादृशपरिभाषान्तरज्ञापनेऽप्युत्तरपदाधिकारबहिर्भूते ष्यङस्संप्रसारणमित्यत्र मदुक्तदिशैव तदन्तविधेर्वारणीयत्वात्। तदर्थस्य भाष्यरूढताया उपदर्शितत्वाच्च। यद्वा गिलगिले चेत्येतदपि विशेषणविशेष्यभावव्यत्यास एव तात्पर्यग्राहकमित्येतदर्थानुवादक एवोत्तरपदाधिकारे प्रातिपदिकग्रहणे तदन्तग्रहणं नास्तीति तदुक्तार्थ इति बोध्यम्। नचैवमपि स्यतासी ऌलुटोः, सुपि चेत्यादाविवात्रापि यदणोः परतः हृदयशब्दस्य हृदादेश इत्यर्थे कस्मादिति नियतावध्याकाङ्क्षायास्सत्त्वेनोपस्थितहृदयशब्दस्य तत्त्वेनान्वयात्प्रत्ययग्रहणे चापञ्चम्या इति निषेधेन तदन्तांशानुपस्थित्या लेखग्रहणस्य वैयर्थ्याभावान्न तस्य ज्ञापनसंभवः। एवमेव घरूपेत्यादावपि तदन्तांशनिषेधान्न कुमारीब्राह्मणिरूपेत्यस्यैतत्परिभाषाप्रयोजनत्वोपपत्तिरिति वाच्यम्। तत्र प्रत्ययमात्रस्याधिकृतेनोत्तरपद इत्यनेनान्वयासंभवेन तत्सामर्थ्यात्तत्रापञ्चम्या इति निषेधाप्रवृत्त्या अणन्ते उत्तरपद इत्यर्थलाभेन लेखग्रहणज्ञापकतायास्तत्फलस्य चोपपत्तेः। सिद्धान्ते त्वेतद्विषये उत्तरपद इत्यस्यासंबन्धो ज्ञापकादेवेति न दोषः। स्पष्टं चेदं हृदयस्येति सूत्रे उद्योते। अपञ्चम्या इति निषेधादत्रोत्तरपद इत्यस्यासंबन्धस्तु वक्तुमशक्यः। तस्य रदाभ्यामित्यादौ चारितार्थ्यात्। एवं च शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरेव तेन निषेधो, नतूपात्तविशेष्यनिबन्धनस्येति बोध्यम्। अत्रेदमवधेयम्। धर्मिग्राहकसाजात्यात्प्रत्यासत्त्या चानया परिभाषयोत्तरपदरूपं विशेष्यमादाय प्राप्तस्यैव तदन्तविधेर्निषेधः। एवं च ङ्योऽनेकाचो ह्रस्वः, इको ह्रस्वोऽङ्यो गालवस्य,

ङ्याप्पोस्संज्ञाच्छन्दसोरित्यादिभिरुत्तरपदाक्षिप्तपूर्वपदस्य विशेष्यत्वेन प्राप्ततदन्तविधेर्न निषेधः। न चानया परिभाषयोत्तरपदविशेष्यकतदन्तविधेरेव निषेधे शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेर्दुर्वारतया निष्फलैवेयं परिभाषा। ज्ञापितायामप्यस्यां लेखग्रहणस्य स्वांशे चारितार्थ्याभावेन ज्ञापकतापरभाष्यविरोधश्चेति वाच्यम्। विशेष्यान्तरासत्त्व एव शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेर्वाच्यतया प्रकृते विशेष्यान्तरसत्त्वेन तदध्याहारमूलकतदन्तविधेर्वक्तुमशक्यत्वात्। अत एव यञिञोश्चेत्यादौ न यञन्तान्तादित्यर्थलाभः। वनोरचेत्यादौ तु क्वचिद्विशेष्यान्तरसत्त्वेऽप्यनुत्तरपदस्थस्येति ज्ञापकाच्छब्दस्वरूपविशेष्याध्याहारमूलकोऽपि तदन्तविधिरित्यन्यदेतत्। नच सिद्धान्ते ज्ञापकादेतद्विषये उत्तरपद इत्यस्यासंबन्धतायाः प्रागुक्ततया तदानीं विशेष्यान्तराभावाच्छब्दस्वरूपं विशेष्यमादाय तदन्तविधेर्दुर्वारतया पुनरियं परिभाषा निष्फला, ज्ञापकत्वानुपपत्तिश्चेति वाच्यम्। एतत्परिभाषाप्रवृत्तिं लेखग्रहणचारितार्थ्यान्यथानुपपत्तिं च निमित्तीकृत्य कल्पितेनोत्तरपदाधिकारासंबन्धेन पुनर्लेखग्रहणस्य वैयर्थ्यशङ्कायाः परिभाषावैफल्यशङ्कायाश्चोपजीव्यविरोधेनायुक्तत्वादिति बोध्यम्। तत्पुरुषे कृति बहुलमित्यत्र तु केवलकृत्प्रत्ययेन तत्पुरुषसमासस्य दुर्वचतया केवलकृत्परकसप्तम्या असंभवाच्च सामर्थ्यादेतन्निषेधाप्रवृत्त्या तदन्तविधिः। एवमुपसर्गस्य घञ्यमनुष्ये बहुलमित्यत्रापि धातोरेव घञो विधानात्केवलघञ्परकोपसर्गस्यासंभवेन सामर्थ्यात्तदन्तविधिः। एवं खित्यनव्ययस्येत्यत्राप्यनव्ययस्येति पर्युदासेन सुबन्तस्यैव ह्रस्वोद्देश्यतया तस्य च केवलखित्परत्वासंभवात्सामर्थ्यात्तदन्तविधिः। यद्वा धातोरेव खितो विधानेनाव्ययस्य खित्परत्वासंभवादनव्ययस्येति प्रतिषेधो व्यर्थीभूयात्र तदन्तविधिं ज्ञापयतीति न दोषः। स्पष्टं चेदं हृदयस्येति सूत्रे भाष्ये। रात्रेः कृति विभाषेत्यत्रापि रात्रिशब्दात्केवलकृतोऽसंभवेन सामर्थ्यात्तदन्तविधिः। स्पष्टं चेदं समासशेखरे। नच तस्मादाचारक्विबन्तात्तृजादौ रात्रयितेत्यादौ तत्संभव इति वाच्यम्। तस्य गौणत्वेन तत्रैतदप्रवृत्तेः। नहि वृतिवृषि, विष्वग्देवयोश्चेत्यादावपि केकलक्विपो नह्यादिभिरन्वयासंभवात्केवलानां च तेषां धातूनामुत्तरपद इत्यनेनान्वयासंभवाच्च क्विपस्तद्विशेषणत्वेन तदन्तविधिः। स्पष्टं चेदं नहिवृतीति सूत्रे भाष्ये। एवं च न कुत्राप्यनुपपत्तिरिति। यत्तु आदेशविधिविषयोऽयं तदन्तांशनिषेधः। स च विधिरादेशस्य प्रवर्तक इव निवर्तकोऽपीत्यलुगधिकारस्य संग्रहः। ततश्च रात्रेः कृतीत्यादावगमविधौ न दोष इति वाक्यार्थचन्द्रिकाकृतस्तन्न। "अत्र प्रकरणे प्रत्ययग्रहणे तदन्तनिषेधाभावेऽपि रात्रेः कृतोऽसंभवा-

त्कृदन्त इत्यर्थ" इति रात्रेः कृति विभाषेति सूत्रस्थशेखरग्रन्थेन तादृशसंकोचस्य नागेशानभिप्रेततायाः स्पष्टत्वात्। तदभावेऽपि निरुक्तदिशा तत्र निषेधाप्रवृत्तेस्सुवचत्वात्। सामर्थ्यादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिरिति हरदत्तग्रन्थविरोधाच्च। यदपि प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजक एवास्याः परिभाषायाः प्रवृत्तिः। अत एव रात्रेः कृतीत्यादौ नानया निषेध इति विजयाकृतः। प्रत्ययस्य तत्तद्रूपेण ग्रहणे तदन्तग्रहणं नेत्यर्थः। ज्ञापकस्य सजातीयापेक्षत्वादिति गदाकृतश्च। तदप्ययुक्तम्। हृदयस्य हृल्लेखेति सूत्रस्थभाष्यविरोधात्। तत्र हि लेखग्रहणेन प्रकृतपरिभाषां ज्ञापयित्वा तस्याः कुमारीगौरितरेत्यत्र घरूपेति ह्रस्ववारणं प्रयोजनत्वेनोक्तम्। तदुत्तरं च "यद्येतज्ज्ञाप्यते, खित्यनव्ययस्येति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्वं प्राप्नोति। खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते उत्तरपदे भविष्यति। ननु चायमस्ति स्तनं धय इति। अत्रापि शपा व्यवधानम्, एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव। अथवा एतज्ज्ञापयत्याचार्यः खित्यनन्तरस्य न भवतीति। यदयमनव्ययस्येति प्रतिषेधं शास्ति। नहि खित्यनन्तरमव्ययमस्ती" त्युक्तम्। यदि तदुक्तदिशा तत्तद्रूपेण प्रत्ययस्य ग्रहण एवास्याः परिभाषायाः प्रवृत्तिः स्यात्तदा घविषये खित्यनव्ययस्येति सूत्रविषये च प्रकृतपरिभाषाया अप्रवृत्त्या घविषयेऽस्याः प्रयोजनप्रतिपादनं, तदुत्तरविचारश्च सर्वोऽपि भाष्यकृतोऽसंगतः स्यात्। विना विरोधमुदाहरणपरभाष्यस्योपलक्षणपरतया व्याख्यानं, तदुत्तरशङ्कासमाधानपरभाष्यस्यैकदेश्युक्तित्वकल्पनं वा न युक्तम्। किञ्चैवं घरूपकल्पप्प्रत्ययेषु परेष्विति कौमुदी प्रतीकमुपादाय लेखग्रहणेनोत्तरपदाधिकारे कचित्प्रत्ययग्रहणे तदन्ताग्रहणज्ञापनादिति भाव, इति घरूपेतिसूत्रस्थशेखरग्रन्थविरोधः। रात्रेः कृतीति सूत्रस्थनिरुक्तशेखरपदमञ्जर्यादिग्रन्थविरोधश्च। किञ्चैवं घकालतनेष्वित्यत्र प्रकृतपरिभाषाया अप्रवृत्त्या घान्त उत्तरपदे इत्यर्थापत्तौ पूर्वाह्णे तरे इत्यत्रालुगनापत्तिः। नच प्रादेशिकेन संज्ञाविधाविति निषेधेन न तत्र दोष इति वाच्यम्। ज्ञापकभूम्यनुरोधाच्छब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरेव तया निषेधेनोपात्तोत्तरपदविशेष्यकतदन्तविधेस्तया निषेद्धुमशक्यत्वात्। अत एव प्रकृतपरिभाषायाः घविषये प्रयोजनप्रतिपादनपरं भाष्यमुपपद्यते। अन्यथा तत्र संज्ञाविधाविति निषेधेनैव सिद्धे तस्य प्रकृतपरिभाषाप्रयोजनत्वोक्तिरनुपपन्नैव स्यात्। वस्तुतस्तु प्रादेशिकतदन्तविधिनिषेधस्य नागेशानभिप्रेतताया वक्ष्यमाणत्वान्न तयाऽत्र निस्तारः। न च यथाकथंचित्प्रत्ययग्रहणेऽपि यद्यस्याः प्रवृत्तिः स्यात्तदा प्राथम्याद्घविषय एवावतरणं वक्तुमुचितमिति

हृदयस्येति सूत्रे भाष्ये स्पष्टा ॥ २५ ॥

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्रापि ष्यङः संप्रसारणं पुत्रपत्योरिति स्यादत आह ॥

---

वाच्यम्। भगवता कुमारीगौरितरेति घविषय एव प्रयोजनप्रतिपादनेन ग्रन्थकृता रूपवंशे प्रयोजनप्रतिपादनस्य स्पष्टप्रतिपत्तिमात्रफलकत्वात्। किञ्च सुप्तिङन्तमिति सूत्रे भाष्ये संज्ञाविधाविति परिभाषाया अपि कुमारीगौरितरेत्येव प्रयोजनप्रतिपादनात्ततोऽस्या विविक्तप्रयोजनप्रतिपिपादयिषयापि ग्रन्थकृता तत्त्याग इत्यपि वक्तुं शक्यत्वादिति बोध्यम्। लेखेति घञन्तस्यानभिधाने मानं सूचयन्नस्या भाष्यारूढतां दर्शयति। [हृदयस्येति।] २५

एवमुत्तरपदविशेष्यकप्रत्ययग्रहणस्थले प्रत्ययग्रहणपरिभाषाप्रवृत्तिप्रयुक्तातिप्रसङ्गवारणाय तदपवादभूतामुक्तपरिभाषां व्याख्यायेदानीमुत्तरपदेन पूर्वपदस्य प्रत्यासन्नतया तद्विशेष्यकप्रत्ययग्रहणस्थले तदुपस्थितिप्रयुक्तातिप्रसङ्गवारणाय तद्बोधिततदाद्यंशनिषेधिकां परिभाषामवतारयति। [नन्वेवमित्यादिना।] प्रत्ययग्रहणेषु प्रत्ययग्रहणपरिभाषया तदादिनियमाङ्गीकारे इत्यर्थः। [इत्यत्रेवेति।] अत्रेवापिशब्दौ भिन्नक्रमौ। आद्ये परमा च सा कारीषगन्ध्या च परमकारीषगन्ध्या, तस्याः पुत्र इति षष्ठीसमासः। द्वितीयेऽपि कारीषगन्ध्यामतिक्रान्ता अतिकारीषगन्ध्या, तस्याः पुत्र इति षष्ठीसमासः। मरुवदुशीनरे जलमितिवदभावे दृष्टान्तः। ष्यङस्संप्रसारणमित्यत्र प्रत्ययग्रहणपरिभाषया तदादितदन्तांशयोरुभयोरप्युपस्थित्या ष्यङन्तं यत्तदादिपूर्वपदमित्यर्थलाभेन यथाऽतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदाभावात्संप्रसारणं न भवति, एवं परमकारीषगन्धीपुत्र इत्यत्रापि तन्न स्यादितिभावः। यद्वा इवापिशब्दौ यथाश्रुतावेव। परमकारीषगन्धीपुत्र इत्यत्र तदादिनियमादप्राप्तस्य संप्रसारणस्य साधनायोत्तरपदाक्षिप्तपूर्वपदरूपविशेष्यान्तरसद्भावेऽपि वनो र चेत्यादाविव ष्यङस्संप्रसारणमित्यत्रापि शब्दस्वरूपं विशेष्यमध्या-

# स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

---

हृत्य तदन्तविधिद्वयाङ्गीकारस्यावश्यकतया तेन यथा परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणं भवति, एवमतिकारीषगन्ध्यापुत्र इत्यत्रापि तत्स्यादिति भावः। एवं च तदन्तविधिद्वयानङ्गीकारे परमकारीषगन्धीपुत्रइत्यत्राव्याप्तिः। तदभ्युपगमे चातिकारीषगन्ध्यापुत्र इत्यत्रातिव्याप्तिरिति सर्वथा तदादिनियमो न युक्त इत्याशयः। नचैवं सत्यामप्यस्यां परिभाषायामतिकारीषगन्ध्यापुत्र इत्यत्र दोषो दुर्वार एव। अतिकारीषगन्ध्येत्यस्य ष्यङन्तान्तपूर्वपदत्वादिति वाच्यम्। एतत्परिभाषाङ्गीकारेऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधेन तदन्तविधिद्वयमन्तरापि परमकारीषगन्धीपुत्रइत्यत्र संप्रसारणसिद्धया तदर्थं पूर्वपदरूपविशेष्यान्तरसत्त्वेऽप्यनुत्तरपदस्थस्येति ज्ञापकसाध्यस्य शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेर्दुर्वचतयाऽतिकारीषगन्ध्यापुत्र इत्यत्र दोषाभावात्। गोस्त्रियोरित्यत्र तूपसर्जनस्येति प्रातिपदिकस्येति च विशेष्यद्वयस्योपादानान्न तदन्तविधिद्वयानुपपत्तिरिति केचित्। वस्तुतस्तु ष्यङ इति सूत्रे भाष्ये परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणसिद्धये 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेनेति सामान्यतः स्त्रीप्रत्ययमात्रे तदादिनियमं निषिध्य यद्यस्त्रीप्रत्यये नेत्युच्यते, तर्हि अतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यस्तस्य पुत्रोऽतिकारीषगन्ध्यपुत्र इत्यत्रापि प्राप्नोतीत्याशङ्क्य 'अस्त्रीप्रत्ययेनानुपसर्जनेने' त्युक्तम्। एवं च परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणसंपादनायोपक्रान्तं स्त्रीप्रत्ययमात्रे तदादिनियमनिषेधकमस्त्रीप्रत्ययेनेति प्रथमांशं सिद्धवत्कृत्यानुपसर्जनेनेति द्वितीयांशस्यैवेदमवतरणमिति वक्तुं युक्तम्। उपदर्शितष्यङ इति सूत्रस्थभाष्यग्रन्थसंदर्भेण तथैव लाभात्। परमकारीपगन्धीपुत्र इत्यत्र संप्रसारणसिद्धये स्त्रीप्रत्ययेन तदादिनियमो नेत्यर्थकमस्त्रीप्रत्ययेनेति यद्युच्यते, तदा तत्रेवातिकारीषगन्ध्यापुत्र इत्यत्रापि संप्रसारणं स्यादित्यवतरणग्रन्थाशय इति बोध्यम्। यद्यपि ष्यङ इति सूत्रे भाष्येऽनुपसर्जनस्त्रीप्रत्ययेन तदादेर्ग्रहणं नेत्यर्थक "मस्त्रीप्रत्ययेनानुपसर्जनेने" ति तृतीयान्तपदघटितं वार्तिकं दृश्यते, तथापि प्राचीनपठिताया अस्यास्तस्य च न कोऽपि फलतो विशेष इत्याशयेन सप्तम्यन्तपदघटितां तदुक्तां परिभाषां व्याचष्टे। [स्त्रीप्रत्यये चानुपसर्जने नेति।] नन्वस्याः परिभाषायाः प्रत्ययग्रहण इत्यस्यापवादत्वात्तदेकवाक्यत्वाच्चात्रापि ग्रहणपदसंबन्धस्यावश्यकताया ग्रन्थकृता वक्ष्यमाणत्वात्तदनुरोधेनास्या अनुपसर्जनस्त्रीप्रत्ययग्रहणे तदादिनियमो-

विषयसप्तमीयम्। यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न यस्त्वप्राधान्येनाह तत्र तदादि-

---

नेत्यर्थः प्रतीयते। स चायुक्तः। संप्रसारणविधौ प्यङ इत्यत्र प्यङ्प्रत्ययस्योपसर्जनानुपसर्जन-साधारण्येन गृहीतत्वादनुपसर्जनस्त्रीप्रत्ययग्रहणस्यापि सत्त्वेन तत्रानया परिभाषया सर्वथा तदादि-नियमनिषेधेऽतिकारीषगन्ध्यापुत्र इत्यत्र संप्रसारणापत्तेर्दुर्वारत्वात्। अनुपसर्जनस्त्रीप्रत्ययमात्रग्रहण इत्युक्तौ तु तत्रैतन्निषेधाप्रवृत्त्या परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणासिद्धेः। अनुपसर्जनस्त्री-प्रत्ययमात्रग्रहणस्य क्वाप्यसंभवाच्चेत्यत आह। [विषयसप्तमीयमिति।] अनुपसर्जन इतीयं विषयसप्तमीत्यर्थः। ननु स्त्रीप्रत्यय इति, तस्य गृह्यमाण इत्यनेनान्वयानुपपत्तेः। एवं च स्त्रीप्रत्यये गृह्यमाणेऽनुपसर्जनस्त्रीप्रत्ययविषये तदादिनियमो नेति परिभाषार्थः। प्यङ इत्यादेरुपसर्जनानुप-सर्जनोभयसाधारणसंग्राहकवाक्यत्वात्तेनोपसर्जनस्त्रीप्रत्ययविषयकाणामनुपसर्जनस्त्रीप्रत्ययविषयकाणां च वाक्यानामुपप्लवात्तत्र परमकारीषगन्धीपुत्र इत्याद्यनुपसर्जनस्त्रीप्रत्ययविषयकत्वेनोपप्लुते प्यङ इत्यादिशास्त्रे तदादिनियमो न, अतिकारीषगन्ध्यापुत्र इत्याद्युपसर्जनस्त्रीप्रत्ययविषयकत्वेनोपप्लुते वाक्ये तु प्रत्ययग्रहणपरिभाषया सोऽस्त्येवेति भावः। तदेतदाह। [यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाहेत्यादिना।] [तत्रेति।] तद्विषयकत्वेनोपप्लुते शास्त्र इत्यर्थः। [अस्त्येवेति।] तद्विषयकत्वेनोपप्लुते वाक्ये प्रकृतनिषेधाप्रवृत्त्या प्रत्ययग्रहणपरिभाषया तदादिनियमोऽस्त्येवेति भावः। ननु विषयसप्तमीस्वीकारेऽनुपसर्जन इवोपसर्जनलक्ष्यविषयकतयाऽपि वाक्यकल्पनाया न्यायप्राप्ततया तादृशवाक्यसार्थक्यान्यथानुपपत्त्या तत्र तदन्तविधि द्वयस्य स्वीकार्यतया स्यादेवाति-कारीषगन्ध्यापुत्र इत्यत्रातिप्रसङ्ग इति चेन्न। कारीषगन्ध्येव मनुष्य इत्यर्थे इवे प्रतिकृताविति विहितस्य कनो लुपि निष्पन्नस्य कारीषगन्ध्याशब्दस्य पतिशब्देन समासे संप्रसारणसंपादकतया तादृशवाक्यस्य सार्थकत्वेन तदन्तविधिद्वयापादकसामर्थ्यस्य दुर्वचतया निरुक्तातिप्रसङ्गस्य वक्तुमशक्यत्वात्। नन्पसर्जनस्त्रीप्रत्ययविषयेऽनया परिभाषया तदादिनियमनिषेधस्याप्रवृत्तौ गोस्त्रियोरिति सूत्रभाष्योदाहृतेऽतिराजकुमारिरित्यत्र ह्रस्वानुपपत्तिः। गोस्त्रियोरित्यत्र समास-शास्त्रीयप्रथमानिर्दिष्टत्वरूपस्य विग्रहे नियतविभक्तिकत्वरूपस्य वा शास्त्रीयस्यैवोपसर्जनत्वस्य

नियमो ऽस्त्येवेत्यर्थः। प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्। तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वे ऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः॥ अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसंभवात्॥

---

ग्रहणेन तादृशोपसर्जनतायाश्च राजकुमारीशब्द एव सत्त्वेन स्त्रीप्रत्ययस्य चात्र कुमारीशब्द-प्रकृतिकत्वात्तादृशस्त्रीप्रत्ययान्ततायाश्च तदादिनियमेन तत्र दुर्वचतयोपसर्जनस्त्रीप्रत्ययान्तान्तसमास-रूपप्रातिपदिकस्याभावेन गोस्त्रियोरित्यस्याप्राप्तेरित्यत आह। [प्रत्यासत्त्येति।] एवं च प्रकृते राजकुमारीशब्दस्यैव स्त्रीप्रत्ययान्तताया आवश्यकत्वात्कुमारीशब्दस्य चातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वेन प्रकृतपरिभाषया तदादिनियमनिषेधे राजकुमारीशब्दे स्त्रीप्रत्ययान्तताया विग्रहे नियतविभक्तिकत्वरूपशास्त्रीयोपसर्जनत्वस्य च सत्त्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूप-प्रातिपदिकत्वस्यातिराजकुमारीशब्दे सत्त्वेन ह्रस्वसिद्धिरिति बोध्यम्। ननु गोस्त्रियोरित्यत्रापि लौकिकमेवोपसर्जनत्वमाश्रीयताम्। तथाच कुमारीशब्दे लौकिकोपसर्जनतायाः स्त्रीप्रत्ययान्तत्वस्य च सत्त्वेन तदन्तसमासरूपप्रातिपदिकत्वस्यातिराजकुमारीशब्दे सत्त्वेन न ह्रस्वानुपपत्तिरितीदं प्रत्यासत्त्याश्रयणमनर्थकमिति चेन्न। राजकुमारीमिच्छन् आचरन्वा ब्राह्मणो राजकुमारीत्यत्र ह्रस्वापत्त्या गोस्त्रियोरित्यत्र लौकिकोपसर्जनताया ग्रहीतुमशक्यत्वात्। [अत एवेति।] प्रत्याय-सत्त्याश्रयणादेवेत्यर्थः। [असंभवादिति।] अयं भावः। परिभाषायां स्त्रीप्रत्ययपदेन न तदन्तग्रहणम्। तेन तदादिविधेरप्रसक्त्या निषेधस्यनुपयोगात्। किन्तु स्त्रीप्रत्ययमात्रस्यैव। एवं च प्रत्यासत्त्या "यो ऽह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा तत्र परिभाषा प्रत्ययग्रहण इती" ति ष्यङ इति सूत्रस्थभाष्यस्वारस्येन च स्त्रीप्रत्ययगतस्यैवोपसर्जनत्वस्य ग्रहीतुमौचित्यात्तन्मात्रगतस्य शास्त्रीयोपसर्जनत्वस्यासंभवाल्लौकिकमेवोपसर्जनत्वं ग्राह्यमिति। तच्च न विशेषणत्वमात्रम्। स्त्रीप्रत्ययानां

द्योतकत्वात्तद्योत्यस्य स्त्रीत्वरूपलिङ्गविशेषस्य प्रकृत्यर्थं प्रति सर्वथा विशेषणत्वेनानुपर्जनस्त्रीप्रत्ययस्य क्वाप्यसंभवात्परिभाषाया निर्विषयत्वप्रसङ्गात्। किन्तु स्वघटितवृत्त्युपस्थापितार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपम्। तच्च स्त्रीप्रत्यये प्रकृत्यर्थद्वारकमाश्रयणीयम्। स्त्रीप्रत्ययार्थस्य स्वप्रकृत्यर्थं प्रति विशेषणत्वेन साक्षात्तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य स्त्रीप्रत्ययेऽसंभवादेति बोध्यम्। ननु वासुदेववाचकाकारात्पुंयोगलक्षणे ङीषि यस्येति चेत्यकारलोपे तस्य निरित्यनेन प्रादिसमासे निरिरित्यत्र स्त्रीप्रत्ययमात्रस्यापि विग्रहे नियतविभक्तिकत्वरूपस्य शास्त्रीयोपसर्जनत्वस्य संभवादिदमयुक्तमिति चेन्मैवम्। तत्र तन्मात्रस्य कथं चित्तत्संभवेऽपि फलाभावात्। न च विशिष्टस्य स्त्रीप्रत्ययान्ततदादित्वाभावाद्ध्रस्वाभाव एव फलमिति वक्तुं शक्यमिति वाच्यम्। अतिराजकुमारिरित्यादौ ह्रस्वसिद्धये गोस्त्रियोरुपसर्जनस्येत्यस्योपसर्जनस्त्रीप्रत्ययान्तान्तप्रातिपदिकस्य ह्रस्व इत्यर्थस्यावश्यकतयाऽत्र ह्रस्वस्य दुर्वारत्वात्। नचैवमपि विशिष्टस्य स्त्रीप्रत्ययान्ततदादित्वाभावात्स्त्रीभ्यो ढगिति ढगभावः फलमिति वाच्यम्। तस्य स्त्रीरूपार्थवाचकेभ्यो ढगित्यर्थस्य वक्ष्यमाणतया तत्र प्रत्ययग्रहणस्यैवाभावेन प्रकृतपरिभाषाया अविषयत्वात्। न च तस्य तादृशार्थकत्वेऽनुपसर्जनादिति सूत्रस्थभाष्यविरोधः। तत्र हि तदधिकारसामर्थ्येन तदन्तविधिज्ञापनात्कौम्भकारेयसिद्धिः। अन्यथा कारशब्दान्ङीप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमभावेन विशिष्टस्य स्त्रीप्रत्ययान्तत्वेन ढक्सिद्धावपि कारीशब्दस्यापि स्त्रीप्रत्ययान्ततयाकदाचित्ततोऽपि ढकि कुम्भकारेयोऽप्यापद्येतेत्युक्तम्। त्वदुक्तार्थे केवलकारीशब्दस्य स्त्रीत्वरूपार्थवाचकत्वाभावात्तदसङ्गतिः स्पष्टैवेति वाच्यम्। विशिष्टस्य स्त्रीत्वेन योगे विशेष्ये तदयोगस्य वक्तुमशक्यतया कारशब्दस्यापि स्त्रीवाचकत्वेन तद्विरोधाभावात्। निष्कर्षनिवेशे मानाभावात्। नचैवं दरदिडबिडादिशब्देभ्यो ढगापत्तिः। तेषामपि स्त्रीवाचकत्वादिति वाच्यम्। तेषां ढकोऽनभिधानात्। शिवादिपाठेन तत्र ढकं बाधित्वाणेष्टसिद्धेश्च। ध्वनितं चेदमृष्यन्धकेति सूत्रे भाष्ये इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम्। नचैवमत्र पक्षे दरदादीनां शिवादिपाठकल्पनायां गौरवमिति वाच्यम्। प्रत्ययग्रहणपक्षेऽपि वैमात्रेय इत्यादिसिद्धये विमात्रादीनां शुभ्रादिगणपाठकल्पनाया अवश्यकत्वेन तुल्यत्वात्। किञ्च प्रत्ययग्रहणपक्षे स्त्रीशब्देन स्त्र्यधिकारोक्तप्रत्ययानां ग्रहणमित्यर्थलाभाय स्त्रीशब्देऽधिकस्य स्वरितत्वप्रतिज्ञानस्य, स्त्रियां क्तिनित्यधिकारविहितानामग्रहणाय प्रत्यासत्तेश्चावश्यकतया गौरवात्। जम्बूशब्दादस्त्रीप्रत्ययान्ताद्यचश्चेति ढक् प्राप्तिप्रतिपादनपरर्ष्यन्धकेति सूत्रस्थभाष्यविरोधेन तत्पक्षस्यायुक्तत्वाच्च। किञ्च ढकि लोप इत्यारम्भसामर्थ्येन पितृष्वसृमातृष्वसृशब्दाभ्यामपूर्वतया ढक्कल्पनापेक्षया

अस्याः प्रत्ययग्रहणइत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसंबन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्यास्त्रीप्रत्ययग्रहणे। ध्वनितं चेदमर्थवत्सूत्रे भाष्ये॥ इयं च वाचनिक्येव।

---

तत्सामर्थ्येनास्यार्थपरत्वकल्पनाया एव न्याय्यत्वाच्चेत्यलमतिविस्तरेण। नन्वत्र परिभाषायां लौकिकोपसर्जनत्वस्वीकारे एकदेशिसमासप्रत्याख्यानपरपरवल्लिङ्गमिति सूत्रस्थभाष्यविरोधः। तत्र हि समानाधिकरणसमासमाश्रित्यैकदेशिसमासः प्रत्याख्यातः। यद्यत्र लौकिकोपसर्जनत्वं गृह्यते, तदाऽर्धपिप्पलीमतिक्रान्त इति विग्रहे एकदेशिसमासपक्षे ङीष उपसर्जनत्वात्तदादिनियमेन ह्रस्वाप्रवृत्तेरत्यर्धपिप्पलीति भवति। कर्मधारयाश्रयणेन तत्प्रत्याख्याने तु स्त्रीप्रत्ययस्यानुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वप्रवृत्त्याऽत्यर्धपिप्पलिरिति भवतीति फलभेदस्य स्पष्टतया तदसङ्गतिः। शास्त्रीयोपसर्जनत्वग्रहणे त्वेकदेशिसमासपक्षे एकविभक्तावषष्ठ्यन्तवचनमिति प्रतिषेधेन, समानाधिकरणसमासपक्षे कस्यापि विग्रहे नियतविभक्तिकत्वाभावेन पक्षद्वयेऽप्युपसर्जनत्वाभावात्तदादिनियमनिषेधेन ह्रस्वो भवतीति फलभेदाभावान्नासङ्गतिरिति चेन्न। निरुक्तदिशाऽत्र लौकिकोपसर्जनताया ग्रहणीयतयाऽऽरम्भप्रत्याख्यानयोः फलभेदाय तेषामनभिधानस्य शरणीयत्वात्। एतेन निरिरित्यत्र स्त्रीप्रत्ययमात्रस्यापि शास्त्रीयोपसर्जनत्वसंभवाच्चिन्त्यमिदमित्यपास्तम्। एतत्प्रवृत्तिस्थलमाह। [अस्या इति।] [अपवादत्वादिति।] एवं चोत्सर्गसमानदेशा अपवादा इति न्यायेन तद्वदस्यापि सामान्यग्रहणे विशेषग्रहणे च प्रवृत्तिरिति भावः। ननु तस्य न्यायस्य श्रमकजादौ व्यभिचारान्न तेनात्रोक्तार्थलाभ इत्यत आह। [तदेकवाक्यतापन्नत्वाच्चेति।] वाक्यैकवाक्यतेत्यर्थः। तत्र सामान्यग्रहणं गोस्त्रियोरित्यादौ। विशेषग्रहणं ष्यङ इत्यादौ। [ध्वनितं चेदमर्थवत्सूत्र इति।] तत्र हि समासग्रहणं नियमार्थमित्युक्तम्। यदि हि स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणेऽपीयं परिभाषास्यात्तर्हि राजकुमारीत्यत्र प्रत्ययान्तपर्युदासवशात्पूर्वसूत्रेणाप्राप्तायाः प्रातिपदिकसंज्ञायाः प्रवर्तकतया समासग्रहणस्य चारितार्थ्येन तदसङ्गतिरेवेति तेनायमर्थो ध्वनित इति बोध्यम्। [वाचनिक्येवेति।]

ष्यङ इति सूत्रे भाष्ये स्पष्टा॥ २६ ॥

नन्वेवं तरप्तमपौ घ इत्यादिना तरबन्तादेः संज्ञा स्यादत आह॥

---

ष्यङ इतिसूत्रे प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवति। अस्त्रीप्रत्ययेनानुपसर्जनेनेति वार्तिकोक्तमनूद्य तत्र ज्ञापकताया भगवतानुपन्यासादस्य वाचनिकत्वं भगवतोऽभिप्रेतमिति भावः। २६

एवमुत्तरपदविशेष्यकप्रत्ययग्रहणस्थले, तदाक्षिप्तपूर्वपदविशेष्यकप्रत्ययग्रहणस्थले च प्रत्ययग्रहणपरिभाषोपस्थितिप्रयुक्तातिप्रसङ्गवारकं परिभाषाद्वयं व्याख्यायेदानीं पुनस्सामान्यतः प्रत्ययग्रहणस्थले शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधिनिषेधिकां परिभाषामवतारयति [नन्वेवमित्यादिना।] एतेनेयं स्त्रीप्रत्यये चेत्यतः प्रागेव निरूपयितुमुचिता। तदाद्यंशनिवर्तक परिभाषामध्ये निरूपणे संगत्यभावादिति हर्युक्तपमास्तम्। यद्यपीयं प्रत्ययग्रहणे चापञ्चम्या इति परिभाषानन्तरमेव निरूपयितुमुचित्ता, तथापि तयापरिभाषया शब्दस्वरूपविशेष्याध्याहार मूलकतदन्तविधेरेव निषेधो, न तूपात्तविशेष्यनिबन्धनस्येत्यर्थध्वननाय तदुत्तरमुत्तरपदाधिकार इति परिभाषानिरूपणमिति प्रागुक्तमनुसन्धेयम्। धर्मिग्राहकसाजात्याद्यस्य प्रत्ययस्य संज्ञित्वं संभाव्यते, तेन प्रत्ययेन तदन्तग्रहणं नेति परिभाषार्थः। तेनेदूदेद्द्विवचनमित्यत्र वर्णग्रहणेन तदन्तविधौ नायं निषेधः। नचैवं कृदतिङित्यत्र पर्युदस्यमानस्य तिङस्संज्ञित्वसंभावनाया अभावात्तत्रैतन्निषेधाप्रवृत्तौ तेन तदन्तविधिः स्यादिति वाच्यम्। तथासति तत्र धातोरित्यधिकाराद्धातुविहितस्यैव तेन कृत्संज्ञाविधानात्तिङन्तस्य धातुविहितत्वाभावादेव कृत्संज्ञावारणसंभवेऽतिङ्ग्रहणस्य वैयर्थ्यापत्तेः। षः प्रत्ययस्येत्यादावप्युपदेशपदानुवृत्त्या उपदिश्यमानस्यादेरेवेत्संज्ञाविधानेन प्रत्ययान्ते तत्त्वासंभवादेव न तदन्तविधिः। तद्धितश्चासर्वविभक्तिरित्यत्र त्वसर्वविभक्तिरिति विशेषणेन विभक्त्युत्पत्तियोग्यतावत एव संज्ञाविधानलाभेन प्रत्ययमात्रस्य तादृशयोग्यताया अभावेन तद्विशेषणबलात्संज्ञाविधावपि तदन्तलाभः। असर्वविभक्तिरित्येतद्घटकविभक्तिपदेन तु न तदन्तविधिः। तथासत्यवयवकात्स्न्र्यबोधकसर्वपदविशेषणवैयर्थ्यापत्तेः। कृत्तद्धितेति सूत्रे तदन्तांशलाभस्त्वर्थवद्ग्रहणानु-

# संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

---

वृत्त्यातस्य च लौकिकार्थवत्परत्वात्केवलयोश्च तयोस्तादृशार्थासंभवादिति स्पष्टमन्यत्र। डतरडतमयोश्च केवलयोस्सर्वनामसंज्ञायाः फलाभावादेव तदन्तविधिरिति चान्यत्र निरूपितम्। एवं वतुबन्त्योरपि केवलयोः संख्यासंज्ञायां फलाभावादेव तदन्तविधिः सामन्त्रितमित्यत्राप्यामन्त्रितमिति महासंज्ञाकरणेनामन्त्रणमामन्त्रितमित्यन्वर्थसंज्ञाविज्ञानात्केवलप्रत्ययमात्रेणामन्त्रणासंभवात्तदन्तविधिरिति बोध्यम्। एतत्फलं तु कुमारीगौरितरेत्यत्र घरूपेति ह्रस्वाप्रवृत्तिरिति सुप्तिङन्तमिति सूत्रे भाष्ये उक्तम्। तत्र गौरीशब्दात्तरपि 'अष्टवर्षा भवेद्गौरी' ति स्मृत्या गौरीशब्दस्य वयोवचनत्वप्रतीत्या वयोवाचकानां पाक्षिकजातिकार्यस्य जातेरिति सूत्रभाष्याभिप्रेतत्वेन तसिलादिष्वित्यनेन प्राप्तपुंवत्त्वस्य जातेश्चेत्यनेन निषेधे घरूपेतिह्रस्वे टापि गौरितरेति सिद्धौ तेन सह कुमारीशब्दस्य बहुव्रीहौ कुमारीशब्दे स्त्रियाः पुंवदित्यनेन प्राप्तपुंवद्भावस्य प्राग्वदेव निषेधे कुमारीगौरितरेति समस्तं रूपम्। एतत्परिभाषाभावे तरप्तमपौ घ इत्यत्र प्रत्ययग्रहणपरिभाषया तदन्तविधौ तरबन्तस्य घसंज्ञायां घरूपेत्यत्र घपदेन तरबन्तस्योपस्थितावुत्तरपदभूते घे परतो ह्रस्व इत्यर्थलाभात्तेनात्र कुमारीशब्दे ह्रस्वापत्तिरिति तदाशयः। ननु संज्ञाविधौ निषेधेऽपि प्रदेशे घरूपेत्यादौ घपदेन प्रत्ययमात्रग्रहणात्प्रत्ययग्रहणपरिभाषया तदन्तविधौ पुनस्तत्र ह्रस्वापत्तिर्दुर्वारैवेति चेन्न। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नेति परिभाषया तत्र तदन्तविधेर्निषेधात्। अत एव सुप्तिङन्तमिति सूत्रे भाष्ये संज्ञाविधावित्यस्य, हृदयस्येति सूत्रे भाष्ये उत्तरपदाधिकार इति परिभाषायाश्च कुमारीगौरितरेत्येव प्रयोजनं प्रदर्शितं भगवता। प्रत्ययस्य तद्रूपेण ग्रहण एवोत्तरपदाधिकार इति परिभाषायाः प्रवृत्तिरिति तु न युक्तम्। तस्याः घविषये कुमारीगौरितरेत्यादौ प्रयोजनप्रतिपादनपरेण, तत्परिभाषास्वीकारे खित्यनव्ययस्येत्यादावतिप्रसङ्गशङ्कासमाधानपरेण च हृदयस्येति सूत्रस्थभाष्येण विरोधात्। उक्तसूत्रद्वयेऽपि प्रत्ययस्य तत्तद्रूपेण ग्रहणाभावात्। घरूपेति सूत्रस्थप्रागुक्तशेखरग्रन्थविरोधाच्च। एतत्सामर्थ्यादेव प्रदेशेष्वपि न तदन्तविधिरिति सुप्तिङन्तमिति सूत्रस्थ शेखरग्रन्थस्तु येन विधिरिति सूत्रस्थकैयटीयशङ्काग्रन्थानुवादपरतया न तद्विरोधः। तत्र हि भाष्ये प्रत्ययग्रहणं चाञ्चम्या इत्यस्य दृषत्तीर्णेत्यत्र धातुतकारस्य नत्ववारणं भगवता प्रयोजनं दत्तम्। तत्र च कैयटेन 'नच संज्ञाविधौ प्रत्ययग्रहण इति निषेधावतार इत्याशङ्क्य यत्र हि संज्ञाविधानं, तत्रायं निषेधः।

इह तु निष्ठानुवादेन नत्वविधिरिति समाधाय तदुत्तरं संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलमिति पुनराशङ्क्य, यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात्प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत, तस्मात्संज्ञाविधावपि तदन्तविधिनिषेधो रदाभ्यामित्यत्र चे' ति समाहितम्। तत्र न चेत्यादिशङ्काग्रन्थस्यायमाशयः। तत्र परिभाषायां संज्ञया विधिस्संज्ञाविधिरिति तृतीयासमासाश्रयणात्संज्ञाकरणके प्रदेशेऽपि तया तदन्तविधिनिषेधात्प्रत्ययग्रहणं चापञ्चम्या इत्यस्य न तदसाधारणं प्रयोजनमिति। यत्र हीत्यादिसमाधानग्रन्थस्य तु संज्ञाया विधिः संज्ञाविधिरिति कर्मषष्ठ्यन्तेन समासात्संज्ञाविधावेव स निषेधो न तु प्रदेशेऽपीति युक्तमेव तत्प्रयोजनमित्याशयः। संज्ञाविधौ तर्हीत्यादि तदुत्तरशङ्काग्रन्थाशयस्तु संज्ञाविधावित्यत्र कर्मषष्ठ्यन्तेन समासमाश्रित्य यदि संज्ञाविधावेव निषेधो, नतु प्रदेशेऽपीत्युच्यते, तदा घरूपेत्यादौ घपदेन तरप्तमपोरेवोपस्थानात्पुनस्तेन प्रत्ययग्रहणपरिभाषया तदन्तविधौ कुमारीगौरितरेत्यत्र दोषस्तदवस्थ एव। अन्तग्रहणस्य च स्वांशे चारितार्थ्याभावः। अतस्सामर्थ्यात्संज्ञाविधावित्यत्र तृतीयासमासं संबन्धसामान्यषष्ठ्यन्तेन वा समासं स्वीकृत्य संज्ञाविधौ प्रदेशेषु च तदन्तविधिनिषेध इत्यनयैव दृषत्तीर्ण इत्यत्र धातुतकारस्य नत्ववारणसंभवे प्रत्ययग्रहणे चापञ्चम्या इत्यस्य न तदसाधारणं प्रयोजनमिति। यदि संज्ञाविधावित्यादितत्समाधानग्रन्थस्य तु संज्ञाविधाविति निषेधाभावे तरबन्तस्य घसंज्ञायां घरूपेत्यत्र घपदेन तरबन्तस्योपस्थितौ तेनोत्तरपदस्य विशेषणात्पुनस्तदन्तविधौ तरबन्तान्तं गृह्येत। तथाच कुमारीपरमब्राह्मणितरेत्यत्र ह्रस्वापत्तिः। सत्यां तु परिभाषायां प्रादेशिक एकस्तदन्तविधिरिति न तत्र ह्रस्वप्रवृत्तिः। एवं चेदृशफलवैलक्षण्यसत्त्वेन निषेधसामर्थ्यात्प्रदेशेऽपि तयैव तदन्तविधिनिषेध इति वक्तुमशक्यतया दृषत्तीर्ण इत्यादौ दोषवारणाय संज्ञाविधौ, प्रदेशे रदाभ्यामित्यत्र च संज्ञाविधाविति प्रत्ययग्रहणे चापञ्चम्या इति वचनाभ्यां तदन्तविधिनिषेध आवश्यक इत्याशयः। तत्र संज्ञाविधौ तर्हीत्यादिकैयटीयशङ्काग्रन्थोऽत्यन्तमयुक्तः। रदाभ्यां निष्ठातो नः, क्लिशः क्त्वानिष्ठयोः स्फाय स्फी निष्ठायामित्यादिषु प्रत्ययग्रहणे चापञ्चम्या इति निषेधेन तदन्तविधेरप्रसक्त्या निष्ठासंज्ञाविषये संज्ञाविधाविति निषेधस्य सफलत्वेन तत्सामर्थ्यात्प्रदेशेऽपि तदन्तविधिनिषेध इत्यस्य वक्तुमशक्यत्वात्। एवं यदि संज्ञाविधावित्यादिसमाधानग्रन्थोऽप्यत्यन्तमयुक्तः। संज्ञाविधाविति निषेधाभावे तरबन्तस्य घसंज्ञायां घरूपेत्यत्र घपदेन तरबन्तस्योपस्थितावपि तत्प्रकरणे सति संभवे उत्तरपद-इत्यस्य विशेषणतयैवान्वयस्येष्टकेषीकामालानामित्यादिषु क्लृप्ततया अत्रापि तथैवान्वयस्यौचित्येनै-

सुप्तिङन्तमित्यन्तग्रहणमस्यां ज्ञापकम् ॥ न च

---

तत्परिभाषाभावे प्रदेशेषु प्रत्ययान्तान्तं गृह्येतेति वक्तुमशक्यत्वात्। एवं शङ्कासमाधानग्रन्थयोरुभयोरप्यतिफल्गुत्वात्तस्य स्वरूपव्याक्रियैव पराक्रियेति न्यायेन तादृशशङ्काग्रन्थोऽनूदितस्सुप्तिङन्तमिति सूत्रे शेखरे इति न तद्विरोधः। अत एवानुपदं 'न च ज्ञापितेऽपि व्यर्थं, पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरि' त्याशङ्क्य समाधानान्तरमुक्तमुपाध्यायैः। अन्यथाऽनुपदोक्तरीत्यापि तत्र समाधेर्वक्तव्यतया तथानुक्त्या तदर्थस्य तदनभिमतत्वध्वननात्। किञ्च न चेत्यादिकैयटीयशङ्काग्रन्थस्य व्याख्यानभूते 'संज्ञया विधावित्यर्थ इत्यभिमान, इत्युद्योतग्रन्थेऽभिमान इत्युक्त्या प्रादेशिकतदन्तविधिनिषेधस्य नागेशानभिमतत्वं स्पष्टमेव लभ्यते। अत एव गतिकारकोपपदात्कृदित्यादौ तदन्तांशलाभः। एवं पूर्वनिपातविधायके निष्ठेति सूत्रे, निष्ठा च द्व्यजनादित्यादौ च तदन्तविधिः सिद्धः। अन्यथा तत्र प्रकृतपरिभाषाया अप्रवृत्तयेऽनेकक्लिष्टकल्पनाः कार्याः स्युः। किञ्च रदाभ्यामित्यत्र प्रत्ययग्रहणे चापञ्चम्या इत्यनया निष्ठांशे तदन्तांशनिवर्तनपरं येन विधिरिति सूत्रस्थं भाष्यमप्यत एव स्वरसत उपपद्यते। किञ्च घरूपेत्यत्रोक्तरीत्या उत्तरपदाधिकार इति परिभाषयैव निषेधसिध्या प्रदेशेऽप्यनया तदन्तविधिनिषेधे फलाभावः। नच यासुट् परस्मैपदेषूदात्तो ङिच्च, आडुत्तमस्य पिच्चेत्यनयोः परस्मैपदोत्तमपदशब्दाभ्यां प्रत्ययग्रहणपरिभाषया प्राप्ततदन्तांशनिषेधस्तत्फलमिति वाच्यम्। तत्र तदन्तविधौ तदन्तस्य पित्त्वातिदेशे ङित्त्वातिदेशे वा फलाभावात्तत्सामर्थ्यात्तत्र तदन्तांशाप्रवृत्तेर्वक्तुं शक्यत्वात्। न चात्र तादृशक्लिष्टकल्पनापेक्षया प्रादेशिकतदन्तविधिनिषेध एव वरमिति वाच्यम्। तत्पक्षेऽप्युक्तस्थलेषु तन्निषेधाप्रवृत्तये तादृशक्लिष्टकल्पनानामावश्यकतया विशेषाभावात्। किन्त्वस्मन्मते उत्तरपदाधिकार इत्यस्य कुमारीगौरितरेत्युदाहरणपरङ्घरूपेति सूत्रस्थं भाष्यं, तत्रत्यप्रदीपोद्योतग्रन्थौ, येन विधिरिति सूत्रस्थभाष्यप्रदीपोद्योतग्रन्था, अन्ये च नागेशग्रन्थाः स्वरसत उपपद्यन्ते इत्यत्रत्यं तत्त्वं तत्तदाकरग्रन्थपरिशीलनचतुरा विभावयन्त्विति दिक्। अत्र ज्ञापकमाह। [अन्तग्रहणमस्यां ज्ञापकमिति।] न चात्र प्रत्ययग्रहणपरिभाषया तदन्तांशलाभेऽपि श्रूयमाणसुप्तिङन्तयोरेव पदसंज्ञेत्यर्थलाभायान्तग्रहणं स्यादिति कथं तस्य ज्ञापकत्वमिति वाच्यम्। तादृशार्थकल्पनायां हे राजन्नित्यादौ संबुद्धिलोपोत्तरं पदत्वाभावेन

प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसंभवाज् ज्ञापिते ऽपि फलाभाव इति वाच्यम् ॥ पदसंज्ञायाः स्वादिष्विति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् ॥ सुप्तिङन्तमिति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्ववतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह ॥

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

अस्याश्च कर्मणि क्तान्तउत्तरपदे ऽनन्तरो गतिः

---

नलोपस्य प्राप्तेरेवाभावान्नङि संबुध्योरिति निषेधस्य वैयर्थ्यापत्या तथा कल्पयितुमशक्यत्वात्। [प्रत्ययग्रहणपरिभाषयेति] अस्य पदप्रदेश इत्यादिः। [फलाभाव इति।] चारितार्थ्याभाव इत्यर्थः। तथाच ज्ञापकत्वासंगतिरिति भावः। अस्या भाष्यारूढतां दर्शयति। [स्पष्टेति।] अस्येयमिति शेषः। २६

अपवादप्रसङ्गादाह। [नन्वेवमित्यादिना।] [क्तान्तत्वाभावादिति।] प्रत्ययग्रहणपरिभाषया तदादिनियमस्य सत्त्वादिति भावः। [समासो न स्यादिति।] क्षेपे इति सूत्रे क्तेनाहोरात्रावयवा इत्यतः क्तेनेत्यस्यानुवृत्त्या सप्तम्यन्तं क्तान्तेन समस्यते निन्दायामित्यर्थात्तदादिनियमेन नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यात्। समर्थग्रहणस्य विशेष्यत्वमादाय पुनस्तदन्तविधिस्तु न भवति। समासप्रत्ययविधाविति निषेधादिति भावः। [अस्याश्चेति।] अस्य ज्ञापकमित्यत्रान्वयः। एकदेशानुमत्या वचनरूपेण तन्त्रान्तरपरिगृहीतायाः संपूर्णपरिभाषाया

प्रकृतिस्वर इत्यर्थके गतिरनन्तर इति सूत्रे ऽनन्तरग्रहणं ज्ञापकम्॥ तद्ध्यभ्युध्दृतमित्यादावातिव्याप्तिवारणार्थम्॥ प्रत्ययग्रहणपरिभाषयोद्‌धृतशब्दस्य क्तान्तत्वाभावादेवाप्राप्तौ तद् व्यर्थं सदस्या ज्ञापकम्॥ न चाभ्युद्‌धृतमित्यादौ परत्वाद् गतिर्गतावित्यनेनाभेर्निघात एवेति वाच्यम्। पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः॥ अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्धृत्याक्षिप्तधातुनिरूपित-

---

ह्यप्यनुमतिः कल्प्यत इति भावः। ज्ञापकत्वमुपपादयति। तद्धीति। अनन्तरग्रहण हीत्यर्थः। [अतिव्याप्तिवारणार्थमिति।] अभेः प्रकृतिस्वररूपमतिव्याप्तिं वारयितुं क्रियत इत्यर्थः। [ज्ञापकमिति।] एतत्परिभाषाभावे तु प्रत्ययग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वाभावादभेः कर्मक्तान्तोत्तरपदपरत्वाभावेन स्वरस्य प्राप्तेरेवाभावाद्व्यवहितस्य तस्य स्वरवारणार्थं कृतमनन्तरग्रहणं व्यर्थं सदस्या ज्ञापकमिति भावः। ज्ञापकत्वं विघटयति। [न चेति।] [परत्वादिति।] गतिरनन्तर इत्यस्मात्परत्वादित्यर्थः। [निघात एवेति।] एवेन गतिरनन्तर-इत्यस्य व्यवच्छेदः। एवं च ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावान्नेदं ज्ञापकं युक्तमित्याशङ्काभिप्रायः। [पदात्परत्वाभावेन चेति।] चो हेतौ, नतु समुच्चये। तेन यतः पदात्परत्वाभावः, अतः पादादिस्थत्वमिति तदर्थः। पदादित्यस्य कुत्सने च सुपीत्यतः प्रागेवाधिकार इति ग्रन्थकृतान्यत्रोक्तत्वेन गतिर्गतावित्यत्र तदननुवृत्त्या समुच्चयस्य वक्तुमशक्यत्वात्। नन्वेवमप्यनन्तरग्रहणस्य चारितार्थ्यं दुर्निरूपमेव। ज्ञापनोत्तरमनया परिभाषयोद्धृतशब्दस्य क्तान्तत्वादभेस्तन्निरूपितानन्तर्यस्य सत्त्वेन प्रागुक्तातिव्याप्तेस्तदवस्थत्वादत आह। [अनन्तरग्रहण इति।] [तत्सामर्थ्यादिति।] अनन्तरग्रहणसामर्थ्यादित्यर्थः। क्तान्तोत्तरपदनिरूपितानन्तर्यग्रहणे निरुक्तदिशाऽभेस्तदानन्तर्यस्य सत्त्वेन तत्र प्रकृतिस्वरस्य दुर्वारतया तस्य स्वरवारणार्थं कृतमनन्तरग्रहणं

मेवानन्तर्यं गृह्यत इति न दोषः॥ न चाभ्युद्धृतमित्यादावभिना समासे ऽनन्तरस्योदः पूर्वपदत्वाभावे ऽपि स्वरार्थं तदिति वाच्यम्। कारकाद्दत्तेति सूत्रे कारकादिति योगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन

---

व्यर्थमेव स्यात्। अतस्तत्सामर्थ्याद्गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यते। तच्चाभेर्नास्तीति नातिव्याप्तिरिति भावः। नन्वनन्तरग्रहणं नाभेः स्वरव्यावृत्त्यर्थं, किन्त्वन्यार्थमेवेति न तस्य ज्ञापनसंभव इत्याशयेन शङ्कते। [न चेति।] [अभिना समास इति।] हृतशब्दस्योच्छब्देन समासे पुरोहितमितिवद्गतिस्वरेणाद्युदात्तोद्धृतशब्दस्येति भावः। [तदिति।] अनन्तरग्रहणमित्यर्थः। अन्यथा गतिरनन्तर इत्यत्र बहुव्रीहौ प्रकृत्या पूर्वपदमित्यतः पूर्वपदग्रहणानुवृत्त्या कर्मक्तान्ते उत्तरपदे पूर्वपदभूतो गतिः प्रकृतिस्वरं लभत इत्यर्थादभ्युद्धृतमित्येतत्समासे उदः पूर्वपदत्वाभावात्तन्न स्यात्। तथा च सतिशिष्टथाथादिस्वरेणान्तोदात्तत्वं स्यात्। सूत्रं त्वेकगतिके पुरोहितमित्यादौ चरितार्थम्। अनन्तरग्रहणे कृते तु तत्सामर्थ्यात्तदननुवृत्तावुदोऽपूर्वपदत्वेऽपि थाथादिस्वरं बाधित्वा गतिरनन्तर इत्यनेनोदात्तत्वसिद्धिः। एवं च तस्याधिकसंग्रहार्थत्वेन ज्ञापकत्वासंभव इति भावः। समाधत्ते। [कारकाद्दत्तेति।] [गतिग्रहणमनुवर्त्येति।] गतिकारकोपपदात्कृदित्यत एकदेशं गतिग्रहणमनुवर्त्येत्यर्थः। यद्यपि गतिकारकोपपदादित्यतोऽग्रे" थाथघञ्क्ताजबित्रकाणामित्यादौ गतिकारकोपपदादिति समुदितस्यैवानुवृत्तिर्दृश्यते, तथापि योगविभागस्येष्टसिध्यर्थतया एकदेशे स्वरितत्वप्रत्यभिज्ञानात्तन्मात्रस्यैवानुवृत्तिरिति भावः। सूपमानात् क्त इत्यतः क्त इत्यनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदमित्यतः पूर्वपदाधिकारस्यैवात्र संबन्धो नतूत्तरपदादिरित्यत उत्तरपदाधिकारस्य। अयोग्यत्वात्। तस्य च कारकादिति पञ्चम्यन्तेन सहान्वयानुरोधात्पञ्चम्यन्तत्वेन विपरिणामः। तथाच कारकात्पूर्वपदात्परो यो गतिस्ततः परं क्तान्तमन्तोदात्तमिति तदर्थः। ततश्च थाथादिसूत्रेणैव सिद्धे नियमार्थमिदमित्याह। [कारकादेवेति।] [गतिपूर्वपदमिति।] इदंच फलितार्थकथनपरम्।

थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः, तस्मादनन्तरग्रहणं व्यवहितानिवृत्त्यर्थमेवेति ज्ञापकमेव ॥ यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः। अन्यथानया कृद्ग्रहणविषये परत्वात्

---

पञ्चम्यन्तगतिग्रहणस्यात्रानुवृत्त्या गतेः परं क्तान्तं यद्यन्तोदात्तं स्यात्तदा कारकपूर्वपदादेव परमिति तु वाच्योऽर्थ इति बोध्यम्। [थाथादिस्वरेति।] गतिकारकोपपदात्परेषां थाथाद्यन्तानामन्त उदत्त इत्यर्थकथाथघञ्क्ताजबित्रकाणामिति सूत्रविहितस्वरेत्यर्थः। [कृत्स्वरेणेति।] गतिकारकोपपदात्परं कृदन्तं प्रकृतिस्वरं लभते तत्पुरुषे इत्यर्थकेन गतिकारकोपपदात्कृदित्यनेनेत्यर्थः। अनया परिभाषयोद्धृतशब्दस्य कृदन्तत्वेन तस्य च गतिरनन्तर इति स्वरेणाद्युदात्ततयाभिना समासोत्तरमुक्तसूत्रेण स एव स्वरः उद्धृतशब्दस्य भवतीति भावः। एवं च तत्राभीष्टस्वरस्य प्रकारान्तरेण सिद्ध्या न तदर्थमनन्तरग्रहणमित्याशयः। [तस्मादिति।] अनन्तरग्रहणस्य फलान्तराभावादित्यर्थः। [ज्ञापकमेवेति।] एकदेशानुमत्या संपूर्णपरिभाषाया इत्यर्थः। परिभाषार्थमाह। [यत्रेति।] अत्रापिना नञ्पूर्वाणामपीत्यत्रेव नान्यस्य समुच्चयः। किन्तु केवलस्यैव। सोऽपि गतिकारकासमभिव्याहार एव। न तु तत्समभिव्याहार इत्याशयेनाह। [अपिशब्दादिति। यत्र पुनर्गतेः कारकस्य वा निमित्तत्वोद्देश्यत्वान्यतररूपेण ग्रहणं, तत्र तु तत्समभिव्याहारेऽपि सामर्थ्यात्केवलस्य कृदन्तत्वेन ग्रहणं, यथा गतिकारकोपपदात्कृत्, गतिरनन्तर इत्यादाविति बोध्यम्। [अन्यथेति।] अपिशब्दाभावे इत्यर्थः। [परत्वादिति।] तदभावे असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायेन कृद्ग्रहणे गतिकारकपूर्वस्यैवेत्यर्थलाभाद्विरोधेन कृद्ग्रहणविषये परत्वादनया प्रत्ययग्रहणपरिभाषाया बाध एव स्यादिति भावः। नच कृद्ग्रहणविषये सर्वत्र प्रत्ययग्रहणपरिभाषाप्राप्त्याऽस्य अचारितार्थ्येन येन नाप्राप्तिन्यायेनापवादत्वस्य वक्तव्यतया परत्वादित्युक्तिरसंगतेति वाच्यम्। विपूर्वकावपूर्वकलिखधातोः चर्चधातोश्च

प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम्॥ अत एव सांकूटिनमिति गतिकारकोपपदानामिति कृद्ग्रहण इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति न तु संकौटिनमितीति पुंयोगादिति सूत्र भाष्योक्तं सङ्गच्छते। अन्यथा तत्र केवलकूटिन्नित्येतस्यापीनुणन्तत्वात्ततो ऽणि पाक्षिक-दोषो दुर्वार एव स्यात्॥ स्पष्टं चेदं सर्वं समासे

---

कर्मव्यतिहारे णच् स्त्रियामिति णचि स्त्रीप्रत्यये चानुपसर्जनेनेति निषेधात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्तौ गतिविशिष्टस्य णजन्तत्वसंपादकतया स्वाश्चारितार्थ्येनापवादत्वासंभवात्। अत एव णचस्त्रियामञिति विशिष्टादञि वृद्धिस्वरौ टिड्ढाणञित्यादिना विशिष्टान्ङीपि व्याक्रोशीति रूपसिद्धिः। ञिन्नित्यादिर्नित्यमित्यनेन विशिष्टस्याद्युदात्तत्वसिद्धिश्चेति बोध्यम्। एतेन परत्वादित्यस्यापवादत्वादित्यर्थः। यथाश्रुतं तु न युक्तम्। अन्यत्रास्याश्चारितार्थ्यभावादिति विजयाकृदुक्तमपास्तम्। उक्तव्याख्याने फलमाह। [अत एवेति।] गतिकारकसमभिव्याहारे केवलस्य कृदन्तत्वेन ग्रहणाभावादेवेत्यर्थः। [सिध्यतीति।] अत्राद्यपरिभाषया समित्यस्यकूटिन्निनीनुणन्तेन समासे द्वितीयपरिभाषया गतिविशिष्टस्यैवेनुणन्तत्वादणि नुण इत्यनेन विशिष्ठादेवाणि सांकूटिनमिति सिध्यतीति भावः। [अन्यथेति।] तत्समभिव्याहारेऽपि केवलस्य कृदन्तत्वेन ग्रहण इत्यर्थः। नच कूटिन्नित्यस्य कृदन्तत्वाभावे गतिकारकोप-पदानामित्यस्य प्रवृत्तिर्न स्यादिति वाच्यम्। गतिरनन्तर इत्यादाविव तत्राप्यस्या अप्रवृत्त्या दोषाभावात्। नन्वपिशब्देन शब्दमर्यादया तत्समभिव्याहार एव केवलस्य ग्रहण-मित्यर्थलाभान्निरुक्तार्थे मानाभाव इत्यत आह। स्पष्टं चेदमिति। तत्र हि स्नात्वाकालक इत्यादौ ल्यपमाशङ्क्य 'अनञः परस्य ल्यपा भवितव्यम्' नचात्रानञं पश्यामः' इति समाधाय ननु च धातुरेवात्रानञिति पुनराशङ्क्यनञिवयुक्तन्यायेन नञ्भिन्नान्नञ्सदृशात्पदात्परस्य ल्यबित्य-

ऽनञ्पूर्वेति सूत्रे भाष्यकैयटयोः। गतिरनन्तर इत्यत्र तु गतेः पूर्वपदस्य क्तान्तउत्तरपदे परे कार्यविधाना-त्तत्समवधाने ऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम्॥

---

र्थाद्धातोः पदत्वाभावान्न दोष इति समाधाय तदुत्तरं पदत्वेनैव सादृश्यग्रहणे मानाभावादसत्त्व-भूतार्थवाचित्वादिना धर्मेण सादृश्यग्रहणे धातुरपि नञ्सदृशो भवतीति दोषस्तदवस्थ एवेत्याशयेन 'अथवा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्येवं धातुरपि क्त्वाग्रहणेन ग्रहीष्यते।' इति समाहितम्। उक्तपरिभाषया नञ्भिन्नात्परं यत्क्त्वान्तं, तदवयवनिर्दिश्यमानस्य क्त्वो ल्यबित्यर्थादत्र क्त्वान्तस्य नञ्भिन्नात्परत्वाभावान्न दोष इति तदाशयः। तदुत्तरं च कृद्ग्रहणपरिभाषया प्रकृत्य प्रहृत्येत्यादौ विशिष्टस्यैव क्त्वान्तत्वात्तस्य चानञः परत्वाभावात् ल्यप् न स्यात्। परमकृत्वेत्यादौ च स्यादित्यव्याप्त्यतिव्याप्ती उद्भाव्य तद्वारणायानञ्पूर्वग्रहणेन कृद्ग्रहणपरिभाषाया अत्राप्रवृत्तिर्ज्ञापिता। यदि गतिकारकसमभिव्याहारेऽपि केवलस्य क्त्वान्तत्वेन ग्रहणं स्यात्तदा प्रकृत्येत्यादौ कृत्वेति क्त्वान्तस्य नञ्भिन्नप्रशब्दात्परत्वस्य सत्त्वात्तत्राव्याप्तिशङ्का, ज्ञापकेन तत्समाधानं चात्यन्तमसंगतं स्यादिति भावः। कैयटे च प्रकृत्येति प्रतीकमुपादाय 'गतेः क्त्वान्ते समुदायेऽनुप्रवेशात्पौर्वापर्याभावत्तद्व्यतिरिक्तनञ्सदृशशब्दान्तराभावाल्ल्यपोऽप्राप्ति' रित्युक्तम्। गतिकारकसमभिव्याहारेऽपि यदि केवलस्य क्त्वान्तत्वेन ग्रहणं स्यात्तदा नञ्भिन्नप्रशब्दात्परत्वस्य सत्त्वेन तदसंगतिः स्पष्टैव। एवं चोक्तभाष्यकैयटाभ्यां गतिकारकसमभिव्याहारे केवलस्य कृदन्तत्वेन ग्रहणाभावः स्पष्टमभिहित इति बोध्यम्। नन्वेवं पुरोहितमित्यादौ गतिरनन्तर इति स्वरानापत्तिः। तत्रानया परिभाषया विशिष्टस्यैव क्तान्तत्वेन तदुत्तरपदकस्यानन्तरस्य गतेरभावा-दित्यत आह। [गतिरिति।] नन्वेवं देवदत्तेन कृतमित्यादौ केवलस्य कृतशब्दस्य कृदन्तत्वाभावा-त्प्रातिपदिकत्वानापत्तिः। तथा मूलकेनोपदंशमित्यत्र केवलस्योपदंशमित्यस्य कृदन्तत्वाभावात्कृन्मेज-न्तइत्यव्ययत्वमपि न स्यादिति चेत्सत्यम्। धर्मिग्राहकसाजात्यात्परिभाषायास्समासघटकगतिकारक-मात्रपरत्वाभ्युपगमेनादोषात्। किञ्च धर्मिग्राहकमानादेवास्याः कृन्मात्रग्रहणविषयत्वमपीत्याह।

इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च न तु कृदकृद्ग्रहण इति, अनुपसर्जनादिति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥

पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः। येन विधिरित्यस्यायं प्रपञ्चः। तेनेष्टकचितं पक्वेष्टकचितमित्यादावेष्टकेषीकामालानां चिततेति ह्रस्वो महान् परममहान् परमातिमहानित्यादौ सान्तमहत इति दीर्घश्च

---

[इयं चेति।] [अनुपसर्जनादिति।] तत्र हि भाष्येऽनुपसर्जनाधिकारज्ञापिततदन्तविधेरुदाहरणभूते कुम्भकारीत्यत्र प्रकृतपरिभाषया संघातस्यैवाणन्तत्वान्ङीपोऽन्यथासिद्धिमाशङ्क्य 'कृद्ग्रहण इत्युच्यते' नचेदं कृद्ग्रहणं, कृदप्यण् तद्धितोऽप्यणित्युक्त्वा समाहितम्। तेन जिन्नित्यादिर्नित्यमित्यादावस्याः परिभाषाया अप्रवृत्त्या दतिहरिरित्यादौ विशिष्टस्य नाद्युदात्तत्वमित्यवधेयम्। २८

तदन्तविधिप्रस्तावादाह। [पदाङ्गेति।] [विशेष्यमिति।] तथाच तदधिकारे तयोर्विशेष्यत्वमेवेत्यत्र तात्पर्यग्राहकमेवेदं नापूर्वमिति भावः। तदाह। [येन विधिरित्यस्येति।] अत्र पदपदेन केवलपदशब्दस्य पदैकदेशन्यायेनोत्तरपदशब्दस्य च ग्रहणम्। तथा च केवलपदाधिकारे पदस्य विशेष्यत्वेन तदन्तविधिः। उत्तरपदाधिकारे तु तदाक्षिप्तपूर्वपदस्य, शब्दस्वरूपस्य वा विशेष्यतया तदन्तविधिः। उत्तरपदस्य तु न विशेष्यत्वम्। तदधिकारेऽन्यत्र च तस्य विशेषणताया एव 'सिद्धं तूत्तरपदवचनादि' ति प्रागुक्तभाष्यङ इति सूत्रस्थभाष्यवार्तिकालाभादित्याशयेनोत्तरपदाधिकारे प्रयोजनं दर्शयति। [तेनेष्टकेति।] अङ्गाधिकारे प्रयोजनं दर्शयति। [परममहान्परमातिमहानिति।] अत्र द्वितीयेऽत्यन्तं महानतिमहान्,

सिद्धः। अत एव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम्॥ अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च॥ पादस्य पदाज्यातीत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं येन विधिरित्यत्र भाष्ये स्पष्टम्॥ २९॥

---

परमश्चासावतिमहांश्चेति विग्रहः। [अत एवेति।] परमातिमहानित्यत्र दीर्घस्याभीष्टत्वादेवेत्यर्थः। [भाष्ये स्पष्टमिति।] येन विधिरित्यत्र भाष्ये इत्यर्थः। यद्यपि तत्र वार्तिककृता तस्य च तदुत्तरपदस्य चेत्येव पठितम्, सौत्र तदन्तविधेरपवादोऽयम्, अत एव तस्य चेति पुनरभिहितम्। तदन्तविधौ हि बहुच्पूर्वेऽपि स्यात्, तच्च नेष्टमिति तदाशयः, तथाप्यग्रेऽलैवानर्थकेनेति वार्तिकव्याख्यावसरे भाष्यकृता 'किमर्थमिदमुच्यते, न पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेत्येव सिद्धम्। नचेदं तत्, नापि तदुत्तरपदम्, इत्याक्षिप्य 'तन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः। तदन्तविधिरेव ज्यायान्। इदमपि सिद्धं भवति। परमातिमहान्। एतद्धि नैव तत्, नापि तदुत्तरपदम्' इत्युक्तम्। पदाधिकारेऽङ्गाधिकारे चाङ्गपदयोर्विशेष्यतया सूत्रेणैव तदन्तविधिः। स एव त्वलैवानर्थकेनेति नियम्यत इत्येव ज्यायान्, नतु वार्तिकोक्तोत्तरपदस्येत्यंशः। तथा सति परमातिमहानित्यस्यासिद्धेरिति तद्भाष्याशयः। [केवलपदाधिकारश्चेति।] गृह्यत इति शेषः। नन्वेवमुत्तरपदाधिकारस्थे 'पादस्य पदाज्यातिगोपहतेष्वि' त्यत्रापि पादशब्देन तदन्तविधौ पादेनोपहतं पदोपहतमित्यत्रेव दिग्धपादेनोपहतं दिग्धपादोपहतमित्यत्रापि पद्भावः स्यादत आह। [पादस्येति।] [न तदन्तग्रहणमिति।] एवं च लक्ष्यानुरोधात्ताद्दशेष्वध्याहृतस्य पूर्वपदस्य विशेषणत्वमेवाश्रयणीयमिति भावः। [सर्वमिति।] आदित आरभ्य यदुक्तं तत्सर्वमित्यर्थः। २९

ननु पूर्वपरिभाषाया येन विधिमित्येतत्प्रपञ्चभूततया पदाङ्गाधिकारयोरिव प्रातिपदिकाधिकारेऽपि प्रातिपदिकं विशेष्यीकृत्य येन विधिरित्यनेन तदन्तविधौ

नन्वेवमस्यापत्यमिरित्यादावदन्तप्रातिपदिकत्वाभावादिञ् न स्यादत आह ॥

व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी। यस्तु व्यपदेशहेत्वभावदविद्य-

---

वासुदेववाचकाकारादपत्येऽर्थे इञ् न स्यादत आह। [नन्वेवमिति।] [अदन्तप्रातिपदिकाभावादिति।] सत्यन्यस्मिन्नाद्यन्तवद्भावादित्याद्यन्तवदेकस्मिन्निति सूत्रस्थभाष्यरीत्या स्वघटकत्वस्वघटकपूर्वत्वस्वघटकोत्तरत्वाभाववत्त्वैतत्त्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टे आदिशब्दस्य, स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वैतत्त्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टेऽन्तशब्दस्य च शक्तत्वलाभात्केवलाकारमात्रस्य निरुक्तत्रितयसंबन्धेन समुदायविशिष्टत्वस्य दुर्वचनयादन्तप्रातिपदिकाभाव इति भावः। [इञ् न स्यादिति।] ननु स्वं रूपमित्यतः स्वशब्दानुवृत्त्या, तत्प्रत्याख्याने तस्य चेति वार्तिकेन वा स्वस्यापि ग्रहणादिञ् सिद्धः। न च प्रकृतपरिभाषालब्धार्थानुवाद एव तत्र स्वस्य चेत्यंशो, ननु स्वशब्दानुवृत्त्या, तस्य चेतिवार्तिकेन वा अपूर्वतया साध्य इत्यस्यामवस्थायां परिभाषाया असत्त्वादनया परिभाषया तत्र स्वरूपग्रहणस्य दुर्वचतया निरुक्ताव्याप्तिः सुवचैवेति वाच्यम्। तथा सति व्यपदेशिवद्भावोऽप्रातिपदिकेनेति प्रकृतपरिभाषानिषेधविषये रोणीत्यादौ स्वरूपग्रहणस्यानया परिभाषयाऽलाभात्केवलरोणीशब्दादणोऽसिद्ध्यापत्त्या तत्र स्वस्य चेत्यंशस्यापूर्वत्वेनैव साधनीयत्वादिदमयुक्तमेवेति चेन्न। धर्मिग्राहकसाजात्यात्तस्य निषेधस्य सूत्रोपात्तान्तादिशब्दविषयकताया अन्यत्र प्रतिपादितत्वेन रोणीत्यत्र तदप्रवृत्त्या व्यपदेशिवद्भावेनैव रौण इत्यस्यापि सिद्ध्या तदर्थं येन विधिरित्यत्र स्वशब्दानुवृत्तेस्तस्य चेति वचनस्य वा निष्फलत्वमित्याशयेनादोषात्। अत एवाद्यन्तवदिति सूत्रे भाष्ये "येन विधिस्तदन्तत्वे प्रयोजनम्, अचो यत्, इहैव स्यात्, चेयं जेयम्। इह न स्यात्, एयमध्येयमि"त्युक्तमिति बोध्यम्। परिभाषाघटकव्यपदेशिवदित्यस्यार्थमाह। [निमित्तसद्भावादित्यादिना।] एतच्चाध्याहारलब्धम्। मुख्यव्यवहार-

**मानव्यपदेशोऽसहायः स तेन तुल्यं वर्तते कार्यं प्रातीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः॥ एकस्मिन्नित्युक्तेः**

---

हेतोरसद्भावादित्यर्थः। व्यपदेशिवदित्यत्र विशिष्टोऽपदेशो व्यपदेशः। व्यपदेशोऽस्यास्तीति व्यपदेशी। व्यपदेशिनीव व्यपदेशिवदिति विग्रहः। तत्र तस्यैवेति सप्तम्यन्ताद्वतिः। उपमेये सप्तमीदर्शनात्। मूलं तु फलितार्थपरमिति बोध्यम्। यद्वा तेन तुल्यमित्यनेन तृतीयान्ताद्वतिः। अत्र तृतीयाया उपपदविभक्तित्वेन सम्बन्धार्थकतया तत्र च सर्वविभक्त्यर्थान्तर्भावान्न प्रागुक्तातिप्रसङ्गः। तदेतदुक्तमाद्यन्तवदिति सूत्रे उद्योते। "तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्य" मितीति ध्येयम्। तत्र विशिष्टपदापदेशपदयोः क्रमेणार्थमाह। [मुख्ये व्यवहार इति।] अतिदेशविषयं दर्शयति। [यस्त्विति।] [व्यपदेशहेत्वभावादिति।] मुख्यव्यवहारप्रयोजकनिमित्ताभावादित्यर्थः। [अविद्यमानव्यपदेश इति।] बहुव्रीहिरयम्। अविद्यमानमुख्यव्यवहार इत्यर्थः। इदं चासहायस्वरूपकथनम्। एकपदार्थमाह। [असहाय इति।] सहायश्च सजातीयो द्वितीयः। साजात्यं चातिदेष्टुमिच्छाविषयीभूतो यो धर्मस्तदाश्रयत्वेन। एवं चातिदिदिक्षितधर्मवद्द्वितीयशून्यत्वमसहायत्वमिति फलितम्। यथा इः, इयानित्यादौ केवलप्रत्यये प्रकृतिप्रत्ययोभयनिरूपितस्य यस्माद्विहितस्तदादितदन्तत्वरूपधर्मस्यातिदेशात्तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिः। यथा च व्यतिसे इत्यादौ केवल से इति प्रत्ययमात्रस्य तिङन्तत्वनिबन्धनपदत्वसिद्धिश्च। नहि तत्र तादृशधर्माक्रान्तो द्वितीयोऽस्तीति तेऽसहायाः। हरिष्वित्यादौ तु सुप्यस्माद्विहितस्तदादितदन्तत्वरूपधर्माक्रान्तस्य विशिष्टस्य सत्त्वेन सोऽससहायत्वात्तत्र तद्धर्मस्यातिदेष्टुमशक्यतया न तस्य सुबन्तत्वनिबन्धनपदत्वापत्तिरिति बोध्यम्। [कार्यं प्रतीति।] कार्यार्थमेवातिदेशाङ्गीकारादिति भावः। तदेवाह। [एकस्मिन्निति।] एतेन तत्तन्निमित्तरूपाप्रधानकार्यस्यैवानेनातिदेशः। प्रधानकार्यं तु स्वशास्त्रेणैवेति ध्वनितम्। तदेतदाह। [तेनाकारस्याप्यदन्तत्वान्न क्षतिरितीति।] एवं च यादृशविशेषणवैकल्यप्रयुक्तो विशिष्टव्यवहाराभावस्तादृशविशेषणस्यारोपः प्रकृतपरिभाषया बोध्यते। तन्मूलकत्वाद्व्यवहारस्याप्यारोपविषयत्वम्।

समासन्नयने आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्तत्वम्। अन्यथा समासन्नयने भव इत्यर्थे वृद्धाच्छः दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात्। अत एव हरिष्वित्यादौ सोः पदत्वं न। लोकेऽपि बहुपुत्रसत्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठोऽ

---

एतावतैवायं व्यपदेशातिदेश इति व्यवहार इति बोध्यम्। परिभाषाघटकैकस्मिन्नित्यस्य फलमाह। [नादित्वमिति।] [अन्यथेति।] एकस्मिन्नित्यस्याभावे इत्यर्थः। अयं भावः। स्वघटकत्वस्वघटकपूर्वत्वस्वघटकोत्तरत्वाभाववत्त्वैतत्त्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टे आदिपदस्य शक्ततया भकाराकारस्य समुदायघटकसशब्दोत्तरत्वस्यैव सत्त्वेन वस्तुतः तस्य तत्समुदायनिरूपितादित्वस्याभावेऽप्येकस्मिन्नित्यस्याभावेऽनया परिभाषया तत्र स्वघटकोत्तरत्वाभाववत्त्वरूपविशेषणस्यारोपेण तस्यापि समुदायनिरूपितादित्वलाभाद्विशिष्टस्य वृद्धसंज्ञायां वृद्धाच्छ इति छप्रत्ययापत्तिः। एवमन्तशब्दस्य स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वैतत्त्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टे शक्ततया दरिद्राताविकारस्य द्राशब्दनिरूपितपूर्वत्वस्यैव सत्त्वेन वस्तुतस्तस्य तत्समुदायनिरूपितान्तत्वस्याभावेऽप्यनया परिभाषया स्वघटकपूर्वत्वाभाववत्त्वरूपविशेषणस्यारोपेण तस्यापि समुदायनिरूपितान्तत्वलाभाद्विशिष्टादिवर्णान्तलक्षणोऽच् स्यात्। एकस्मिन्नित्यस्य सत्त्वे तु मुख्यादित्वान्तत्ववतोस्सकाराकारद्राशब्दघटकाकारयोस्सत्त्वेन भाकाराकारस्य रेफेकारस्य च निरुक्तदिशाऽसहायत्वाभावात्प्रकृतपरिभाषया अप्रवृत्तौ न दोष इति। फलान्तरमाह। [अत एवेति।] एकस्मिन्नित्यस्योक्तेरेवेत्यर्थः। [पदत्वं नेति।] अन्यथा तत्र यस्माद्विहितस्तदादित्वस्याशास्त्रीयस्याप्यनया परिभाषयातिदेशात्तत्त्वं दुर्वारमिति भावः। अस्याः परिभाषाया एकस्मिन्नेव ज्येष्ठत्वकनिष्ठत्वादिव्यवहाररूपलोकन्यायमूलकताया आद्यन्तवदिति सूत्रे भाष्यकृतोक्तत्वेन तेनैवास्या निरुक्तविशेषविषयत्वमपि लभ्यत इत्याह। [लोकेऽपीति।] [एकस्मिन्निति।] एकस्मिन्पुत्र इत्यर्थः। [ज्येष्ठकनिष्ठत्वादिव्यवहार इति।] आदिपदेन मध्यमत्वसंग्रहः। ज्येष्ठत्वं

**यं मे कनिष्ठोऽयं मे मध्यम इति किं त्वेकपुत्रसत्व एव ॥ अनेन चाशास्त्रीयस्याप्यतिदेशः । अत एव इयायेत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः ।**

---

चाधिकसूर्यपरिस्पन्दवत्त्वम् । कनिष्ठत्वं न्यूनसूर्यपरिस्पन्दवत्त्वम् । मध्यमत्वं तु तदुभयवत्त्वम् । तथाच बहुपुत्रसत्त्वे एकस्मिन् ज्येष्ठे कनिष्ठे मध्यमे वा पुत्रे न प्रागुक्तत्रिविधव्यवहारो दृश्यते । तत्तद्व्यवहाराश्रयस्यान्यस्य सत्त्वात् । किन्त्वेकपुत्र सत्त्व एव । तत्तद्व्यवहाराश्रयस्य कस्यचिदन्यस्याभावादिति तन्न्यायमूलिकाया अस्या असहायविषयकत्वं लब्धमिति भावः । नन्वाद्यन्तवदेकस्मिन्नित्यनेनैव सिद्धे व्यपदेशिवद्वचनं व्यर्थमत आह । [अनेन चेति । [अशास्त्रीयस्यापीति ।] अपिना शास्त्रीयसंग्रहः । एवं चाद्यन्तवदित्यस्य सत्त्वेऽप्याद्यन्तानपदिष्टैकाच्त्वादिरूपाशास्त्रीयकार्यातिदेशार्थमस्य न्यायस्यावश्यकतयाऽवश्यकेनानेनैवाद्यन्तापदिष्टाद्यन्तानपदिष्टशास्त्रीयाशास्त्रीयसकलकार्यनिर्वाहादाद्यन्तवदिति सूत्रं न कार्यमिति भावः । स्पष्टं चेदं तत्रैव सूत्रे प्रदीपोद्योतयोः । शास्त्रीयत्वं च शास्त्रबोधितत्वम् । तत्रादित्वान्तत्वे यस्मिन्विधिस्तदादाविति येन विधिस्तदन्तस्येत्याभ्यां बोधितत्वाच्छास्त्रीये । एकाच्त्वतदादित्वे तु केनापि शास्त्रेणाबोधितत्वादशास्त्रीये इति बोध्यम् । अशास्त्रीयातिदेशे फलं दर्शयति । [अत एवेति ।] [द्वित्वसिद्धिरिति ।] यथैकस्मिन्नधिकसूर्यपरिस्पन्दवत्त्वन्यूनसूर्यपरिस्पन्दवत्त्वादिरूपधर्मत्रयारोपेण युगपज्ज्येष्ठत्वादिव्यवहार तथैकस्मिन्निकारे आरोपिततत्तत्प्रत्ययपरकत्वादिरूपानेकावस्थाभिस्समुदायरूपत्वस्याप्यारोपेण तादृशसमुदायस्य लिट्परत्वावस्थापन्न एकोऽजिकारोऽवयव इत्येकाच्त्वव्यवहारोपपत्त्या द्वित्वसिद्धिरिति भावः । धात्ववयवत्वं तु प्रयोगभेदाद्बहुरूपस्येण्धातोर्लिट्परत्वावस्थापन्न एकोऽजवयव इव लक्ष्यत इति सिद्धम् । एवं प्राथम्यव्यवहारोऽपि, यथा प्रागसूतायामग्रेऽसोष्यमाणायां चासतोऽपि, द्वितीयादीन् बुद्ध्या परिकल्प्य प्रथमगर्भेण हतेति व्यवहारः, एवं भाविप्रयोगान्तरस्थापेक्षया सिद्ध्यतीति प्रकृते धात्ववयवत्वैकाच्त्वप्राथम्यानां निरुक्तदिशा सिद्ध्या द्वित्वसिद्धिरिति बोध्यम् । यद्यप्यत्र धात्ववयवत्वप्राथम्ये अपि व्यपदेशिवद्भावेनैव साध्ये, तथाप्यादित्वपर्यायप्रथमत्वस्य धात्ववयवत्वस्य च शास्त्रीयत्वात्तौ विहायानेनाशास्त्रीयातिदेशे एकाच्त्वनिबन्धनद्वित्वसिद्धिरेव फलत्वेनोक्तेति

अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्, इरियानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति। अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्। यत्तु यो ऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एको ऽजिति कैयट, स्तन्न। तस्यैकपदा ऋगित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। एकपदा ऋगित्यत्रार्थेन युक्तो

---

बोध्यम्। अशास्त्रीयातिदेशस्यावश्यकतां दर्शयितुं फलान्तरमाह। [अत एवेति।] अत्र व्यतिसे इत्यादिः पदत्वमित्यन्तो ग्रन्थोऽपपाठः। लोके तादृशप्रयोगस्यैवाभावादिति गदायामुक्तम्। [कार्यकालपक्ष इति।] तस्यैव मुख्यत्वादिति भावः। अन्यथेति। अशास्त्रीयधर्मातिदेशानङ्गीकार इत्यर्थः। इयायेत्यत्रेकारमात्रे एकाच्त्वोपपत्तये कैयटोक्तां रीतिमनूद्य खण्डयति। [यत्त्वित्यादिना।] [अर्थस्य त्यागोपादानाभ्यामिति।] वर्तिपदार्थेऽर्थस्य त्यागेनान्यपदार्थे तस्योपादानेन चैकाजिति भेदनिबन्धनषष्ठ्यर्थबहुव्रीह्युपपत्तिरिति तदाशयः। तदाह। [यथेति।] [अर्थवतो धातोरिति।] अर्थविशिष्टस्येण्धातोरित्यर्थः। [वर्णरूप एकोऽजिति।] एतदुत्तरमवयव इति व्यपदिश्यत-इति शेषः। अन्वयव्यतिरेकाभ्यां परिकल्पितार्थत्वाच्छब्दार्थसमुदायस्याविवक्षितार्थ एकोऽजवयव इति व्यपदिश्यते। अयमपि समुदायसमुदायिभावो गौण एव। अर्थस्य त्यागोपादानाभ्यां परिकल्पितत्वेन वैवक्षिकत्वात्। अतो व्यपदेशिवद्भावसाध्य एवायमत्र व्यवहार इति कैयटाशयः। [तस्येति।] तादृशव्यवहारस्येत्यर्थः। [मुख्यव्यवहारसत्त्वादिति।] तथाच तद्रीत्याऽत्रैकाच्त्व-व्यवहारोपपादने तादृसमुदायसमुदायिव्यवहारस्य भाष्यरीत्या मुख्यत्वलाभेनेयायेत्यादेर्व्यपदेशिव-द्भावोदाहरणत्वं भाष्यकृतामसङ्गतं स्यादिति भावः। मुख्यव्यवहारसत्त्वादिति क्वचित्पाठः। तत्पक्षे तस्येत्यस्यार्थवत इत्यर्थो बोध्यः। अत्राद्यपाठ एव सुगमः। तदेव भाष्यं दर्शयति। [एकपदा ऋगिति।]

व्यपदेश इति भाष्ये उक्तम्। ऋक्त्वादेरर्थशब्दोभय-वृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेको ऽवयव इत्यर्थे

---

आद्यन्तवदिति सूत्रे भाष्ये व्यपदेशिवद्वचनस्य लोकव्यवहारमूलकत्वप्रतिपादनाय 'अवचना-ल्लोकविज्ञानात्सिद्धम्। अन्तरेणैव वचनं लोकविज्ञानात्सिद्धमेतत्। यथातर्हि वर्णसमुदायः पदं, पदसमुदायो ऋक्, ऋक्समुदायस्सूक्तमित्युच्यते, भवति चैतदेकस्मिन्नप्येकवर्णं पदम्, एकपदा ऋक् एकच सूक्तमिति लोकव्यवहारं प्रदर्श्य 'अत्राप्यर्थेन युक्तो व्यपदेशः। पदं नामार्थः, ऋङ्नामार्थः। सूक्तं नामार्थ' इत्युक्तम्। अत्रार्थेन युक्त इति भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः। पदत्वऋक्त्वादेरर्थशब्दोभयवृत्तित्वेनार्थ-विशिष्टाया ऋचोऽर्थसहायविहीनश्शब्दमात्ररूप एकः पादोऽवयव इत्यर्थमाश्रित्यैकपदा ऋगित्यादि-व्यवहारो मुख्य एवेति नायं व्यवहारो व्यपदेशिवदेकस्मिन्नित्यस्य मूलमिति भावः। भाष्ये पदसमुदायो ऋगित्यत्र पदशब्दः पादपर्यायः। तथा चैकपदा ऋगित्यत्र पदशब्देन पाद एव विवक्षितः। नतु केवलपदमात्रम्। केवलपदरूपायाः कस्याश्चिदप्यृचोऽभावात्। वर्णसमुदायः पदमित्यत्र तु पदशब्दो यथाश्रुत एव। पदं नामार्थः, ऋङ्नामार्थ इत्यादेरर्थोऽपीत्यर्थ इति बोध्यम्। कैयटस्त्वर्थेन युक्तो व्यपदेश इत्यादिभाष्यस्य पदादीनां योऽर्थस्सोऽन्यपदार्थः। तथाचैकपदा ऋगित्यादेरेकः पादो वाचको यस्य ऋगर्थस्येत्यर्थः। शब्दार्थयोरभेदोपचाराच्चार्थ एव पदादिभिरभिधीयत इत्याशयमाह। तद्रीत्या शुद्धार्थस्यैकपदा ऋगित्यादावन्यपदार्थत्वे-त्वियायेत्यादावपि तस्यैवान्यपदार्थत्वमस्तु। शब्दार्थयोरभेदाच्च शब्देऽपि मुख्यैकाच्त्वव्यव-हारोपपत्तिरित्यत्रापि पक्षे तस्य व्यपदेशिवद्भावप्रयोजनत्वप्रतिपादनं भाष्यकृतोऽसंगतं स्यादिति बोध्यम्। ननु कैयटरीत्या नागेशरीत्या वार्थस्य त्यागोपादानाभ्यामियायेत्यादावेकाच्त्वव्यपदेशस्य मुख्यस्य संभवेन तस्य व्यपदेशिवद्भावसाध्यत्वप्रतिपादनपरमाद्यन्तवदिति सूत्रस्थमेकाचो द्वे इति सूत्रस्थं च भाष्यमनुपपन्नं स्यादिति चेन्न। एकाच इत्यस्य बहुव्रीहित्वेन तस्य प्रथमस्ये-त्यनेनोपस्थितावयवस्य विशेषणत्वात्तस्य चानर्थकत्वेनार्थस्य त्यागोपादानयोरत्यन्तमसंबद्धत्व-मित्याशयात्। एतदेव ध्वनयता पदं नामार्थ इति भाष्ये उक्तमिति बोध्यम्। उपसंहरति।

इति तदाशयः॥ तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीरमित्यादिव्यवहारस्तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्॥ न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः ससहायत्वादिति वाच्यम्। शपमादायाङ्गत्वे कार्ये

---

[तस्मादिति।] कैयटोक्तदिशैकाच्त्वोपपादनस्यायुक्तत्वादित्यर्थः। [एकस्मिन्निति।] एकस्मिन्पुत्र इत्यर्थः। [तत्तद्धर्मेति।] अधिकसूर्यपरिस्पन्दवत्त्वन्यूनसूर्यपरिस्पन्दवत्त्वादिरूपधर्मेत्यर्थः। [ज्येष्ठत्वादीति।] आदिना मध्यमत्वकनिष्ठत्वयोः संग्रहः। [एकस्मिन्निति।] एकस्मिन् शिलापुत्रके इत्यर्थः। वयःकृतावस्थानामपि प्राणिनिष्ठत्वेन वस्तुतस्तत्रासत्त्वादाह। [आरोपितेति।] [अनेकावस्थाभिरिति।] बाल्याद्यनेकावस्थाभिरित्यर्थः। सहयोगे तृतीयैषा। [समुदायरूपत्वेति।] तत्तदवस्थाविशिष्टशरीरसमुदायरूपत्वेत्यर्थः। [तथात्रेति।] उक्तप्रकारद्वयेनेयायेत्यत्रेत्यर्थः। [इति लोकन्यायेति।] अनुपदोक्तलोकन्यायद्वयेत्यर्थः। नतु कैयटोक्तरीत्येति भावः। असहायपदार्थं स्पष्टयितुमाशङ्कते। [नचेति।] [अङ्गत्वानापत्तिरिति।] तदादेर्भवेत्यस्य सत्त्वेन भू इत्यस्यासहायत्वाभावात्तत्रानेन न्यायेन तदादित्वस्यातिदेष्टुमशक्यतयाऽङ्गत्वानापत्तिः। तथाच तस्य गुणानापत्तिरिति भावः। [शपमादायेति।] शब्निरूपितेत्यर्थः। अत्र शब्निरूपिताङ्गत्वे चिकीर्षिते भू इत्यस्मिन् शप्प्रत्ययप्रकृतिनिष्ठप्रथमावयवत्वनिरूपितावयवित्वरूपं तदादित्वं ह्यतिदेश्यम्। तादृशधर्माक्रान्तस्य शबव्यवहितपूर्वत्वविशिष्टस्य कस्यचिदन्यस्याभावाद्भू इत्यस्यासहायत्वमेव। भवशब्दस्तु तिप्रत्ययप्रकृतिनिष्ठप्रथमावयवत्वनिरूपितावयवित्वाक्रान्तत्वाद्विजातीय इति न तेन भू इत्यस्य ससहायत्वमिति भावः। सहायतापि सजातीयेनैव लोकसिद्धेति दर्शयितुं लोकदृष्टान्तमाह।

यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्वे ऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत्॥ न चैवं निजौ चत्वार एकाच इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्। एकस्मिन्नित्यस्यापर्यालोचनया तत्प्रवृत्तेः॥ अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन

---

[लोक इति।] इदन्त्वावच्छिन्ने पुत्रेऽतिदिदिक्षितं ज्येष्ठत्वादिकं पुत्रत्वघटितम्। पुत्रत्वं च जन्यत्वे सति पुंस्त्वम्। कन्यायास्तदनाक्रान्तत्वेन विजातीयत्वान्न तया ससहायत्वं पुत्रस्येति तदाशयः। [एकपुत्रस्येति।] एकः पुत्रो यस्येति बहुव्रीहिः। [तस्मिन्नेवेति। एकस्मिन्पुत्र एवेत्यर्थः। असहाय एवैतत्परिभाषाप्रवृत्तौ प्रसक्तं भाष्यविरोधं परिहर्तुं शङ्कते। [न चैवमिति।] [भाष्यासङ्गतिरिति।] तत्र हि नीति, इजिति, निजिति च त्रयाणामेवैकाचां संभवः। अथापि चत्वार इति भाष्यकार आह। तेन च तस्येकारेऽप्येकाच्त्वमभिप्रेतमिति वक्तव्यम्। तच्च तस्य व्यपदेशिवद्भावमन्तरा न संभवतीति यद्यस्यासहाय एव प्रवृत्तिः स्यात्तदा तस्य निजित्यादिभिः ससहायत्वाद्व्यपदेशिवद्भावाप्रवृत्त्या चत्वार एकाच इति भाष्यासङ्गतिरिति भावः। [अपर्यालोचनयेति।] तस्य निरुक्तासहायार्थकत्वापरिज्ञानेनेत्यर्थः। [तत्प्रवृत्तेरिति।] तद्भाष्यप्रवृत्तेरित्यर्थः। एवंच तस्यैकदेश्युक्तित्वेन तद्विरोधोऽकिञ्चित्कर इति भावः। नन्वर्थवता व्यपदेशिवद्भाव इति तास्यनुदात्तेदिति सूत्रस्थभाष्योक्तेरियायेत्यादौ कैयटोक्तरीत्यार्थस्य त्यागोपादानाभ्यामेव व्यपदेशिवद्भावयोजनं भगवदभिप्रेतमिति लभ्यत इति तत्खण्डनमनुचितम्। भाष्ययोरेकवाक्यतासंभवे तत्त्यागस्यान्याय्यत्वादत आह। [अर्थवतेति।] [अर्थवत्पदेनापीति।] अत्रापिशब्दः परिभाषास्थैकशब्दसमुच्चायकः। अर्थवत्पदस्यासहायोपलक्षकत्वे बीजं दर्शयितुमादौ तदर्थमाह। [अर्थबोधकेनेति।] अर्थवतेत्यत्र बोध्यबोधकभावरूपषष्ठ्यर्थसंबन्धे मतुपैतदर्थलाभ इति भावः।

**व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः। प्रायो ऽसहाय एवार्थवत्वात्॥ कुरुते इत्यादौ तशब्दाकारो ऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धि-रित्यन्यत्र विस्तरः॥ ३०॥**

---

व्यपदेशिवदित्यत्र वत्पदार्थमाह। [सदृश इति।] भावशब्दार्थमाह। [कार्यमिति।] नन्वेवमपि कथमनेनार्थवत्पदस्यासहायोपलक्षकत्वलाभोऽत आह। [प्रायोऽसहाय एवेति।] उपसर्गसमभिव्याहारेऽधीत इत्यादौ धात्वादेस्ससहायस्याप्यर्थवत्त्वदर्शनादाह। [प्राय इति।] एवंच क्वचित्ससहायस्यार्थवत्त्वेऽप्येतत्परिभाषाप्रवृत्तिविषये सर्वत्रासहायस्यैवार्थवत्त्वादर्थवत्पदेनासहायोप-लक्षकत्वं युक्तमेवेति भावः। नन्वेवं कुरुत इत्यादौ तशब्दाकारस्य टिसंज्ञानापत्तिः। तस्य ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेरत आह। [कुरुत इति।] [अचामन्त्य इति व्यवहार इति।] आत्मनेपदसंबन्धिनोऽन्यस्याचोऽभावात्तद्व्यवहारेऽकारोऽसहाय एव आत्मनेपदसंबन्धिनस्तकारस्य सत्त्वेऽपि तस्य विजातीयत्वेन न तेन तस्य ससहायत्वमिति भावः। ननु तत्राचामन्त्य इति व्यवहारस्य प्रकृतिमादायापि संभवाच्च तस्य व्यपदेशिवद्भावसाध्यतेत्यत आह। [स आदिरिति।] [तत्रेति।] तशब्दाकारे इत्यर्थः।

यत्त्वत्र चन्द्रिकाकृतः, केचित्तु परस्परनिरूप्यनिरूपकभावापन्नयोर्विभिन्ना-धिष्ठानावस्थितिस्वभावयोर्धर्मयोरेकस्मिन्धर्मिण्यारोपेणावस्थानमनया परिभाषया बोध्यते, लोकन्याये-नाप्येतावानेवाश्रयणीयोऽर्थः सामान्ये पक्षपातात्। नत्वसहायपरत्वमतिदेशस्य। तस्मात्परि-भाषायामेकग्रहणं संख्यापरमेव। इत्थं च स्वस्यैव स्वनिरूपितमवयवत्वमवयवित्वं चेतीयायेत्यादौ द्वित्वमाभ्यामित्यादौ दीर्घश्च सिद्धः। यद्येवं दरिद्राताविकारस्य स्वनिरूपितमन्तत्वं स्यात्। अस्तु, तत्तु न विशिष्टधातुनिरूपितम्। तन्निरूपितमेव ह्यच्प्रत्ययविधावुपयोक्ष्यते। सभासन्नयने भाकाराकारस्य स्वनिरूपितादित्वे सत्यपि तत्तद्धिध्युद्देश्यतापन्नसमुदायनिरूपितादि-त्वस्य दुर्लभतया न वृद्धसंज्ञाप्रयुक्तछप्रत्ययादिप्रसङ्गः। एवंच समुदायसद्भावेऽपीकारस्य स्वनिरूपि-

तावयवत्वनिमित्तकैकाच्त्वव्यवहारे बाधकाभावेन निजौ चत्वार एकाच इति भाष्यं स्वरसत उपपद्यत इति तदेवात्रार्थे प्रमाणम्। एकशब्दास्यासहायार्थकत्वाभावादेव च प्रयोजनविचारोऽपि भाष्यकृता न कृत इति विपश्चितां विचारणीयोऽयमर्थ इत्याहुः, इति वदन्ति। अत्रेदं विचार्यते। आद्यन्तवदेकस्मिन्निति सूत्रे एकस्मिन्नित्यस्यासहायार्थकतायाः कैयटहरदत्तादिभिस्सर्वैरपि प्राचीनैरर्वाचीनैश्च व्याख्यातृभिरुक्तत्वेनेयायेत्यादिबहुलक्ष्यसंग्रहाय तत्सूत्रघटकाद्यन्तवदित्यस्य स्थाने व्यपदेशिवदिति पदं निवेश्य भगवता पठितेऽत्र न्यायेऽप्येकस्मिन्नित्यस्य तैस्तथैव व्याख्यातत्वेन तद्विरुद्धतया तस्य संख्यापरत्वेन व्याख्यानमनुचितम्। ननु बाधेऽदृढेऽन्यसाम्यात्किंदृढेऽन्यदपि बाध्यतामिति न्यायेन निजौ चत्वार एकाच इति भाष्यविरोधात्सर्वेऽपि ते ग्रन्थाश्चिन्त्या एवेति चेन्नैवम्। अत्रैकस्मिन्नित्यस्य सभासन्नयने भव इत्यर्थे भाकाराकारस्यानेन सूत्रेण न्यायेन वाऽदित्वे तस्य वृद्धत्वेन प्राप्तछप्रत्ययाभावार्थं, दरिद्रातेरिकारस्यान्तत्वे प्राप्तेवर्णान्तलक्षणाच्प्रत्ययाभावार्थं च कृतत्वेन, तस्य संख्यापरत्वे, निरुक्तस्थले बहुमध्यस्थयोराकारेकारयोरितरेषां बुद्धिविषयत्वाभावे शते पञ्चाशन्न्यायेनैकत्वस्य सत्त्वात्कृतेऽपि तस्मिंस्तत्र तद्दोषवारणासंभवात्तस्याव्यावर्तकत्वापत्तेः। नच वृद्धिर्यस्याचामादिरित्यत्रादिग्रहणस्यापीदमेव व्यावर्त्यमिति तत्सामर्थ्यादनतिदिष्टादित्ववद्वृद्धेरेव ग्रहणेन न सभासन्नयने भव इत्यत्र दोष इति वाच्यम्। तथासति जानातीति ज्ञा, ब्राह्मणी, तस्या इयमित्यर्थे वृद्धाच्छ इति छप्रत्ययानापत्तेः। तत्राकारस्यानतिदिष्टादित्वाभावेन विशिष्टस्य वृद्धत्वाभावात्। किञ्च लोके बहुपुत्रसत्त्वे शते पञ्चाशन्न्यायेनैकस्मिन्नेकत्वसंख्यायाः सत्त्वेऽपि तत्र ज्येष्ठत्वकनिष्ठत्वमध्यमत्वादिव्यवहारस्यादृष्टतया केवलैकपुत्रसत्त्व एव तादृशव्यवहारस्य दर्शनेन चात्रैकस्मिन्नित्यस्य संख्यापरत्वे लोकन्यायवैगुण्यमपि स्यात्। किञ्च नेनिजतीत्यत्र निज्शब्दोऽप्येकाच्, इज्शब्दोऽप्येकाच्, इकारोप्येकाच्, निशब्दोऽप्येकाजि, त्येकाचो द्वे इति सूत्रे भाष्ये इकारोऽपीति प्रतीकमुपादाय 'अर्थवता व्यपदेशिवद्भाव इत्यनाश्रित्येकारोऽपीत्युक्त, मिति कैयटेनोक्तत्वात्तदवलम्बेनैकस्मिन्नित्यस्य संख्यापरताया आकरग्रन्थविरुद्धत्वात्। किञ्चैकस्मिन्नित्यस्य भगवता प्रयोजनविचाराकरणमात्रं न तस्यासहायार्थकत्वाभावं साधयितुमीष्टे। असहायार्थकत्व एव प्रयोजनविचार आवश्यकोऽन्यत्र नेति वक्तुमशक्यत्वात्। प्रत्युत संख्यापरत्व एव निरुक्तरीत्या तस्याव्यावर्तकत्वशङ्कायाः सत्त्वेन तत्रैव शङ्कासमाधानयोरावश्यकतया तदकरणेनासहायपरत्वमेवैकग्रहणस्य लभ्यत इति तदस्माकमेवानुकूलम्। किञ्च मुख्यव्यवहारहेत्वभावादविद्यमानमुख्यव्यवहारे मुख्यव्यवहारवत्कार्यमेवानेनातिदिश्यते। सभासन्नयने

**ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्यो पि स्यादत आह ॥**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥**

---

सकाराकारे समुदायनिरूपितं मुख्यमादित्वं विद्यते। भाकाराकारे तु न। अतोऽत्र न्याये एकस्मिन्नित्यस्याभावे तस्य संख्यापरत्वे वा भाकाराकारे समुदायनिरूपितादित्वस्यानया परिभाषयाऽतिदेशाद्विशिष्टस्य वृद्धसंज्ञायां ततो भवार्थे वृद्धाच्छ इति छप्रत्ययापत्तिः। स्वस्मिन्स्वनिरूपितमेवावयवत्वमवयवित्वं चानया परिभाषयातिदिश्यत इति तु न परिभाषाक्षरलभ्यः। किञ्च तथाभ्युपगमेऽपि भाकाराकारेऽच्समुदायत्वतदादित्वयोरनयातिदेशे वृद्धिसंज्ञकाद्यवयवकाच्समुदायत्वस्य आकारेऽतिदेशतस्सिद्धतया तादृशसमुदायघटितत्वस्य सभासभ्यने सत्त्वेन वृद्धिसंज्ञकाद्यवयवकाच्समुदायघटितस्य विधीयमानाया वृद्धसंज्ञायाः प्रवृत्त्या छप्रत्ययो दुर्वार एव। किञ्च परस्परनिरूप्यनिरूपकभावापन्नयोर्भिन्नाधिष्ठानावस्थितिस्वभावयोर्धर्मयोरेकस्मिन्धर्मिण्यारोपेणावस्थानमनया परिभाषया बोध्यत इति तु न युक्तम्। तिङ्त्वादेः प्रकृत्या निरूप्यनिरूपकभावस्यासत्त्वेऽपि प्रत्ययत्वस्य प्रकृत्या तत्सत्त्वेन सर्वत्र प्रकृतौ प्रत्ययान्तत्वातिदेशप्रवृत्त्या धातुमात्राद्भावे स्त्रियामप्रत्ययादित्यकारप्रत्ययापत्तेः। तत्र प्रत्ययादित्यनेनानतिदिष्टप्रत्ययान्तस्यैव ग्रहणमित्यर्थकल्पने त्वाचारक्विबन्तेभ्यस्तदापत्तिर्दोषः। संकोचस्यातिदेशविशेषविषयकत्वकल्पने तु क्लेशः। एवं सर्वेषां प्रातिपदिकानामुक्तरीत्या प्रत्ययान्तत्वेनार्थवत्सूत्रस्यैव निर्विषयत्वप्रसङ्गः। सूत्रसामर्थ्येनार्थान्तरकल्पनायां तु क्लेशः। अतो मूलोक्तदिशैकस्मिन्नित्यस्यासहायार्थकत्वमेवोचितमिति सुधियो विभावयन्तु। ३०

पदाङ्गाधिकारयोरिव प्रातिपदिकाधिकारेऽपि प्रातिपदिकं विशेष्यीकृत्य येन विधिरित्यनेन तदन्तविधौ प्राप्ताव्याप्तिवारिकामुक्तपरिभाषां निरूप्य तद्विशेष्यकतदन्तविधौ प्राप्तातिव्याप्तिवारिकां परिभाषामवतारयति। [नन्विति।] [तदन्तविधिनेति।] गर्गादीनामधिकृतेन प्रातिपदिकेन विशेषणाद्येन विधिरित्यस्य प्राप्तेरिति भावः। [परमगर्गादिभ्योऽपीति।] अपिना केवलसमुच्चयः। व्यपदेशिवद्भावेन केवलात्प्रवृत्त्येष्टसिद्धावप्यनिष्टापत्तिरिति भावः। [ग्रहणवतेति।] विशिष्य

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमिति वार्तिकस्थप्रत्ययांशानुवादः। अत एवायं प्रत्ययविधिविषय एव। अत एव येन विधिरिति सूत्रभाष्ये प्रत्ययविधिभिन्ने ऽप्तृन्नित्यादौ गृह्यमाणप्रातिपादिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च संगच्छते॥ अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम्। सो ऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्राति-

---

तत्तद्रूपेणोच्चारणवता प्रातिपदिकेन विशेषणभूतेन तदन्तविधिर्न भवतीति परिभाषार्थः। संभवति कृतार्थानुवादकत्वे सर्वथाऽकृतार्थत्वकल्पनमस्या अयुक्तमित्याशयेनाह। [इयं चेति।] [अत एवेति।] तदंशानुवादकत्वादेवेत्यर्थः। [इयमिति।] ग्रहणवतेति निषेध इत्यर्थः। उक्तार्थे मानमाह। [अत एवेति।] अस्याः प्रत्ययविधिविषयत्वादेवेत्यर्थः। [इत्यादाविति।] आदिना अस्थिदधि चतुरनडुहोरामित्यादिसंग्रहः। [इत्याद्युदाहरणमिति।] आदिना दध्ना, परमदध्ना, अनड्वान्परमानड्वानित्यादिसंग्रहः। [संगच्छत इतीति।] अन्यथा अनया तदन्तविधिनिषेधात्तदसंगतिः स्पष्टैवेति भावः। अस्यानुवादकत्वे युक्त्यन्तरमाह। [अत एवेति।] अस्या अपूर्वत्वाभावादेवेत्यर्थः। [अस्य न कथनमिति।] ग्रहणवतेति निषेधस्याकथनमित्यर्थः। अन्यथा तदन्तविधिनिषेधकवचनकथनावसरेऽयमप्यवश्यं वक्तव्यः स्यादिति भावः। ननु प्रत्ययविधाविति निषेधस्यागृह्यमाणप्रातिपदिकसूत्रेऽपि प्रवृत्त्या कथमस्य तदनुवादकत्वमत आह। [सोऽपीति।] प्रत्ययविधावित्यपीत्यर्थः। विशिष्येत्यस्य व्याख्यानं तत्तद्रूपेणेति। प्रातिपदिकत्वव्याप्यधर्मपुरस्कारेणेत्यर्थः। [गृहीतप्रातिपदिकसूत्र एवेति।] गृहीतं प्रातिपदिकं यस्मिंस्तच्च तत्सूत्रं चेति बहुव्रीहिगर्भः कर्मधारयः। वैकल्पिकत्वात्कबभावः। एवं चोभयोः

पदिकसूत्र एव। ध्वनितं चेदमसमासे निष्कादिभ्य इति सूत्रे भाष्ये॥ अत्र च ज्ञापकं सपूर्वाच्चेति सूत्रम्। अन्यथा पूर्वादिनिरित्यत्र तदन्तविधिनैव सिद्धे किं तेन॥ ३१॥

---

समव्याप्तत्वाद्युक्तमेवास्यास्तदनुवादकत्वमिति भावः। तथा चेगिद्वर्णग्रहणमित्येतदपि नापूर्वम्। किन्तु तत्र विशिष्य प्रातिपदिकग्रहणाभावेनानयोरप्राप्त्यानुवादकमेवेति बोध्यम्। ननु तत्र प्रातिपदिकग्रहणाभावात्कथमीदृशविशेषलाभोऽत आह। [ध्वनितं चेदमिति।] तत्र हि भाष्येऽसमासग्रहणस्य परमनिष्केण क्रीतं परमनैष्किकमित्यत्र विशिष्टाट्ठगभावं फलत्वेन प्रदर्श्य निष्कशब्दादेव ठको विधानादृग्रहणवतेति निषेधेन तदन्तविधेरभावात्समासात्प्रत्ययस्य प्राप्तेरेवाभावेनासमासग्रहणं व्यर्थमित्याशङ्क्य "निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य, तेन प्राग्वतेष्ठञित्यत्र तदन्तविधिस्सिद्धो भवतीति समाधाय पुनः ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। नच ठञ्विधौ काचित् प्रकृतिर्गृह्यते, अतस्तत्र तदन्तविधिनिषेधस्य प्रसक्तेरेवाभावान्न तदस्य ज्ञापनस्य फलमित्याशङ्क्य 'इदं तर्हि प्रयोजनम्, आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्, परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम्, अत्र तदन्तविधिस्सिद्धो भवतीति प्रयोजनान्तरमुक्तम्। यदि समासप्रत्ययविधावित्यस्य साधारणता स्यात्तदा प्राग्वतेष्ठञित्यत्र विशिष्य प्रातिपदिकग्रहणाभावेन ग्रहणवतेति निषेधस्याप्राप्तावपि समासप्रत्ययविधाविति निषेधस्य प्राप्त्या तद्वारणाय तत्र ज्ञापनस्य सफलतया तस्य तत्फलत्वनिराकरणं, प्रयोजनान्तरप्रतिपादनं चासङ्गतं स्यात्। अतस्तेनोभयोस्समानविषयकत्वं ध्वनितमिति भावः। अत्र मानमाह। [अत्र चेति।] [अन्यथेति।] एतत्परिभाषाभावे इत्यर्थः। [सिद्धे इति।] कृतपूर्वीत्यादिप्रयोगे सिद्धे इत्यर्थः। नन्वनयोस्समानविषयकत्वे वृद्धाच्छ इत्यत्र विशिष्य प्रातिपदिकग्रहणाभावेनानयोरुभयोरप्यप्रवृत्तौ वृद्धादित्यस्याधिकृतेन प्रातिपदिकेन विशेषणात्तदन्तविधिः स्यात्। एवं संख्याया अतिशदन्तायाः इत्यादिसंख्याप्रदेशेषु विशिष्य तत्तद्रूपेण प्रातिपदिकग्रहणाभावात्संख्यापदस्य प्रातिपदिकविशेषणतया तदन्तविध्यापत्तिः। तथाच पञ्चक इतिवत्प्रियपञ्चक इत्यपि स्यात्। तथा किंसर्वनामबहुभ्योऽद्व्यादिभ्य इत्यादौ सर्वनामपदेन तदन्तग्रहणेऽतिप्रसङ्गः। किञ्च बहुगणेत्यत्र केवलडतेः

संख्यासंज्ञाविधाने केवलयोर्डतरडतमयोः सर्वनामसंज्ञाविधाने च फलाभावात्संज्ञाविधाविति निषेधाप्रवृत्त्या तदन्तस्य संज्ञेत्यप्यनुपपन्नम्। संज्ञाविधाविति निषेधेन तदन्तविधेरप्रवृत्त्या केवलप्रत्ययानां संज्ञाविधानेऽप्युपदर्शितेषु प्रदेशेषु तदन्तविधिना कतिथा कतरत्रेत्यादिरूपसंपादकतया तेषां संज्ञाविधानस्य सफलत्वादिति चेदत्रोच्यते। प्रत्ययमात्रग्रहणोगिद्वर्णग्रहणान्यतमभिन्नत्वे सति प्रातिपदिकत्ववद्ग्राहकत्वं ग्रहणवत्प्रातिपदिकत्वम्। यत्र प्रत्ययविधायके ईदृशस्य ग्रहणं, तत्र तदन्तविधिर्नेत्यनयोरर्थाङ्गीकारेण न प्रागुक्तदोषः। सर्वनामत्वस्य प्रत्ययभिन्नेषु सर्वादिषु, संख्यात्वस्य बह्वादिषु च सत्त्वेन तयोः प्रत्ययमात्रग्राहकत्वाभावेन निरुक्तान्यतमभिन्नप्रातिपदिकत्ववद्ग्राहकत्वाद्ग्रहणवतेति निषेधेन तदन्तविधेरप्रवृत्तेः। न चैवमपीजादेश्च गुरुमतोऽनृच्छ इत्यत्र निरुक्तप्रातिपदिकग्रहणाभावेन तदन्तविधाविजाद्यन्तादप्याम् स्यात्। एवं नौ व्यच इत्यत्र व्यजन्ताद्बह्वचोऽपि ठन् स्यादिति वाच्यम्। आद्ये लिट्परकस्येजाद्यन्तस्य धातोरसंभवेनादोषात्। इज्वत इत्येव सिद्धे आदिग्रहणेन तत्र तदन्तविध्यभावस्य वक्तुं शक्यत्वाच्च। द्वितीयेऽनेकाच इत्येव सिद्धे व्यज्ग्रहणेन तदभावस्य सुवचत्वाच्च। एवं चेदानीं केवलडतरडतमयोः प्रत्यययोः सर्वनामसंज्ञाविधाने, केवलडतेः संख्यासंज्ञाविधाने च, फलाभावात्संज्ञाविधाविति निषेधं बाधित्वा तदन्तस्यैव ते संज्ञे इति बोध्यम्।

एतेन "केचित्तु वार्तिकपरिभाषयोरनयो स्समानविषयतायां, डतरडतमयोः सर्वनामसंज्ञाविधानसामर्थ्यात्संज्ञाविधाविति परिभाषाबाध इत्यनुपपन्नम्। किंसर्वनामबहुभ्य इत्यत्र तन्निषेधाप्रवृत्या तदन्तविधिना कतरत्रेति रूपसंपादनेन चारितार्थ्यात्। तथा बहुगणेतिसूत्रेण संख्यासंज्ञाविधाने डतिप्रत्यये तदन्तग्रहणं सामर्थ्यादित्यप्ययुक्तम्। संख्याया विधार्थे था इत्यत्र प्रदेशे तदन्तविधिना कतिथेति रूपसंपादनेन कृतार्थत्वात्। एवंच कतरेषां कतीत्यादीनामसिद्धिः। तस्मादत्र गत्यन्तरमन्वेषणीयमित्याहुरिति हर्युक्तमपास्तम्। निरुक्तदिशा संख्यासर्वनामपदयोर्ग्रहणवत्प्रातिपदिकत्वेन प्रदेशे ग्रहणवतेति निषेधेन तदन्तविधेर्दुर्लभतया केवलानां तेषां प्रत्ययानां संज्ञाविधाने फलाभावेन सामर्थ्यात्संज्ञाविधाविति निषेधाप्रवृत्तेस्सुवचत्वात्।

नन्वेवमपि मेघर्तिभयेषु कृञः, आढ्यसुभगेत्यादिषु ग्रहणवतेति निषेधेन तदन्तविधेरप्रवृत्त्या 'अभयङ्करः' स्वाढ्यङ्करणमित्यादेरसिद्धिरिति चेदत्रोच्यते। सर्वाण्यपि तदन्तविधिनिषेधवचनानि विशेषणविशेष्यभावे कामचाराद्विशेष्यविशेषणभावव्यत्याससूचकान्येव। न

नन्वेवं सूत्रान्ताट्ठक् दशान्ताड्डः एकगोपूर्वादित्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह ॥

व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्त्तव्ये पृथग्योगकरणमस्या ज्ञापकम् ।

---

त्वपूर्वाणि। एवं च द्वितीयाश्रितेत्यादिसमासविधौ नडादिभ्यः फगित्यादिप्रत्ययविधौ च यथा समासप्रत्ययविधाविति प्रतिषेधवचनरूपतात्पर्यग्राहकवशाद्गृह्यमाणस्य विशेष्यता, तथा भयाढ्यादौ ‘ उपपदविधौ भयाढ्यादिग्रहण, मित्यादितदन्तविधिप्रयोजनवचनरूपतात्पर्यग्राहकवशाद्गृह्यमाणस्योपपदं प्रति विशेषणत्वात्तदन्तविधिरिति। स्पष्टं चेदं प्रदीपोद्योतयोः कौस्तुभे चेति विभावनीयम्। ३१

एवं तदन्तविधिप्रस्तावात्प्रातिपदिकविशेष्यकतदन्तविधौ प्राप्ताव्याप्त्यतिव्याप्तिवारकं परिभाषाद्वयं व्याख्यायेदानीं व्यपदेशिवदेकस्मिन्निति परिभाषापवादभूतां परिभाषामवतारयति। [नन्वेवमिति।] असहाये व्यपदेशिवद्भावाङ्गीकारे इत्यर्थः। [एकशब्दादिष्वपीति।] आदिना गोशब्दसंग्रहः। एकशतमस्यास्तीत्यैकशतिकः। गोशतमस्यास्तीति गौशतिक इतिवत्केवलैकशब्दाद्गोशब्दादपि च मत्वर्थे ठञ् स्यादिति भावः। ग्रहणवतेत्यतः ग्रहणवतेति पदमत्र संबध्यते। ग्रहणवता प्रातिपदिकेन व्यपदेशिवद्भावो नेति परिभाषार्थः। अत्र ज्ञापकमाह। [पृथग्योगकरणमिति।] एतत्परिभाषाभावेऽकारमात्रेऽकारचरमावयवकसमुदायत्ववत्केवलपूर्वशब्देऽपि विद्यमानपूर्वावयवकपूर्वशब्दत्वस्य व्यपदेशिवद्भावेनातिदेष्टुं शक्यतया पूर्वीतिरूपस्य कृतपूर्वीतिरूपस्य चैकयोगेनैव सिद्धे पृथग्योगकरणमनर्थकं स्यादिति भावः। विजयाकृतस्तु एकगोपूर्वादित्यादेरिति प्रतीकमुपादाय ‘ इदं न युक्तं, पूर्वत्वस्य वर्णान्तरसन्निधानसापेक्षस्यातिदेशालभ्यत्वात्। अत एव

दधीत्यादाविकारस्येकारपूर्वत्वातिदेशेन सवर्णदीर्घो नेति वदन्ति। तदयुक्तम्। यत्र पूर्वपरशब्दौ व्यवस्थावचनौ, तत्र किञ्चिदवधिकपूर्वत्वपरत्वयोरपेक्षितत्वेन तयोर्वर्णान्तरसन्निधानसापेक्षतयाऽतिदेशालभ्यत्वेऽपि प्रकृते पूर्वशब्दस्यावयववाचित्वेन केवलाकारमात्रेऽकारचरमावयवकसमुदायत्ववत्केवलैकशब्देऽप्येकशब्दपूर्वावयवकसमुदायत्वस्य व्यपदेशिवद्भावेन सुलभतया तस्याप्येतत्प्रयोजनत्वोपपत्त्या तद्ग्रन्थस्य युक्तत्वात्। अत एव पूर्वादिनिस्सपूर्वाच्चेत्येकयोग एव कर्तव्ये पृथग्योगकरणस्यैतत्परिभाषाज्ञापकत्वप्रतिपादनपरं येन विधिरिति सूत्रस्थं भाष्यं सपूर्वाच्चेति सूत्रस्थपदमञ्जरीग्रन्थश्च स्वरसतः संगच्छते। अन्यथा त्वदुक्तरीत्या केवलपूर्वशब्दे विद्यमानपूर्वावयवकपूर्वशब्दत्वस्यातिदेशालभ्यतया पूर्वीतिरूपसिद्धये पृथग्योगकरणस्यावश्यकतया तस्यैतत्परिभाषाज्ञापकत्वप्रतिपादनमसंगतं स्यात्। तयोरन्याशयकत्वकल्पनं त्वक्षरस्वारस्याननुगुणम्। दधीत्यत्र सवर्णदीर्घापत्तिस्तु न, अकस्सवर्ण इत्यादावध्याहृतस्य पूर्वशब्दस्य परशब्दस्य वा व्यवस्थावाचित्वेनेकारे सवर्णाजवधिकपूर्वत्वस्य वा सवर्णेऽच्यगवधिकपरत्वस्य वा वर्णान्तरसन्निधानसापेक्षतयाऽतिदेशालभ्यत्वात्। तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वादित्यादिनान्यत्र किञ्चिदवधिकपूर्वत्वपरत्वयोरतिदेशालभ्यत्वं वदता, अत्र केवलैकशब्दे एकशब्दपूर्वावयवकसमुदायत्वस्य व्यपदेशिवद्भावलभ्यत्वं वदता च ग्रन्थकृता पूर्वपरशब्दविषये निरुक्तार्थवैलक्षण्यस्य ध्वननात्। अत एव "अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्रोपात्तं, तत्र, यथा दशान्ताड्ड इत्यादिकैयटग्रन्थव्याख्यावसरे 'यत्रान्तेत्युपलक्षणम्। अत एवैकगोपूर्वादित्यस्य केवलैकशब्देऽप्रवृत्तिरिति येन विधिरिति सूत्रस्थोद्योतग्रन्थश्च संगच्छते। सपूर्वायाः प्रथमाया इत्यस्य केवलप्रथमान्ते प्रवृत्तिस्तु न, तत्र पूर्वशब्दस्य व्यवस्थावाचित्वेन प्रथमान्तावधिकपूर्वत्वविशिष्टो यस्तद्विशिष्टात्प्रथमान्तात्परयोर्युष्मदस्मदो रित्यर्थात्तादृशधर्मस्य पदान्तरसन्निधानसापेक्षत्वात्केवलप्रथमान्ते तादृशधर्मस्यातिदेष्टुमशक्यत्वात्। अवधेरपि संबन्धित्वेन विवक्षायां षष्ठ्यर्थेऽन्यपदार्थे बहुव्रीहिरिति सपूर्वाया इति सूत्रस्थशेखरग्रन्थेन तत्र पूर्वशब्दस्य व्यवस्थावाचित्वध्वननात्। अत एव तस्य व्यस्त एव प्रवृत्तिर्न तु समस्ते। अन्यथा विभाषा सपूर्वस्य, सपूर्वाच्चेत्यनयोरिव तस्यापि समास एव प्रवृत्तिः स्यात्। नन्वेवं विभाषा सपूर्वस्येत्यस्य केवलपतिशब्देऽपि प्रवृत्तिस्स्यात् व्यपदेशिवद्भावेन तत्रापि विद्यमानपूर्वावयवकपतिशब्दत्वस्य लाभादिति चेन्न। पत्युर्नो यज्ञसंयोग इति सूत्रारम्भसामर्थ्येन तत्र व्यपदेशिवद्भावाप्रवृत्तेः। एतेनैकयोगेति प्रतीकमुपादाय "ननु स्वातिरिक्तावयवकत्वस्य व्यपदेशिवद्भावेनातिदेष्टु-

न चेष्टादिभ्य इति सूत्रे ऽनुवृत्त्यर्थं तथा पाठो ऽत एवानिष्टी-त्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानि-ष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगे ऽपि तावत उत्त-रत्रानुवृत्तौ बाधकाभावाच्च॥ अत एव नान्तादसङ्ख्या-देरिति चरितार्थम्। अन्यथा पञ्चम इत्यदावपि व्यपदे-

---

मशक्यत्वात्कथमेकयोगे केवलपूर्वशब्दादिनिप्राप्तिः। अत एव सपूर्वायाः प्रथमाया प्रथमाया इत्यादीनां केवलप्रथमान्तेऽप्रवृत्तिरित्याशङ्क्य तद्ग्रन्थस्य पूर्वादिनिस्सपूर्वाच्चेत्युभयोस्स्थाने पूर्वान्तादिनिरित्येव कर्तव्यम्। इष्टादिभ्य इत्यत्रेष्टाद्यन्तादिभ्य इति पाठ्यमित्याद्याशयं वदन्तो हैमवतीकाराः परास्ताः। येन विधिरिति सूत्रे भाष्ये "यत्तर्हि योगविभागं करोति, इतरथा पूर्वात्सपूर्वादिनिरित्येकयोगमेव कुर्यादित्यादिना प्रकृतपरिभाषाज्ञापकत्वस्योक्तत्वेन तादृश-कल्पनाया भष्याक्षरस्वारस्यविरुद्धत्वात्। सपूर्वाया इत्यत्र निरुक्तरीत्या दोषलेशाभावाच्च। ननु पृथग्योगकरणस्यानिष्टीत्यादिप्रयोगसाधकतया सफलत्वेन कथं तदुक्तार्थे ज्ञापकमित्याशङ्क्य खण्डयति। [नचेत्यादिना।] [तथा पाठ इति।] पृथक् सूत्रपाठ इत्यर्थः। अन्यथैक-योगनिर्दिष्टानामिति न्यायेन सपूर्वादित्यस्योत्तरत्रानुवृत्तिर्न स्यादिति भावः। ननु तस्योत्तरत्रानुवृत्तौ किं फलमत आह। [अत एवेति।] इष्टादिभ्यश्चेत्यत्र सपूर्वादित्यस्यानुवृत्तेरेवेत्यर्थः। [ज्ञापकपरेति।] एकयोगेन सिद्धे पृथग्योगकरणस्य प्रकृतपरिभाषाज्ञापकपरेत्यर्थः। [अनिष्टत्वादिति।] अन्यथा तादृशरूपसिद्ध्यर्थं पृथग्योगकरणस्यावश्यकतया तस्य ज्ञापकत्वकथनमसङ्गतं स्यात्। अतस्तेन तेषामनिष्टत्वमेव वक्तव्यम्। एव च फलाभावात्तत्रानुवृत्तिर्नेति भावः। एकयोगेऽपि क्वचिदेकदेशोऽप्यनुवर्तत इति न्यायेन तदनुवृत्तेस्सौलभ्यात्तस्येष्टत्वेऽपि न बाधकमित्याह। [एकयोगेऽपीति।] एवमत्र भाष्यसम्मतं ज्ञापकत्वमुपपाद्य वक्ष्यमाणसिद्धान्तरीत्या असंगतमपि प्राचोक्तं ज्ञापकत्वं तस्य स्वरूपव्याक्रियैव पराक्रियेत्याशयेनानुवदति। [अत एवेति।] प्रातिपदिकेन व्यपदेशिवद्भावनिषेधाङ्गीकारादेवेत्यर्थः। [इति चरितार्थमिति।] इति सूत्रं चरितार्थमित्यर्थः। [अन्यथेति।] एतत्परिभाषानङ्गीकारे इत्यर्थः। [इत्यादावपीति।]

शिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव ॥ इयं च प्रातिपदिकग्रहणे एव न तु प्रातिपदिकाप्रातिपदिकग्रहणे। तेनोगितश्चेत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम्। इयं ग्रहणवतेति च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे

---

इत्यादिप्रकृतसूत्रोदाहरणेऽपीत्यर्थः। [तद्वैयर्थ्यमिति।] तत्राप्यसंख्यादेरिति निषेधेन मटोऽप्रवृत्तौ तत्सूत्रवैयर्थ्यं स्पष्टमेवेति भावः। भाष्योक्तसिद्धान्तप्रतिपादनमुखेन निरुक्तप्राचीनोक्तेरसाङ्गत्यं ध्वनयति। [इयं च प्रातिपदिकग्रहण एवेति।] प्रातिपदिकमात्रग्रहण एवेत्यर्थः। ग्रहणवतेत्यस्यात्रानुवृत्त्या प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण प्रातिपदिकस्य सूत्रे उपादान एवास्याः परिभाषायाः प्रवृत्तिरित्याशयः। [तेनेति।] उक्तनियमाङ्गीकारेणेत्यर्थः। [न दोष इति।] उपात्तस्योगित्त्वस्य प्रत्ययादिसाधारणत्वात्प्रातिपदिकादित्यस्यानुवृत्तावपि तस्य सूत्रे स्वरूपेणानुच्चारणाच्च तत्रैतन्निषेधाप्रवृत्त्या भवतीत्यादावपि व्यपदेशिवद्भावेन ङीप्सिद्ध्या तत्र तदसिद्धिरूपो दोषो नेति भावः। [तत्रैवेति।] उगितश्चेति सूत्र एवेत्यर्थः। अस्य येन विधिरिति सूत्र- एवेत्यर्थ इति हर्युक्तं तु न युक्तम्। तत्सूत्रेऽस्यार्थस्यास्पृष्टत्वात्। एवं च यथा अत्रास्या- अप्रवृत्तिरेवं नान्तादसंख्यादेरित्यत्राप्युपात्तस्य संख्यादित्वस्यैकादश इत्यादौ सुबन्तसाधारणत्वेन प्रातिपदिकत्वाव्याप्यत्वात्प्रातिपदिकादित्यस्याधिकृतत्वेऽपि तस्य सूत्रे स्वरूपेणानुच्चारणाच्च प्रकृत- परिभाषाया अप्रवृत्त्या ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावेन प्राचोक्तं ज्ञापकत्वमस्य न युक्तम्। नान्तादसंख्यादेरित्यादौ व्यपदेशिवद्भावाप्रवृत्तिस्त्वसंख्यादेरिति विशेषणसामार्थ्यात्सूत्रारम्भसामर्थ्या- द्वोपपादनीयेति बोध्यम्। अत्र भाष्यकैयटादिसम्मतं सिद्धान्तान्तरं दर्शयन् प्राचोक्तेरसाङ्गत्यं द्रढयति [इयमित्यादिना।] [प्रत्ययविधिविषयैवेति।] धर्मिग्राहकसाजात्यादिति भावः। तत्राप्रातिपदिकेनेति निषेधस्सूत्रोपात्तान्तादिशब्दविषयक इत्यपि बोध्यम्। स्पष्टं चेदं येन विधिरिति सूत्रे कैयटोद्योतयोरसमासे निष्कादिभ्य इति सूत्रे उद्योते च। अत एव रोणीत्यादिसूत्रविहि- तस्याणादेः केवलादपि प्रवृत्तिस्सिद्धा। तस्य चेति वार्तिकं त्वेतत्सिद्धार्थानुवादकमेव,

निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः। तेन अहन्नित्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः॥ ३२॥

---

नापूर्वमित्यवधेयम्। [भाष्यकैयटयोरिति।] तत्रहि भाष्येऽसमासग्रहणस्य पूर्वत्र ग्रहणवतेति निषेधाप्रवृत्तिज्ञापकत्वमुक्त्वा तस्याहादिगोपुच्छेत्यत्र प्रयोजनमुक्तम्। तत्र निषेध्यसमर्पकेषु गोपुच्छादिषु ग्रहणवतेति निषेधस्याप्रवृत्त्या तदन्तविधौ पारमगोपुच्छिकमित्यत्राप्यगोपुच्छेति ठक्प्रतिषेधात्प्राग्वतेष्ठञिति ठञ् सिध्यतीति भावः। तदुत्तरमेतदपि नास्ति प्रयोजनम्, विधौ प्रतिषेधः, प्रतिषेधश्चायमित्युक्तम्। तस्यायमाशयः, पूर्वादिनिस्सपूर्वाच्चेति प्रत्ययविधौ ग्रहणवतेत्यस्याः परिभाषाया ज्ञापितत्वाद्यत्रैव प्रत्ययो विधीयते तत्रैवानया तदन्तविधिः प्रतिषिध्यते। अगोपुच्छसंख्यापरिमाणादित्यनेन तु ठक् प्रतिषिध्यते, नतु विधीयत इति तत्र ग्रहणवतेति निषेधस्य प्रसक्तेरेवाभावेन न तदस्य ज्ञापनस्य प्रयोजनमिति। एवं च ग्रहणवतेति निषेधस्य प्रत्ययविधिविषयता स्पष्टमेव ध्वनिता। तुल्यन्यायात्तत्रैव ज्ञापिताया अस्या अपि तद्विषयत्वं स्पष्टमेव ध्वनितम्। अत एव केवलगोपुच्छशब्दादपि ठक्प्रतिषेधस्सिद्धो भवति। अन्यथा प्रत्ययविधिविषयकस्य ग्रहणवतेत्यस्य तत्राप्रवृत्त्या तदन्तविधौ तदन्तात्प्रतिषेधसिद्धावप्यनया परिभाषया तत्र व्यपदेशिवद्भावाप्रवृत्तौ केवलात्प्रतिषेधो न स्यादिति बोध्यम्। परिभाषाद्वयस्यास्य प्रत्ययविधिविषयकत्वे फलं दर्शयति। [तेनेति।] [इत्यादेरिति।] आदिना ससजुषोरित्यादिसंग्रहः। तस्य केवलसजूश्शब्दे परमसजूश्शब्दे च प्रवृत्तिरिति बोध्यम्। अत्रायं निष्कर्षः। ज्ञापकस्य सजातीयापेक्षत्वादुगितश्चेति सूत्रस्थभाष्यप्रामाण्याच्चात्र ग्रहणवतेति पदसंबन्धेनास्या अपि प्रातिपदिकासाधारणरूपस्य यत्र सूत्रे उपादानं तत्रैव प्रवृत्तिः। अतएवोगितश्चेत्यादौ न दोषः। एवमसमासे निष्कादिभ्य इति सूत्रस्थभाष्यकैयटादिप्रामाण्यादस्याः प्रत्ययविधिविषय एव प्रवृत्तिः। अत एव सर्ववेदानधीते सर्ववेद इत्यादाविव सर्वाण्यधीते सर्व इत्यत्रापि व्यपदेशिवद्भावेन सर्वादेस्सादेश्च लुगिति लुक् सिद्धः। उक्तभाष्यकैयटाभ्यामस्याः प्रत्ययविधिविषयतायाः स्फुटं प्रतीत्याऽत्र व्यपदेशिवद्भावेन लुक एवेष्टत्वात्। तथाऽप्रान्तेत्यादिना

# ननु वान्तो यीत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह॥

---

विहितस्य दतस्तदन्तादिव केवलादपि प्रवृत्तिस्सिद्धा। नचैवं पालकान्तान्नेति निषेधस्य व्यपदेशिवद्भावेन केवलादपि प्रवृत्तिः स्यादिति वाच्यम्। तत्रान्तग्रहणसामर्थ्येन तस्य केवलादप्रवृत्तेः। एवं येन विधिरिति सूत्रस्थकैयटोक्तदिशा अस्याः सूत्रोपात्तान्तादिशब्दविषय एव प्रवृत्तिरित्यप्यवश्यमभ्युपेयम्। ज्ञापकस्य सजातीयापेक्षत्वात्। अत एव रोणीत्यादेर्व्यपदेशिवद्भावेन केवलादपि प्रवृत्तिस्सिद्धा। अत एवासमासे निष्कादिभ्य इति सूत्रे उद्योते "स निषेधः सूत्रोपात्तान्तादिशब्दविषय इत्यपि बोध्य" मित्यत्रापिशब्दः स्वरसतः संगच्छते। नच तत्र ग्रहणवतेति निषेधात्तदन्तविधिरेव दुर्लभ इति वाच्यम्। येन विधिरिति सूत्रे भाष्यकृता तत्र वाचनिकतदन्तविधेरभ्युपगमात्। एवं च प्रत्ययविधिभिन्ने नान्तादसंख्यादेरित्यादावेतत्प्रवृत्तेर्दुर्वचतया अत एवेत्यादिप्रागुक्तो ग्रन्थोऽस्या यथाश्रुतार्थाभिप्रायेण प्रवृत्तप्राचीनग्रन्थानुसारेणैव। तत्र व्यपदेशिवद्भावाप्रवृत्तिस्तु प्रागुपपादितैव। एवं चेयं परिभाषा प्रत्ययविधिविषयैव। तत्रापि सूत्रोपात्तान्तादिशब्दविषयैव। तत्रापि प्रातिपदिकासाधारणरूपग्रहणविषयैवेति बोध्यमिति। एतेन "यत्र सूत्रे गृह्यमाणातिरिक्तग्राहकान्तादिशब्दोपादानं, तत्रैव निषेधः प्रकृतपरिभाषया बोध्यते। ज्ञापकसाजात्यादित्यवश्यमभ्युपेयम्। तथाचासमासे निष्कादिभ्य इति सूत्रे कैयटेन प्रतिषिध्यमानेषु गोपुच्छादिष्वन्तादिशब्दघटितत्वाभावादेव प्रकृतपरिभाषाया अप्रवृत्तौ विधित्वाभावादप्रवृत्तिरिति यदुक्तं, तदेतद्विरोधाच्चिन्त्यमेवेति तदवलम्बप्रयुक्तमस्याः प्रत्ययविधिविषयताकल्पनं चिन्त्यम्। किञ्च तद्रीत्या प्रकृतपरिभाषायाः प्रत्ययविधिविषयत्वे आर्हादिति सूत्रे गोपुच्छादय इव नान्तादसंख्यादेरित्यत्र संख्यादिरपि प्रतिषिध्यत एवेति परिभाषाप्रवृत्त्ययोगात्कथमत एवेत्यादिस्वकीयग्रन्थः संगच्छेतेत्यादिचन्द्रिकोक्तमपास्तम्। असमासे निष्कादिभ्य इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनायां तत्रत्यकैयटस्य चिन्त्यताकल्पनायां च मानाभावात्। अत एवेत्यादिस्वग्रन्थस्य प्राचीनानुरोधित्वात्। आर्हादित्यत्रान्तादिशब्दघटितत्वाभावादपि प्रकृतपरिभाषाया अप्रवृत्तिरित्यन्यदेतदित्यत्रत्यं तत्त्वं सुधियो विभावयन्तु। ३२

एवं सप्रपञ्चं तदन्तविधिं प्रतिपाद्य तत्प्रसङ्गात्तदपवादभूतां परिभाषामवतारयति। [नन्वित्यादिना।] [इत्यर्थः कथमिति।] तदन्तविधेः प्रसङ्गादिति भावः। नच तत्र

# यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

## तदन्तविधेरपवाद इयम्। वाचनिक्येषा येन विधि-

---

यान्तप्रत्ययासंभवादेव न तदन्तविधिरिति वाच्यम्। गोमयमत्तीति गोमयात्। तमाचष्ट इत्यर्थे णिचि इष्ठवद्भावेन टिलोपे गोमययति, गोमय्यादित्यादौ यान्तप्रत्ययस्य संभवात्। नचानेनौकारस्य वान्तादेशे कर्तव्ये टिलोपस्याचः परस्मिन्नित्यनेन स्थानिवद्भावान्न तत्संभव इति वाच्यम्। अज्झलादेशत्वेन स्थानिवत्त्वाप्रवृत्तेः। नापि च बहिरङ्गतयाऽसिद्धत्वम्। नाजानन्तर्य-इति निषेधादिति बोध्यम्। अत्र परिभाषायां यस्मिन्निति सप्तम्यन्तानुकरणम्। तस्य चाल्ग्रहण इत्यनेन विशेषणतया संबन्धः। अल्ग्रहण इत्यत्राल् गृह्यते येनेति करणे ल्युट्। अल्बोधके इत्यर्थः। अलो ग्रहणे उच्चारणे इत्यर्थे तु प्रत्याहारग्रहणेषु तदादिविधिर्न स्यात्। विधिशब्देन च कर्मव्युत्पत्त्या कार्यमुच्यते। अस्या येन विधिरित्येतदपवादभूतत्वादुत्सर्गसमानदेशा इति न्यायेन समानाधिकरणविशेषण एव प्रवृत्तिः। तथाचाल्बोधके सप्तम्यन्ते विशेषणीभूते सति प्रत्यासत्त्या तत्करणको यो विधिस्स तदादौ बोध्य इति परिभाषार्थः। [तदन्तविधेरपवाद इति।] अत एवेको यणचीत्यादौ नानेन तदादिविधिः। विशेष्यासन्निधानेन तत्र तदन्तविधेरप्रसक्त्या तत्समानदेशीयस्यास्यापि तत्राप्रवृत्तेः। अस्या ज्ञापकासंभवं मत्वाह। [वाचनिक्येषेति।] नचास्या अभावे अपो भीत्यत्र येन विधिरित्यनेन तदन्तविधौ भान्ते प्रत्यय इत्यर्थापत्त्या भान्तप्रत्ययस्यासंभवात्तद्वैयर्थ्यं सदस्या ज्ञापकमिति वाच्यम्। तत्सामर्थ्याद्वृक्षे शाखेतिवदवयविन्याधारत्वारोपेण सप्तम्याश्रयणात्प्रत्यये यो भकारस्तस्मिन्परे इत्यर्थाश्रयणेन तत्सार्थक्यसंभवात्। नन्वेवमप्येतदभावे कोः कत्तत्पुरुषेऽचीत्यत्राजन्ते उत्तरपद इत्यर्थलाभात्कदश्वइत्यादाविव कद्रथः कद्वद इत्यत्राप्यनेनैव कदादेशसिद्धौ रथवदयोश्चेति सूत्रं व्यर्थं सदस्यां ज्ञापकम्। नच रथवदशब्दाभ्यामाचारक्विबन्ताभ्यां कर्तृक्विप्यतो लोपे हलन्ताभ्यां रथ्वद्शब्दाभ्यां कुशब्दस्य समासे कद्रत् कद्वदित्यादावजन्तत्वाभावेनाप्राप्तकदादेशसंपादनाय तत्सूत्रमावश्यकमिति वाच्यम्। तत्रापि स्थानिवद्भावेनाजन्ततायास्सुवचत्वात्। क्वौ लुप्तमित्यस्य तु क्विनिमित्तकविधावेव प्रवृत्त्या न तेनात्र स्थानिवत्त्वनिषेध इति चेन्न। तत्सामर्थ्यादुक्तवचनकल्पनापेक्षया

कोःकदिति सूत्रेऽच्ग्रहणस्य श्रूयमाणाजन्तपरत्वकल्पनायां लाघवेनोपदर्शितस्थले कदादेशसिद्धये तत्सूत्रस्य सार्थक्यसंभवात्। यद्वा तत्सामर्थ्यादमि पूर्व इत्यादाविवोत्तरपदावयवेऽचीति वैयधिकरण्यान्वयस्वीकारेण तत्सार्थक्यसंभवात्। नन्वेवमपि न ल्यपीति सूत्रमस्यां ज्ञापकम्। तद्धि प्रदाय प्रस्थायेत्यादावीत्वनिषेधाय। यद्येषा न स्यात्तदा घुमास्थेत्यत्र हलन्ते क्ङितीत्यर्थापत्त्या हलन्तस्य ल्यपोऽसंभवादीत्वस्य प्राप्तेरेवाभावेन तद्वैयर्थ्यं स्पष्टमेव। नच प्रदायच्छत्रमित्यादौ तुकि हलन्तस्य ल्यपस्संभवादीत्वप्राप्त्या तत्र तन्निषेधाय तत्सार्थकम्। नच तुको बहिरङ्गासिद्धत्वम्। नाजानन्तर्य इति निषेधादिति वाच्यम्। इदानीमातो लोप इटि चेत्यस्याप्यजन्तआर्धधातुक इत्यर्थापत्त्या पदान्तरसापेक्षत्वेन बहिरङ्गं तुकं बाधित्वाऽन्तरङ्गत्वादातो लोपेऽचोऽभावेनेत्वाप्राप्त्या तद्वैयर्थ्यस्य सुस्थत्वादिति चेन्न। तत्राप्युक्तरीत्या क्ङिति विद्यमानो यो हल् तस्मिन्परतो घुमास्थादेरीत्वमिति, आर्धधातुके विद्यमानो योऽच् तस्मिन्परत आतोलोप इति चार्थाङ्गीकारेण न ल्यपीत्यस्य सार्थक्यसंभवादिति बोध्यम्। अथैवं सति प्रागुक्तस्थलेषु सर्वत्रोक्तदिशा वैयधिकरण्यान्वयेन सकलेष्टसिद्धावियं परिभाषा निष्फला। न चैतदभावे वान्तो यीत्यत्र प्रत्यये यो यकारस्तस्मिन्परत ओदौतोरित्यर्थे उप्टूशब्दाद्गोयुगच्प्रत्यये उष्ट्रगोयुगमित्यत्र प्रत्ययावयवयकाराव्यवहितपूर्वस्य प्रत्ययावयवस्यैवौकारस्य वान्तादेशापत्तिः। परिभाषासत्त्वे तु यकारादौ प्रत्यय इत्यर्थान्न दोष इति वाच्यम्। औकारसाहचर्येणौकारस्यापि यकारघटितप्रत्ययाघटकस्यैव ग्रहणेनादोषात्। गव्युगचि कर्तव्ये ओकारोच्चारणसामर्थ्येन तत्र वान्तादेशस्य वारयितुं शक्यत्वाच्च। नचैवमप्येतदभावे ङमो ह्रस्वादचीत्यत्राधिकृतस्य पदस्येत्यस्य विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येत्येवं रीत्या वैयधिकरण्यान्वयमभ्युपगच्छतो नागेशस्य मते दण्डिनेत्यादौ ङमुडापत्तिर्दुर्वारा। तत्र तद्वारणायोञि च पदे इत्यतः पदग्रहणानुवृत्तावपि पदावयवो ह्रस्वात्परो यो ङम् ततः परस्य पदावयवस्याचो ङमुडित्यर्थस्यैव लाभेन समुदायपदत्वमादाय तदापत्तेस्सत्त्वात्। अजादेः पदस्येत्यर्थस्यैतदभावेऽलाभादिति वाच्यम्। पदावयवः पदपरको ह्रस्वात्परो यो ङम् ततः परस्याच इत्यर्थाश्रयणेन तत्र दोषाभावात्। तत्र ङमः पदावयवत्वेऽपि पदपरकत्वाभावात्। नचैवमपि तृणह इमित्यत्र तदादिविधेरलाभेन पित्सार्वधातुकावयवे हलीत्यर्थादतृणेडित्यत्रान्तरङ्गत्वाद्धल्ङ्यादिलोपे प्राधान्येनालाश्रयणाद्वर्णाश्रय इति निषेधेन प्रत्ययलक्षणाप्रवृत्ताविमागमानापत्तिरिति वाच्यम्। प्रतिपदविधित्वेनेमागमस्याप्यन्तरङ्गतयोभयोरन्तरङ्गयोः परत्वादिमागमप्रवृत्त्येष्टसिद्धेः। नच नित्यत्वाद्धल्ङ्यादिलोपः शङ्क्यः।

रित्यत्र भाष्ये पठिता। अस्याश्च स्वरूपसती सप्तमी निमित्तम्॥ अत एव नेड् वशि कृतीत्यादौ वशादेः कृत इत्यर्थलाभः। इयं चार्धधातुकस्येडिति सूत्रे वलादेरित्यादि-ग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव

---

तस्यापि शब्दान्तराप्राप्त्याऽनित्यत्वात्। प्रत्ययलक्षणसूत्रस्य नियामकत्वमभ्युपगच्छतो भाष्यकारस्य मते हलीत्यस्यानुवृत्तिं विहाय नाभ्यस्तस्येति सूत्रादचि नेत्यनुवर्त्य सामान्यतो विहितस्येमागमस्याचि निषेधाभ्युपगमेन तत्र दोषाभावाच्च। नच गोत्रेऽलुगचीत्यत्रानया परिभाषया अजादौ प्राग्दीव्यतीये इत्यर्थाभावे प्राग्दीव्यतीयस्याज्विषये गोत्रप्रत्ययस्यालुगित्यर्थेऽज्व-त्प्राग्दीव्यतीयप्रत्ययविवक्षायां गोत्रप्रत्ययस्यालुगित्यर्थस्य पर्यवसन्नतया गर्गस्यापत्यानि पुमांसो गर्गाः, तेभ्य आगतमित्यर्थे हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य इत्यनेन रूप्यप्रत्यये गर्गरूप्यमित्यत्रापि तद्राजप्रत्ययस्य यञोऽलुगापत्तिरिति वाच्यम्। अचि प्राग्दीव्यतीयप्रत्ययघटकत्वतच्चरमावयव-त्वयोरव्यभिचरितत्वेनाज्ग्रहणसामर्थ्यात्तादृशप्रत्ययादिभूतस्यैवाचो ग्रहणमित्यभ्युपगमेनादोषात्। प्राग्दीव्यतीयप्रत्ययघटकाज्वर्णे परत्वेन विवक्षित इत्यर्थेन वा दोषाभावादिति चेदत्रोच्यते। बहुषु प्रदेशेषु सामर्थ्यादिना न्याय्यं सामानाधिकरण्येनान्वयं विहाय वैयधिकरण्यान्वयाङ्गीकारा-पेक्षया बहुविधक्लिष्टकल्पनापेक्षया च परिभाषाश्रयणमेव चरम्। अत एवेयं भाष्ये वचनरूपेण पठिता। अनन्यथासिद्धज्ञापकस्याभावाच्च ज्ञापकं नोपन्यस्तमिति बोध्यम्। अत्र विशेषमाह। [अस्याश्चेति।] [स्वरूपसतीति।] नतु स्वार्थविशिष्टेति भावः। तस्मिन्निति निर्दिष्ट-इत्यादाविवात्रेतिशब्दाभावेनार्थस्यानुपस्थित्या केवलसप्तम्यन्तपदश्रुतिरेवात्र लिङ्गम्। ततश्च यदि कदाचिदर्थान्तराभिधायिनी सप्तमी, तथापि प्रवर्तत एवैषा परिभाषेति भावः। [अत एवेति।] अर्थविशेषानाश्रितायाः केवलसप्तम्या एतन्निमित्तत्वादेवेत्यर्थः। [इत्यर्थलाभ इति।] अन्यथा तस्याः षष्ठ्यर्थत्वात्स न स्यादिति भावः। नन्वेवं ङसि धुडित्यादौ सादेः पदस्येति कुतो नार्थः। अधिकृतेन पदस्येत्यनेन सामानाधिकरण्यान्वयानुरोधात्सीति सप्तम्याष्षष्ठ्यर्थत्वेऽपि सप्तमीश्रुतेस्सत्त्वेन प्रकृतपरिभाषाप्रवृत्तेर्दुर्वारत्वादत आह। [इयं चेति।] [आदिग्रहणसामर्थ्यादिति।]

**प्रवर्तते। तेन ङःसि धुडित्यादौ सादेः पदस्येति नार्थः॥**

---

नन्वादिग्रहणस्य न सामर्थ्यम्। वलीत्युक्तौ विरुद्धविभक्तिकत्वादार्धधातुकस्येत्यनेन सामानाधिकरण्यायोगान्निर्दिष्टपरिभाषया पूर्वत्वाव्यवहितत्वांशयोरुपस्थाने तयोः प्रधानान्वयस्य न्याय्यत्वाद्वलव्यवहितपूर्वस्यार्धधातुकस्येडित्यर्थापत्तौ भवितेत्यादाविडागमानापत्तेरिति चेन्न। नेड्वशि कृतीति निषेधारम्भसामर्थ्याच्छमिता, यज्ञ इत्यादिनिर्देशाच्च गुणः कृतात्मसंस्कारः इति न्यायेन वलीत्यस्याङ्गविशेषणतयाऽन्वये वलव्यवहितपूर्वत्वविशिष्टं यदङ्गं ततः परस्यार्धधातुकस्येडित्यर्थेन क्षत्यभावात्। नच सुशर्मा देवदत्त इत्यादौ नेड्वशीति निषेधस्य सार्थकतया न तत्सामर्थ्येन वलीत्यस्याङ्गविशेषणत्वं युक्तमिति वाच्यम्। वलव्यवहितपूर्वत्वविशिष्टस्याङ्गावयवस्यार्धधातुकस्येडित्युक्तौ वलार्धधातुकयोः प्रत्यासत्त्या एकाङ्गघटकयोरेव ग्रहीतुमौचित्येन तत्र तत्सार्थक्यस्य दुर्वचत्वात्। किञ्च तदादिविधिप्रवृत्तिप्रयोजकसामानाधिकरण्योपायतया वलीति सप्तम्या अपि षष्ठ्यर्थत्वेन निर्दिष्टपरिभाषाप्रवृत्तिप्रयोजकौपश्लेषिकाधिकरणरूपसप्तम्यर्थस्याभावेन तत्परिभाषाया अप्रवृत्त्या तत्प्रवृत्तिप्रयुक्तविरुद्धान्वयस्य वक्तुमशक्यत्वात्। उक्तनियमाश्रयणे फलं दर्शयति। [तेनेति।] [नार्थ इति।] अन्यथा अधिकृतेन पदस्येत्यनेनान्वयानुरोधात्सीति सप्तम्याष्षष्ठ्यर्थत्वेऽपि सप्तमीश्रुतेस्सत्त्वेन तत्प्रवृत्तिर्दुर्वारैव। तथा च षट्त्स्वित्यादौ धुडनापत्तिरिति भावः। ननु तत्र सान्तस्य पदस्येत्यर्थवारणाय विशेषणविशेष्यभावव्यत्यासस्यावश्यकत्वेन तत एव तदादिविधेरप्रवृत्त्या विशेषणविशेष्ययोः सप्तम्यन्तत्वानियमस्य नेदं फलमिति चेन्नैवम्। अत्रैतादृशनियमसत्त्वेन तदादिविधेः "श्चुत्वं धुटि सिद्धं वाच्य" मिति वार्तिकबलात्तदन्तविधेश्चाप्रवृत्तावगत्या तत्र विशेषणविशेष्यभावव्यत्यासेन वैयधिकरण्यान्वयस्य स्वीकारात्प्रकृतनियमाधीनं तमादायैतन्नियमवैफल्यकथनस्योपजीव्यविरोधेनात्यन्तमयुक्तत्वात्। अत्रैतन्नियमाभावे सामानाधिकरण्यान्वयस्य न्याय्यतया सादेरित्यर्थापत्तेरिति बोध्यम्। यत्तु हरिशास्त्रिणः, यदि विशेषणविशेष्ययोरुभयोस्सप्तम्यन्तत्वमिति नियमस्तदा हुझल्भ्य इति सूत्रस्थभाष्यविरोधः। तत्र हि घसिभसोर्हलि चेति सूत्रादनुवृत्तस्य हलीति सप्तम्यन्तस्य हेरिति षष्ठ्यन्तविशेषणतामादायाऽनया परिभाषया तदादिविधिरुक्तः। तस्मादयुक्त एवायं नियमः। किन्तु कारनाम्नि च प्राचां हलादौ, तादौ च

तीषसह, सेऽसिचीत्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धये आह ॥

---

निति कृत्यतावित्यादावादिग्रहणेनाल्बोधकसतम्यन्तस्य समभिव्याहृतसमानाधिकरणभावो न सार्वत्रिक इति ज्ञाप्यते। तेन डस्सि धुडित्यादौ वैयधिकरण्यलाभः। आर्धधातुकस्येडित्यत्रादिग्रहणं तु वलीत्यस्य परसप्तम्यन्ततायां श्रुतसंबन्धस्य बलीयस्त्वादार्धधातुकविशेषणत्वेन प्राप्तानिष्टवारणार्थमेव स्पष्टार्थमित्याहुरिति वदन्ति। तदयुक्तम्। तद्भाष्यस्य रुदिहि स्वपिहीत्यादाविडागमविशिष्टस्य धिभाववारणाय प्रवृत्ततया निर्दिश्यमानपरिभाषयैव तत्र तद्वारणसंभवे पूर्वसूत्रे प्रत्याख्यातं हल्ग्रहणमनुवर्त्य तत्र तद्वारणपरस्योक्तभाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्याकिञ्चित्करत्वात्। अत एव भगवता तदुत्तरमथवेत्यादिना निर्दिश्यमानपरिभाषयैव तत्र धिभावो वारितः। कारनाम्नि च प्राचां हलादौ, तादौ च निनीत्यनयोरादिग्रहणस्य स्पष्टार्थताया हरदत्तेन कण्ठत उक्तत्वात्तेनार्थान्तरकल्पनायाः प्रामाणिकग्रन्थविरुद्धत्वात्। एकहलादावित्यत्राप्यादिग्रहणं स्पष्टार्थमेवेति बोध्यम्। नन्वेवं तीषसहेत्यादौ तादेरित्यर्थानापत्तिः। विशेष्यस्यार्धधातुकस्येत्यस्य सतम्यन्तत्वाभावादत आह। [तीषसहेति।] [निरूपितमिति।] आर्धधातुकस्येड्वलादेरित्यतो वलादेरित्यनुवृत्त्य तत्र विशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्तकाररूपो यो वल् तदादेरिति वाच्यार्थलाभेन तादेरार्धधातुकस्येति फलति। एवं सेऽसिचीत्यत्रापि सकाररूपो यो वल् तदादेरार्धधातुकस्येति वाच्यार्थे सादेरार्धधातुकस्येति फलति। उभयत्र सौत्रत्वात्प्रथमार्थे सप्तमीति तत्र निरूपितम्। वस्तुतस्तु तकारपरकेच्छ्यादेः परस्य वलादेरार्धधातुकस्येडित्यर्थेनेष्टसिद्ध्या न सौत्रत्वाद्याश्रयणप्रयासोऽपीति बोध्यम्। ३३

तदन्तविधिप्रस्तावे तत्प्रयुक्तातिव्याप्त्यव्याप्तिवारणाय व्यपदेशिवदित्यादिपरिभाषास्ततस्तदपवादभूतां यस्मिन्विधिरिति परिभाषां च निरूप्य पुनरतिदेशप्रसङ्गमतीतमनुसंधायातिदेशिकपरिभाषागणं निरूपयति। [घटपटमिति।] [इत्यादीति।] आदिना भाष्योक्तस्य बाभ्रवशालङ्कायनं,

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

द्वन्द्वश्च प्राणीत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः॥ चार्थे द्वन्द्व इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम् ॥ तिष्यपुनर्वस्वोरिति सूत्रस्थं बहुवचनग्रहणमस्या ज्ञापकम्। तद्धीदं तिष्य-

---

बाभ्रवशालङ्कायना इत्यस्य संग्रहः। ननु परिभाषायां द्वन्द्व इत्येकवचनमनुपपन्नम्। तेषां बहुत्वात्। नच द्वन्द्वशब्दस्य जातिपरतया तदुपपत्तिरिति वाच्यम्। तथासति तस्या एकत्वेन सर्वपदानन्वयप्रसङ्गात्। अत एव न द्वन्द्वविधायकशास्त्रपरत्वमपि। तस्याप्येकत्वेन तदनन्वयप्रसङ्गस्यापरिहार्यत्वादिति चेन्न। द्वन्द्वशब्दस्य तत्समाससमूहपरत्वेन तदुपपत्तेः। सर्वशब्दस्तु सर्वः पटो दग्ध इत्यादाविवावयवकात्स्न्र्ये वर्तते। तथाच सर्वावयवावच्छिन्नो द्वन्द्वसमाससमूह इत्यर्थान्नैकवचनानुपपत्तिः। तत्समूहस्यैकत्वादिति बोध्यम्। ननु सर्वशब्दबलात् द्वन्द्वश्चेत्यादिप्रकरणविषयस्याप्येतत्परिभाषाविषयतया वैकल्पिकत्वे तत्प्रकरणस्य व्यर्थत्वापत्तिरत आह। [द्वन्द्वश्च प्राणीति।] [सर्वो द्वन्द्व इति।] सर्वावयवावच्छिन्नो द्वन्द्वसमाससमूह इत्यर्थः। तथाच तत्प्रकरणसार्थक्यान्यथानुपपत्त्याऽत्र सर्वशब्दस्येदृशसंकुचितविषयत्वमेव युक्तम्। तथाचास्य न्यायसिद्धार्थानुवादकत्वेन लाघवमपीति सूचयन्नत्र मूलमाह। [चार्थे इति।] [अविशेषेणेति।] तत्प्रकरणाविषयलक्ष्यविशेषानादरेणेत्यर्थः। ननु चार्थे द्वन्द्व इत्यनेन समाहारेतरेतरयोः सामान्यतो विहितस्य द्वन्द्वस्य द्वन्द्वश्च प्राणीत्यादिना प्राण्यङ्गादीनामेव समाहारो नेतरेषामिति नियमात्तत्प्रकरणाविषयाणां समाहाराभावादुक्तरीत्या न्यायसिद्धत्वमस्यानुपपन्नमत आह। [तिष्येति।] [ज्ञापकमिति] ज्ञापकमपीत्यर्थः। क्वचित्तथैव पाठ इति गदाकृतः। तदेतदुपपादयति। [तद्धीति।] बहुवचनग्रहणमित्यर्थः [इदं तिष्येति।] तिष्येति समाहारद्वन्द्वः।

पुनर्वस्वित्यत्र तद्व्यावृत्त्यर्थम्। न चैवमप्यत्र जातिरप्राणिनामिति नित्यैकवद्भावेन बहुवचनाभावादिदं

---

नपुंसकत्वद्योतनायेदं शब्दः। तस्य चोदितमित्यर्थः। [तद्व्यावृत्त्यर्थमिति।] तत्रैकवचनस्य द्विवचनव्यावृत्त्यर्थमित्यर्थः। यदि प्राण्यङ्गादीनामेव समाहार इति नियमः स्यात्तदास्य तत्प्रकरणाविषयत्वेन समाहाराभावात्तिष्य एकतारा, पुनर्वसू द्वे तारे इति भाष्यात्तयोर्द्वन्द्वे सदा बहुवचनस्यैव सत्त्वेनेदृशप्रयोगस्यैवाभावात्तत्र द्विवचनव्यावृत्त्यर्थं कृतं बहुवचनग्रहणमनर्थकं स्यात्। अतस्तद्व्यर्थीभूय प्राण्यङ्गादीनां समाहार एवेति नियमबोधनद्वारा तद्व्यतिरिक्तसर्वद्वन्द्वस्योभयरूपतां बोधयति। तथाच तिष्यपुनर्वस्वित्यत्र समाहारद्वन्द्वे एकवचनस्य द्विवचनव्यावृत्त्यर्थं बहुवचनग्रहणं स्वांशे चरितार्थम्। एवं चेयं परिभाषा फलितेति भावः। ननु प्राण्यङ्गादीनामेव समाहार इति नियमेऽपि तिष्यपुनर्वस्वित्यस्य जातिद्वन्द्वत्वेन समाहारस्य सत्त्वात्तत्रैकवचनस्य द्विवचनव्यावृत्त्यर्थं बहुवचनग्रहणमावश्यकमिति कथं तद्वैयर्थ्यम्, कथं वा तस्य निरुक्तार्थज्ञापकत्वम्। नच जातिप्रदेशेषु सर्वत्र भिन्नाधाराया एव जातेर्ग्रहणादवस्थाभेदकल्पितभेदैकवस्तुविषयायाश्चाग्रहणदनयोर्जातित्वाभाव इति वाच्यम्। प्रतिमन्वन्तरं भिन्नानि नक्षत्राणीति दर्शने भिन्नाधारायास्तस्यास्संभवादिति चेन्न। तिष्यपुनर्वस्वोर्देवतात्वेन प्राणित्वादप्राणिनामिति निषेधेनास्य जातिरप्राणिनामिति सूत्रविषयतया समाहाराभावेन बहुवचनग्रहणवैयर्थ्यस्य सुस्थत्वादिति बोध्यम्। ननु तिष्यपुनर्वस्वोः प्राणित्वपक्षे प्रागुक्तदिशा बहुवचनग्रहणस्य प्रकृतपरिभाषाज्ञापनसंभवेऽपि "अथवा नात्र भवन्तः प्राणिनः, प्राणा एवात्र भवन्त" इति तिष्यपुनर्वस्वोरिति सूत्रशेषभाष्योक्तसिद्धान्तभूताप्राणित्वपक्षे न तत्संभवः। प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमेऽस्याप्राणिजातिद्वन्द्वत्वेन समाहारस्य सत्त्वात्तत्रैकवचनस्य द्विवचनव्यावृत्त्यर्थं बहुवचनग्रहणस्य सार्थकत्वादित्याशयेन तत्पक्षे प्रकृतपरिभाषासिद्धिं दर्शयितुमाशङ्कते। [नचैवमपीति।] एषां प्राणित्वपक्षे निरुक्तदिशा बहुवचनग्रहणस्य सार्थक्यसंभवेऽपीत्यर्थः। [अत्रेति।] तिष्यपुनर्वस्विति लक्ष्य इत्यर्थः। [नित्यैकवद्भावे इति।] इष्टानुरोधेन द्वन्द्वश्चेत्यादिषु

सूत्रं व्यर्थमिति वाच्यम्। तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात्। न चैते प्राणिन इति वाच्यम्। आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव

---

प्राण्यङ्गादीनां समाहार एवेति नियमाङ्गीकारादिति भावः। [इदं सूत्रं व्यर्थमिति।] बहुवचनग्रहणविशिष्टं तिष्यपुनर्वस्विति सूत्रं व्यर्थमित्यर्थः। नतु सर्वथा सूत्रवैयर्थ्यम्। नित्यैकवद्भावेऽप्येकवचनस्य द्विवचनविषयकतया तत्सार्थक्यादिति बोध्यम्। [तद्वैकल्पिकत्वस्यापीति।] जातिप्राधान्य एवायमेकवद्भावनियमो नतु व्यक्तिप्राधान्य इति कल्पनया जातिरप्राणिनामित्यस्य फलितं यद्वैकल्पिकत्वं तस्यापीत्यर्थः। अपिना चार्थ इति सूत्रविहितद्वन्द्ववैकल्पिकत्वस्य संग्रहः। [अनेनेति।] तिष्यपुनर्वस्विति सूत्रेणेत्यर्थः। [ज्ञापनादिति।] तथाच तिष्येति सूत्रे नक्षत्रद्वन्द्वइत्युक्त्या तस्य व्यक्तिप्राधान्यविषयकतया तद्विषये जातिरप्राणिनामित्यनेन समाहार एवेति नियमाभावाच्चार्थे द्वन्द्व इत्यनेन समाहारेतरेतरयोगयोरुभयोरपि द्वन्द्वसत्त्वेनेतरेतरयोगे बहुवचनसत्त्वेनोद्देश्यप्रसिद्ध्या संपूर्णसूत्रस्य, समाहारे एकवचनसत्त्वेन तद्व्यावर्तकतया बहुवचनग्रहणस्य च सार्थक्यं सुस्थमिति भावः। अत एव घटपटाविति प्रयोगोऽपि संगच्छते। अन्यथा तत्रापि जातिरप्राणिनामिति नित्यैकवद्भावे तदसंगतिः स्पष्टैव। अत एव च क्षीरोदके अनुष्यन्देते इति भाष्यप्रयोगसंगतिरपीति बोध्यम्। [एते इति।] तिष्यादय इत्यर्थः। [प्राणिन इति।] देवतात्वादेषां प्राणित्वमिति शङ्काशयः। तथाचास्याप्राणिजातिद्वन्द्वत्वाभावेनैतत्प्रकरणाविषयतया समाहार एवेति नियमाभावेन नित्यैकवद्भावाभावात्सूत्रस्य बहुवचनग्रहणस्य च वैयर्थ्याभावान्न निरुक्तज्ञापनसंभव इति भावः। [आपो मय इति।] अप्शब्दसमानार्थकादाप्लृधातुप्रकृतिकासुबन्तादापश्शब्दात्तत्प्रकृतवचन इति मयटि रूपम्। आपोमयमिदं सर्वमितिवत्। अप्शब्दान्मयटि त्वम्मयमिति स्यादिति बोध्यम्। [ग्लायमानप्राणानामिति।] ग्लायमानाः प्राणा येषामिति बहुव्रीहिः। [प्राणित्वादिति।] लोके प्राणित्वव्यवहारादिति भावः। तथाचैषां देवतात्वेनाद्भिर्विना ग्लायमानप्राणत्वाभावात्प्राणानां तदधीनस्थितित्वाच्च प्राणत्वमेव, नतु प्राणित्वमिति

प्राणित्वात्। स्पष्टं चेदं तिष्यपुनर्वस्वोरिति सूत्रे भाष्ये ॥ अत एव द्वन्द्वश्च प्राणीत्यादौ प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

---

भावः। [स्पष्टं चेदमिति।] प्रागुक्तज्ञापकादि सर्वं बहुवचनग्रहणकृत्यनिरूपणावसरे स्पष्टमित्यर्थः। ननु तिष्यपुनर्वस्वोरिति सूत्रसार्थक्यान्यथानुपपत्त्या जातिरप्राणिनामिति नियमस्य जातिप्राधान्यविषयकत्वकल्पनया वैकल्पिकत्वलाभेऽपि न चार्थे द्वन्द्व इत्यस्य तल्लाभः। अप्राणिजातिद्वन्द्वस्य जातिप्राधान्य एव समाहारो, नतु व्यक्तिप्राधान्य इति नियमेन व्यक्तिप्राधान्ये चार्थ इत्यनेनोभयोर्द्वन्द्वविधानस्य कर्तुमशक्यत्वात्। तथाच कथमत्र पक्षे प्रकृतपरिभाषासिद्धिरत आह। [अत एवेति] बहुवचनग्रहणादेवेत्यर्थः। [विपरीतनियमो नेति।] अन्यथा व्यक्तिप्राधान्ये समाहाराभावेनैकवचनस्याभावात्तस्य द्विवचनव्यावृत्त्यर्थं कृतं बहुवचनग्रहणमनर्थकं स्यात्। तत्सूत्रं तु नक्षत्रद्वन्द्व इत्युक्त्या व्यक्तिप्राधान्यविषयकमेवेति प्रागुक्तमिति बोध्यम्। एवं च बहुवचनग्रहणसामर्थ्यादप्राणिजातिद्वन्द्वस्य जातिप्राधान्ये समाहार एवेति नियमाभ्युपगमाज्जातिप्राधान्ये इतरेतरयोगव्यावृत्तावपि व्यक्तिप्राधान्ये समाहारस्यानिवृत्तेस्तत्रोभयोरपि द्वन्द्वसत्त्वात्सूत्रस्य बहुवचनग्रहणस्य च चारितार्थ्यं सुवचम्। तथाचैषा परिभाषा फलितेति बोध्यम्। यद्यपि ध्यानुरोधेन तथा नियमाभ्युपगमेऽपि प्रकृतार्थसिद्धिस्तथापि तस्यैव भगवन इष्टत्वे बहुचनग्रहणं तात्पर्यग्राहकमित्युपाध्यायाशय इति सुधियो विभावयन्तु। एतेनादितः प्रभृत्यासमाप्त्येकपक्षपरतयैव योजनं कुर्वन्तोऽन्ये व्याख्यातारः परास्ताः। तथा योजनस्य सर्वथाऽलग्नकत्वात्। यदपि वाक्यार्थचन्द्रिकाकृतः "सिद्धान्ते इतरेतरयोगसमाहारयोरुभयोरपि समूहस्यैव प्राधान्यादितरेतरयोगे समुद्भूतावयवभेदविवक्षामूलकतया संपादनीयस्य द्विवचनादेर्विना प्रमाणमनुपपन्नत्वान्न्यायसिद्धत्वमस्यानुपपन्नमिति बहुवचनग्रहणस्य ज्ञापकत्वमुक्त्वा तद्द्वारा प्रकृतपरिभाषासिद्धिमूचुः। तदप्ययुक्तम्। तथा योजने भाष्यप्रदीपाद्याकरग्रन्थसम्मतेर्लेशतोऽप्यभावात्। किञ्चोभयत्रापि तिरोहितावयवभेदस्यैव समूहस्य विशेष्यत्वे द्वन्द्वश्चेत्याद्येकवद्भावप्रकरणस्य व्यर्थत्वापत्त्या तेनैव क्वचित्तिरोहितावयवभेदसमूहस्य, क्वचिदुद्भूतावयवभेदसमूहस्य च विशेष्यत्वमित्यर्थस्य लाभेन तदर्थं प्रकरणान्तरस्थबहुवचन-

## सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३४ ॥

व्यत्ययो बहुलमिति सूत्रे भाष्ये बहुलमिति योगविभागेन षष्ठीयुक्तश्छन्दसीति सूत्रे वेति योगविभागेन चैषा साधिता। तेन प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम्। युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु क्षिय इत्यादावियङ्कथमत आह ॥

---

ग्रहणपर्यन्तानुधावनं व्यर्थं स्यात्। द्विगुरेकवचनमिति पूर्वसूत्रस्य समाहारविषयकतया तदव्यवहितोत्तरद्वन्द्वश्चेत्यादिप्रकरणस्यापि समाहारविषयकताया एव न्याय्यतया तद्बलेन समाहार एव तिरोहितावयवभेदस्समूहो विशेष्योऽन्यत्रातिरोहितावयवभेद इति विशेषस्यापि लाभेन तदर्थं यत्नान्तरस्यानावश्यकत्वादित्यवधेयम्। ३४

आतिदेशिकपरिभाषानिरूपणावसरे विकल्पप्रसङ्गेऽन्यामपि तज्जातीयां परिभाषां निरूपयति। [सर्वे विधय इति] न केवलं द्वन्द्व एवेति भावः। अत्र मानमाह। [व्यत्यय इति।] अस्य सूत्रस्य विकरणविधायकमध्यपठितत्वेनात्र योगविभागाद्विकरणानामेव विकल्पलाभोऽत आह। [वेति योगविभागेन चेति।] परिभाषाफलं दर्शयति। [तेनेति।] [युध्यतीति।] यद्यप्येतदनुदात्तेत्त्वलक्षणमात्मनेपदमित्यनेनापि सिद्धम्, तथाप्यस्य प्रकृतपरिभाषोदाहरणत्वप्रतिपादनपरेण षष्ठी युक्त इति भाष्येण विरोधात्तच्चिन्त्यमिति भावः। षष्ठीयुक्त इति सूत्रे भाष्ये स्पष्टैषा। ३५

आतिदेशिकपरिभाषामध्ये विकल्पप्रसङ्गादुक्तपरिभाषां निरूप्यपुनरन्यामातिदेशिकपरिभाषां निरूपयति। [ननु क्षिय इत्यादाविति।] क्षियो दीर्घात्, क्षिय इत्यादिसौत्रप्रयोग इत्यर्थः। [इयङ् कथमिति।] अस्यानुकरणत्वेनानुकार्यशब्दस्वरूपबोधकतया क्रियावाचकत्व-

# प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

## क्षिय इतीयङ्निर्देशो ऽस्या ज्ञापकः ॥

---

निबन्धनधातुत्वाभावादिति भावः। अत्र मानमाह। [क्षिय इतीयङ्निर्देश इति।] क्षियो-दीर्घादिति निष्ठानत्वविधायके सूत्रे इत्यर्थः। [ज्ञापक इति।] तत्र क्षिय इत्यस्य कृतदीर्घस्य क्षिधातोरनुकरणत्वेन तस्यानुकार्यशब्दस्वरूपबोधकत्वेऽपि क्रियावाचकत्वाभावात्तन्निबन्धनस्य धातुत्वस्याभवादियङादेशोऽनुपपन्नः प्रकृतपरिभाषां ज्ञापयतीति भावः। नन्वेवं दीर्घादिति व्यर्थम्। निर्देशादेव दीर्घान्तस्य क्षिधातोर्ग्रहणमित्यर्थस्य लाभादिति चेन्न। प्रक्षीयेत्यादौ ल्यपि परतो दीर्घविधायकेन क्षिय इति सूत्रेण ह्रस्वान्तस्य दीर्घविधानाद्यथाभूतस्य दीर्घत्वं विधेयं, तथाभूतस्यैव तत्रानुकर्तुं न्याय्यतया ह्रस्वान्तस्यैव तत्रानुकरणमित्यर्थस्यावश्यमभ्युपेयत्वेन तत्रापीयङादेशस्य दृष्टतया तन्निर्देशमात्रेण दीर्घान्तस्य ग्रहणमित्यर्थस्यालाभात्। तथाच ह्रस्वान्तस्येदमनुकरणं, गुणाभावस्तु क्षिय इत्यत्र विभक्तिरिव सौत्रत्वादेवेति शङ्कानिरासाय दीर्घग्रहणमावश्यकमिति भावः। स्पष्टं चेदं भाष्ये वृत्तिपदमञ्जर्योश्च। यद्वा इदमेव दीर्घग्रहणं तदतिदेशानित्यत्वे ज्ञापकम्। तथाच तन्निर्देशानुपपत्त्या चिक्षियतुरित्यादिलक्ष्यघटकस्य कृतेयङादेशस्येदमनुकरणमित्यर्थस्य संभावयितुं शक्यतया न तन्निर्देशमात्रेण दीर्घान्तस्य ग्रहणमित्यर्थलाभः। अतस्तादृशसंभावना निवृत्तये दीर्घग्रहणमावश्यकम्। नच दीर्घग्रहणेन तादृशसंभावनानिवृत्तावपि अतिदेशस्यानित्यतया कथमियङादेशसिद्धिरिति वाच्यम्। सिद्धान्ते कार्यभेदेन तदनित्यत्वस्वीकाराद्विभक्तिविषये तदनित्यत्वस्वीकारेऽपीयङादेशविषये तदस्वीकारेणादोषात्। ध्वनितश्चायमर्थः इदमेव दीर्घग्रहणमत्र विभक्तिकरणं च तदनित्यत्वे ज्ञापकमितितत्त्वमित्युद्योतग्रन्थेनेति बोध्यम्। ननु कृतेयङादेशस्यैवेदमनुकरणमस्तु कृतं ज्ञापकादिप्रयासेन। अत एव सूत्रशेषे भाष्ये अथाप्येतन्नास्ति प्रकृतिवदनुकरणमिति। एवमपि न दोषः। धातोरजादौ यद्रूपं तदनुक्रियते इत्युक्तमिति चेन्न। यथा भूतात्परस्य कार्यं विधेयं तथाभूतस्यैव तत्र सूत्रे अनुकर्तुं

तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेय-मिति क्षियो दीर्घादिति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं

---

युक्तत्वात्। किंच कृतेयङादेशस्यानुकरणेऽपि ततः परनिष्ठाया अभावेन तदनुकार्यमूलभूतस्य ग्रहणमित्यर्थस्य दीर्घग्रहणसामर्थ्येन ज्ञापनीयतया विशेषाभावात्। सूत्रशेषभाष्यस्य धात्वधातु-सामान्ये दृष्टस्य क्षिमात्रस्यानुकरणमिति पक्षे प्रकृतिवदित्यतिदेशस्याप्रवृत्त्या तदानीं तन्निर्देशोपपत्ति-सम्पादनाय प्रवृत्ततया तस्य सिद्धान्तिसंमतत्वाभावात्। अतएवोद्योते "सामान्यानुकरणमिति तु चिन्त्यं फलाभावादिति तव्द्याख्यावसरे उक्तमिति बोध्यम्। एतेन" कृतदीर्घस्यैवेयङा निर्देशो दीर्घग्रहणं तु ह्रस्वस्थानिकेयङ्विशिष्टस्यानुकरणमिति भ्रमनिरासार्थमित्याशयेन ज्ञापनोपन्यासः। वस्तुतो भुवो वुक्, अवोदोर्नियं, इत्यादेस्तज्ज्ञापकता युक्तेति वदन्तश्चन्द्रिकाकृतः परास्ताः। धर्मिग्राहकसाजात्यादत्र शास्त्रीयाया एव प्रकृतेर्ग्रहणं शास्त्रीयस्यैव च धर्मस्यानया अतिदेशः। अतएवापशब्दानुकरणेषु नापशब्दत्वम्। नापि भूसत्तायामित्यादावशास्त्रीयार्थतत्त्वनिबन्धनं प्रातिपदिकत्वमिति बोध्यम्। स्पष्टं चेदं ऋलृक्सूत्रे भाष्यप्रदीपोद्योतयोः। नन्वत्र विभक्ति-र्दुर्लभा अनया परिभाषया अनुकरणे धातुत्वातिदेशेऽधातुरिति पर्युदासेन प्रातिप्रदिकत्वा-भावादत आह। [तत्रैवेति।] क्षिय इति सौत्रप्रयोग एवेत्यर्थः। [विभक्तिकरणमिति।] इदमुपलक्षणं दीर्घग्रहणस्यापि। तस्याप्यतिदेशानित्यत्वे ज्ञापकतायां उद्योते उक्तत्वादिति बोध्यम्। ३६

अतिदेशप्रसङ्गादन्यामप्यातिदेशिकपरिभाषां निरूपयति। [नन्विति।] [कार्यकालपक्ष-इति।] यथोद्देशे त्वेकादेशात्पूर्वं पदसंज्ञायाः फलाभावेऽपि भविष्यति किंचिदनेन प्रयोजनमित्यभि-संन्धिमात्रेण नित्यादप्येकादेशात्पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वात्तत्प्रवृत्तौ तस्या आनुमानिकस्थानि-

# पदत्वमुभयत आश्रयणे ऽन्तादिवत्वाभावाद्यस्माद्विहित-स्तदादितदन्तत्वाभावादत आह ॥

---

वद्भावेन कृतैकादेशो सुलभतया नैतन्न्यायोपयोग इति भावः। [कथं पदत्वमिति।] तत्पक्षे संज्ञाशास्त्रस्य विधिशास्त्रैकवाक्यतयैव बोधकत्वेन विधिप्रवृत्तिवेलायामेव तत्प्रवृत्त्या विधेश्चैकादेशोत्तरमेव प्रवृत्त्या तदानीं सुबन्तत्वाभावात्पदत्व नापत्तिः। तत्फलं तु रामौ पश्येत्यादौ तिङ्ङतिङ इति निघातसिद्धिरिति भावः। नन्विदमयुक्तम्। आकडारीयसंज्ञासु यथोद्देश एवेति नियमस्य ग्रन्थकृता अन्यत्रोक्तत्वेन पदसंज्ञाविषये कार्यकालताया अभावादिति चेन्न। अयादिभ्यः परैव प्रगृह्यसंज्ञेति प्रगृह्यसंज्ञासूत्रस्थभाष्येण संज्ञाशास्त्राणां कार्यकालपक्षे विधिदेशीयत्वमिति मते "अपादानमुत्तराणि कारकाणि बाधन्त" इति भाष्यविरोधपरिहाराय तन्नियमस्योक्ततया सिद्धान्ते तत्पक्षेऽपि तेषां विधिदेशीयत्वाभावस्य प्रागुपदर्शितत्वेन तदनुरोधेन प्रवृत्तस्य तन्नियमस्य सिद्धान्तेऽभावात्। वृध्युत्तरं पदसंज्ञाया अप्राप्तौ हेतुमाह। [अन्तादिवत्त्वाभावादिति।] पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरस्स्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य युगपदसम्भवादिति भावः। यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये-प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति लोकन्यायसिद्धोऽयमर्थ इति बोध्यम्। इदं प्राचामनुरोधेन। वस्तुतस्तु इण्धातुशेखरे परेत्वित्यादिना वतिघटितशास्त्रस्याहार्यारोपबोधकत्वेन तस्य च विरुद्धविषयस्यापि युगपत्संभवेनोक्तलोकन्यायेनास्यार्थस्यासिद्धिः। अत उभयत आश्रयणेऽप्यन्तादिवद्भाव इष्यत एव। परं तु पौर्वापर्यलक्षणस्य व्यपवर्गस्य न तेनातिदेश इति ग्रन्थकृता सिद्धान्तितत्वेन प्रकृते परादिवद्भावेनैकादेशविशिष्टे सुप्त्वस्य पूर्वान्तवद्भावेन तदादित्वस्य च सुलभतया सुब्यस्माद्विहितस्तदादिनदन्तत्वस्यार्थसमाजग्रस्तत्वाद्व्यपवर्गस्य च तत्रानपेक्षितत्वात्प्रकृत-परिभाषामन्तरापि प्रकृते पदत्वसिद्धिः। अतो नेदं स्वमते असाधारणं प्रयोजनम्। तस्माद्वाप्यश्वो मासपूर्व इत्यादौ सुब्लुगुत्तरं विशिष्टे समासत्वसंपत्तिरेतत्परिभाषा प्रयोजनम्। नच सर्वे सर्वपदादेशा इति न्यायेन वापी, ङि, अश्व, सु, इत्यस्य स्थाने वाप्यश्वेत्यादेश इत्यङ्गीकारादानुमानिकस्थानिवद्भावेनात्रापि समासत्वं सुलभमिति वाच्यम्। सर्वे सर्वपदादेशा इत्यस्यार्थवत्येव

# एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम्। अत एव तादृशादर्थबोधः। अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यात्। एवं च रामिति मान्तस्य यस्माद्विहितस्तत्त्वमौ

---

स्थानित्वमित्याशयकत्वेन प्रकृते सुपोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावात्। यत्र श्रौतस्य स्थानिनो नैरर्थक्यं तत्रैव तत्कल्पनात्। स्पष्टं चेदं स्थानिवत्सूत्रे शब्दरत्न इति बोध्यम्। अत्र समासत्वे प्रयोजनं तु पूर्वत्र न समास इति शाकलप्रतिषेधः। परत्र तृतीयासमास इति सर्वनामसंज्ञाप्रतिषेधश्चेति द्रष्टव्यम्। अत्र विकृतशब्दो भावक्तान्तः। एकदेशे विकृतं विकारो यस्येति बहुव्रीहिः। वाहिताग्न्यादिष्विति पूर्वनिपातस्य वैकल्पिकत्वाद्विकृतशब्दस्य परप्रयोगः। एकदेशविकारविशिष्ट इत्यर्थः। यद्वा कर्मक्तान्तेन कर्तृकरण-इति तृतीयासमासः। समुदायस्य विकृतत्वे एकदेशस्य विकारद्वारा करणत्वात्। धान्येन धनवानितिवत्तृतीयायां तु सुप्सुपेति समास इति बोध्यम्। [अन्यवन्नेत्यर्थ इति।] अनन्यवदित्यत्र वत्यन्तेन नञ्समासो न तु नञ्समासाद्वतिः। तथा सत्यन्यभिन्नवदित्यर्थाद्भेदत्वेन भेदस्य केवलान्वयितया तदवच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्ध्या वाक्यार्थाप्रसिद्धिः। परिभाषावैयर्थ्यं चेति भावः। नन्वेवमन्यसादृश्यनिषेधेऽप्यन्यत्वस्य सत्त्वाद्वैयर्थ्यं तदवस्थमेवेत्यत आह। [अन्यत्वाभाव इति।] अन्यत्वनिषेध इत्यर्थः। अन्यसादृश्यस्यैव निषेधे अन्यत्वस्यनिषेधः कैमुतिकन्यायसिद्ध इति भावः। [अत एवेति।] अन्यत्वाभावादेवेत्यर्थः। [तादृशादिति।] विकारविशिष्टादित्यर्थः। [अन्यथेति।] तस्यान्यत्वे इत्यर्थः। [तत इति।] विकृतादित्यर्थः। [बोधो न स्यादिति।] शक्तताच्छेदकानुपूर्व्यज्ञाने शक्तेरज्ञानात्ततो बोधस्यनापत्तिः। अन्यत्वस्य निषेधे तु तत्रापि शक्ततावच्छेदकानुपूर्वीज्ञानस्यारोपितस्य सत्त्वा न्न बोधानुपपत्तिरिति भावः।

इत्यस्य परादिवत्वेन सुप्त्वामिति तदादितदन्तत्वमार्थ-समाजग्रस्तम्॥ छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम्। अत एव प्राग्दीव्यत इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिद-मित्युक्त्वा किमर्थं विकृत निर्देशः एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदित्युक्तम्। एतेनायं न्यायः शास्त्रीयकार्यएव शास्त्रीयविकारएवेत्यपास्तम्। विकृतावयवनिबन्धनकार्ये तु नायं, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवत्वव्यवहारस्य दुरुपपाद-

---

[आर्थसमाजग्रस्तमिति।] अर्थस्येमान्यार्थानि, तेषां समाजेन समूहेन ग्रस्तम्, संपन्नमित्यर्थः। अत्र मूलमाह। [छिन्नपुच्छ इति।] लोकन्यायसिद्धाया अप्यस्या अत्र शास्त्रे आश्रयणे मानं दर्शयति। [अत एवेति।] [ज्ञापयतीति।] ज्ञापितायां त्वस्यां शब्दलाघवसंपादकतया निर्देशस्य स्वांशे चारितार्थ्यमिति भावः। [एतेनेति।] लोकन्यायसिद्धस्यास्यार्थस्याशास्त्रीय-विकृतनिर्देशज्ञापितत्वेनेत्यर्थः। [अपास्तमिति।] ज्ञापकसाजात्यादशास्त्रीयविकारेऽपि प्रवृत्ते र्न्याय्यत्वादिति भावः। अत एव आयसशब्दादणन्ताद्विवचने आयसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसंबन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारितोऽचः परस्मिन्निति सूत्रे भाष्ये। अन्यथा सान्तस्य शास्त्रीयविकारत्वाभावेन तदसङ्गतिः स्पष्टैवेति बोध्यम्। नन्वेतत्परिभाषाश्रयणे द्यौः पन्था, इत्यादावनल्विधाविति निषेधेन स्थानिवत्त्वा-प्रवृत्तावप्यनेन न्यायेन हलन्तत्वातिदेशाद्धल्ङ्याब्भ्यादिलोपो दुर्वार इत्यत आह। [विकृतावयवेति।] [दुरुपपादत्वादिति।] पुच्छवत्त्वव्यवहारप्रयोजकस्य पुच्छरूपावयवस्याभावाद्यथा तत्र तद्व्यवहारो

त्वात् ॥ एवमक्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः। एतत्, येन विधिरित्यत्र भाष्यकैयटयोर्ध्वनितम् ॥ यत्र

---

न, तथा विकृतावयवत्वव्यवहारप्रयोजकस्य तदवयवस्याभावात्तद्व्यवहारो दुरुपपाद इति भावः। अत एव राजकीयमित्यत्र कादेशोत्तरमनेन न्यायेनाल्लोपमाशङ्क्य, मघवत इत्यादौ श्वयुवेति-संप्रसारणवारणाय तत्सूत्रे कृतस्य नकारान्तग्रहणस्यात्रापकर्षणेन नान्तान्नन्तग्रहणात्तद्वारणं ऋत्त्वुकूसूत्रस्थभाष्योक्तं संगच्छते। अन्यथा नकारान्तत्वस्याप्यनेन न्यायेनातिदेशे तदपकर्षणेऽपि दोषतादवस्थ्यात्तदसङ्गतिः स्पष्टैवेति बोध्यम्। नन्वशास्त्रीयविकारेऽप्येतत्परिभाषाप्रवृत्तौ भयशब्दे-ऽप्युभयशब्दत्वातिदेशात्सर्वनामसंज्ञापत्तिरत आह। [एवमिति।] विकृतावयवनिबन्धनकार्य इवेत्यर्थः। [अक्तपरिमाणग्रहण इति।] अक्तं, परिच्छिन्नं प्रातिस्विकरूपेण गृहीतं परिमाण-मानुपूर्वीविशेषो यस्य तादृशार्थबोधकशब्दग्रहण इत्यर्थः। अत्र परिमाणशब्दः परिच्छेदक-मात्रपरो न तु पारिभाषिकपरिमाणपरः। अत एव द्रोणादिवत्संख्याया अपि दृष्टान्तत्वेनोल्लेखो भगवतस्संगच्छते, परिच्छित्तिसाधनत्वाविशेषादानुपूर्वीविशेषेऽप्यत्र शास्त्रे परिमाण शब्दव्यवहार इति बोध्यम्। [उक्तयुक्तेरिति।] दुरुपपादत्वरूपप्रागुक्तयुक्तेरित्यर्थः। तत्तद्वर्णाव्यवहितो-त्तरत्वघटितस्यानुपूर्वीविशेषस्य न्यूने अधिके वा शास्त्रव्यापारमन्तरा दुरुपपादत्वमिति भावः। अत्र मानमाह, [एतदिति।] अनन्तरोक्तमित्यर्थः। [भाष्येति।] तत्रहि सर्वके, उच्चकैः, भिनत्तीत्यादौ साकच्के सश्नम्के च तत्त्वतदन्तत्वयोरभावात्सर्वनामाव्ययधातुसंज्ञानामप्राप्तिमाशङ्क्य गङ्गाप्रविष्टनदीदृष्टान्तेन तत्र तास्संज्ञास्संपाद्य ततः परिच्छिन्नपरिमाणार्थकानां पञ्च सप्तेत्यादि-संख्याशब्दानां यथा एकापाये अप्रवृत्तिर्यथा वा द्रोणादिशब्दानां न्यूने अधिके वा अप्रवृत्तिरेवं जातिव्यञ्जकभूयोऽवयवदर्शनसत्त्वेऽपि सर्वाद्यानुपूर्वीविशेषोपादानेन क्रियमाणानां सर्वनामादिसंज्ञानां न्यूने अधिके वा अप्रवृत्तिरिति पुनराक्षिप्य नेदमदसोरितिसूत्रे ककारवत्पर्युदासेन तदेकदेशभूतं तद्ग्रहणेन गृह्यत इत्यर्थं ज्ञापयित्वा तत्र तास्संज्ञा उपपादिताः। यद्यस्य न्यायस्याक्तपरिमाण-ग्रहणेऽपि प्रवृत्तिस्स्यात्तदा अनेन न्यायेन तत्र तासां संज्ञानां सुलभतया तदर्थं यत्नान्तरानुसरणं विफलमेव स्यात्। अतस्तेनेदं ध्वनितमिति भावः। नन्वेवं आयसशब्दादणन्ताद्विवचने

आयसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्वादनेन न्यायेनाङ्गतया च प्राप्तस्य नुमः पूर्वसम्बन्धिविधित्वात्स्थानिवत्त्वेन वारणपराचः परस्मिन्निति सूत्रस्थभाष्यविरोधः। "संख्याशब्दाः परिमाणशब्दाश्चैकेनाप्यपाये न भवन्ति। अङ्गसंज्ञाह्युक्तपरिमाणानां क्रियते सा केनाधिके स्या" दित्याद्यङ्गसंज्ञासूत्रस्थभाष्येणाङ्गसंज्ञाया अक्तपरिमाणवृत्तित्वलाभात्। एवमन्तादिवत्सूत्रस्थभाष्यासंगतिरपि। तत्रहि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्योदके केवल इति पूर्वपदान्तोदात्तत्वमुक्तम्। परिच्छिन्नपरिमाणग्रहणे एतदप्रवृत्तौ तु दकशब्दे उदकशब्दत्वस्यातिदेष्टुमशक्यतया तदसङ्गतिस्स्पष्टैव। किंच प्राग्दीव्यतोऽणिति सूत्रे विकृतनिर्देशेनोक्तपरिभाषां ज्ञापयित्वा तेनैव पचत्वित्यादौ पदत्वे सिद्धे स्थानिवत्सूत्रे एकदेशविकृतस्योपसंख्यानं चोदितं तन्न वक्तव्यं भवतीति तत्सूत्रस्थभाष्यकैयटविरोधश्च। तिङ्पदस्य निपातपदवत्तिप्त्वादिनैव बोधकतया तिङ्पदबोध्यतारूपस्य तिङ्त्वस्याक्तपरिमाणावच्छिन्नतया तस्याप्यनेनातिदेष्टुमशक्यत्वादिति चेदत्रोच्यते। अङ्गपदस्य प्रातिपदिकपदवत्तत्तद्रूपेणार्थोपस्थापकत्वाभावेनाङ्गत्वस्य परिच्छिन्नपरिमाणवृत्तितया तस्यानेन न्यायेनातिदेशे बाधकाभावान्न आयसावित्येतद्विषयप्रागुक्ताचः परस्मिन्निति सूत्रस्थभाष्यविरोधः। अङ्गसंज्ञासूत्रस्थं भाष्यं त्वेतद्विरोधादेकदेश्युक्तिरेव। एवं दकशब्दे उदकशब्दत्वातिदेशप्रतिपादनपरमन्तादिवदिति सूत्रस्थं भाष्यमप्येकदेशिन एव। तत्र पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेतिपरिभाषया एकादेशात्पूर्वमेव स्वरप्रवृत्तेर्न्याय्यतया तदज्ञानेन तद्भाष्यप्रवृत्तेः। तथा प्राग्दीव्यतोऽणिति सूत्रस्थं भाष्यमप्येकदेश्युक्तिः। निरुक्तयेन विधिरिति सूत्रस्थभाष्येणाक्तपरिमाणग्रहणे तदप्रवृत्तेः स्फुटं प्रतीत्या तद्विरोधात्। पचतु पचन्त्वित्यादावर्धाधिकविकारसत्वेन तदप्रवृत्तेश्च। नचार्धविकारसत्वेऽप्यभवदित्यादौ तकारमात्रस्य तिङ्त्वजातिव्यञ्जकताया दृष्टत्वेन तत्प्रवृत्तिस्सुवचेति वाच्यम्। तुददित्यादौ व्यभिचारेण तकारमात्रस्य तदव्यञ्जकत्वात्। तथा पचत्वित्यादौ तिङ्त्वनिबन्धनपदत्वसिद्धये आरब्धस्य "एकदेशविकृतस्योपसंख्यान" मिति वार्तिकस्यानेन न्यायेनाकर्तव्यत्वप्रतिपादनपरं स्थानिवत्सूत्रस्थं भाष्यमप्येकदेश्युक्तिरेव। उक्तरीत्या तत्रास्याऽप्रवृत्तेः। अत एव भगवता आदेशग्रहणसामर्थ्येन तत्र सूत्रे आनुमानिकादेशस्यापि ग्रहणमित्याशयकेन "इमेप्यादेशाः। कथम्। आदिश्यते य स्स आदेशः, इमे चाप्यादिश्यन्ते" इति ग्रन्थेन तत्प्रत्याख्यातम्। आदेशग्रहणप्रयोजनकथनावसरे च "इदं तर्हि प्रयोजनम्। आदेशमात्रं स्थानिवद्यथा स्यात्। एकदेशविकृतस्योपसंख्यानं चोदयिष्यति, तन्न वक्तव्यं भवति" इत्युक्तम्।

त्वर्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानल्-

---

अनेन प्रागुक्तभाष्येण चादेशग्रहणसामर्थ्येनोपसंख्यानप्रत्याख्यानमेव सिद्धान्त्युक्तिरिति स्फुटं प्रतीयते। नच गङ्गाप्रविष्टनदीदृष्टान्तमूलकस्याकोरिति प्रतिषेधज्ञापितस्य तन्मध्यपतितन्यायस्य यथा अक्तपरिमाणग्रहणेऽपि प्रवृत्तिरेवं श्वपुच्छदृष्टान्तमूलकस्य प्राग्दीव्यादिति विकृतनिर्देशज्ञापितस्यास्यापि न्यायस्य कुतो नाक्तपरिमाणग्रहणेप्रवृत्तिरिति वाच्यम्। तन्न्यायस्याक्तपरिमाणग्रहणे प्रवृत्तिमन्तरा अकोरिति प्रतिषेधस्य सार्थक्यासंभवेन तद्विषये तत्प्रवृत्तेरभ्युपगमेऽप्यस्य तद्विषये प्रवृत्तौ मानाभावात्। दीव्यच्छब्दे दीव्यत्यर्थबोधकत्वातिदेशेन तत्सार्थक्यसंभवात्। एतेन "येन विधिरिति सूत्रस्थभाष्यबलादागमजन्यविकारस्य प्रकृतन्यायप्रयोजकत्वाभाव एव कल्पनीयो न त्वक्तपरिमाणग्रहणस्य, अत एव श्रायसावित्यत्रैकादेशोत्तरं सान्तस्याङ्गत्वातिदेशमाश्रित्य नुमापादनपरं, तथा माथितिक इत्यत्र यस्येति लोपोत्तरं तान्तस्यानेन न्यायेनाङ्गत्वातिदेशेन कादेशापादनपरं च स्थानिवद्भावप्रयोजनप्रस्तावे भाष्यकारोक्तमचः परस्मिन्निति सूत्रस्थं संगच्छते। अन्यथा अङ्गसंज्ञासूत्रस्थभाष्यबलात्तत्संज्ञाया अक्तपरिमाणसंज्ञात्वेन तदसंगतिस्स्पष्टैव। किंचैवं पचत्वित्यादावेरुरिति प्रवृत्त्युत्तरं कार्यकाले पदत्वायानेन न्यायेन तिङ्त्वातिदेश इत्येवं प्रतिपादनपरं स्थानिवत्सूत्रस्थं च भाष्यं कथं संगच्छताम्। तिङ्त्वस्य ह्यक्तपरिमाणसंज्ञात्वं स्फुटमेव। तस्माद्यत्राक्तपरिमाणग्रहणे प्रकृतन्यायाऽप्रवृत्तिरिष्टा तत्र वक्ष्यमाणपरिभाषानित्यत्वमेव शरणमिति युक्ततरमिति वदन्तश्चन्द्रिकाकृतः परास्ताः। अननुगतानित्यत्वस्य नागेशानभिप्रेतताया वक्ष्यमाणत्वादिति बोध्यम्। नन्वनेन न्यायेन सिद्धौ स्थानिवत्सूत्रं व्यर्थमत आह। [यत्र त्वर्धं तदधिकं वेति।] तत्रार्धविकारो ज्वरत्वरेत्यूठि तूर्ण इत्यादौ, तदधिकविकारो मपर्यन्तादेशेषु त्वदीय इत्यादौ, [जातिव्यञ्जकेति।] विकृताविकृतयोरभेदप्रतिपत्तिसाधको धर्मोऽत्र जातिशब्देनोच्यते। फलान्तरमाह। [विकृतेति।] प्रागुक्तदिशा विकृतावयवनिबन्धनकार्ये एतदप्रवृत्त्या तत्र तादृशव्यवहारसंपादनाय स्थानिवत्सूत्रमिति भावः। तेन यशश्शब्दादाचक्षाणणिजन्तात्क्विपि निष्पन्नयश् इत्यस्मात्स्थानिवत्त्वेनासन्तत्वमाश्रित्यास्मायामेधास्रजो विनिरिति

रूपावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम्। क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्। तेनाभीयादित्यादिसिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः प्रथमयोः पूर्वसवर्ण इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥३७॥

---

सूत्रान्मत्वर्थे विनिस्सिध्यति। एवं यत्र किमः क इत्यादिना सर्वस्यैव विकारो यत्र वा परिच्छिन्नपरिमाणवृत्तिधर्मस्यातिदेशो यथा पचतु पचन्त्वित्यादौ तिप्त्वादेस्तत्रास्याऽप्रवृत्त्या तदर्थमपि स्थानिवत्सूत्रमिति बोध्यम्। एवं नासूया कर्तव्या यत्रानुगमः क्रियत इति पङ्क्तिविंशतीति सूत्रस्थभाष्यानुरोधेन लोकदृष्टान्तमूलकस्यास्यन्यायस्य तदनुरोधेनैवानुगतरूपेण क्वचित्क्वचिदप्रवृत्तिं प्रदर्श्य कैयटानुरोधेन सामान्यतोऽनित्यत्वं दर्शयति। [क्वचित्त्विति।] न्यायस्य क्वचिदनाश्रयणे हेतुमाह। [लक्ष्यानुसारादिति।] फलमाह। [तेनेति।] [अभीयादित्यादीति।] आदिना परीयात्, प्रतीयादित्यादिसंग्रहः। अन्यथा अनेन न्यायेन भान्तस्योपसर्गत्वादीकारस्य परादिवद्भावेनेण्त्वाच्चैतेर्लिङीति ह्रस्वापत्तिरत ईदृशलक्ष्यानुसाराल्लौकिकस्यास्य न्यायस्य क्वचिदनाश्रयणमिति भावः। उक्तमर्थं द्रढयितुं सामान्यरूपेण दृष्टान्तमाह। [स्पष्टं चेति।] [न्यायाप्रवृत्तिरिति।] न्यायत्वावच्छिन्नस्याप्रवृत्तिरित्यर्थः। [प्रथमयोरिति।] तत्र हि जश्शसोः पररूपबाधनाय प्रथमयोरिति योगविभागे कृतेऽप्यतिप्रसङ्गवारणायाश्रितमध्येऽपवादन्यायव्याख्यावसरे कैयटेन "न्यायश्चायं नतु वचनम्। यद्वक्ष्यति। यद्येतदस्तीति। नहि वचनस्यासत्तासंभावना। न्यायस्तु क्वचित्कश्चिदाश्रीयत-इति युज्यते वक्तु" मित्युक्तम्। अत्र कैयटेनेत्युक्त्या अरुचिस्सूचिता। तद्बीजन्तु लौकिकस्यास्य न्यायस्य लोकदृष्टान्तेनैव निरुक्तरीत्या अनुगतरूपेण क्वचिदप्रवृत्तिकल्पनया सकलेष्टसिद्धौ लक्ष्यैकचक्षुष्कदुर्ज्ञेयाल्लक्ष्यानुसारादननुगतरूपेण क्वचिदप्रवृत्तिकल्पनमनुचितमिति। अत एवाद्यादिशेखरे अभीयादित्यत्र भान्तस्यैकदेशविकृतन्यायेनोपसर्गत्वादीकारस्य परादिवद्भावेनेणूत्वाच्च ह्रस्वापत्तिमुद्भाव्य, उपसर्गसंज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वादुक्तपरिमाणविषयेऽस्य न्यायस्याप्रवृत्त्या न दोष इति समाधाय तदुक्तं "लक्ष्यानुसारात्क्वचिन्न्यायानाश्रयणमिति न दोष

इत्यन्ये" इत्युक्तम्। तत्रान्ये इत्यनेन तदर्थस्य स्वानभिमतत्वं सूचितम्। अभीयादित्यत्र ह्रस्वापत्तिस्तु तस्य सत्यभिधाने उक्तरीत्यैव नेति तदाशय इति बोध्यम्। नन्वस्य न्यायस्य सामान्यतोऽनित्यत्वानङ्गीकारे अभीयादित्यत्र ह्रस्वस्य निरुक्तदिशा वारणसंभवेऽपि भान्तेऽनेन न्यायेन पदत्वमाश्रित्य जश्त्वापत्तिर्दुर्वारा। पदत्वस्य परिच्छिन्नपरिमाणवृत्तित्वाभावेन प्रकृतपरिभाषाया अप्रवृत्तेर्वक्तुमशक्यत्वात्। तथा पटितीत्यत्रापि तदापत्तिरिति चेन्न। जश्त्वस्य पूर्वसम्बन्धिविधित्वादचः परस्मिन्निति स्थानिवत्त्वेन भान्ते पदत्वस्य दुर्वचत्वात्। नच न पदान्तेति निषेधश्शङ्क्यः। तत्र जश्पदेन चर्सन्निहितस्यैव ग्रहीतुमुचितत्वेन झलां जश् झशीत्यस्यैव ग्रहणात्। अत एव पदान्तविधिं प्रति न स्थानिवदित्युपक्रम्य ब्रह्मबन्ध्वेत्यत्र जश्त्वं प्राप्नोतीति भाष्ये उक्तम्। अन्यथा जश्पदेन निषेधस्य दुर्वारत्वात्तदसङ्गतिस्स्पष्टैव। अत एव वेतस्वानित्यत्र न जश्त्वम्। अन्यथा पदेऽन्त इति व्याख्यानेन रुत्ववारणेऽपि जशि स्थानिवत्त्वनिषेधात्सान्ते पदत्वेन जश्त्वं दुर्वारमेव स्यात्। नचैवमपि पूर्वत्रासिद्धे न स्थानिवदिति निषेधान्न स्थानिवत्त्वप्रवृत्तिरिति वाच्यम्। तत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणेन तदप्रवृत्तेः। एवं पटितीत्यत्रापि स्थानिवत्त्वेन न जश्त्वप्रवृत्तिः। नच तत्र पररूपस्याज्झलादेशत्वेन स्थानिवत्त्वं वक्तुमशक्यमिति वाच्यम्। तत्रैकः पूर्वपरयोरित्यधिकारसत्त्वेन तत्र पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वबोधनादुत्तरस्थानिनमादाय पररूपस्याज्मात्रस्थानिताकादेशत्वेन तत्प्रवृत्तेस्सुवचत्वात्। पूर्वस्थानिनमादायाज्झलादेशत्वेऽपि तत्र स्थानिवत्त्वनिषेधस्य वाच्यवृत्त्या अलाभात्। असति बाधके सर्वं वाक्यं सावधारणमिति न्यायेनाच एवादेशः स्थानिवदित्येव तत्रार्थादिति बोध्यम्। एतेनाभीयादित्यादावनेन न्यायेन भान्तस्य पदत्वात्प्राप्तजश्त्ववारणायैव क्वचित्त्वित्यादिग्रन्थस्य-प्रवृत्तिर्नतु ह्रस्ववारणाय। उपसर्गत्वस्य परिच्छिन्नपरिमाणवृत्तितया अक्तपरिमाणग्रहणेऽस्य न्यायस्याप्रवृत्तिं वदतो नागेशस्य मतेऽनेन न्यायेनोपसर्गत्वस्यानेतुमशक्यत्वादिति वदन्तो वाक्यार्थचन्द्रिकाकाराः मिश्रा अन्ये च व्याख्यातारः परास्ताः। प्रागुपदर्शितादादिशेखरग्रन्थसन्दर्भेणात्र ह्रस्ववारणायैव तद्ग्रन्थप्रवृत्तेः स्फुटं प्रतीतेः। जश्त्वस्य निरुक्तप्रकारान्तरेणैव वारणसंभवेन तदर्थमननुगतानित्यत्वकल्पनाया नागेशानभिप्रेतत्वादिति सुधियो विभावयन्तु। यत्तु वाक्यार्थचन्द्रिकाकाराः। नैतन्न्यायाश्रयणे प्रयोजनम्। नच वाप्यश्व इत्यादौ सुब्लुगुत्तरं समासत्वं प्रयोजनमिति वाच्यम्। कार्यकालपक्षे प्रत्ययलक्षणेन सुबन्ततामाश्रित्य पुनस्समाससंज्ञायास्सुवचत्वात्। एवं रामावित्यादावेकादेशोत्तरं पदत्वसिद्धिरपि न फलम्। यथोद्देशे

भविष्यतीति किंचिदनेन प्रयोजनमित्यभिसन्धिमात्रेणैकादेशात्पूर्वं प्रवृत्तायाः पदसंज्ञाया एकादेशोत्तरमानुमानिकस्थानिवद्भावेन सुलभत्वात्। नच विषुषुपुरित्यादावभ्यासांशे हलादिश्शेषोत्तरं सुब्रूपतासंपादनेन सुविनिर्दुर्भ्य इति षत्वसमर्थनमस्य न्यायस्य प्रयोजनमिति वाच्यम्। पूर्वत्रासिद्धीयमद्विर्वचन इत्याश्रित्य षत्वोत्तरमेव द्वित्वप्रवर्तनेनादोषात्। नचाभ्यासविकारेषु बाध्यबाधकभावाभावेन हलादिश्शेषोत्तरमजीगणदित्यत्राभ्यासांशे गणूरूपत्वातिदेशादीच गण इत्यस्य प्रवृत्तिः प्रयोजनमिति वाच्यम्। भूतपूर्वगणूरूपत्वमादायापि तत्रेत्वप्रवृत्तेस्सुवचत्वात्। किंचाभ्यासवृत्तिशक्तिजन्योपस्थितिविषयस्यार्थस्य बोधावृत्तिभीत्या तदुत्तरखण्डगतशक्तिजन्योपस्थितेः प्रतिबन्धकताकल्पनया बोधविषयत्वानभ्युपगमेऽप्युपस्थितिस्वीकारे बाधकाभावेन वृत्त्या पदार्थोपस्थापकत्वरूपार्थवत्त्वस्य सुवचत्वादानुमानिकस्थानिवद्भावेनैव हलादिश्शेषोत्तरमभ्यासांशे गणूरूपत्वम्। ईदृशमेवार्थवत्त्वमानुमानिकस्थानिवद्भावे प्रयोजकम्। अत एव चकारेत्यादावुरदत्वोत्तरमर्थविकारविशिष्टस्य प्रकृतन्यायविषयत्वाभावेऽप्यभ्यासत्वमानुमानिकस्थानिवत्त्वेनेति निष्कर्षः। पुनरभ्याससंज्ञाप्रवृत्तिरप्येतादृशस्थानिवद्भावप्रयोज्यद्विरुक्तधातुपूर्वभागत्वातिदेशैकसाध्या। तस्मादनावश्यकोऽयं न्यायः। अत एव स्थानिवत्सूत्रे भाष्ये स्थानिवदेवेत्येव ससम्बन्धिकत्वादादेशे लब्धे पुनरादेशग्रहणमानुमानिकादेशग्रहणार्थमित्येवमभ्युपगतेनानुमानिकस्थानिवद्भावेनैकदेशविकृतन्यायः प्रत्याख्यातः। दीव्यद्ग्रहणमपि विनैव न्यायज्ञापकतामुपपद्यते। अर्थनिर्देशेषु स्वरूपस्यानुपयुक्तत्वाद्दिग्योगपञ्चमीमादायाऽप्रथमासामानाधिकरण्यलक्षणेन शतृप्रत्ययेन तदुपपत्तेः। स्पष्टं चेदं तत्रैव सूत्रे भाष्ये इत्याहुः। अन्ये च सर्वे व्याख्यातारस्तथैवास्या अनावश्यकतामूचुः। तदयुक्तम्। विषुषुपुरित्यादावभ्यासांशे हलादिश्शेषोत्तरं सुपिरूपत्वसंपादनेन षत्वसिद्धयेऽस्य न्यायस्यावश्यकत्वात्। नच पूर्वत्रासिद्धीयमद्विर्वचन इत्याश्रयणात् षत्वोत्तरमेव द्वित्वप्रवृत्त्या न तत्प्रयोजनमिति वाच्यम्। पूर्वं धातुस्साधनेन युज्यत इत्यस्यैव सिद्धान्तत्वेन प्रथमतो धातोस्साधनबोधकप्रत्ययेन सह संबन्धे सति तन्निमित्तसकलकार्यप्रवृत्त्युत्तरमेवोपसर्गसंबन्धाद्द्वित्वात्पूर्वं षत्वप्रवृत्तेर्दुर्वचत्वात्। अत एव सुपिभूतो द्विरुच्यत इति सुविनिर्दुर्भ्य इति सूत्रस्थं भाष्यमपि संगच्छते। किंचैतन्न्यायानाश्रयणे ऋधातोर्लिटि आरेत्यत्र द्वित्वोत्तरमभ्यासस्योरदत्वे रेफविशिष्टस्याभ्यासत्वाभावाद्धलादिश्शेषानापत्तिः। न्यायाङ्गीकारे तु अर्ऋ इत्यस्यानेन न्यायेन द्वित्वोद्देश्यविधेयमात्रारब्धसमुदायत्वातिदेशे उत्तरखण्डे धातुत्वज्ञाने अवशिष्टस्य तन्निरूपितपूर्वत्वतादृशसमुदायघटकत्वयोरार्थसमाजग्रस्ततया पुनः पूर्वोऽभ्यास इत्यनेनाभ्याससंज्ञायां तत्सिद्धिः। नच लक्ष्ये लक्षणस्येति

# पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

---

न्यायेन पुनस्तत्प्रवृत्तिर्वक्तुमशक्येति वाच्यम्। आगच्छतमग्नी इत्यत्र पुनः प्रगृह्यसंज्ञाकरणपरभाष्येण संज्ञाविषये तदप्रवृत्तिबोधनात्। नचार्धविकारसत्वेन तन्न्यायाप्रवृत्तिरिति वाच्यम्। जातिव्यञ्जकावयवसत्त्वे तत्प्रवृत्तेर्निराबाधात्। अत एव मुख्ये कार्यकालपक्षे काबित्यत्र पदत्वसिद्धिः। नचोरदत्वे स्थानिवत्त्वेनाभ्यासत्वमतिदेष्टुं शक्यम्। आद्यार्थकानल् विधावित्यनेन निषेधात्। नचानुमानिकस्थानिवद्भावेन विशिष्टे निरुक्तसमुदायत्वातिदेशे पुनरभ्याससंज्ञाप्रवृत्तिस्सुवचेति वाच्यम्। विशिष्टस्यानर्थकत्वात्। अचः परस्मिन्नित्यस्य तु न प्रसक्तिः। हलादिश्शेषस्य पूर्वसंबन्धिविधित्वाभावात्। एवं चारेत्याद्यर्थमयमावश्यकः। किंच चकारेत्यादावप्युरदत्वोत्तरं हलादिश्शेष इत्यस्य प्रवृत्तिरनेनैव वाच्या। अर्धविकारसत्त्वेऽपि जातिव्यञ्जकावयवसत्त्वे तत्प्रवृत्तेः प्रागुक्तत्वात्। आनुमानिकस्थनिवत्त्वेन तु न निस्तारः। अभ्यासस्य निरर्थकताया अन्यत्र ग्रन्थकृता सिद्धान्तितत्वात्। नच बोधावृत्तिभीत्या बोधविषयतारूपार्थवत्त्वस्याभ्यासेऽनङ्गीकारेऽपि ततोऽर्थोपस्थितिस्वीकारे बाधकाभावेन वृत्त्या अर्थोपस्थापकत्वरूपार्थवत्त्वस्याभ्यासे सुवचत्वादानुमानिकस्थानिवद्भावेनैवाभ्यासत्वं वक्तुं शक्यमिति हर्युक्तरीतिस्साध्वी। ततोऽर्थोपस्थितिमात्रस्वीकारे प्रकृतन्यायानाश्रयणातिरिक्तफलान्तराभावेन "दयतेर्दिगीति एकाचो द्वे इत्यादिसूत्रस्थभाष्यविरुद्धतादृशकल्पनाया अयुक्तत्वात्। एवमपि तासौ नित्यानिट्त्वादिवद्विरुक्तवातुपूर्वभागत्वस्याशास्त्रीयत्वेन स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वात्। अत एव श्रायसशब्दादणन्ताद्विवचने श्रायसावित्यत्र वृद्धौ कृतायामेकादेशस्य परादिवत्त्वेन सर्वनामस्थानत्वं स्वत उगिदन्तत्वं चाश्रित्योगिदचामित्यनेन प्राप्तस्य नुमः पूर्वसंबन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारणमचः परस्मिन्निति सूत्रभाष्योक्तं संगच्छते। सर्वथा एतन्न्यायानाश्रयणे तु सान्तेऽङ्गत्वस्य दुर्वचतया तदसंगतिस्स्पष्टैव। एवं वसूनसाद्यर्थं स्थानिवत्सूत्रं पचतु पचन्त्वित्याद्यर्थं तत्रादेशग्रहणं चावश्यकमिति त्रयाणामावश्यकत्वमचः परस्मिन्निति सूत्रे उद्योते स्पष्टमित्यवधेयम्। ३७ इति प्रथमं प्रकरणम्।

अनन्यवदित्यत्र प्रतिषेधार्थकस्य नञ उपादानेनान्येषामपि बाधकानामुपस्थितत्वादाह [पूर्वपरेति।] इत आरभ्योपसंजनिष्यमाणन्यायपर्यन्तमस्यैव क्रमेण प्रपञ्चः। तदाह।

पूर्वात्परं बलवत्, विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत्॥ ३८॥

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितोधिर्न स्यादत आह॥

पुनः प्रसङ्गविज्ञानात्सिद्धम्॥ ३९॥

---

[पूर्वादिति।] परिभाषायां पूर्वात्परस्य बलवत्त्वे हेतोरनुक्तत्वादाह। [विप्रतिषेधशास्त्रादिति।] ननु बलवत्त्वमात्रोक्त्या नेष्टसिद्धिरत आह। [पूर्वस्येति।] ३८

पूर्वात्परस्य बलवत्त्वे मूलभूततया विप्रतिषेधशास्त्रस्योपस्थितत्वात्तन्मूलकं परबलीयस्त्वे विशेषप्रतिपादकं च परिभाषाद्वयं निरूपयन् विधिनियमयो र्विधेर्ज्यायस्त्वेन विप्रतिषेधशास्त्रस्य विधित्वमूलिकां परिभाषामवतारयति। [नन्वेवमिति।] परस्य पूर्वबाधकत्वाङ्गीकार इत्यर्थः। [तातङा बाधितो धि र्न स्यादिति।] तातङ्पक्षे परेण तातङा बाधितो धिस्तदभावपक्षे न स्यादित्यर्थः। अयं भावः। वाविभाषादिपदानामभावसामानाधिकरण्यमर्थः। तथाच तुह्योस्तातङित्यादीनामाशिषि तुह्योरभावसमानाधिकरणस्तातङ् भवतीत्यादिरूपेणार्थः। एवं च तेषु भावाभावयोरुभयोरपि शब्दतोविधेयत्वलाभेन परत्वाद्धिभावं बधित्वा तुह्योरित्यनेन तातङ् तदभावयोः प्रवृत्तावभावेन बाधितो धिभावस्तातङभावपक्षे पुन र्न स्यादिति। यत्त्वेवं रीत्या अवतरणग्रन्थयोजनमयुक्तम्। अप्राप्तविभाषास्थलेऽभावस्य सिद्धत्वेन शास्त्रेण तद्विधानासंभवात्। अत एव मुमुक्षत इत्यत्र मचोऽकर्मकस्येति गुणाभावपक्षेऽत्र लोपो ऽभ्यासस्येत्यभ्यासलोपो नेति वाराणसेयाः। तदयुक्तम्। अप्राप्तविभाषास्वभावांशस्य सिद्धतया अपूर्वबोध्यत्वाभावेन तत्र विधेयताविश्रान्ते रभावेऽपि शब्दत स्तस्यापि विधेयत्वबोधनेन तस्य धिभावबाधकतायास्सुवचत्वात्। अत्र लोपोऽभ्यासस्येत्यस्य व्याख्यानाद्भावरूपादेशविषय एव प्रवृत्त्यभ्युपगमेन प्रधानविधेयविषय एव प्रवृत्त्यभ्युपगमेन वा गुणाभावपक्षे मुमुक्षते वत्स इत्यादावभ्यासलोपस्य वारयितुं शक्यत्वाच्च।

# नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः

---

यदपि भिन्धीति भिन्तादित्यस्योपलक्षणम्। क्वचिद्भिन्तादित्येव मूलपाठः। तथा च भिन्तादित्यत्र तातङा बाधितो धिर्नैव स्यादिति वार्तिककृता तातङि स्थानिवद्भावप्रतिषेधकथनमनर्थकमिति शङ्कायामाह। पुनः प्रसङ्गेतीति वारणसेयैः कृतमवतरणग्रन्थयोजनम्। तदप्ययुक्तम्। तत्र परत्वाद्धिभावं बाधित्वा तातङि तदुत्तरं स्थानिवद्भावेन हिबुद्धावपि सकृद्गतिन्यायेन धिभावस्याप्रवृत्तेस्सिद्धतया तदर्थं स्थानिवद्भावप्रतिषेधकथनमनर्थकमिति भाष्यकृता तद्वार्तिकस्य प्रत्याख्यातत्वेन तस्यैतन्न्यायफलत्वाभावात्। किंचात्रैवं रीत्या योजनेतत्पक्षे पुनः प्रसङ्गविज्ञानात्सिद्धमिति, यथा भिन्धीत्यत्र परत्वात्तातङि पुनर्धिर्भवती" ति विप्रतिषेधे परमिति सूत्रस्थशेखराक्षरस्वारस्यभङ्गापत्तिश्च। तत्र भिन्धीत्यस्य भिन्तादिति लक्ष्योपलक्षकत्वकथने पुनर्धिर्भवतीत्यस्यालग्नकत्वापत्तेः। किंचैवं योजने भिन्तात् तिसृणामित्युभयत्रापि क्रमेण परत्वात्तातङ्तिस्रादेशयोः प्रवृत्तौ स्थानिवत्त्वेन पुनःप्राप्तधिभावत्रयादेशयोर्वारणाय वार्तिककृता स्थानिवत्त्वप्रतिषेधस्य कृतत्वेन भाष्यकृता च सकृद्गतिन्यायमाश्रित्य तत्प्रतिषेधद्वयस्य प्रत्याख्यातत्वेन चोभयोस्तुल्यतया भिन्तादित्यस्य पुनःप्रसङ्गन्यायोदाहरणत्वं तिसृणामित्यस्य सकृद्गतिन्यायोदाहरणत्वं च ग्रन्थकृदुक्तमसंगतं स्यादित्यपि बोध्यम्।

यदपि भिन्धकीत्यत्र परत्वाद्धिना बाधितोऽ कच् न स्यादिति पाठभेदेनावतरणदानम्। तदपि न। अकचोऽन्तरङ्गत्वेनातुल्यबलत्वात्परत्वेन तस्य धिना बाधस्य वक्तुमशक्यत्वात्। भिन्धकीत्यत्राकचि कृते निर्दिश्यमानस्य हेरभावाद्धित्वं न प्राप्नोतीत्याशङ्क्य परत्वाद्धित्वमित्यादिना समाधानपरं हुझल्भ्य इति सूत्रस्थं भाष्यन्त्वेकदेश्युक्तिः। अन्तरङ्गत्वात्प्राप्तस्य परत्वेन बाधायोगादिति बोध्यम्। पुनः प्रसङ्गविज्ञानात्सिद्धमित्यत्र द्वारमिति शेषः। पुनःप्रसङ्गविज्ञानाद्वाध्यशास्त्रप्रवृत्ते द्वारमुपायस्सिद्ध इति परिभषार्थः। ३९

विप्रतिषेधशास्त्रस्य विधित्वाश्रयणेन लब्धं पुनः प्रसङ्गन्यायं निरूप्य तस्य नियामकत्वाश्रयणेन सिद्धं न्यायं निरूपयति। [नन्वेवमिति।] सर्वत्र पुनः प्रसङ्गविज्ञानाङ्गीकारे इत्यर्थः। [पुनस्त्रयादेशस्स्यादिति।] स्थानिवद्भावेन त्रिशब्दत्वा तदेशादिति भावः।

स्यादत आह ॥

सकृद् गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव ॥४०॥

तत्र क्व चिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवेन बाधकाभावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे

---

परिभाषायां गतावित्यस्य प्राप्तावित्यर्थः। विप्रतिपूर्वात्कर्मव्यतिहारे वर्तमानात्सेधते र्घञि निष्पन्नस्य विप्रतिषेधशब्दस्य विरोधोऽर्थः। सच द्वयोश्शास्त्रयोः क्वचिल्लब्धावकाशयो रेकत्र प्रयोगे युगपदसंभवि स्वकार्यसमर्पणम्। तस्य च गतावित्यनेन सामानाधिकरण्येनान्वयः। तथाचान्यत्र लब्धावकाशयो र्द्वयो श्शास्त्रयोरेकत्र प्रयोगे युगपदसंभावितस्वकार्यसमर्पणरूपप्राप्तौ सत्यां सकृदेकवारं यद्बाधितं तद्बाधितमेव न पुनः प्रवर्तत इति परिभाषार्थः। यद्वा गतावित्यस्य प्राप्तावित्यर्थः। एकस्मिन् लक्ष्ये द्वयोश्शास्त्रयो र्युगपत्प्राप्तौ विप्रतिषेधे तद्बोध्ययोः कार्ययो र्युगपदसंभवरूपे विरोधे सति सकृदेकवारं यद्बाधितं तद्बाधितमेव न पुनः प्रवर्तत इत्यर्थः। विप्रतिषेधशास्त्रमूलकयोरनयोरन्त्ये मूलं प्रत्यासत्त्या दर्शयति। [तत्रेति।] तयो र्मध्ये इत्यर्थः। [क्वचिदिति।] अन्यतरविषय- इत्यर्थः। [एकस्मिन्निति।] लक्ष्ये इत्यर्थः। [असंभवेनेति।] द्वयोः कार्ययो र्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवरूपविरोधेनेत्यर्थः। [बाधकाभावादिति।] अनेनोत्सर्गापवादवैधर्म्यं दर्शितम्। अयं च दृष्टान्तदार्ष्टान्तिकयोः पर्यायप्रसङ्गे हेतुः। तथाहि। यदि कस्य चित्सामान्यविषयत्वं कस्य चिद्विशेषविषयत्वं च स्यात्तदा उत्सर्गापवादभावसत्वेनोत्सर्गस्यापवादशास्त्रविषयकताया बाधात्तद्विषयकलक्षणोपप्लुति र्न स्यात्। तदभावे तूत्सर्गापवादभावाभावात्स्वस्वविषयसर्वव्यक्तिविषयकतया द्वयोश्शास्त्रयो रुपप्लुतौ वृक्षेभ्य इत्यादिलक्ष्यविषयकतया उपप्लुतयो र्दीर्घैत्वशास्त्रयो र्द्वयोरप्यचारितार्थ्येन वचनद्वयप्रामाण्यात्पर्यायेणोभयप्रसङ्ग इति भावः। पर्यायेण शास्त्रद्वयप्रसङ्गे दृष्टान्त माह। [तृजादिवदिति।] ण्वुल्तृचोर्धातुमात्रविधानेन विनिगमकाभावात्सर्वव्यक्त्युद्देशेन द्वयोर्विधानात्तयो र्युगपत्प्रवृत्तावेकस्य धात्वव्यवहितपरत्वासम्भवात्पर्यायेण यथा तयोः प्रवृत्तिरेवं

नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः। यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति यौगपद्यासंभवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्व चिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थं, तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि भवत्येवेति पुनः प्रसङ्ग-

---

प्रकृतेऽपि स्यादिति भावः। [नियमार्थमिति] विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयत" इति वचनानुसारेण पक्षे प्राप्त्या तन्त्रान्तरप्रसिद्धनियमविधिरेवायमित्यप्राप्तांशपरिपूरकत्वमेवास्य, इतरनिवृत्तिस्त्वार्थी तद्द्योतक एवकार इति भावः। एवं च विप्रतिषेधशास्त्रस्य शास्त्रीयदृष्टान्ताश्रयणमूलकनियामकत्वलब्धोऽयं न्याय इति बोध्यम्। आद्ये मूलमाह। [यथेति।] अस्य न करोतीत्यत्रान्वयः। [पर्यायेण कार्यं करोतीति।] स्वामिनोस्तुल्यबलत्वात्पर्यायेणैव प्रेष्यस्य प्रेरणयेति भावः। युगपत्प्रेषणेऽप्येकत्र प्रदेशे तयोः सुकरत्वादाह। [नानेति।] एकस्यां दिशि नानाप्रदेशेष्वपि तयोः कर्तुं शक्यत्वादाह। [दिक्ष्विति।] [कार्ये इति।] स्तइतिशेषः। [यौगपद्यासम्भवादिति।] युगपत्करणासंभवादित्यर्थः। [अप्रतिपत्तौ प्राप्तायामिति।] अप्रवृत्तौ प्राप्तायामित्यर्थः। अत्र प्रेष्यस्थानीयं लक्ष्यम्। स्वामिस्थानीये च शास्त्रे। यथा एकः प्रेष्यः परस्परविरुद्धकार्यकरणेन चरितार्थयोः स्वामिनोर्नानादिगधिकरणकत्वेन युगपदसंभवि कार्यद्वयं न करोति तथा अन्यत्र चरितार्थयोः शास्त्रयोर्युगपदसंभवि कार्यद्वयं लक्ष्यं न भजतीति भावः. [परविध्यर्थमिति।] विधिरत्यन्तमप्राप्तावित्युक्तेरिति भावः। [तत्र कृते इति।] परस्मिन् प्रवृत्ते इत्यर्थः। [भवत्येवेति।] परमेवेति नियमाभावेन सर्वथा पूर्वस्य निवृत्तेरबोधनादिति भावः। एवं च विप्रतिषेधशास्त्रस्य लोकदृष्टान्ताश्रयणमूलकविधायकत्वलब्धोऽयं न्याय इति बोध्यम्।

विज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम्॥ यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः। अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव। जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः

---

स्पष्टं च पूर्वन्यायस्य शास्त्रीयदृष्टान्तमूलकत्वमस्य लोकदृष्टान्तमूलकत्वं च विप्रतिषेधसूत्रे भाष्ये। अत्र कैयटादयो व्यक्तौ पदार्थे सकृद्गतिन्यायः जातौ तु तस्मिन् पुनः प्रसङ्गविज्ञानमिति न्यायद्वयसिद्धिमाहुः। तद्दूषयति। [यत्त्वित्यादिना।] आदिपदेन सीरदेवहरदत्तकौस्तुभकृदादिसंग्रहः। [प्रतिलक्ष्यं लक्षणोपप्लवादिति।] तत्पक्षे लक्ष्यव्यक्तीनां भेदात्तत्तल्लक्ष्यसंस्कारकतया प्रातिस्विकरूपेण तत्तल्लक्षणानां भेदात्सुपिचेत्यादि संग्राहकवाक्येन भ्यामि परतो वृक्षशब्दस्य दीर्घः भ्यसि परतो वृक्षशब्दस्य दीर्घ इत्येवं रूपेण विशिष्य दीर्घविधानादिति भावः। [तत्तल्लक्ष्यविषययोरिति।] वृक्षेभ्य इत्यादिलक्ष्यविषकतया उपप्लुतयो स्सुपि च बहुवचने झल्येदिति शास्त्रयोरुभयोरपीत्यर्थः। [इदमिति।] विप्रतिषेधसूत्रमित्यर्थः। नन्वेवं तल्लक्ष्यविषकतया उपप्लुतस्य पूर्वलक्षणस्य वैयर्थ्यापत्तिरत आह। [अत्र पक्षे इति।] नियमपक्ष इत्यर्थः। [एतन्नियमवशादिति।] विप्रतिषेधे सति परमेवेति नियमवशादित्यर्थः। [एतल्लक्ष्येति।] परशास्त्रविषयकवृक्षेभ्य इत्यादिलक्ष्येत्यर्थः। [पूर्वशास्त्रेति।] सुपि चेत्यादि शास्त्रेत्यर्थः। [उद्देश्यतावच्छेदकाक्रान्ते इति।] जातिपक्षे सुपि च बहुवचने झल्येदित्यादावुपात्ताङ्गरूपोद्देश्यविशेषणतया उपस्थिताया अदन्ताङ्गत्वजातेरेवोद्देश्यत्वेन तज्जात्याक्रान्ते इत्यर्थः। [क्वचिल्लक्ष्ये इति।] परस्पराविषये वृक्षाभ्यां वृक्षेष्वित्यादि लक्ष्ये इत्यर्थः। [द्वयोरिति।] सुपि च बहुवचने

सत्प्रातिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनःप्रसङ्गविज्ञानसिद्धिरित्याहु, स्तन्न। व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात्। न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात्। अत एव सरूपसूत्रे भाष्ये

---

झल्येदित्यनयो रित्यर्थः। [सत्प्रतिपक्षन्यायेनेति।] साध्याभावसाधकं हेत्वन्तरं यस्यास्ति स सत्प्रतिपक्षः। तथा च शब्दे नित्यत्वाभावसाधकस्य कृतकत्वरूपहेतोस्सत्वेन तेन हेतुना सत्प्रतिपक्षत्वाच्छ्रावणत्वरूपहेतु र्यथा शब्दे नित्यत्वं साधयितुं न क्षम स्तथा पूर्वपरशास्त्रे च सुपि च बहुवचने झल्येदित्येते युगपदुभयासंभवरूपविरोधस्थले वृक्षेभ्य इत्यादौ स्वस्वकार्यं समर्पयितुं न प्रभवतः। तथा च तत्र परशास्त्रस्यात्यन्तमप्राप्त्या परविध्यर्थं विप्रतिषेधशास्त्रमिति भावः। [सर्वं लक्ष्यमिति।] इदं व्याप्तौ कर्म। शास्त्रं कर्तृ। ननु व्याख्यानमेव तत्र मानमत आह। [न ब्राह्मणमिति।] [सकलव्यक्तिविषयत्वार्थमेवेति।] सकलव्यक्तिविषयकत्वार्थमेवेत्यर्थः। हननिषेधस्य सकलब्राह्मणविषयकत्वलाभायेति यावत्। [भाष्ये इति।] एकशेषसूत्र इति शेषः। अयं भावः। व्यक्तिपदार्थतायामेकस्या एव व्यक्तेर्ब्राह्मणशब्देन बोधनान्निषेधस्य सकलब्राह्मणविषयकत्वं न स्यात्। जातिपदार्थतायां तु ब्राह्मणशब्दस्य ब्राह्मणत्वरूपजातिबोधकतया तस्याश्च नित्यत्वेन तत्र हननक्रियाकर्मताया असंभवान्निषेधस्य व्यर्थतया तज्जात्याक्रान्तव्यक्तिषु निषेधस्संक्रामन् विनिगमनाविरहात्तदाक्रान्तसकलव्यक्तिषु संक्रामतीति निषेधस्य सकलब्राह्मणविषयकत्वलाभ इति। तत्रैव हेत्वन्तरं सूचयन्नाह। [अत एवेति।] जातिपक्षस्य

जातौ पदार्थे ऽनवयवेन साकल्येन विधेःप्रवृत्तेगौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम्। द्रव्यवादे चासर्वद्रव्यावगते गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरो ऽशास्त्रोक्त इत्युक्तम्। किञ्च न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति॥

---

व्यापकत्वादेवेत्यर्थः। भाष्यस्थस्यानवयवेनेत्यस्यैव विवरणं [साकल्येनेति।] सकलव्यक्तिविषयकतयेत्यर्थः। [विधेरिति।] गौरनुबन्ध्य इत्यादिविधेरित्यर्थः। [असंभवादिति।] देशकालादिभेदेन व्यक्तीनामानन्त्यादिति भावः। [कर्मण इति।] एकगवानुबन्धनरूपकर्मण इत्यर्थः। [वैगुण्यमिति।] तथाच ततः फलानवाप्तिरिति भावः। एतेन जातिपक्षेऽपि शास्त्रस्य सकललक्ष्यव्याप्तिर्दर्शिता। न केवलं कैयटोक्तार्थे मानभाव एव प्रत्युत वैपरीत्य एव मानमस्तीत्याह। [द्रव्यवादे चेति।] द्रव्यवादेत्वित्यर्थः। [असर्वद्रव्यावगतेरिति।] तत्पक्षे एकस्या एव व्यक्तेश्शब्दवाच्यतया आलम्भ्यत्वेन निखिलव्यक्तिप्रतीत्यभावादित्यर्थः। [एकश्शास्त्रोक्त इति।] एकस्यैव गोरूपद्रव्यस्य गोपदवाच्यतया तस्य केन चिदनुबन्धे कृते शास्त्रार्थसंपत्त्या पुनरन्यैस्तेन वा कृतो गवान्तरानुबन्धोऽशास्त्रीयस्स्यादिति तदाशयः। एतेन व्यक्तिपक्षेऽपि शास्त्रस्य सकललक्ष्याव्यापकत्वं दर्शितम्। एवं तन्मते प्रकरणान्तरस्थं भाष्यविरोधं प्रदर्श्य प्रकृतन्यायद्वयव्युत्पादनपरं विप्रतिषेधसूत्रस्थं भाष्यमपि तन्मते विरुद्धमित्याह। [किंचेति।] [मानमस्तीति।] व्यक्तिपक्ष एव तृजादयस्सर्वलक्ष्यविषया न जातिपक्ष इत्यत्र मानाभाव इत्यर्थः। अयंभावः। विप्रतिषेधसूत्रस्थं भाष्यं पक्षद्वयसाधारणेन दृष्टान्तभेदेन प्राप्तयोः पर्यायप्रतिपत्त्योराश्रयणेन तद्वचनस्य नियामकत्वविधायकत्वव्युत्पादनपरम्। ननु जातिव्यक्त्याश्रयणेन। अन्यथा कैयटोक्तदिशा व्यक्तिपक्षे तृजादिदृष्टान्तेन पर्यायतायाः जातिपक्षे प्रेष्यदृष्टान्तेनाप्रतिपत्तेश्च वक्तव्यतया जातिपक्षप्रवृत्तामप्रतिपत्तिमुपक्रम्य तव्यदादिष्वप्रतिपत्तिरूपदोषशङ्कापरं "तव्यदादीनांत्वप्रसिद्धिः। नहि तव्यदादिषु नियमकारिशास्त्रमारभ्यते।

अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूप विषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्। जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र

---

येन तव्यदादयस्स्युः। यश्च भवता हेतुर्व्यपदिष्टः अप्रतिपत्तिर्वा उभयोस्तुल्यबलत्वादिति, तुल्यस्स तव्यदादिभि," ति भाष्यमसंगतं स्यात्। तेषामपि धातुमात्राद्विधानेन तृजादितुल्यतया तृजादिभिर्वैतद्विषयेऽपि व्यक्तिपदार्थत्वाश्रयणेन पर्यायताया एवौचित्यात्। किंचैकसूत्रोपात्तत्वादनवकाशत्वाच्च नास्त्येषां परत्वेन व्यवस्थेति तत्रत्यकैयटासंगतिश्च। जातिपक्षे धातुत्वाक्रान्ते क्वचिल्लक्ष्ये तेषां चारितार्थ्येनानवकाशत्वाभावात्। कैयटोक्तदिशा तत्पक्षे शास्त्रस्य सकललक्ष्यव्याप्तेरभावात् अतः पक्षद्वयेऽपि शास्त्रस्य सकललक्ष्यव्याप्तेरेकशेषसूत्रे भगवता सिद्धान्ततया स्पष्टमुक्तत्वेन पक्षद्वयेऽपि शास्त्रीयदृष्टान्ताश्रयणे पर्यायतापत्त्या विप्रतिषेधसूत्रस्य नियामकत्वं लोकदृष्टान्ताश्रयणेत्वप्रतिपत्त्या विधायकत्वमित्येव न्याय्यम्। अत एव तच्छेषभाष्ये "विप्रतिषेधे परमितीयता सूत्रेण वार्तिककृदुक्तयोस्सकृद्गतिन्यायपुनःप्रसङ्गविज्ञानन्याययोः कथं सिद्धिरित्याशङ्क्य पक्षविशेषास्मरणेन" यदा तावदेष दृष्टान्तस्तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति तदा विप्रतिषेधसूत्रस्य नियामकत्वात्सकृद्गतिन्यायोपपत्तिः। यदात्वेष हेतुरप्रतिपत्तिर्वा, उभयोस्तुल्यबलत्वादिति तदा विप्रतिषेधे परमित्यस्य विधायकत्वात्पुनःप्रसङ्गविज्ञानन्यायसिद्धि रिति तदुत्तरभाष्यं संगच्छते। अतः कैयटरीत्या योजनं न युक्तमिति। त्वदुक्तयुक्तिद्वयमपि मिथो व्यभिचरितमित्याह। [अपिचेत्यादिनियामकं भवेदित्यन्तेन।] [अन्यव्यक्तीति।] परस्पराविषयवृक्षाभ्यां वृक्षेष्वित्यादिव्यक्तीत्यर्थः। [चरितार्थयोरिति।] सावकाशयोः सुपि च बहुवचने झल्येदिति शास्त्रयोरित्यर्थः। [इयं व्यक्तिरिति।] विरोधाधारभूता वृक्षेभ्य इत्यादिव्यक्तिरित्यर्थः। [नकल्पयतीति।] प्रेष्यदृष्टान्तेन न कल्पयतीत्यर्थः। तथाच तत्पक्षेऽपि तत्र तयोरप्रतिपत्तौ प्राप्तायां विध्यर्थत्वं विप्रतिषेधशास्त्रस्य लभ्यत इति भावः। [तद्व्यक्तीति।] परस्पराविषयव्यक्तीत्यर्थः। [नैतद्व्यक्तीति।] विरोधाधारभूतव्यक्तीत्यर्थः।

विनिगमकाभावः ॥ तत्र लक्ष्यानुसारात् क्व चिच्छास्त्रीय-दृष्टान्ताश्रयणं क्व चिल्लौकिकदृष्टान्ताश्रयणमिति भाष्य-संमतमार्ग एव युक्त इति बोध्यम्। द्वयोः कार्ययोर्यौग-पद्येनासंभव एव विप्रतिषेधशास्त्रोपयोगी। इदमिको गुणेति सूत्रे कैयटे स्पष्टम्। यथा शिष्टादित्यादौ तातङ्शा-

---

[विनिगमकाभाव इति।] तथाच तयोस्तत्तदुद्देश्यतावच्छेदकाक्रान्तसकललक्ष्यविषयकतायां विरोध-विषयेऽपि वचनद्वयप्रामाण्यात्तृजादिवत्पर्यायेण प्रवृत्तौ प्राप्तायां विप्रतिषेधसूत्रस्य नियामकत्वं लभ्यत इति सर्वथा कैयटोक्तं न युक्तमिति भावः। उक्तमर्थमुपसंहरति। [तत्रेति।] तयोर्मध्ये इत्यर्थः। अस्य तस्मादित्यादिः। [क्वचिदिति।] तिसृणामित्यादिविषये। [शास्त्रीयेति।] तृजादिरूपेणेत्यर्थः। तथाच तत्र तेन दृष्टान्तेन त्रयादेशतिसृआदेशयोः पर्यायेण प्रसक्तौ विप्रतिषेधशास्त्रेण परमेवेतिनियमात्पूर्वशास्त्रस्य न पुनः प्रवृत्तिरिति भावः। [क्वचिदिति।] भिन्द्धीत्यादावित्यर्थः। [लौकिकेति।] प्रेष्येत्यर्थः। तथाच तत्र तेन दृष्टान्तेन तातङ्धि-भावयो रूपयोरप्यप्रतिपत्तौ प्राप्तायां विप्रतिषेधसूत्रेण परस्य विधानात्तदुत्तरं यदि पूर्वस्य प्राप्तिरस्ति तदा तदपि भवत्येवेति भावः। ननु द्वौ प्रसङ्गावन्यार्थावेकस्मिन् स विप्रतिषेध इति विप्रतिषेध-सूत्रस्थभाष्येणैकस्य कार्यिणः कार्यद्वययोगरूपविरोधस्यैव विप्रतिषेधपदार्थत्वलाभाद्यत्र तादृशो-विप्रतिषेधः यथा वृक्षेभ्य इत्यादावेकस्मिन्नकारे दीर्घैत्वयोर्युगपत्प्रवृतावसंभवस्तत्र विप्रतिषेधसूत्रेण परस्य बलीयस्त्वबोधनेऽपि शिष्टादित्यादौ तातङ्शाभावयोः कार्यिभेदाद्विप्रतिषेधाभावेन कथं तत्र परबलीयस्त्वमत आह। [द्वयोरिति।] अन्यत्र लब्धावकाशयो र्द्वयोरित्यर्थः। [असंभव एवेति।] यौगपद्येन प्रवृत्तावसंभवमात्रमित्यर्थः। शास्त्रोपयोगीति। शास्त्रप्रवृत्त्युपयोगीत्यर्थः। अत्र मानमाह। [इदमिति।][कैयट इति।] इदं भाष्यस्याप्युपलक्षणम्। तत्रहि "नावश्यं द्विकार्ययोग एव विप्रतिषेधः किंतर्हि, असंभवोऽपी" ति भगवतोक्तम्। कैयटेन च द्विकार्य-योगत्वाभावे केवलोऽप्यसंभवो विप्रतिषेध इत्युक्तमिति बोध्यम्। केवलासंभवमुदाहरति। [यथेति।]

भावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः। यद्यपि तातङादे स्स्थानिवद्भावेनास्त्येव तत् तथाप्यादेशप्रवृत्त्युत्तरमेव स, न तु तत्प्रवृत्तिकाले। एवं नुम्तृज्वत्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसंभवो यदागमा इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः। एवं भिन्द्धीत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासंभवो बोध्यः। नुमनुटोरपि नुड्यजादिविभक्त्यानन्तर्य-

---

[स्वस्वनिमितेति।] शाढाविति सूत्रबोधितस्य स्वस्वनिमित्तयोरानन्तर्यस्यासंभव इत्यर्थः। झल्व्यवहितपूर्वत्वविशिष्टस्य शादेशस्य तेन साधुत्वबोधनादिति भावः। स्वपदेन विधेयस्य ग्रहणम्। विधेयनिमित्तयोरानन्तर्यन्तु झल्व्यवहितपूर्वत्वविशिष्टश्शादेशस्साधुर्भवतीति साधुत्वविधायकवाक्येन बोधितमिति बोध्यम्। ननु स्थानिवत्त्वेन तातङि हिबुद्धेस्सत्त्वादस्त्येव स्वस्वनिमित्तयोरानन्तर्यस्य संभव इत्यत आह। [यद्यपीति।] [तदिति।] आनन्तर्यमित्यर्थः। [स इति।] स्थानिवद्भाव इत्यर्थः। [तत्प्रवृत्तीति।] आदेशप्रवृत्तीत्यर्थः। तथाच तत्प्रवृत्तिकालिकमसंभवमादाय विप्रतिषेधशास्त्रप्रवृत्तौ बाधकाभाव इति भावः। भाष्यप्रामाण्यात्तादृशस्यैव च विप्रतिषेधस्य तदुपयोगित्वं न तु तत्प्राक्कालिकस्य तदुत्तरकालिकस्य वेति बोध्यम्। तस्यैवोदाहरणान्तरमाह। [एवमिति।] [युगपदसंभव इति।] तयोर्युगपत्प्रवृत्तौ तृज्वत्सूत्रबोधितस्य स्वस्वनिमित्तयोरानन्तर्यस्यासंभव इत्यर्थः। एवं सर्वत्राप्यूह्यम्। ननु यदागमन्यायेन नुम्विशिष्टे क्रोष्टुशब्दत्वातिदेशो अस्त्येव तत्संभवोऽत आह। [यदागमा इति।] [एवमिति।] पूर्वत्रेवेत्यर्थः। प्रकारान्तरमप्यत्र सम्भवतीति प्राचामनुरोधेनाह। [युगपदेकस्थानीति।] नन्वेकस्मिन्नपि स्थानिनि तयोः तात् धिरिति धि तादिति वा क्रमेण प्रवृत्तौ नास्त्यसंभवोऽत आह। [आनन्तर्यस्य चेति।] आनन्तर्यस्यवेत्यर्थः। निपातानामनेकार्थत्वात्। शेखरे

बाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसंभवाद्विप्रतिषेधः॥ क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति। तेन सर्वे पूर्व विप्रतिषेधाः संगृहीता इति स्वरितेनेति सूत्रे भाष्ये। विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति विप्रतिषेधसूत्रे भाष्ये इत्यन्यत्र विस्तरः॥ ४० ॥

नन्वेवमेधते इत्यादौ परत्वाद्विकरणेऽनुदात्तङित इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत आह॥

---

तु वाशब्दघटित एव पाठः। तुह्योरित्यनेन हुझल्भ्यो हेरित्यनेन चाङ्गात्परस्यैव हेस्तातङ्धिभावयोर्विधानाद्धि तादिति क्रमेण प्रवृत्तौ तुह्योरिति सूत्रबोधितस्याङ्गतातङोरानन्तर्यस्य, तात् धि, इति क्रमेण प्रवृत्तौ हुझल्भ्योरिति सूत्रबोधितस्य झलन्ताङ्गधिभावयोरानन्तर्यस्य चासंभव इति भावः। एवं च सर्वत्र द्वयोः कार्ययोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभव एव विप्रतिषेध शास्त्रप्रवृत्त्युपयोगीति बोध्यम्। ननु नुम् तृज्वत्वयोर्नुम् नुटोश्चोक्तरीत्या असंभवस्य सत्त्वेऽपि तयोः परत्वाभावात्कथमनेन व्यवस्थेत्यत आह। [क्वचिदिति।] पूर्वविप्रतिषेधविषय इत्यर्थः। प्रकारान्तरेण तत्संग्रहमाह। [परशब्दस्येति।] ४०

पूर्वेणास्य संगतिं सूचयन्नाह। [नन्वेवमिति।] पूर्वविप्रतिषेधाविषये सर्वत्र परेण पूर्वस्य बाधे इत्यर्थः। [इत्यादाविति।] आदिना पचत इत्यादिसंग्रहः। [परत्वादिति।] नियमाविषये अलादेशे चानशि भोगं भुञ्जान इत्यादौ विकरणस्य, विकरणाविषये आर्धधातुके लिङि लिटि वा नियमस्य च चारितार्थ्यादनयोस्तुल्यबलत्वेनैधत इत्यादावुभयप्रसंगे नियमात्पूर्वं परत्वाद्विकरणे तेन व्यवधानान्नियमानुपपत्तिरिति भावः। नित्यत्वस्याप्युपलक्षणमिदम्। नियमे कृतेऽकृतेऽपि विकरणस्य प्राप्तेः। तदुक्तं भाष्ये, " परत्वाद्विकरणाः, नित्याः खल्वपि विकरणाः। कृतेऽपि

## विकरणेभ्यो नियमो बलीयान् ॥ ४२ ॥

अत्र वृद्भ्यः स्यसनोरिति सूत्रेण स्ये विभाषा ऽतङ्विधानं ज्ञापकम्। अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति तत्र विषयसप्तमी

---

नियमे प्राप्नुवन्त्यकृतेऽपीति।" उद्योतकृता च तत्र "यद्यपि नित्यानित्ययो रयुक्त स्सः, तथापि पूर्वं नित्यत्वास्मृते र्न दोष" इति बोध्यमित्युक्तम्। [अत्रेति।] परिभाषायामित्यर्थः। [स्ये विभाषा तङ्विधानमिति।] अत्रातङिति छेदः। परस्मैपदेति तदर्थः। स्ये परतो विकल्पेन परस्मैपदविधानमिति भावः। क्वचित्तु विकल्पविधानमिति पाठ इति गदाकृतः। तत्पक्षेऽपि विकल्पेन परस्मैपदविधानमित्यर्थः। अन्यथेत्याद्युपपादनग्रन्थस्वारस्येन, ज्ञापकं तु वृद्भ्यस्स्यसनोरित्यत्र स्ये विकल्पविधानमिति कैयटग्रन्थस्वारस्येन चायमेव पाठो युक्त इति भाति। [अन्यथेति।] एतत्परिभाषानङ्गीकार इत्यर्थः। [स्यव्यवधान इति।] उत्सर्गसमानविषयत्वादपवादानां शबादेरपवादभूतस्य स्यप्रत्ययस्यापि लादेशोत्तरमेव प्रवृत्ते र्वाच्यतया प्रथमं सामान्यशास्त्रेण लटः स्थाने तिबादीनामष्टादशानामपि प्रत्ययानां प्रवृत्तौ ततो नियमात्पूर्वं परत्वाद्विकरणे तेन व्यवधानादनुदात्तङित इत्यादिनियमानामप्रवृत्तौ पूर्वं प्रवृत्तयोः परस्मैपदात्मनेपदयोरुभयो रप्यनिवृत्त्या द्वयोस्सिद्धिरित्याशयः। ननु ज्ञापितायामस्यामनुदात्तङित इति नियमप्रवृत्तिकाले स्यप्रत्ययपरत्वासंभवेन विकल्पाप्राप्तेर्नियमस्य निष्प्रतिपक्षतया प्रवृत्तौ विकल्पविधानस्य व्यर्थतया न स्वांशे चारितार्थ्यमत आह। [विषयसप्तमीति।] यावता विना अनुपपत्तिरिति न्यायादनेन स्ये इत्यस्य विषयसप्तमीत्वमपि ज्ञाप्यते। ततश्च नियमप्रवृत्तिकाले स्यप्रत्ययविषयतायासत्वान्नियमबाधनेन विकल्पविधानस्य चारितार्थ्यं सुवचमिति भावः। अत्र ज्ञापने आकरसम्मतिं

**बोध्येत्यनुदात्तङित इत्यत्र भाष्यकैयटयोः स्पष्टम्। विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति शदेः शित इत्यत्र भाष्ये ध्वनितम्॥**

---

दर्शयति। [भाष्यकैयटयोरिति।] यद्यपि भाष्येऽनुपसर्गाद्वेति विकल्पविधानस्योक्तार्थे ज्ञापकत्वमुक्तं भगवता नत्वस्य। तथापि तस्य चक्रमे, चक्राम, क्रम्यात, क्रंसीष्टेति लिङ्लिङोश्चारितार्थ्येन ज्ञापकत्वासंभवात् तद्भाष्यस्य ज्ञापकदिक्प्रदर्शनमात्रतात्पर्यकतया तत्सजातीयस्यापि तेन तदुक्तप्रायमेवेत्याशयेन भाष्येत्युक्तम्। कैयटेन तूक्तरीत्या भाष्योक्तस्यानुपसर्गाद्वेत्यस्य ज्ञापकत्वं न संभवतीत्युक्त्वा स्ये विकल्पविधानस्य ज्ञापकत्वं स्पष्टमुक्तमिति बोध्यम्। अत्र पक्षे स्ये इत्यस्य विषयसप्तमीत्वस्वीकारेण निर्दिष्टपरिभाषाबाधकल्पनायां गौरवमतो लाघवसहकृतं पक्षान्तरमाह। [विकरणव्यवधानेऽपीति।] [नियमप्रवृत्तेरिति।] अनुदात्तङित इत्यादिनियमप्रवृत्तेरित्यर्थः। [इदमिति।] स्ये विभाषाऽतङ्विधानमित्यर्थः। [भाष्ये ध्वनितमिति।] तत्र हि "उपसर्गपूर्वे नियमेऽड्व्यवाय उपसंख्यानं कर्तव्यम्। न्यविशत, व्यक्रीणीत, किंपुनः कारणं न सिध्यति। अटा व्यवहितत्वात् इत्युक्तम्। विकरणेभ्यो नियमस्य बलीयस्त्वे तु विकरणात्पूर्वं नियमे ततो नित्यत्वादटः प्राग्विकरणे ततोऽडागमे च न्यविशतेत्यादिसिद्ध्या उपसंख्यानमनर्थकमेव स्यादिति तेनेदं ध्वनितम्। विकरणव्यवधानेऽपि नियमप्रवृत्तिरित्यर्थज्ञापने तु परत्वनित्यत्वाभ्यां नियमादडागमाच्च पूर्वं विकरणे ततो नियमात्प्राङ्नित्यत्वादडागमे च कृते उक्तज्ञापकेन विकरणस्याव्यवधायकत्वेऽप्यटो व्यवधायकत्वात्तेन व्यवधाने नेर्विश इति नियमाप्राप्त्या उपसंख्यानं चरितार्थमिति बोध्यम्। अत्रापि पक्षेऽनुदात्तङित इत्यादिषु बहुषु नियमप्रदेशेषु तस्मादिति परिभाषयोपस्थितस्याव्यवहितत्वांशस्य बाधकल्पनायां गौरवान्निरुक्तशदेश्शित इति सूत्रभाष्यतात्पर्यस्य सिद्धान्तमूलत्वस्थायमडिति पक्षापर्यालोचनेन प्रवृत्ततया तमवष्टभ्यैतदर्थज्ञापनस्यायुक्तत्वाच्चायमपि पक्षो न सम्यक्। किंच नियमकत्वपक्षे धातोः परस्य लस्य स्थाने तिबादिसूत्रेणाष्टादशानामपि प्रत्ययानां प्रवृत्तेर्वाच्यतया एकस्याः प्रकृतेरनेकेषां प्रत्ययानां परत्वेन प्रवृत्तेरसंभवात्तावत्प्रकृतिकल्पनया तेषां प्रवृत्तिर्वाच्या। ततोऽनुदात्तङित इत्यादिनियमेन केषांचित्प्रत्ययानां निवृत्तौ तदनुरोधेन कल्पितानां प्रकृतीनामपि

वस्तुतो ऽस्माज् ज्ञापकादनुदात्तङित इत्यादि प्रकरणं तिबादिविध्येकवाक्यतया विधायकम्। तत्र धातोरिति विहितपञ्चमीति तत्समानाधिकरणमनुदात्तङित इत्यादि

---

निवृत्तिर्वक्तव्येत्येवं जातनिवृत्तिकल्पनेऽतिमहद्गौरवमित्याशयेन सिद्धान्तभूतमेकवाक्यतापक्षं दर्शयति। [वस्तुत इत्यादि तत्त्वमित्यन्तेन।] [अस्माज्ज्ञापकादिति।] विभाषाऽतङ्विधानाज्ज्ञापकादित्यर्थः। [एकवाक्यतयेति।] वाक्यैकवाक्यतयेत्यर्थः। [विधायकमिति।] अनुदात्तङित इत्यादीनां परिभाषात्वाङ्गीकाराद्यथा कार्यकालपक्षे कार्याकांक्षावशात्कार्यदेशे उपस्थितानां परिभाषाणां विधिशास्त्रैकवाक्यतया विध्युपकारकत्वमेवं स्वाकांक्षावशात्तिप्तस्झीतिसूत्रे उपस्थितमनुदात्ताङित-इत्यादिप्रकरणं तेन सह वाक्यैकवाक्यतामापन्नं सदात्मनेपदपरस्मैपदविधायकमिति भावः। तदेतदुक्तमनुदात्ताङित इति सूत्रे भाष्ये" यदि पुन रियं परिभाषाविज्ञायेत, किं कृतं भवति, कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्र द्रष्टव्यम्, लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति। अनुदात्तङित इति शेषात्कर्तरीति चे" ति। विध्येकवाक्यतारूपपरिभाषासादृश्यादेषु परिभाषात्वव्यवहारः। परिभाषालिङ्गं चात्रैषां विधिशास्त्राकाङ्क्षोत्थापकावात्मनेपदत्वादिना बोधकावात्मनेपदपरस्मैपदशब्दौ। आकाङ्क्षोत्थापके लिङ्गव्यवहारात्। एतेन सर्वत्र परिभाषालिङ्गं विधेः परिभाषाकाङ्क्षोत्थापकं विधौ दृष्टम्। नचात्र तथा विधिसूत्रे इतीदमयुक्तमित्यपास्तम्। एवं चात्र पक्षे अनुदात्तङित इत्यादिषु भूवादय इत्यतो धातुग्रहणस्य मण्डूकानुवृत्तिर्विभक्तिविपरिणामश्च नावश्यक इत्यपि लाघवमिति बोध्यम्। नन्वेवं स्वविषये सर्वत्र प्रसक्तस्य शपो बाधनेन चरितार्थयोः स्य तास्योः परत्वाच्छ्यन्नादिभिः बाधो माभूदित्येतदर्थं स्यतासीति सूत्रे आयादय इत्यत आर्धधातुग्रहणमनुवर्त्य लावस्थायामेव तयोः प्रवृत्ते भाष्यप्रदीपोद्योतयो स्स्पष्टमुक्ततया तेन व्यवधानादेधिष्यत इत्यादौ तिबादिविध्येकवाक्यापन्नेनानुदत्तङित इत्यादिना लस्य स्थाने तङ् न स्यादत आह। [तत्रेति।] तिबादिविधावित्यर्थः। [विहितपञ्चमीति।] अतएव लविशीष्टेत्यादौ विशेषविहितत्वात्परत्वाच्च लादेशात्पूर्वं सीयुटि तङ्सिद्धिः। अन्यथा सीयुड्विशिष्टे निर्दिश्यमानत्वाभावेन

विहितविशेषणमेव। एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः। यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। अत्र पक्षे वृद्भ्यः स्येति सूत्रं स्यविषय इति व्याख्येयम्। आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति

---

निर्दिश्यमानस्य च लस्य सीयुटा व्यवधानेन तदसिद्धिस्स्यादिति भावः। स्पष्टं चेदमाद्युदात्तश्चेति सूत्रे उद्योते। [एवं चेति।] अनुदात्तङित इत्यादेर्विहितपञ्चमीत्वे चेत्यर्थः। नन्वेधत इत्यादौ शबादिव्यवधाने तङ्सिद्धिरपि तत्फलं कुतो नोक्तमत आह। [शबादिभ्यस्त्विति।] [पूर्वमेव नियम इति।] कर्त्रर्थे सार्वधातुके परे शबादीनां विधानाल्लादेशात्प्राक् तेषां प्रवृत्त्ययोगादिति भावः। नियम इत्यस्य परस्मैपदात्मनेपदव्यवस्थेत्यर्थः। एवं सिद्धान्तभूतमेकवाक्यतया विधायकत्वपक्ष तत्पक्षप्रसक्तानुपपत्तिपरिहारोपायं च भाष्यरीत्या प्रदर्श्य कैयटोक्तं तत्परिहारोपायं दर्शयति। [यद्वेति।] [लमात्रेति।] लकारसामान्येत्यर्थः। [न दोष इति।] शबादेरिव स्यादितोऽपि लादेशानां प्राक्प्रवृत्तेर्धातोरित्यस्य दिग्योगलक्षणपञ्चमीत्वेऽपि न दोष इति भावः। नन्वत्र पक्षे वृद्भ्यस्स्यसनोरित्यस्य तिबादिविध्येकवाक्यतया विधायकत्वानुपपत्तिः। लादेशात्पूर्वं स्यप्रत्ययानुत्पत्त्या स्यप्रत्ययपरत्वासंभवात्। एकवाक्यतानभ्युपगमे तु लादेशविध्येकवाक्यतापन्नेनानुदात्तङित इत्यनेनान्तरङ्गत्वादात्मनेपदे लस्याभावात्स्ये परे परस्मैपदविधानानुपपत्तिरत आह। [अत्र पक्षे इति।] यद्वेति पक्ष इत्यर्थः। [विषय इति व्याख्येयमिति।] तत्र स्यसनोरिति विषयसप्तमीति भावः। नन्वसिन्नेकवाक्यतापक्षे आत्मनेपदपरस्मैपदसंज्ञाभ्यां लस्य स्थाने तिबादीनां विधानं विहितानां च ते संज्ञे इत्यन्योन्याश्रयादेकवाक्यताया असंभावोऽत आह। [आत्मनेपदेति।] [भाविसंज्ञा आश्रयणीयेति।] सूत्रशाटकन्यायेन लस्य स्थाने

तत्त्वम् ॥ भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या। भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात् किं तेन कृतं स्यादिति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्तेः, ध्वनितं चेदं स्थाने ऽन्तरतम इति सूत्रे

---

तिबादयो भवन्ति। ते चानुदात्तङितः परस्य लस्य स्थाने तादृशा भवन्ति। येषां जातानामात्मनेपदसंज्ञाभवतीत्येवमेकवाक्यतां स्वीकृत्य भाविसंज्ञाविज्ञानान्नान्योन्याश्रय इति भावः। नच तिबादिसूत्रस्यावान्तरवाक्यार्थबोधोत्तरं तिबादिषु लस्थानिकत्वज्ञानादात्मनेपदादिसंज्ञोत्तरमेवैकवाक्यताऽस्तु। किं भाविसंज्ञाश्रयणेनेति वाच्यम्। अनुदात्तङित इत्यादेस्तत्रोपस्थितौ तावत्पर्यन्तं तेनासंबद्धतया अवस्थाने मानाभावात्। अन्तरङ्गतया अनेन संबन्धानुभवोत्तरमेव तिबादिभिस्संज्ञानुभवाच्च। अस्य पक्षस्य तत्त्वत्वं प्रदर्शयितुमाद्यपक्षे दोषानाह। [भिन्नवाक्यतयेत्यादिगौरवमित्यन्तेन।] ननु भुक्तवन्तमिति न्यायविरोधाज्जातनिवृत्तिर्वक्तुमशक्येत्यत आह। [भुक्तवन्तमिति।] यो भुक्तवन्तं प्रति माभुक्था इति ब्रूयात्किं तेन साधितं स्यात्। अपितु न किमपीति तदर्थः। भुक्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य व्यर्थत्वमित्याशयः। अत्र भुक्था इति निरनुनासिकः पाठः। लुङो रूपं तदिति बोध्यम्। तस्य न्यायस्यात्रानाश्रयणे हेतु माह। [नियमादीति।] आदिपदेन लुगादिसंग्रहः। [वैयर्थ्यापत्तेरिति।] तथाच तत्सार्थक्यान्यथानुपपत्त्या अत्र तस्यानाश्रयणमिति भावः। अत्र भाष्यसंमतिमपि दर्शयितुमाह। [ध्वनितं चेदमिति।] नियमादिशास्त्रवैयर्थ्यापत्त्या अस्य न्यायस्यात्र शास्त्रेऽनाश्रयणं ध्वनितमिति भावः। तत्रहि स्थानेऽन्तरतम इति सूत्रस्य भिन्नवाक्यतया शास्त्रान्तरसिद्धादेशनिवर्तकत्वे भुक्तवन्तमिति न्यायविरोधेन जातनिवृत्त्ययोगाच्छास्त्रवैयर्थ्यमापाद्य "उक्तं वा, किमुक्तं सिद्धं तु षष्ठ्यधिकारे पाठा" दिति इको गुणेति सूत्रोपदर्शितैकवाक्यतापक्षेण समाहितम्। तत्र वा शब्देनायमर्थस्सूचितः। अन्यथा पक्षान्तरानुक्तेस्तदसङ्गति स्स्पष्टैव। ननु नियमादिशास्त्रवैयर्थ्ये,

भाष्ये। शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृतिकल्पनया कार्या प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः॥ ४१॥

परान्नित्यं बलवत्॥ ४२॥

---

इष्टापत्तिरेवास्तु सैव च वाशब्दसूचितं पक्षान्तरं किं न स्यादत आह। [शास्त्रानर्थक्यंत्विति।] लोके भुक्तवतो भोजनफलतृप्तेर्जातत्वेन माभुक्था इति निषेधस्य व्यर्थत्वेऽपि "वर्णेनाप्यनर्थकेन न भवितव्य" मिति वृद्धिसंज्ञासूत्रस्थभाष्येण शास्त्रानर्थक्यस्य तिरस्कृतत्वादत्र शास्त्रे नियमादिशास्त्राणामनर्थकताया वक्तुमशक्यतया तत्सामर्थ्याज्जातस्यापि निवृत्तिरेवाङ्गीकार्या न तु शास्त्रवैयर्थ्यमिति भावः। स्पष्टं चेदं स्थानेऽन्तरतम इति सूत्रे उद्योते। नन्वेकस्याः प्रकृतेरनेकेषां प्रत्ययानामव्यवहितपरत्वासंभवात्सर्वेषामुत्पत्तिरेवादौ दुर्लभेति कथं नियमेन जातनिवृत्तिरित्यत आह। [सामान्यशास्त्रेणेति।] [प्रधानानुरोधेनेति।] विधेयत्वेन प्रधानभूतप्रत्ययानुरोधेनेत्यर्थः। [गुणभेदेति।] उद्देश्यत्वेनाप्रधानभूत प्रकृतिभेदेत्यर्थः। [तावत्प्रकृतीति।] यावन्तः प्रत्ययास्सामान्यशास्त्रेणविहितास्तावत्प्रकृतीत्यर्थः। [तत्कल्पितेति।] प्रधानप्रत्ययानुरोधेन कल्पितेत्यर्थः। यदितु लुगादिनेव नियमेनाप्यनुत्पत्तिरेवान्वाख्यायते, तदा निरुक्तगौरवभावादयपक्षावपि निर्दुष्टाविति बोध्यम्। तदाह, [अन्यत्रेति।] उद्योतादावित्यर्थः। यत्तु हरिशास्त्रिणो यद्वेत्यादिपक्षस्य नागेशाभिमतत्वं मन्यमानाः केचित्त्वित्यादिना लविषीष्टेत्यादिसिद्धये धातोरित्यस्य विहितपञ्चम्यन्ततया स्यतास्योः स्यन्नादिभिर्बाधवारणाय लावस्थायां प्रवृत्तेश्च वक्तव्यतया अयं ग्रन्थश्चिन्त्य इत्याहुः। तदयुक्तम्। अस्य ग्रन्थस्य कैयटानुरोधित्वात्। लविषीष्टेत्यादिसिद्ध्यर्थमेव

कृताकृतप्रसङ्गित्वात्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्वे बीजम्। तदाह। कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्। अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

---

धातोरित्यस्य विहितपञ्चम्यन्तताया आद्युदात्तश्चेति सूत्रे उद्योते उक्तत्वेन, स्यतासीलृलुटोरिति सूत्रे उद्योते परेत्वित्यादिना तत्रार्धधातुकग्रहणानुवृत्त्या तयोर्लावस्थायां प्रवृत्तेश्च ग्रन्थकृता स्पष्टमुक्तत्वेनास्यार्थस्य स्वानभिप्रेततायाः स्फुटं प्रतीतेरिति बोध्यम्। ४१

परान्नित्यस्य बलवत्त्वे हेतुमाह। [कृताकृतेति।] कृताकृतयोश्शास्त्रयोः प्रसज्यतीति कृताकृतप्रसङ्गि, तत्त्वादित्यर्थः। ननु सत्यपि तत्त्वे तस्य बलवत्वे किं बीजमतआह। [तत्रेति।] परनित्ययोर्मध्ये इत्यर्थः। [अक्लृप्ताभावकस्येति।] अक्लृप्ताप्रवृत्तिकस्येत्यर्थः। [अभावकल्पनेति।] अप्रवृत्तिकल्पनेत्यर्थः। क्लृप्ताभावकस्य = क्लृप्ताप्रवृत्तिकस्य, अभावकल्पनम् = अप्रवृत्तिकल्पनमित्यर्थः। [उचितमिति।] एवंच तस्य बलवत्त्वं युक्तिसिद्धम् नतु वाचनिकमिति भावः। नित्यशास्त्रस्य परशास्त्रप्रवृत्त्यप्रवृत्त्योरुभयोरपि प्रसङ्गसत्वात्सर्वथा तदक्लृप्ताभावकः। परस्य तु नित्यशास्त्रप्रवृत्त्यनन्तरं प्रवृत्त्ययोगात्तदा तस्याप्रवृत्तिः क्लृप्तेति तयोर्द्वयोरेकस्मिन् लक्ष्ये प्रसङ्गे सर्वथा अक्लृप्ताभावकस्याप्रवृत्तिकल्पनापेक्षया कदाचित् क्लृप्ताभावकस्यैवाप्रवृत्तिकल्पनं न्याय्यमित्याशयः विप्रतिषेधशास्त्रस्य तु नात्र प्रवृत्तिः अनयोरतुल्यबलत्वादिति बोध्यम्। परान्नित्यस्यबलवत्त्वे फलं दर्शयति। [अत एवेति।] आदिपदेन रुणद्धीत्यादिसंग्रहः। शप्रत्ययादीत्यादिपदेन श्नमस्संग्रहः। ४२

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह ॥

शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥

इदं शदेः शितइति सूत्रे भाष्ये स्पष्टम्। तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याडकृते धातुमात्रस्येत्यडनित्य इत्युक्तम्॥ ४३ ॥

---

इदानीं कृताकृतेति परिभाषार्थं तद्विपरीतमित्यंश प्रपञ्चयितुमाह। [यद्व्यक्तीति।] कृते यस्यां व्यक्तौ प्रसङ्गोऽकृतेऽपि तस्यामेव व्यक्तौ प्रसङ्ग एव कृताकृतप्रसङ्गित्वरूपं नित्यत्वं नान्याथेति भावः। [इदमिति।] उक्तन्यायरूपं वचनमित्यर्थः। [इत्युक्तमिति।] तत्रहि न्यविशतेत्यत्राडागमोत्तरं तेन व्यवधानान्नेः परस्य विशेरभावान्नेर्विशइति नियमस्य प्रवृत्तिर्नस्यादित्याशयेन वार्तिककृता उपसर्गपूर्वस्य नियमेऽड्व्यवाय उपसंख्यानमित्युक्तम्। तद्व्याख्यावसरे च भगवता "ननुचायमट्धातुभक्तो धातुग्रहणेन ग्रहीष्यत "इत्यव्यवधायकमित्युपसंख्यानमनावश्यकमित्याशङ्क्य" न सिध्यति, अङ्गस्य ह्यड्उच्यते। विकरणान्तं चाङ्गम्। सोऽसौ संघातभक्तो न शक्यो धातुग्रहणेन ग्रहीतु "मिति समाधाय तदुत्तरं" एवं तर्हीदमिह संप्रधार्यम्। अट्क्रियतां विकरणा इति, किमत्र कर्तव्यम्। परत्वादडागमः। नित्या विकरणाः। कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि अडपि नित्यः। कृतेष्वपि विकरणेषु प्राप्नोत्यकृतेष्वपि। अनित्योऽट्। अन्यस्य कृतेषु विकरणेषु प्राप्नोति। अन्यस्याकृतेषु शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवतीत्युक्त," मिति बोध्यम्। एतत्फलं तु पृथुमाख्यत् अपिप्रथदित्यत्र परत्वाद्वृद्धौ सत्यां टिलोपेऽनग्लोपित्वात्सन्वद्भावेन सन्यत इतीत्वसिद्धिः। अन्यथा नित्यत्वाट्टिलोपेऽग्लोपित्वात्सन्वद्भावाभावे सन्यत इतीत्वानापत्तिरिति भावः। ४३

एतत्तुल्यन्यायेनाह ॥

शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥

एतन्मूलकमेवाह ॥

लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

अतिदेशविषये इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

---

[तुल्यन्यायेनेति ।] शब्दान्तरस्येति प्रागुक्तवचनमूलभूतयव्यक्तीत्यादिन्यायस्य शब्दान्तरात्प्राप्नुवत श्शब्दान्तरे प्राप्नुवतश्च तुल्यत्वात्तयोरप्यनित्यत्वमिति भावः। निरुक्तशंदेशित इति सूत्रस्थ भाष्येणैकव्यक्तिसंबन्धितयैव कृताकृतप्रसङ्गित्वं गृह्यत इत्युद्देश्यभेद इव निमित्तभेदेऽप्यनित्यत्वमिति यावत्। ४४

[एतन्मूलकमेवेति ।] उक्तपरिभाषाद्वयमूलकमेवेत्यर्थः। एवेनापूर्वत्वनिरासः। यथा एकव्यक्तिसंबन्धित्वेनैव कृताऽकृतप्रसङ्गित्वं नित्यत्वप्रयोजकमेवं कृताकृतयोरेकेनैव लक्षणेन कार्यस्य प्रसङ्गो नित्यत्वप्रयोजकः। तथाच व्यक्तिभेद इव लक्षणभेदेऽपि न नित्यत्वमिति भावः। [लक्षणान्तरेणेति ।] उपदेशान्येन लक्षणेनेत्यर्थः। तदाह। [अतिदेशेति ।] [असिद्धवदिति ।] असिद्धवदत्राभादिति सूत्र इत्यर्थः। तत्रहि कुर्व इत्यादौ लघूपधगुणोकारलोपयोः प्राप्तौ नित्यत्वादुकारलोपः। गुणस्तु लोपे कृते प्रत्ययलक्षणेन प्राप्नोति, ततश्च लक्षणान्तरेण प्राप्नुवन् विधिरनित्य इति गुणस्यानित्यत्वमित्युक्तं कैयटेन। कैयटेनेत्यनेनास्य भाष्योक्तत्वनिरासः। अत एवैतन्मूलकमेवेत्यवतरणे उक्तम्। ४५

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह ॥

क्व चित् कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसंगमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु बाधकाबाधितफलोपहितप्रसङ्गो ऽपि तथेति भावः ॥ ४६ ॥ तदाह ॥

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥

क्व चित्तुबाधकाबाधितफलोपहितप्रसंग एव गृह्यते।

---

नन्वेवं तुदतीत्यादौ गुणे कृते विकरणस्य शब्दान्तरात्प्राप्त्या स्थानिवत्सूत्रेण प्राप्त्या चानित्यत्वं स्यात्। तथाच परत्वाद्गुणे रूपासिद्धिरत आह। [यदात्विति।] [शास्त्रव्यतिरेकेणेति।] लक्षणभेदेनेत्यर्थः। [व्यक्तिविशेषेति।] यद्यक्तीत्याद्युक्तविशेषेत्यर्थः। [तदाहेति।] तदा, अहेत्यर्थः [क्वचिदिति।] अनेनेदृशनित्यत्वस्यासार्वत्रिकत्वं सूचितम्। [मात्रेणापीति।] मात्रपदेन लक्षणविशेषव्यक्तिविशेषैतदुभयवैशिष्ट्यस्य कार्ये व्यवच्छेदः। अपिशब्दः सार्वत्रिकयद्यक्तीत्यादिसमुच्चायकः। [अभिमतस्येति।] कार्यस्येत्यर्थः। अन्यदपिमात्रपदव्यवच्छेद्यमाह। [नत्विति।] बाधकाबाधितत्वेऽपि कारणान्तरेण फलानुपहिते प्रसङ्गे ऽनित्यत्वनिरासायाह। [फलोपहितेति।] [तथेति।] नित्यत्वव्यवहारप्रयोजक इत्यर्थः। ४६

[तदाहेति।] पूर्वपरिभाषास्थमात्रपदलब्धमेवाहेत्यर्थः। एवं च तत्प्रपञ्चभूतैवेयमिति भावः। [यस्येति।] कार्यस्येत्यर्थः। ४७

तदाह।

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्॥ ४८ ॥**

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्। वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्ति। भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति। सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४८ ॥

---

गृह्यत इति। नित्यत्वव्यवहारप्रयोजकतया गृह्यत इत्यर्थः। तथाच तादृशप्रसङ्गाभावे तस्यानित्यत्वमिति भावः। एतच्च स्वमोर्नपुंसकादिति सूत्रस्थभाष्याल्लभ्यते। तत्रहि तत्कुलमित्यत्रात्वलुकोः प्राप्तौ परमप्यत्वं बाधित्वा नित्यत्वाल्लुगित्युक्ते, अनित्यो लुक् नहि कृतेऽत्वे प्राप्नोति। अमा भवितव्यमित्युक्तम्। तत्र क्व कृताकृतप्रसङ्गमात्रस्यैव नित्यत्वव्यवहारप्रयोजकत्वं, क्वच बाधकाबाधितफलोपहितप्रसङ्गस्यैव च तत्त्वमिति तु लक्ष्यानुसाराद्व्याख्यानाच्चावसेयमिति बोध्यम्। तदेतद्वक्ष्यति। सर्वंचेदमिति। अनयो र्न वाचनिकत्वं किंतु लोकन्यायसिद्धत्वमित्याह। [सप्तमे कैयटेनेति।] स्वमो र्नपुंसकादिति सूत्रव्याख्यावसरइत्यर्थः। [एतदुपष्टम्भकमिति।] उक्तपरिभाषाद्वयोपष्टम्भकमित्यर्थः। [वालिसुग्रीवयोरिति।] भावलक्षणसप्तमीयम्। निर्धारणे षष्ठी वा। [भगवतेति।] श्रीरामेणेत्यर्थः। [न व्यवहरन्तीति।] शूरमानिन इत्यर्थः। [भगवत्सहायैरिति।] वासुदेवसहायैरित्यर्थः। [प्राबल्यमिति।]

लुटः प्रथमस्येति सूत्रे भाष्ये

स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥

इति पठ्यते ॥

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्वे नियामकमुल्लेख्यम्। अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते।

---

कौरवेभ्य इति शेषः। यथा भगवत्साहाय्येनैव सुग्रीवस्य पाण्डवानां च जये लब्धेऽपि शूराः वाल्यपेक्षया सुग्रीवस्य प्राबल्यं न व्यवहरन्ति। कौरवेभ्यश्च पाण्डवानां प्राबल्यं व्यवहरन्ति च तथा प्रकृतेऽपि लक्षणान्तरेण निमित्तविघातस्थले बाधकाबाधितफलोपहितप्रसङ्गित्वाभावस्य तुल्यत्वेऽपि क्वचिन्नित्यत्वं क्वचिदनित्यत्वं चेति भावः। नन्वेवमप्यतिप्रसङ्गापत्तिरत आह। [सर्वं चेदमिति।] ४८

[स्वरभिन्नस्येति।] स्वरेणोदात्तत्वादिना भिन्नस्येत्यर्थः। [इति पठ्यत इति।] तत्रहि श्वः कर्तेत्यादौ लावस्थायामेव तासि लस्य स्थाने तिबादिषु कृतेषु तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वस्य, डा रौ रसां च प्राप्तावुभयोरपि कृताकृतप्रसङ्गस्य सत्त्वेऽपि, स्वरस्य शब्दान्तरप्राप्त्या डारौरसां स्वरभिन्नस्य प्राप्त्या चानित्यत्वमुक्त्वा उभयोरनित्ययोः परत्वाल्लसार्वधातुकानुदात्तत्वे पुनः प्रसङ्गविज्ञानाड्डादेशे टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धमिष्टमित्युक्तम्। ननु परस्परप्रतिद्वन्द्विभावेनान्यत्र प्रथमप्रवृत्तिप्रयोजकबलवत्त्वनियामकत्वेन दृष्टानां परत्वादीनां यत्रैकस्मिन् लक्ष्ये समावेशस्तत्र तादृशबलवत्तानियामकत्वं किं समुदाये परिसमाप्यते उत प्रत्येकमिति सन्देहे आह। [यत्रत्विति।] [अन्यतरादिति।] परत्वनित्यत्वयोरन्यतरादित्यर्थः। [उभयं वेति।] परत्वनित्यत्वोभयं वेत्यर्थः। [तस्येति।] कार्यस्येत्यर्थः। [अत एवेति।] क्वचिदुभयस्यापि बलवत्त्वनियामकत्वादेवेत्यर्थः।

वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे। णौ चङीति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ४९ ॥

नित्यादप्यन्तरङ्गं बलीयो ऽन्तरंगे बहिरङ्गस्यासिद्धत्वात्। तदाह ॥

---

सिद्धान्तमाह। [वस्तुत इति।] [एकदेशिन इति।] नित्यस्य कृताकृतप्रसङ्गित्वेनावश्यकतया नित्यानित्ययोरतुल्यबलत्वेन विप्रतिषेधासंभवात्तत्र परत्वादित्यस्यैकदेश्युक्तित्वमेव न्याय्यमिति भावः। तदाह। [स्पष्टंचेदमिति।] तत्रहि कार्यमित्यत्रार्हार्थे कृत्यः। करणार्हं कार्यम्। तुल्यबलं च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापार इत्युक्तम्। एवं च तेन तादृशेषु परत्वादित्युक्तिरेकदेशिन इति स्पष्टमेव लभ्यत इति बोध्यम्। परत्वादिष्वन्यतरदपि स्वेच्छया बलवत्तानियामकतया उल्लेखयितुं शक्यमित्यत्र मानमाह। [णौ चङीति।] अस्यात एवेत्यादिः। अन्यतरस्य तथा उल्लेखयितुं शक्यत्वादेवेत्यर्थः। [नित्यत्वादेवेति।] नत्वन्तरङ्गत्वादित्यर्थः। [एवमिति।] परस्येवेत्यर्थः। [यौगपद्यासंभव एवेति।] बाध्यबाधकयोस्समानविषयताया औचित्यादिति भावः। ४९

[नित्यादपीति।] अपिशब्दः परसमुच्चायकः। परनित्याभ्यामन्तरङ्गस्य बलवत्त्वे हेतुमाह। [अन्तरङ्ग इत्यादि।] कर्तव्य इति शेषः। [असिद्धत्वादिति।] जातस्य तत्कालप्राप्तिकस्य चेत्यर्थः। एचं च परनित्ययोरन्तरङ्गस्य चैकत्र युगपत्प्राप्तौ तत्कालप्राप्तिकयोस्तयोरन्तरङ्गदृष्ट्याऽविद्यमानवत्वेऽन्तरङ्गस्य तदपेक्षया प्रथमं प्रवृत्तिरिति भावः। एतेनान्तरङ्ग

## असिद्धं बहिरङ्गमन्तरङ्गे॥ ५० ॥

**अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्।**

---

बहिरङ्गाद्बलीय इति परिभाषान्तरमिति सीरदेवाद्युक्तमयुक्तमिति सूचितम्। ननु नित्यान्तरङ्गयोर्यत्र यौगपद्येन प्रसङ्गस्तत्र युक्तिसिद्धबलवत्त्वोपहितान्नित्यशास्त्राज्ज्ञापकसिद्धबलवत्त्वोपहितस्यान्तरङ्गस्य बलवत्त्वमस्तु, न्यायापेक्षया लिङ्गस्य बलीयस्त्वात्। यत्र तु परान्तरङ्गयोर्युगपत्प्रसङ्गस्तत्र वाचनिकबलवत्त्वाक्रान्तपरापेक्षया लिङ्गजन्यबलवत्त्वाक्रान्तस्यान्तरङ्गस्य कथं बलवत्त्वं, श्रुत्यपेक्षया लिङ्गस्य दुर्बलत्वादिति चेन्न। समकालप्राप्तबहिरङ्गासिद्धत्वज्ञापकेन ओमाङोश्चेत्याङ्ग्रहणेनैवोक्तार्थसिद्धेः। अन्यथा धातूपसर्गकार्यत्वेनान्तरङ्गमप्याद्गुणं बाधित्वा परत्वात्सवर्णदीर्घे पश्चादाद्गुणे शिवेहीति रूपसिद्धौ ज्ञापितेऽपि तस्य चारितार्थ्याभावात्तस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरसंप्रसारणाच्चेति सूत्रस्थभाष्यासङ्गतिरिति बोध्यम्। वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुत्वादादौ परिभाषाघटकान्तरङ्गबहिरङ्गपदार्थौ निरूपयंस्तत्रादावन्तरशब्दार्थमाह। [मध्य इति।] मध्यत्वस्य साकाङ्क्षत्वात्कस्येत्याकाङ्क्षायां बहिरङ्गस्योपस्थितत्वादाह। [बहिरङ्गशास्त्रीयेति।] बहिरङ्गशास्त्रसंबन्धीत्यर्थः। [अन्तर्भूतानीति।] इदं शेषपूरणलभ्यम्। अत्राङ्गशब्दो न संज्ञाविशेषपरो, नाप्यवयववाची, किन्तु पारार्थ्यान्निमित्तपर इत्याह। [निमित्तानीति।] एवंच बहिरङ्गत्वेनाभिमतशास्त्रसंबन्धिनिमित्तसमुदायान्तर्भूतनिमित्तकमन्तरङ्गमिति भावः। निमित्तानामन्तर्भावश्च बहिरङ्गशास्त्रसम्बन्धिनिमित्तापेक्षया पूर्वं स्थितत्वात्तदीयनिमित्तसमुदायघटकत्वात्पूर्वोपस्थितत्वात्परनिमित्ताभावाच्चेत्याद्यनेकविधः। तत्राद्योदाहरणं विश्वौह इति। तत्र हि संप्रसारणनिमित्तभूतविभक्त्यपेक्षया लघूपधगुणनिमित्तस्य ण्विप्रत्ययस्य पूर्वं स्थितत्वेन संप्रसारणापेक्षया गुणस्यान्तरङ्गत्वं बोध्यम्। अत्र चोठ्ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरं वाह ऊठिति सूत्रस्थं, विप्रतिषेधसूत्रस्थं, च भाष्यं मानम्। स्फुटीकृतं चानयोरेवमेवान्तरङ्गबहिरङ्गभावो विप्रतिषेधसूत्रे उद्योते। तत्र हि "परिभाषासत्त्वे तु विभक्तिनिमित्तसंप्रसारणस्य ण्व्याश्रयेऽन्तरङ्गे गुणेऽसिद्धत्वात्तदभावे वृद्ध्यर्थमूडावश्यक इति

भावः" इत्युक्तम्। एतेनात्र गुणस्याल्पनिमित्तकत्वेनान्तरङ्गत्वं वदन्तो गदाकृतः, परिभाषाया-मङ्गपदेनोद्देश्यस्यापि ग्रहणं स्वीकृत्य लघूपधगुणोद्देश्योकारघटितसमुदायोद्देश्यकस्य संप्रसारणस्य बहिरङ्गत्वं, तदुद्देश्यघटकोकारोद्देश्यकस्य गुणस्यान्तरङ्गत्वमिति वदन्तो हरिशास्त्रिणश्च परास्ताः। उपदर्शितोद्योतग्रन्थेन मदुक्तरीत्यैव तयोरन्तरङ्गबहिरङ्गभावस्य स्फुटं प्रतीतेः। द्वितीयोदाहरण-मतिष्ठिपदित्यादि। तत्र हि तिष्ठतेरिदितीत्वनिमित्तभूतचङ्परणिरूपसमुदायघटकणिनिमित्तकत्वेन लघूपधगुणस्यान्तरङ्गतयान्तरङ्गे तस्मिन् बहिरङ्गस्येदादेशस्यासिद्धत्वादिकारस्य गुणो न। अत्र तूनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इति येन विधिरिति सूत्रस्थ भाष्य मानं बोध्यम्। तृतीयोदाहरणं पट्व्या मृद्व्येत्यादि। असुसुवदित्यादि च। तत्राद्ये पूर्वयणादेशनिमित्तस्येकार-स्यार्थक्रमेण प्रथममुपस्थितत्वात्तदन्तरङ्गम्। द्वितीये तु प्रयोगीयोच्चारणक्रमेणोवङ्निमित्तभूतस्य चङकारस्य प्रथममुपस्थितत्वात्तदन्तरङ्गम्। नचात्र लादेशस्य प्रथमं प्रवृत्त्या गुणस्यापि प्रक्रियाक्रमेण तत्त्वमस्तीति शङ्क्यम्। तस्य प्रथमं प्रवृत्तावपि विकरणप्रवृत्त्युत्तरमेव लघूपधगुणस्य प्राप्त्या तदानीमेव तत्र तन्निमित्तत्वज्ञानेनोभयोरपि निमित्तयोर्युगपदेवोपस्थित्या तेन क्रमेण तत्र गुणस्यान्तरङ्गताया वक्तुमशक्यत्वात्। इदं चान्तरङ्गत्वं लोकन्यायसिद्धमित्यचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम्। तत्र हि प्रत्यङ्गवर्तीलोको दृश्यते। तद्यथा पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि, तानि तावत्करोति। ततस्सुहृदाम्, ततस्संबन्धिनाम्। प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते। सामान्ये वर्तमानस्य व्यक्तिरुपजायते, व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति। यथैव चानुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव च शब्दानामपि। तद्वत्कार्यैरपि भवितव्य-मित्युक्तम्। प्रत्यङ्गवर्तीत्यत्राङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते। अङ्गानामङ्गिनं प्रति प्रत्यासन्नत्वात्। अङ्गमङ्गं प्रति प्रत्यङ्गमित्यव्ययीभावः। तथा च प्रत्यासन्नवर्ती तत्कार्याभिनिविष्टो लोको दृश्यत इति तद्भावः। प्रत्यासन्नत्वं च प्रथमोपस्थितत्वरूपम्। तच्च सति संभवे आर्थक्रमेण। असंभवे तु श्रौतक्रमेण चेत्यवधेयम्। तत्र पट्व्येत्यादौ द्वयोरपि यणादेशनिमित्तयोरर्थवत्त्वेनार्थ-प्रत्यासत्तिग्राह्या। असुसुवदित्यादौ तु विकरणस्यानर्थकत्वादार्थप्रत्यासत्तेर्वक्तुमशक्यतया श्रौतैव ग्राह्या। यद्यपि भाष्ये आर्थप्रत्यासत्तिरेव दर्शिता, तथापि शचङन्तस्यान्तरङ्गलक्षणत्वादिति भाष्यप्रामाण्याच्छ्रौतापि सा ग्राह्येति बोध्यम्। अन्त्योदाहरणमेधत इत्यादि। तत्र हि विकरणापेक्षया लादेशानामपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं प्रवृत्तिरित्यनुदात्तङित इति सूत्रे उद्योते स्पष्टम्। अत्र चोकालोऽजिति निर्देशो मानम्। तत्र ऊ इति ह्रस्वदीर्घप्लुतोकाराणां

**एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च खरवसानयोरिति सूत्रे ऽसिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम्। अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते शब्दशास्त्रे तस्यैव प्रधानत्वात्।**

---

समाहारद्वन्द्वेन निर्देशः। अपरनिमित्तकस्यान्तरङ्गत्वानङ्गीकारे तु नपुंसकह्रस्वं बाधित्वा परत्वात्त्रयाणामुकाराणां सवर्णदीर्घे ततो नपुंसकह्रस्वे तदसङ्गतिः स्पष्टैव। एवं भाष्यप्रामाण्यात्तत्र तत्रोक्तरूपमन्यादृशं चान्तरङ्गत्वमूह्यम्। अन्तरङ्गपदार्थं निरूप्य बहिरङ्गपदार्थमाह। [एवमिति।] उक्तरीत्येत्यर्थः। [बहिर्भूताङ्गकमिति।] बहिर्भूतान्याङ्गानि यस्येत्यर्थः। उक्तार्थे मानमाह। [एतच्चेति।] [खरवसानयोरिति।] तत्रह्यन्तरङ्गं बहिरङ्गमिति प्रतिद्वंद्विभाविनावेतावर्थावित्युक्तम्। तेन चानयोः परस्परापेक्षत्वं स्पष्टमुक्तमिति बोध्यम्। निमित्तत्वस्यार्थादावपि सत्त्वेन तत्कृतातिप्रसङ्गनिरासायाह। [अत्रेति।] परिभाषायामित्यर्थः। [निमित्तमेवेति।] सप्तम्याद्यन्ततयोपात्तप्रयोगस्थशब्दरूपमेव निमित्तमित्यर्थः। तस्यैवात्राङ्गपदेन ग्रहणे बीजमाह। [शब्दशास्त्र इति।] [तस्येति।] शब्दस्येत्यर्थः। अत्रेदं बोध्यम्। अत्र निमित्तवाच्यङ्गपदेन सूत्रे षष्ठ्यन्तोपात्तस्योद्देश्यस्य न ग्रहणम्। कार्यमनुभवन्निति परिभाषया कार्यिणो निमित्तत्वायोगात्। न च गुणानां च परार्थत्वादिति न्यायेन तन्न्यायस्यात्राप्रवृत्तिरिति वाच्यम्। तन्न्यायस्यानित्यत्वेनेहाप्रवृत्तेः। किञ्चास्य न्यायस्य लोकसिद्धत्वेनोभयोस्समत्वाभावेन च तदप्रवृत्तिः। किञ्चात्राङ्गपदेनोद्देश्यस्यापि ग्रहणे ऊकाल इति निर्देशासङ्गतिः। नपुंसकह्रस्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वेऽपि तन्निमित्तभूतप्रातिपदिकघटकान्निमित्तकत्वेन सवर्णदीर्घस्याप्यन्तरङ्गत्वादुभयोरन्तरङ्गयोः परत्वात्सवर्णदीर्घे ततो ह्रस्वे ह्रस्वस्यैव श्रवणापत्तेः। किञ्चैवं सति 'नन्वेवमक्षुस्नुवदित्यादावुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादि' त्याशङ्क्य तस्य पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वप्रतिपादनपरवक्ष्यमाणग्रन्थासङ्गतिः। तत्र लघूपधगुणोद्देश्यभूताङ्गघटकाजादिप्रत्ययनिमित्तकत्वेनोवङोऽन्तरङ्गताया स्पष्टतया तत्र शङ्काया एवानवकाशात्। अत एव

**तेनार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एव न तिसृचतसृ इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरूपार्थ-निमित्तकतिस्रपेक्षयान्तरङ्गत्वात् त्रयादेशे तदसंगतिः**

---

पूर्वस्थानिकस्यान्तरङ्गत्वखण्डनावसरे "परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्चे" तिवक्ष्यमाण-ग्रन्थसंगतिः। अत एव 'चोनशब्दमाश्रित्ये' त्यादि येन विधिरिति सूत्रभाष्यव्याख्यावसरे 'अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो' न तु स्थान्यादिपरोऽपीति सूचयती त्युद्योतग्रन्थस्यापि सङ्गतिरिति बोध्यम्। नन्वेवं दुद्यूषति सुस्यूषतीत्यादेरूपासिद्धिः। तत्रापर-निमित्तकत्वेनान्तरङ्गत्वादूठः पूर्वं द्वित्वेऽभ्यासे उकारश्रवणानापत्तेः। षष्ठ्यन्तोपात्तस्यापि निमित्तत्वे तु द्वित्वनिमित्तभूतसन्नन्तसमुदायघटकनिमित्तकत्वेनोठोऽप्यन्तरङ्गत्वादुभयोरप्यन्तरङ्गयोः परत्वादूठःप्रवृत्तिस्सुवचेति चेन्न। धर्मिग्राहकसाजात्यादपरनिमित्तकादेशविधायकस्यैवान्तरङ्गतायाः स्वीकारेणद्विःप्रयोगरूपद्विर्वचनस्यातथात्वेनद्वित्वस्यान्तरङ्गत्वाभावात्। अत एव नामीत्यत्रामीति-न्यासे राम×आमिति स्थिते नित्यत्वाद्दीर्घे नुट् न स्यादित्याशङ्क्य भूतपूर्वगत्या नुट्साधनपर-भाष्यसङ्गतिः। अन्यथापरनिमित्तकत्वेनान्तरङ्गत्वाद्दीर्घात्पूर्वं नुटि तदसङ्गतिः स्पष्टैव। अत एव विप्रतिषेधसूत्रे भाष्येऽन्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषाफलनिरूपणावसरे दुद्यूषति सुस्यूषतीत्यत्र द्विर्वचनयणादेशयोर्युगपत्प्राप्तिमाशङ्क्यान्तरङ्गत्वाद्यणादेश इत्युक्तम्। ऊठः प्रागेवा-परनिमित्तकत्वेनान्तरङ्गत्वाद्द्वित्वप्रवृत्तौ तु तदसङ्गतिः स्पष्टैव। तेन भाष्येण षष्ठ्यन्तोपात्तस्याप्यङ्ग-पदेन ग्रहणमित्येव कल्पयितुं शक्यमिति तु न युक्तम्। उपदर्शितसूत्रभाष्यादिविरोधापत्तेरिति। [तेनेति।] अङ्गपदेन शब्दरूपनिमित्तस्यैव ग्रहणेनेत्यर्थः। अर्थनिमित्तकस्य बहिरङ्गत्वाभावे सूत्रसम्मतिं दर्शयति। [अत एवेति।] [अन्यथेति।] अर्थनिमित्तकस्यापि बहिरङ्गत्वाश्रयण इत्यर्थः। [त्रयादेशइति।] इदमुपलक्षणं, नुट्दीर्घयोरपि। [तदसङ्गतिरिति।] अन्तरङ्गत्वात्त्र-यादेशे नुटि दीर्घे च कृते तत स्थानिवत्त्वेन त्रिशब्दत्वात्तिस्रादेशेऽपि नामीतिदीर्घदृष्ट्या-उक्तरीत्यैव बहिरङ्गस्य तिस्रादेशस्यासिद्धत्वादादेशे दीर्घस्य प्राप्तेरेवाभावेन निषेधासङ्गतिः। स्थानिनि त्रयादेशे पूर्वं दीर्घस्य प्रवृत्त्या लक्ष्ये लक्षणस्येति न्यायेन न तद्बुद्ध्यापि दीर्घस्य

**स्पष्टैव। अत एव त्रयादेशे स्रन्तस्य प्रतिषेध इति स्थानिवत्सूत्रस्थभाष्यवार्त्तिकादि संगच्छते॥**

---

प्राप्तिरिति तदसङ्गतिरिति भावः। उक्तार्थे सूत्रसम्मतिं प्रदर्श्य भाष्यवार्तिकादिसम्मतिमप्याह। [अतएवेति। ]उक्तोऽर्थः। [त्रयादेशे स्रन्तस्येति।] त्रयादेशे कर्तव्ये स्रन्तस्य स्थानिवत्त्वप्रतिषेधो वक्तव्य इति तदर्थः। इदं च वार्तिकं तिसृणामित्यत्र तिस्रादेशोत्तरं स्थानिवत्त्वेन त्रिशब्दत्वबुद्ध्या प्राप्तत्रयादेशवारणाय वार्तिककृताऽरब्धम्। भगवता च तत्र त्रयादेशात्परत्वात्तिस्रादेशे सकृद्गतिन्यायेन पुनः त्रयादेशस्याप्रवृत्त्या स्थानिवत्त्वप्रतिषेधोऽनावश्यक इति तत्प्रत्याख्यातम्। अर्थसंज्ञानिमित्तकस्यापि बहिरङ्गत्वे तूक्तरीत्या तिस्रपेक्षयान्तरङ्गत्वात्पूर्वं त्रयादेशे नुटि दीर्घे च कृते स्थानिवत्त्वेन त्रिशब्दत्वात्तिस्रादेशप्रवृत्तावप्युक्तरीत्यैव पुनस्त्रयादेशस्याप्रवृत्त्या वार्तिकासङ्गतिः। त्रयादेशेऽन्तरङ्गत्वसत्त्वेन त्रयादेशापेक्षया परत्वात्तिस्रादेशे सकृद्गतिन्यायेन न पुनस्तिस्रादेश इति तद्वार्तिकप्रत्याख्यानपरभाष्यासङ्गतिश्चेति भावः। नन्वर्थनिमित्तकस्य बहिरङ्गत्वानाश्रयणे वर्णो वर्णेनेतिसूत्रस्थभाष्यविरोधः। तत्र हि "समानाधिकरणसमासाद्बहुव्रीहिः। कदाचित्कर्मधारयः सर्वधनाद्यर्थं" इति वार्तिकप्रथमखण्डव्याख्यावसरे भगवता "समानाधिकरणसमासाद्बहुव्रीहिर्भवति विप्रतिषेधेन, समानाधिकरणसमासस्यावकाशः वीरः पुरुषो वीरपुरुषः, बहुव्रीहेरवकाशः। कण्ठेकालः, इहोभयं प्राप्नोति, वीरपुरुषको ग्रामः, बहुव्रीहिर्भवति विप्रतिषेधेने" त्युक्त्वा ततो "नैष युक्तो विप्रतिषेधः, अन्तरङ्गः कर्मधारयः, कान्तरङ्गता? स्वपदार्थे कर्मधारयः। अन्यपदार्थे बहुव्रीहिरि" त्युक्तम्। अर्थनिमित्तकस्य बहिरङ्गत्वानाश्रयणे तदसङ्गतिः स्पष्टैवेति चेन्न। सर्वधनी सर्वकेशीत्यादिप्रयोगसाधनाय कदाचित्कर्मधारयोत्तरमन्यपदार्थविवक्षा, वीरपुरुषवान् ग्राम इत्यादिप्रयोगातिप्रसङ्गवारणाय कदाचित्प्रथममेवान्यपदार्थविवक्षेत्यर्थस्येष्टानुरोधेन स्वीकार्यतया तस्यैवार्थस्य वार्तिककृतेष्टिरूपत्वेनोक्ते न्यायव्युत्पादनाय भगवता तद्वार्तिकप्रथमखण्डं विप्रतिषेधपरतया व्याख्यायान्तरङ्गत्वांशे सूक्ष्मेक्षिकामकृत्वान्तरङ्गत्वेन तदर्थस्य खण्डितत्वेन तस्यैकदेश्युक्तितया तद्विरोधस्याकिञ्चित्करत्वात्। अत एव तदुत्तरभाष्ये तावतापीष्टसिद्धिरित्याशयेन "एवं तर्हि

एतेन गौधेरः पचेदित्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतया ऽसिद्धत्वाद्वलिलोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च॥ ननु येनविधिस्तदन्तस्येति सूत्रे भाष्ये इको यणचीत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमि-

---

नेदं तस्य योगस्योदाहरणं विप्रतिषेधे परमिति। किं तर्हि? इष्टिरियं पठिता। समानाधिकरणसमासाद्बहुव्रीहिरिष्टः। कदाचित्कर्मधारयः। सर्वधनाद्यर्थ" इतीष्टिपरत्वेनैव तद्वार्तिकं व्याख्यातम्। एतेन प्रागुक्तविप्रतिषेधादिविचारस्य सर्वस्याप्येकदेश्युक्तित्वं स्वेनैव सूचितमिति न तद्विरोध इति बोध्यम्। [एतेनेति] सतम्याद्यन्ततयोपात्तप्रयोगस्थशब्दरूपनिमित्तस्यैवात्र ग्रहणेनेत्यर्थः। [गौधेर इति।] गोधाशब्दादपत्येऽर्थे गोधाया ढ्रगित्यनेन ढ्रकि ढस्यायनेयीतिसूत्रेण एयादेशे यस्येति चेत्याकारलोपे यलोपे च रूपम्। अत्र गौधेरः पचेदित्यादावित्येव पाठः साधुः। पचेरन्निति त्वपपाठः। सीयुटोऽङ्गाधिकारस्थत्वाभावेन एयादीनामङ्गसंज्ञासापेक्षत्वेनेत्युत्तरग्रन्थासङ्गतिरिति गदाकृतः। पचेरन्निति पाठस्यापि सांप्रदायिकत्वेत्वङ्गपदं धातोरप्युपलक्षणमिति बोध्यम्। पचेरन्नित्यादावित्यत्रादिपदेन भवेदित्यस्य संग्रहः। एयादीनामित्यत्रादिपदेन सीयुट इयादेशस्य च संग्रहः। तथा च एयादेशेयादेशयोरङ्गसंज्ञासापेक्षत्वेन सीयुटो धातुसंज्ञासापेक्षत्वेन च बहिरङ्गतयेति तदर्थः। [परास्तमिति।] संज्ञायाः प्रयोगस्थशब्दरूपत्वाभावेन तन्निमित्तकस्य बहिरङ्गत्वाभावादिति भावः। न केवलं तेषां बहिरङ्गत्वाभावः। प्रत्युतान्तरङ्गत्वमेव वलि लोपापेक्षया तेषामस्तीत्याह। [एयादेशादेरिति।] [अपरनिमित्तकत्वेनेति।] अस्यान्तरङ्गत्वे मानं तु प्रागुक्तमिति बोध्यम्। ननु संज्ञासापेक्षस्यापि बहिरङ्गताया भाष्यारूढतया कथं तस्य परित्याग इत्याशयेन शङ्कते। [नन्विति।] [तदन्तविधाविति।] इदमुपलक्षणं, तदादिविधेरपि। शब्दानुशासनप्रस्तावादुपस्थितं शब्दरूपं विशेष्यमादायेगन्तस्य शब्दस्वरूपस्याजादौ शब्दस्वरूपे परतो यणिति तदन्ततदादिविध्योरुभयोरपि स्वीकार इत्यर्थः। [इष्यत इति।]

ष्यते तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम्। अत्र कैयटः। सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसंगे ऊठ् अपवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद् बाधते। गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति। ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः। तत्र कृते यण्गुणौ प्राप्नुत इति। एवं

---

सिद्धान्त इति शेषः। [तन्नसिद्ध्येदिति।] वर्णमात्राश्रयत्वेन यणोऽन्तरङ्गत्वमिष्टम्। तस्याप्युक्तरीत्या समुदायाश्रयत्वे तस्य गुणापेक्षयान्तरङ्गत्वाभावेन गुणबाधकत्वं न सिध्येदिति भावः। [इत्युक्तमिति।] इत्यर्थकमुक्तमित्यर्थः। भाष्ये तु "अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः, स्योनः स्योना, अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्युक्तम्। तत्रान्रङ्गलक्षणस्येत्यस्य सिद्धान्ते वर्णमात्राश्रयत्वेनान्तरङ्गस्येत्यर्थः। बहिरङ्गलक्षणइत्यस्य सिद्धान्ते बहिरङ्गत्वेनाभिमत इत्यर्थः। बाधक इत्यस्येदानीमुभयोस्समत्वेन परत्वादित्यर्थ इति कैयटः। यद्वा इदानीं यणादेशनिमित्तभूतोनशब्दघटकनशब्दाश्रयत्वेन गुणस्यैवान्तरङ्गत्वाद्गुणो बाधकः स्यादित्यर्थः। उक्तभाष्येण संज्ञासापेक्षस्य बहिरङ्गतायाः स्पष्टमलाभादाह। [अत्र कैयट इति।] [गुणो हीति।] इकारस्येति शेषः। गुणः पञ्चकाश्रयः। ऊठ् तु चतुष्काश्रय इति भावः। [तत्र कृते इति।] ऊठि कृते इत्यर्थः। [प्राप्नुत इति।] एतदुत्तरं तत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते। तन्नसिध्येदित्याद्युक्तिरनुसंधेया। [एवं चेति।] यण्गुणयोस्तत्र बाध्यबाधकभावविचारेणेत्यर्थः।

च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्, न। तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबाहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः। बहि-

---

[संज्ञासापेक्षस्यापीति।] अपिना बहुपदार्थापेक्षस्य समुच्चयः। स्पष्टमेवोक्त इति। लघूपध-गुणापेक्षयोठः प्रथमप्रवृत्तिमन्तरायण्गुणयोर्बाध्यबाधकभावविचारस्यालग्नकत्वेन तस्य च प्रथमप्रवृत्तेर्निरुक्तान्तरङ्गत्वं विना दुर्वचत्वेन भाष्यकृतापि तादृशमन्तरङ्गत्वमुक्तप्रायमेव। कैयटेन तु स्पष्टमेवोक्तमिति बोध्यम्। ननु सिद्धान्तेऽपि यणो गुणबाधकत्वं कथं संगच्छते। वार्णादाङ्गमिति न्यायेन गुणस्यैव यण्बाधकताया न्याय्यत्वादिति चेन्न। आङ्गवार्णयोः समान-निमित्तकत्वरूपसमानाश्रयत्व एव तस्याः परिभाषायाः प्रवृत्तिरिति प्राचीनमते तस्या इहाप्रवृत्तेः। समानकार्यित्व एवेति स्वसिद्धान्ते त्वनित्यत्वात्तदप्रवृत्तिरिति भाष्याशयः। तदादितदन्तविधौ तु यणोऽपि वार्णत्वाभावेन तदप्रवृत्तिरिति बोध्यम्। स्पष्टं चेदमुद्योते। [तदन्तविधावपीति।] तदादितदन्तविधावपीत्यर्थः। अस्य 'एवं संज्ञादिबहुपदार्थापेक्षत्वेन बहिरङ्गत्वाङ्गीकारे' इत्यादिः। [बहुपदार्थेति।] उक्तरीत्या पदार्थपञ्चकापेक्षत्वादिति भावः। [बहिरङ्गत्वस्य गुणे सत्त्वेनेति।] यणस्त्विगन्ताजादिरूपपदार्थद्वयमात्रापेक्षत्वेन तदपेक्षया पदार्थपञ्चकापेक्षगुणस्य बहिरङ्गत्वमिति भावः। [तत्रेति।] तदादितदन्तविधिपक्षे स्योन इत्यत्रेत्यर्थः। [दोषकथनपरेति।] अन्तरङ्गत्वाद्गुण एव स्यादिति दोषकथनपरेत्यर्थः। [भाष्यासङ्गतेरिति।] संज्ञादिबहुपदार्था-पेक्षस्यापि बहिरङ्गत्वाङ्गीकारे तत्पक्षेऽपि यणोऽल्पापेक्षत्वेनान्तरङ्गतायाः सत्त्वात्तादृशदोषकथनपरं भाष्यमसंगतं स्यादतो न तद्भाष्यं त्वदुक्तार्थसाधकमिति भावः। ननु यण उक्तरीत्याल्पापेक्षत्वे-नान्तरङ्गतायाः सत्त्वेऽप्यत्र पक्षे घटकनिमित्तकत्वेन गुणस्याप्यन्तरङ्गतायाः सत्त्वादुभयोरन्तरङ्गयोः परत्वाद्गुणः स्यादिति तद्भाष्याशयो वक्तुं शक्य इति चेन्न। बहिरन्तश्शब्दयोः संख्याकृत-बहुत्वाल्पत्वबोधकतां पुरस्कृत्य बह्वपेक्षं बहिरङ्गमल्पापेक्षमन्तरङ्गमित्यभ्युपगच्छतां तेषां मते घटितघटकनिमित्तकयोर्बहिरङ्गान्तरङ्गभावस्य वक्तुमशक्यत्वात्। नच बहिरङ्गान्तरङ्गशब्दयोरा-वृत्तिवशादर्थद्वयकल्पनया निर्वाह इति वाच्यम्। आवृत्तौ मानाभावाद्गौरवाच्चेति

रङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादया ऽलाभाच्च। तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्। अत एव विप्रतिषेधसूत्रभाष्ये गुणाद्यणादेशो ऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं न तु गुणादूडन्त-रङ्गत्वादित्युक्तम्। त्वद्रीत्या तदपि वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासंभवात्तन्नोक्तम्॥

---

बोध्यम्। अभ्युपेत्येदमुत्तरम्। वस्तुतो बह्वपेक्षं बहिरङ्गमल्पापेक्षमन्तरङ्गमित्ययुक्तएवायमित्याह। [बहिरङ्गान्तरङ्गशब्दाभ्यामिति।] [शब्दमर्यादयेति] शब्दशक्त्येत्यर्थः। ननु शक्त्या तादृशार्थालाभेऽपि लक्षणया तल्लाभस्सुकरएवेत्यत आह। [तथा सतीति।] [इत्येव वदेदिति।] निर्बीजलक्षणानौचित्यादिति भावः। वदेदित्यत्र भाष्यकारः कर्ता। तथाचतत्तात्पर्यविरुद्धोऽयमर्थ इति भावः। उक्तमर्थं द्रढयितुमाह। [अतएवेति।] बहिरङ्गान्तरङ्गशब्दयोः शब्दमर्यादया तादृशार्थालाभेन तादृशान्तरङ्गबहिरङ्गभावस्य प्रकृतपरिभाषाप्रवृत्तिप्रयोजकत्वाभावादेवेत्यर्थः। [उदाहरणमिति।] अस्य इत्युक्तमित्युत्तरेण संबन्धः। " नतु गुणादूठन्तरङ्गत्वा " दित्युत्तरमित्यस्येति-शेषो बोध्यः। तथाचान्तरङ्गं च बलीयो भवती " ति वचनप्रयोजनकथनावसरे गुणाद्यणादेशोऽन्त-रङ्गत्वादित्यस्य स्योन इत्युदाहरणमित्युक्तम्, नतुगुणादूडन्तरङ्गत्वादित्यस्येति भावः। [त्वद्रीत्येति।] कैयटरीत्येत्यर्थः। [उचितमिति।] तद्रीत्या तयोरप्यन्तरङ्गबहिरङ्गभावस्यसत्त्वादिति भावः। नन्वस्योपलक्षणत्वात्तदप्युक्तमेवेति न तत्त्वदुक्तार्थसाधकमत आह। [प्राथम्यादिति।] प्रक्रियाक्रमानु-रोधेनेति भावः। [तदेवेति।] प्रथमातिक्रमणे कारणाभावादिति भावः। [ममत्विति।] एत-दुत्तरं मते इति शेषः। [तद्वारणेति।] ऊठा गुणवारणेत्यर्थः। संज्ञानिमित्तकबहिरङ्गत्वस्या-नाश्रयणेनोभयोः समत्वादिति भावः। नन्वेवं गुणात्पूर्वमूठःप्रवृत्तेर्दौर्लभ्यादुक्तभाष्यद्वयानुपपत्त्या

किं च सिद्धान्ते नित्यत्वाद् गुणात्पूर्वमूट् गुणस्तु ऊठि यणा बाधितत्वादनित्यः। ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्ततयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम्॥

---

तेन कैयटोक्तमप्यन्तरङ्गत्वमावश्यकमेवेत्यत आह। [किञ्चेति।] [सिद्धान्ते इति।] इको यणचीत्यादौ तदादितदन्तविध्योरभावे इत्यर्थः। अन्यथा गुणस्यैवान्तरङ्गत्वेन यण्बाधकत्वात्तस्यानित्यत्वं वक्तुमशक्यमिति भावः। अनेन तत्पक्षे ऊडसिद्धिरपि दोष इति भाष्याशय इति सूचितमिति बोध्यम्। [यणा बाधितत्वादिति।] अन्तरङ्गत्वेनेति भावः। वार्णपरिभाषायास्त्वनित्यत्वादप्रवृत्तिरित्याशयः। [अनित्य इति।] यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यमिति न्यायेनेति भावः। कैयटोक्तार्थे भाष्यविरोधमप्याह। [ऊनशब्देति।] [सप्तम्याद्यन्तेति।] आदिना पञ्चम्यन्तस्य परिग्रहः। सूत्रे सप्तम्याद्यन्ततयोपात्तं प्रयोगस्थं शब्दरूपं निमित्तमेवाङ्गपदेन गृह्यत इति भावः। अत्रेदं बोध्यम्। अन्यत्र विधिषु यथा कार्यमनुभवन्निति परिभाषया साक्षादवयवद्वारा वा कार्यानुभवविशिष्टस्य कार्यिणो निमित्तत्वेनाग्रहणमेवमत्रापि निमित्तवाच्यङ्गपदेन कार्यानुभवविशिष्टस्य स्थानिन आगमिनश्च न ग्रहणम्। सर्वथा कार्यानुभवरहितस्य तद्विशेषणस्य तु तत्त्वेन ग्रहणं भवत्येव। अग्रहणे मानाभावात्। न च गुणानां च परार्थत्वादिति न्यायेन तन्न्यायस्यात्राप्रवृत्तिरिति वाच्यम्। तन्न्यायस्यानित्यत्वेनेहाप्रवृत्तेः। किञ्चास्य न्यायस्य लोकसिद्धत्वेनोभयोःसमत्वाभावेन च तदप्रवृत्तिः। अत एव पूर्वस्थानिकस्यान्तरङ्गत्वखण्डनावसरे “परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्चे” ति वक्ष्यमाणग्रन्थसङ्गतिः। अत एव चोनशब्दमाश्रित्येत्यादि येन विधिरिति सूत्रस्थभाष्यव्याख्यावसरे अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो न तु स्थान्यादिपरोपीति सूचयतीत्युद्योतकृतोक्तमिति। नन्वेवमूट्ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरवाहऊडिति सूत्रस्थभाष्यासङ्गतिः। विश्वौह इत्यत्र गुणसंप्रसारणनिमित्तयोर्ण्विशसोःपरस्परमनन्तर्भावेणान्तरङ्गबहिरङ्गभावस्य वक्तुमशक्यतया ज्ञापनोत्तरमप्यूठ्ग्रहणस्य स्वांशे चारितार्थ्याभावात्।

**यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासंगत्या चिन्त्यम् ॥**

---

षष्ठ्यन्तोपात्तस्यापि निमित्तत्वेन ग्रहणे तु लघूपधगुणोद्देश्यघटितसमुदायोद्देश्यकस्य संप्रसारणस्य बहिरङ्गत्वं, संप्रसारणोद्देश्यघटितसमुदायोद्देश्यकस्य लघूपधगुणस्यान्तरङ्गत्वमिति तयोरन्तरङ्गबहिरङ्गभावस्य वक्तुं शक्यतया ज्ञापनेतरं स्वांशे चारितार्थ्येन ज्ञापकत्वसङ्गतिः। अत एव सुस्यूषति दुद्यूषतीत्यादिसिद्धिरपि। अन्यथा ह्यपरनिमित्तकत्वेनान्तरङ्गत्वादूठः पूर्वं द्वित्वे तदसिद्धिः स्यात्। षष्ठ्यन्तोपात्तस्यापि निमित्तत्वे तु द्वित्वनिमित्तभूतसन्नन्तसमुदायघटकनिमित्तकत्वेनोठोऽप्यन्तरङ्गत्वादुभयोरन्तरङ्गयोःपरत्वादूठःप्रवृत्तिःसुवचेति चेन्न। विश्वौहइत्यादौ संप्रसारणस्य कप्रत्ययावधिकयजादिस्वादिनिमित्तकभसंज्ञानिमित्तकत्वेन परम्परया तस्यापि तन्निमित्तकत्वाल्लघूपधगुणनिमित्तापेक्षया विशेषणबाहुल्येन संख्याकृताधिकनिमित्तकत्वेन बहिरङ्गताया वक्तुं शक्यत्वेनोक्तभाष्यासङ्गतेर्दुर्वचत्वात्। परम्परया निमित्तस्याप्यङ्गपदेन ग्रहणेऽप्यस्यैव मानत्वात्। वस्तुतस्तूड्ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरविप्रतिषेधसूत्रस्थभाष्यव्याख्यावसरे ग्रन्थकृतोद्योते विभक्तिनिमित्तसंप्रसारणस्य ण्व्याश्रयत्वेन अन्तरङ्गे गुणेऽसिद्धप्रतिपादनाद्गुणस्य संप्रसारणनिमित्तापेक्षयान्तःस्थितनिमित्तकत्वेनैवान्तरङ्गत्वं ग्रन्थकृतोऽभिप्रेतम्, नतु घटकनिमित्तकत्वेन, न वा संख्याकृताल्पनिमित्तकत्वेनवेति तद्भाष्यबलेन षष्ठ्यन्तोपात्तस्यापि निमितत्वेन ग्रहणं, परम्परया निमित्तस्याप्यङ्गपदेन ग्रहणमिति कल्पनं च सर्वथा नागेशाशयाननुगुणत्वादुपेक्ष्यम्। सुस्यूषतीत्यादिसिद्धिप्रकारस्तु प्रागुपदर्शित इति तत एवावगन्तव्यमिति दिक्। एतेन सुस्यूषतीत्याद्यसिद्ध्याज्ञापनपरभाष्यप्रामाण्येन चात्रोद्देश्यस्यापि निमित्त्वेन ग्रहणम्। अङ्गशब्दस्योपकारकमात्रपरत्वात्। न हि कार्यैति न्यायस्तु नात्र प्रवर्तत इत्यादिवदन्तो वाक्यार्थचन्द्रिकाकृतोऽन्ये च परास्ताः। कैयटोक्तिं खण्डयति। [यत्त्विति।] [परत्वादिति।] तत्पक्षे उभयोःसमत्वेनान्तरङ्गबहिरङ्गभावस्य वक्तुमशक्यत्वमिति तदाशयः। [भाष्यासङ्गत्येति] तेन यणो बहिरङ्गताया गुणस्यान्तरङ्गतायाश्च प्रदर्शितत्वादिति भावः। ननु गौधेरःपचेरन्नित्यादावेयादीनामङ्गसंज्ञाद्यपेक्षत्वेन सत्यपि बहिरङ्गत्वे न यलोपानापत्तिः। चेलेक्नोपेरिति निर्देशेन वलि लोपेऽन्तरङ्ग-

वलि लोपे ऽन्तरङ्गपरिभाषा न प्रवर्त्तत इति तु न युक्तम्। तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसंगमाशङ्क्योपदेशसामर्थ्यान्न। न च वृश्चतीत्यादौ चारितार्थ्यं, बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति

---

परिभाषाया अप्रवृत्तेरवश्यमभ्युपेयत्वात्। अन्यथान्तरङ्गे यलोपे कर्तव्ये बहिर्भूतणिज्निमित्तकत्वेन बहिरङ्गस्य पुकोऽसिद्धत्वाद्यलोपाप्रवृत्तौ तन्निर्देशासंगतिःस्पष्टैव। अत एव यातिःक्नोपयतीत्यादिरूपसिद्धिः। अन्यथाद्यल्लोपातोलोपयोःपुगागमस्य च बहिरङ्गत्वेनासिद्धत्वाद्यलोपाप्राप्त्या तदसिद्धिः। एवं च संज्ञासापेक्षस्य बहिरङ्गत्वं वदतःकैयटस्यापि मते नायं दोषोऽत आह। [वलि लोप इति।] तस्यायुक्तत्वेबीजमाह। [तत्सूत्रेइति।] लोपो व्योरिति सूत्रे इत्यर्थः। [व्रश्चादिष्विति।] आदिना भाष्योक्तयोःव्रीहिर्व्रणइत्यनयोःसंग्रहः। [वृश्चतीत्यादाविति।] अत्रादिपदेनवृक्णः, विव्रश्चिषतीत्यादेःसंग्रहः। तत्र संप्रसारणहलादिश्शेषेषु कृतेषु वकारस्य श्रवणं यथा स्यादित्येतदर्थं वकारोपदेशस्यावश्यकत्वेन न तत्सामर्थ्यमिति भावः। तत्राप्युपदेशस्य चारितार्थ्यं नेत्याह। [बहिरङ्गतयेति।] पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वं वलि लोपस्येति भावः। [पूर्वमेव तत्प्राप्त्येति।] पदस्य विभज्यान्वाख्याने वलि लोपसंप्रसारणयोर्युगपत्प्राप्त्येति भावः। एवंच तत्रापि संप्रसारणात्पूर्वमेव वलोपप्राप्त्या कृतेऽपि संप्रसारणे तदुच्चारणाभावेन तत्रापि तस्य चारितार्थ्याभावेन निरवकाश एवोपदेश इति भावः। एवं च वलि लोपविषयेऽन्तरङ्गपरिभाषाप्रवृत्तेर्भगवता कण्ठत उक्तत्वेन तद्विषये तस्या अप्रवृत्तिरित्येतत्सर्वथा भाष्यविरुद्धमिति भावः। नन्वस्य भाष्यस्य समकालप्राप्तबहिरङ्गविषये परिभाषाप्रवृत्तिप्रदर्शनपरत्वात्तद्विरोधेन तद्विषयेऽस्याः कल्पनायाः कर्तुमशक्यत्वेऽपि जातबहिरङ्गविषये वलिलोपे प्रकृतपरिभाषा न प्रवर्तत इति कल्पनायां बाधकाभावेन न गौधेर इत्यादौ दोषः। धर्मिग्राहकसाजात्याच्चैवमेव कल्पना युक्तेति चेन्नैवम्। तद्भाष्यस्य जातबहिरङ्गविषयेऽपि प्रकृतपरिभाषाप्रवृत्तिप्रदर्शनपरत्वेन तद्विरोधात्। अन्यथा ह्युपदेशावस्थायां सामर्थ्याल्लोपाप्रवृत्तावपि संप्रसारणहलादिश्शेषयोः कृतयो

भाष्योक्तेः। यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चे त्यत्र न षडिति निषेध इति, तच्चिन्त्यम्।

---

वृश्चति, वव्रश्चेत्यादौ वल्परत्वाभावेन लोपाप्रवृत्त्या वकारोपदेशस्य चारितार्थ्येन व्रश्चन इत्यादौ लोपापत्तिरित्याशयकस्य "उपदेशसामर्थ्यात्सिद्धमिति चेदस्त्यन्यदुपदेशवचने प्रयोजनं, किम्? संप्रसारणहलादिश्शेषेषु कृतेषु वकारस्य श्रवणं यथा स्यात्। वृश्चति, विव्रश्चिषती" ति प्रश्नस्य "नवा बहिरङ्गलक्षणत्वात्, बहिरङ्गास्संप्रसारणहलादिश्शेषाः, अन्तरङ्गो लोप" इति सिद्धान्तिप्रदर्शितमुत्तरमसंबद्धमेव स्यात्। जातबहिरङ्गविषयकत्वे तु संप्रसारणहलादिश्शेषाभ्यां-पूर्वमिव तदुत्तरमपि प्रकृतपरिभाषया तयोरसिद्धत्वेन वल्परत्वान्नाप्रातो लोप इत्युपदेशस्य तत्रापि चारितार्थ्याभावेन तत्सामर्थ्याल्लोपाभाव इति युक्तमुत्तरम्। अतो जातबहिरङ्गविषयेऽपि न तत्कल्पना युक्ता। क्नोपेरिति निर्देशस्तु सामान्यत एव परिभाषानित्यत्वे ज्ञापकम्। यातिरित्यादि-प्रयोगा अपि सामान्यतःपरिभाषानित्यत्वेनैव साधनीया इत्याशयो बोध्यः। ननु सिद्धान्ते वलोपोदाहरणानामाम्नेमाणं जीरदानुरित्यादीनां छान्दसत्वात्सिद्धिमास्थायोदेश्यांशे वकारग्रहणस्य तत्सूत्रे भगवता प्रत्याख्याततत्वेन धर्मिग्राहकमानाच्च यलोपविषयेऽन्तरङ्गपरिभाषा न प्रवर्तत इति कल्पनायां न प्रागुक्तभाष्यविरोधो, नापि गौधेर इत्यादिलक्ष्यासिद्धिःकैयटमतेऽपीति चेन्न। ऋधातोर्यङ्लुगन्तादाशीर्लिङि द्वित्वे हलादिश्शेषे उरदत्वे रिकि अभ्यासस्यासवर्ण इतीयङि उत्तर-खण्डस्य रिङादेशे अरियियादित्यत्र प्राप्तस्य यलोपस्य रिङो बहिरङ्गासिद्धत्वेन वारणानुपपत्त्या तदसिद्धेः। यङ्लुकश्छान्दसत्वेन तद्वारणेत्वन्यार्थमावश्यकेन परिभाषानित्यत्वेनैव यातिरित्या-दीनां क्नोपेरितिनिर्देशस्यचोपपत्तावियङ्कल्पना निष्फलेति ग्रन्थकृदाशयो बोध्य इति दिक्। उक्तकैयटोक्तिमिव प्रसङ्गादन्यामपि तदुक्तिं खण्डयति। [यत्त्विति।] [असिद्धत्वादिति।] बहिङ्गत्वेनेति शेषः। नलोपस्सुबित्यनेन तु न तस्यासिद्धत्वम्। संज्ञाविधावसिद्धत्वस्य दत्तदण्डिनौ दण्डिदत्ताविति भाष्योदाहरणेन तत्र संज्ञापदेन घिसंज्ञाया एव ग्रहणमित्यर्थस्यान्यत्र सिद्धान्तिततत्वात्। [निषेध इति।] टाप इति भावः। तत्र नलोपोत्तरमदन्तात्वात्प्राप्तस्य टाप उक्तरीत्या नलोपासिद्धत्वेन षट्संज्ञायां न षडित्यनेन निषेध इति भावः। [चिन्त्यमिति।]

नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्। तच्च न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। पञ्चेत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्। अत एव कृति तुग्-ग्रहणं चरितार्थम्। वृत्रहभ्यामित्यादौ पदत्वानिमित्त-कत्वे ऽपि नलोपस्य बहिरङ्गत्वाभावात्। भ्यामः पद-संज्ञानिमित्तत्वे ऽपि नलोपस्य तन्निमित्तकत्वाभावात्।

---

नलोपासिद्धत्वस्य दुर्वचत्वादिति भावः। तदेवाह। [नलोपस्य हीत्यादिना।] नन्वेवं पञ्चेत्यत्र टाबापत्तिर्दुर्वारा। नच नलोपस्सुप्स्वरेत्यनेन नलोपस्यासिद्धतया निषेधस्सुवच इति वाच्यम्। तत्र संज्ञापदेन घिसंज्ञाया एव ग्रहणमित्यर्थस्यान्यत्र सिद्धान्तितत्वादत आह। [पञ्चेत्यत्रेति।] [व्याख्यानसामर्थ्येनेति।] न षडित्यस्यानन्तरस्येति न्यायेन ऋन्नेभ्य इति सूत्रप्राप्तङीप एव निषेधकत्वे ऋन्नेभ्यो ङीबषट्स्वस्रादिभ्य इत्येकयोगेनैव तत्सिद्धौ पृथग्योगकरण-मनर्थकं स्यात्, अतस्तत्सामर्थ्यात् षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च स्त्रियां यत्प्राप्नोति तन्नेति व्याख्याय व्यवहितस्यापि टापो निषेधो वाच्यः। नलोपोत्तरं प्राप्तस्य टापः स निषेधस्तु कार्यकालपक्षे भूतपूर्वगत्याश्रयणमन्तरा न सम्भवतीति तत्सामर्थ्येन भूतपूर्वं षट्त्वमाश्रित्य निषेधो वाच्य इति भावः। संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणे मानमाह। [अत एवेति।] [नलोपस्येति।] अस्य मध्यमणिन्यायेनोभयत्रान्वयः। [बहिरङ्गत्वाभावादिति।] संज्ञाकृतस्य तत्त्वस्यानाश्रयणादिति भावः। अन्यथा नलोपस्य बहिरङ्गासिद्धत्वेनैव तुकोऽप्रवृत्तौ तदानर्थक्यं स्पष्टमेव। ननु संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणेऽपि कथं तत्सार्थक्यम्। तुङ्निमित्तभूतक्विबपेक्षया बहिर्भूतभ्याम्निमित्तकत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन तुग्वारणसंभवादत आह। [भ्याम इति।] [तन्निमित्तकत्वाभावादिति।] नलोपनिमित्तकत्वाभावादित्यर्थः। साक्षादिति भावः। ननु

परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम्। ध्वनितं चेदं नलोपः सुबिति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम्॥

अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमासिद्धमित्यर्थः। वृश्चादिषु पदसंस्कारपक्षे समानकाल-

---

भ्यामस्साक्षान्नलोपनिमित्तकत्वाभावेऽपि परम्परया तन्निमित्तत्वमस्त्येवेत्यत आह। [परम्परयेति।] नलोपनिमित्तभूतपदसंज्ञायां भ्यामो निमित्तत्वेन तस्य परम्परया नलोपनिमित्तत्वमिति भावः। [न मानमिति।] ननु ज्ञापकपरभाष्यप्रामाण्याद्वाह ऊडित्यस्य परम्परया निमित्तत्वमादाय बहिरङ्गतायाः प्रागुपदर्शितत्वादिदमयुक्तमत आह। [ध्वनितं चेदमिति।] तत्र हि कृति तुग्विधौ वृत्रहभ्यामित्यादिफल मुक्त्वा कृन्मेजन्त इति सूत्रेऽस्य सन्निपातपरिभाषाफलत्वेनोक्तत्वात्तामाश्रित्यास्यैतत्फलत्वं खण्डितम्। अन्यथानयैव परिभाषया निर्वाहे तत्परिभाषोपन्यासो भगवतो निर्बीजः स्यादिति तेनदं ध्वनितमिति भावः। तथा च क्वचित्ज्ञापकपरभाष्यप्रामाण्यात्परम्परया निमित्तत्वमादायैतत्प्रवृत्तावपि न सर्वत्र तथा प्रवृत्तिरिति बोध्यम्। ननु परिभाषाद्वयेनापि तत्प्रत्याख्यानसंभवाद्बहिरङ्गपरिभाषानुपन्यासमात्रेण कथमुक्तार्थलाभ इति चेन्न। कृन्मेजन्त इति सूत्रे सन्निपातपरिभाषाफलत्वेनोक्तस्य ग्रामणिकुलमित्यत्र तुगभावरूपफलस्य बहिरङ्गपरिभाषया खण्डितत्वेन तद्रीत्यात्रापि तुको वारयितुं शक्यतया तस्य सन्निपातपरिभाषाऽसाधारणफलत्वाभावेन मुख्ययानयैवात्र तुग्ग्रहणप्रत्याख्यानस्य न्याय्यतया तथाऽकरणेनास्य बहिरङ्गपरिभाषाऽविषयत्वं भगवता ध्वनितमित्याशयात्। एवं पदार्थंनिरूप्य वाक्यार्थमाह। [अन्तरङ्ग इति।] नन्वेवं लोपोव्योरिति सूत्रस्थप्रागुक्तभाष्यविरोधः। तत्रहि वलोपस्योपदेशावस्थायामेव प्राप्त्या तदानीं संप्रसारणादेर्जाततत्कालप्राप्तिकत्वयोरभावेनासिद्धत्वासंभवादत आह। [वृश्चादिष्विति।] आदिना पट्व्यादिपरिग्रहः। एवं च पदसंस्कारपक्षाशयकमेव तद्भाष्यमिति न विरोध इति भावः।

**त्वमेव द्वयोरिति बोध्यम् ॥ एतेनान्तरङ्गं बहिरङ्गाद् बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च ॥ अन्तरङ्ग-शास्त्रत्वमस्या लिङ्गम् ॥**

**इयं च त्रिपाद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वात् ।**

---

कैयटदीक्षिताद्युक्तिं खण्डयति । [एतेनेति ।] [अपास्तमिति ।] अर्थद्वयस्यानयैव क्रोडीकारादफलत्वेनेति भावः । ननु सत्यपि लाघवे तत्र तत्र भगवता पृथगुपन्यस्तयोरनयोः परिभाषयोरेकीकरणं प्रमाणविरहादयुक्तमत आह । [एनामिति ।] असिद्धं बहिरङ्गमन्तरङ्ग इत्येनामित्यर्थः । [तस्या इति ।] अन्तरङ्गं बहिरङ्गाद्बलीय इत्यस्या इत्यर्थः । [प्रत्याख्यानादिति ।] तत्रह्यन्तरङ्गं च बलीयो भवतीत्यस्य स्योन इत्यादिप्रयोजनानि प्रदर्श्य "यदि सन्ति प्रयोजनानीत्येषा क्रियते ननु चेयं च कर्तव्या, असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किं प्रयोजनम् पचावेदं पचामेदं, बहिरङ्गलक्षणगुणस्यान्तरङ्गलक्षणमैत्वं माभूदिति । उभे तर्हि कर्तव्ये, नेत्याह, अनयैव सिद्धम् । इहापि स्योनः स्योनेति, असिद्धत्वाद्बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यती" त्युक्तम् । एवं चैतदेकवाक्यतालाभाय "अन्तरङ्गं बहिरङ्गाद्बलीय" इत्येतदुपक्रम्य प्रवृत्तस्य, "अवश्यमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेष्विति" संप्रसारणाच्चेति सूत्रस्थभाष्यस्य, बहुप्रयोजनैषा परिभाषा, तस्मादवश्यमेषा कर्तव्येत्यचः परस्मिन्निति सूत्रस्थभाष्यस्य चात्रैवार्थेऽतात्पर्यमवगन्तव्यमित्याशयः । परिभाषाया लिङ्गवत्त्वनियमादाह । [अन्तरङ्गशास्त्रत्वमिति ।] [लिङ्गमिति ।] परिभाषोपस्थापकं चिह्नमित्यर्थः । तस्यैव लिङ्गत्त्वे फलमाह । [इयं च त्रिपाद्यामिति ।] पक्षद्वयेऽपीति शेषः । चो हेतौ । यत इयमन्तरङ्गशास्त्रत्वलिङ्गिका अतः पक्षद्वयेऽपि त्रिपाद्यामियं न प्रवर्तत इति भावः । तावता त्रिपाद्यामस्या अप्रवृत्तौ हेतुमाह । [असिद्धत्वादिति ।] परिभाषादृष्ट्येत्यर्थः । कार्यकालपक्षेऽपि व्यवहर्तृदृष्टान्तेन परिभाषाणां विधिदेशीयत्वाभावस्य प्राक्सिद्धान्तितत्वेन सापादिकबहिरङ्गपरिभाषादृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वे स्वदृष्ट्या

अस्याश्च वाह ऊठ्सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था। अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे वृद्धिरेचीति वृद्धौ विश्वौह इत्यादि सिद्धेस्तद्वैयर्थ्यं

---

स्वोपस्थापकलिङ्गापरिज्ञानात्तस्य त्रिपाद्यामप्रवृत्तिरिति भावः। नन्वस्याः सपादसप्ताध्यायीस्थत्वे एतत्संभवेत् तदेव तु कथमत आह। [अस्यां चेति।] [अन्यथेति।] एतत्परिभाषाभावइत्यर्थः। [संप्रसारणमात्रेति।] वसोस्संप्रसारणमित्यतस्संप्रसारणग्रहणानुवृत्त्येत्यर्थः। मात्रपदेनोठोव्यावृत्तिः। [लघूपधगुणे इति।] अङ्गवृत्तपरिभाषा तु नेह प्रवर्तते। प्रत्यासत्त्या तस्यैकप्रत्ययनिरूपिताङ्गकार्य एव प्रवृत्त्या अत्र गुणसंप्रसारणयोस्तत्त्वाभावात्। वस्तुतस्तस्या असत्त्वाच्च। [तद्वैयर्थ्यमिति।] उठ्ग्रहणवैयर्थ्यमित्यर्थः। ननु विश्वौहः विश्वौहेत्यादौ "ऊडिदं पदाद्यप्पुम्रैद्युभ्य" इत्यसर्वनामस्थानविभक्त्युदात्तत्वसंपादनार्थमूठ्ग्रहणस्यावश्यकत्वात्कथं तद्वैयर्थ्यम्। न च तस्मादिति परिभाषया तत्राव्यवहितत्वांशोपस्थित्या सत्यप्यूठ्ग्रहणे तत्र तादृशस्वरो दुर्लभ एवेति कुतस्तदर्थमूठ्ग्रहणमिति वाच्यम्। प्रतूर इत्यादौ स्वरसिद्ध्यर्थं "मूठ्युपधाग्रहणं कर्तव्य" मिति वार्तिकबलात्तत्राव्यवहितत्वांशबाधकल्पनाया आवश्यकत्वात्। नचैवमपि वार्तिके उपधापदसत्त्वेन प्रतिपदोक्तपरिभाषया उपधापदमुच्चार्य विहितस्य "ज्वरत्वरे" त्यूठ एव ग्रहणं न वाह ऊठ इति तत्र स्वरो दुर्लभ एवेति वाच्यम्। "ऊठ्युपधाग्रहणमन्त्यप्रतिषेधार्थम्। अन्त्यस्य माभूदक्षद्युवा अक्षद्युवे इति वार्तिकफलप्रदर्शनपरभाष्यासङ्गत्या तत्परिभाषाया अनित्यत्वेनात्राप्रवृत्तेरेव न्याय्यत्वात्। अन्यथा अन्त्यानन्त्यसाधारण्येन स्वरनिवारणरूपफलप्रदर्शनायानुपधाभूतस्य माभूदित्येव वदेत्। तथाच स्वरार्थमूठ् ग्रहणस्यावश्यकत्वात्कथं तद्वैयर्थ्यमिति चेदत्र केचित्। ऊडिदमित्यत्र सवर्णदीर्घेणोकारं प्रश्लिष्योकारादूठश्च परा असर्वनामस्थानविभक्तिरुदात्तेत्यर्थेन विश्वौह इत्यादौ प्रतूर इत्यादौ च स्वरस्य सिद्धत्वात्। स चोकारस्साहचर्याद्वकारस्थानिकउपधाभूतो धातुस्थश्च विवक्षित इति न तस्थुष इत्यादावतिप्रसंङ्गः। तत्रोकारस्य धातुस्थत्वाभावादिति वदन्ति। हरिशास्त्रिणस्तु "केचित्तु वाह ऊडिति सूत्रे भाष्ये ऊडादिः कस्मान्न भवतीत्याशङ्क्य संप्रसारण-

स्पष्टमेव। सत्यां ह्येतस्यां बहिरङ्गसंप्रसारणस्यासिद्धत्वा-ल्लघूपधगुणो न स्यात्। न च पुगन्तेति सूत्रे निमित्तमिको

---

पदानुवर्तनेन तस्यादेशत्वं समर्थितम्। ततो वाह ऊडित्यस्य ठित्वाभाव एव प्रतीयते। छ्वोश्शूडित्यस्य त्वादेशत्वसम्पादकोपायान्तराभावादागमत्वे दोषसंभवाच्च ठित्वमेवेति तस्मिन्नेव सूत्रे भाष्ये स्पष्टम्। वृद्धिविधौ तु कृतचर्त्वेष्ठान्तोऽपि तन्त्रेण निमित्ततया गृह्यते। वाह ऊडित्यत्र दीर्घोच्चारणात्। तस्य हि वृद्धिविधौ छ्वोश्शूठोऽस्य च सह ग्रहणस्यैव फलत्वात्। तथा च स्वरविधा "वूठ्युपधाग्रहण" मिति वार्तिकबलेन ठित एव ग्रहणादत्र चो "ऊडादिःकस्मान्न भवती" ति शङ्कापरभाष्येण टितो ग्रहणमित्यर्थलाभाद्वाहऊड्विषये स्वराप्रवृत्तिरेवेष्टः। अत एवोड्ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वं वदता भगवता स्वरांशे दोषोऽनुद्भावितः। तेन च तत्र स्वरोऽनिष्ट एवेति ध्वन्यत इति न ज्ञापकताभङ्गः। अस्यापि ठित्वं वदतां वृत्तिकारादीनां तु प्रमाद एवेति वदन्ति। उपाध्यायानुयायिनस्तु विश्वौह इत्यादावपि स्वर इष्ट एव। तस्यापि ठित्वात्। अत एव "ऊडिदमिति सूत्रे" ऊठ्युपधाग्रहणमन्त्यप्रतिषेधार्थमिति वार्तिकव्याख्यावसरे उद्योतकृता तस्य विश्वौह इत्यु-दाहरणमित्युक्तम्। "ऊडादिः कस्मान्न भवतीति वाह ऊडिति सूत्रस्थं भाष्यं तु यथाश्रुताष्टाध्यायी-पाठेन तस्य टित्वेऽपि दोषो नावतरतीति प्रदर्शनार्थमिति न तावता तस्य टित्वं वक्तुं युक्तम्। स्पष्टं चेदं तत्रैवोद्योते। एत्येधत्यूठ्स्वित्यत्र विशेषणार्थं ठित्वमावश्यकमिति च तत्रैव प्रदीपोद्योतयोः स्पष्टम्। एवं च वाह ऊडित्यत्रोठ्ग्रहणाभावे उकारप्रश्लेषेण स्वरो भविष्यतीत्येव भाष्याशय उद्भावनीय इत्यत्राद्यपक्ष एव युक्त इति वदन्ति। [बहिरङ्गसंप्रसारणस्येति।] संप्रसारणस्य यजादिप्रत्ययनिमित्तकभसंज्ञानिमित्तकत्वेन परंपरया यजादिप्रत्ययनिमित्तकत्वा-द्बहिरङ्गत्वमिति भावः। एतज्ज्ञापकतापरभाष्यप्रामाण्यादेव परंपरया निमित्तस्याप्यत्र ग्रहणमित्याशयः। [न स्यादिति।] तथाच वृध्द्यभावे रूपासिद्धिरिति वृध्द्यर्थमूठ्ग्रहणं स्वांशे चरितार्थमिति भावः। ज्ञापनोत्तरमपि न स्वांशे चारितार्थ्यमूठ्ग्रहणस्येति शङ्कते। [नचेति।] [निमित्तमिति।] अनुवृत्तसार्वधातुकार्धधातुकयोरित्येतदित्यर्थः।

विशेषणम्। अत एव भिनत्तीत्यादौ न गुणः। एवं च नाजानन्तर्य इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम्। प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात् पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इतीकोगुणवृद्धी इति सूत्रभाष्यसंमते ऽर्थे भिनत्तीत्यादावदोषाच्च। अकारान्तोपसर्गे ऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव।

---

[न गुण इति।] येन नाव्यवधानमिति न्यायेन भेत्तेत्यादावेकवर्णव्यवधान एव तत्प्रवृत्त्या शास्त्रस्य चारितार्थ्यादनेकव्यवधाने न तत्प्रवृत्तिः। अन्यथा येन नेति न्यायाविषयतया तत्रापि गुणस्स्यादिति भावः। [एवं चेति। निमित्तस्येग्विशेषणत्व इत्यर्थः। [निषेधादिति।] अन्तरङ्गगुणस्याचोऽन्यानन्तर्यनिमित्तकत्वादिति भावः। [तत्रैवेति।] अङ्ग एवेत्यर्थः। एवं च तस्याचोऽन्यानन्तर्यनिमित्तककार्यत्वाभावान्न नाजानन्तर्य इति निषेधप्रवृत्तिरिति भावः। नन्वेवं भिनत्तीत्यादावङ्गावयवस्येको गुणापत्तिरत आह। [पुगन्तेत्यादाविति।] [अदोषाच्चेति।] चो हेतौ यतो भाष्योक्तरीत्या कर्मधारयाश्रयणेन भिनत्तीत्यादावदोषः अतो निमित्तभूतस्य प्रत्ययस्याङ्गांश एवान्वयः। उत्थिताकाङ्क्षावशादिति तदाशयः। नन्वेवमपि प्रौहः शाल्यूह इत्यादिसिद्ध्यर्थमूठ्ग्रहणस्यावश्यकत्वात्कथं ज्ञापकत्वम्। अन्यथा प्रौह इत्यत्र वृद्धिं बाधित्वा एङि पररूपमिति पररूपे तदसिद्धिः। शाल्यूह इत्यादौ तूकाररूपदीर्घश्रवणानापत्तिरत आह। [अकारान्तोपसर्ग इति।] [वाहेरिति।] वहधातुप्रकृतिकणिजन्तादित्यर्थः। अनयोर्ण्विविचावित्यत्र क्रमेणान्वयः। [अनभिधानादिति।] अत्र च ज्ञापनपरं भाष्यमेव मानं बोध्यम्। अत्र वाहेर्विचोऽनभिधानकथनं "छन्दस्येव ण्विरिति पक्षे णिजन्ताद्विजि" ति वाहऊडिति सूत्रस्थमूलानुरोधेन। वस्तुतस्तु "विभाषापूर्वाह्णे" ति सूत्रस्थभाष्यप्रामाण्याण्ण्विप्रत्ययविधायके छन्दोग्रहणाननुवृत्तेरन्यत्र सिद्धान्ति-

वार्यूह इत्यादितूहतेः क्विपि बोध्यम्। धातूनामनेकार्थत्वान्नार्थासंगतिः। प्रौह इत्याद्यसाध्वेव वृद्धेरप्राप्तेः। अस्योहस्यानर्थक्यान्न प्रादूहोढेत्यस्यापि प्रवृत्तिः। न च कार्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्।

---

तत्वेन तेनैव विश्ववाडित्यादिरूपसिद्ध्या णिजन्ताद्विजनावश्यकः। सत्यपि वा तस्मिन् तेन विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते नत्वस्योठ् णिलोपस्य स्थानिवत्त्वादिति शेखरे उक्तत्वेन तद्विषये ऊठोऽप्रवृत्त्या तत्र फलभेदस्य वक्तुमशक्यतया तस्यानभिधानकथनमनावश्यकम्। अत एवोद्योते ण्विप्रत्ययस्यैवानभिधानमुक्तमिति बोध्यम्। एतेनेह विचोऽनभिधानं चिन्त्यम्। णिलोपस्य स्थानिवत्वेनोडादेशाप्रसङ्गादित्यपास्तम्। वाह्यतोरिदमनभिधानमिति हर्युक्तं तु न युक्तम्। तस्य केवलोष्ठ्यादित्वस्य कौमुद्यामुक्तत्वेन तत्रोठोऽप्रसक्तेः। दन्त्योष्ठ्यादित्वमिति मतान्तरेऽपि तस्य यत्नार्थकत्वेनाकर्मकतया तेन शाल्यूह इत्याद्यसिध्या तस्यानभिधानकथनमनावश्यकमित्यवधेयम्। नन्वेवं वार्यूह इत्यादिरूपासिद्धिरत आह। [वार्यूह इति।] ननु तस्य वितर्कार्थकत्वेनार्थासङ्गतिरत आह। [धातूनामिति।] नन्वेवंरीत्या प्रौह इत्याद्यपि स्यादत आह। [प्रौह इति।] [वृद्धेरप्राप्तेरिति।] उठोऽभावादिति भावः। नन्वेवमपि प्रादूहेत्यनेन वृद्धिस्सुलभेत्यत आह। [अस्योहस्येति।] शसन्तैकदेशस्येत्यर्थः। ननु यथोद्देशपक्षे सापादिकबहिरङ्गपरिभाषादृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वात्स्वदृष्ट्या स्वोपस्थापकलिङ्गाभावेन तस्यास्त्रिपाद्यामप्रवृत्तावपि कार्यकालपक्षे तत्र तत्प्रवृत्तिर्दुर्वारा। तत्पक्षेऽपि व्यवहर्तृदृष्टान्तेन परिभाषाणां स्वदेशीयत्वस्य प्रागुपदर्शितत्वेन परिभाषादृष्ट्या त्रिपाद्या असिद्धत्वेऽपि त्रैपादिकान्तरङ्गदृष्ट्या सापादिकपरिभाषायास्सिद्धतया तस्मिन्निति निर्दिष्ट इत्यादिपरिभाषान्तराणामिव तदाकाङ्क्षया त्रिपाद्यां तत्प्रवृत्तेस्सुवचत्वात्। तदुक्तं पूर्वत्रासिद्धमिति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्सपादसप्ताध्यायीस्थपरिभाषाणां त्रिपाद्यामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम्। कथम्, कार्यकालंसंज्ञापरिभाषम्, यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्" इति। एवं च कथं पक्षद्वयेऽपि त्रिपाद्यामस्या अप्रवृत्तिरित्याशङ्कते। [नचेत्यादिना।] [दुर्वारेति।] उक्तरीत्या तत्पक्षे त्रिपाद्यापप्यस्या

पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात्।

---

उपस्थितेरिरिति भावः। समावृत्ते। [पूर्वं प्रतीति।] सापादिकबहिरङ्गं प्रतीत्यर्थः। [परस्येति।] त्रैपादिकान्तरङ्गस्येत्यर्थः। [असिद्धत्वादिति।] पूर्वत्रासिद्धमित्यनेनेति भावः। [अन्तरङ्गाभावेनेति।] सापादिकबहिरङ्गशास्त्रदृष्ट्या त्रैपादिकान्तरङ्गस्याविद्यमानतयेत्यर्थः। [पूर्वस्येति।] सापादिकबहिरङ्गस्येत्यर्थः। [तन्निरूपितबहिरङ्गत्वाभावादिति।] तादृशान्तरङ्गनिरूपितबहिरङ्गत्वाभावादित्यर्थः। बहिरङ्गत्वान्तरङ्गत्वयोः परस्परनिरूप्यनिरूपकभावापन्नत्वेन परस्परसापेक्षतया सापादिकबहिरङ्गदृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वे तन्निरूपितबहिरङ्गत्वस्य सापादिकबहिरङ्गे ग्रहीतुमशक्यतया कार्यकाले त्रिपाद्यामुपस्थितयाप्यनया सापादिकबहिरङ्गस्यासिद्धत्वं बोधयितुं न शक्यत इति भावः। विसर्जनीयोऽनुत्तरपद" इति वार्तिकप्रत्याख्यानपर "न वा बहिरङ्गलक्षणत्वादि" ति वार्तिकव्याख्यावसरे "नैषयुक्तः परिहारः। अन्तरङ्गं बहिरङ्गमिति च प्रतिद्वन्द्विभाविनावेतौ पक्षौ। सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गं भवति। नचात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवधानमस्ति। किं कारणम्, असिद्धत्वात्। पूर्वत्रासिद्धमिती" ति विसर्जनीयसूत्रस्थभाष्येण, नचात्रेत्याद्युपदर्शितभाष्यव्याख्यापरकैयटग्रन्थव्याख्यावसरे" अन्तरङ्गाभावाद्रेफस्य तदपेक्षबहिरङ्गत्वाभावाद्बहिरङ्गपरि[illegible]षानुपस्थानात्प्राप्नोत्येव विसर्जनीय" इति कैयटग्रन्थं युक्त्यन्तरमाह अन्तरङ्गाभावाद्रेफस्येतीत्यवतार्य, त्रैपादिकान्तरङ्गस्य सपादसप्ताध्यायीस्थरेफविधायकदृष्ट्या असिद्धत्वेनैतन्निरूपितबहिरङ्गत्वमेव तस्य नास्तीत्यर्थ" इति तदाशयं विवृण्वता उद्योतग्रन्थेन चास्य ग्रन्थस्य मदुक्त एवाशय इति स्पष्टं लभ्यत इति बोध्यम्। [तयेति।] त्रिपाद्यामुपस्थितया अनया परिभाषयेत्यर्थः। [तस्येति।] सापादिकबहिरङ्गस्येत्यर्थः। ननु पूर्वत्रासिद्धमित्यत्र कर्तव्य इत्यध्याहारेण पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थान्नार्कुटो नार्पत्य इत्यादौ बहिरङ्गभूतसापादिकवृद्ध्यादेःपूर्वं कृतत्वेन तद्दृष्ट्या विसर्गादेरसिद्धत्वस्य वक्तुमशक्यतया अस्य ग्रन्थस्यैवं रीत्या व्याख्यानं न युज्यते। किंचैव-

मष्टानामिति प्रतीकमुपादाय "पूर्वत्र कर्तव्ये नलोपासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभाव" इति ग्रन्थकृता अन्यत्रोक्तत्वेन तद्विरोधापत्तिश्चेति चेन्न। पूर्वत्रासिद्धमित्यत्र शास्त्रासिद्धत्वस्यैव सिद्धान्तत्वेन शास्त्रस्यकर्तव्यत्वानुपपत्त्या सिद्धान्तभूते तत्पक्षे कर्तव्य इत्यध्याहारस्य कर्तुमशक्यत्वात्। कार्यद्वारिका कर्तव्यता शास्त्रे स्वीक्रियत इति कल्पना तु क्लिष्टत्वादुपेक्ष्या। किंचोपपदविभक्तेरिति न्यायेन पूर्वत्रेत्यत्राधिकरणसप्तमीत्वमेव न्याय्यम्। एवं च पूर्वशास्त्रविषये परमसिद्धमित्येव तदर्थः। एवं च कृतेऽपि नासिद्धत्वानुपपत्तिः। अत एव न भकुर्छुरामिति सूत्रे कुर्ग्रहणं चरितार्थम्। तद्धि कुर्वन्तीत्यत्र हलि चेति दीर्घवारणार्थम्। अन्यथा अत उदिति तपरत्वेन गुणस्येव दीर्घस्यापि वारणसंभवे किं तेन कृतेऽप्यसिद्धत्वाङ्गीकारे तत्वदृष्ट्या दीर्घस्यासिद्धत्वेन तपरकरणेन तद्वारणासंभवात्कुर्ग्रहणं चरितार्थम्। एवं च तदेवात्र मानं बोध्यम्। अत एव चञ्चूर्यीत्यादावुत्परस्यात इत्युकारे हलि चेति दीर्घसिद्धिः। अन्यथा तपरत्वसामर्थ्याद्गुणस्येव दीर्घस्याप्यप्रवृत्त्यापत्तिः। विसर्जनीयसूत्रस्थं प्रागुक्तं भाष्यमप्यत्रार्थे मानं बोध्यम्। अष्टानामित्यत्रत्यशेखरग्रन्थस्तु अरुचिग्रस्ततया नेयम्। अत एव तदुत्तरं समाधानान्तराणि ग्रन्थकृता दर्शितानीत्यवधेयम्। यत्तु हरिशास्त्रिणस्तदनुसारिणोऽन्ये च पूर्वं प्रतीत्यस्य सापादिकबहिरङ्गपरिभाषाशास्त्रं प्रतीत्यर्थमभिप्रेत्य " शास्त्रे चेतनत्वारोपस्य बहुशो-दृष्टत्वादिह परिभाषायां तदारोपात्तया ज्ञायमानमेवान्तरङ्गपरिभाषोपस्थितौ तद्बोध्यान्तरङ्गशास्त्रीय-प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकस्य बहिरङ्गासिद्धत्वस्य वा नियामकम्। न तु वस्तुभूतम्। अन्यथा-भाधिकारीयेष्वप्यन्तरङ्गेषु परिभाषाप्रवृत्तावसिद्धवत्सूत्रस्थभाष्यविरोधापत्तेः। ततश्च कार्यकालेऽपि परिभाषाणां विधिदेशीयत्वानभ्युपगमात्त्रैपादिकासिद्धत्वेनान्तरङ्गत्वेनाभिमतस्याविद्यमानतया तद-पेक्षया बहिरङ्गत्वेनाभिमते सापादिके बहिरङ्गत्वस्य ज्ञातुमशक्यत्वात्तन्निरूपितमन्तरङ्गत्वमपि दुर्ज्ञेयमेव। निरूपितबुद्धेर्निरूपकबुध्यधीनत्वादिति वदन्ति। तन्न। तादृशव्याख्यानस्य सर्वथा ग्रन्थस्वारस्याननुगुणत्वात्। तथाहि। अत्र प्रथमद्वितीयपूर्वशब्दाभ्यामेकस्यैव ग्रहणस्य स्वारसिकतया प्रथमपूर्वशब्देन परिभाषाशास्त्रस्य द्वितीयपूर्वशब्देन बहिरङ्गशास्त्रस्य च ग्रहणं सर्वथा ग्रन्थस्वारस्यविरुद्धम्। द्वितीयपूर्वशब्देनापि परिभाषाशास्त्रस्य ग्रहणं तु न युक्तम्। तन्निरूपितबहिरङ्गत्वाभावादिति तदुत्तरग्रन्थस्यालग्नकत्वात्। किं च "नचानया पूर्वस्यासिद्धत्वादिति तदुत्तरशङ्काग्रन्थे पूर्वपदेन सापादिकबहिरङ्गशास्त्रस्यैव ग्रहणीयतया अत्रत्यपूर्वशब्देन परिभाषाशास्त्रस्य ग्रहणेऽनयोर्ग्रन्थयोः परस्परमसंबद्धत्वापत्तिः। किंचास्य

ग्रन्थस्य परिभाषादृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वप्रतिपादनपरत्वे तदर्थस्य "इयं त्रिपद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वा" दित्यादिना प्रागुक्तत्वेन पौनरुक्त्यापत्तेः। किंच पूर्वं सामान्यतस्सापादिक-परिभाषादृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वात्त्रिपाद्यां परिभाषाया अप्रवृत्तिं प्रतिपाद्य "न च कार्यकालपक्ष" इत्यादिना पुनरत्र शङ्काकरणेन तद्ग्रन्थस्य तत्पक्षे परिभाषादृष्ट्या त्रिपाद्या असिद्धत्वेऽपि त्रिपादीस्थान्तरङ्गदृष्ट्या परिभाषायास्सिद्धतया परिभाषान्तराणामिवास्या अपि त्रिपाद्यां प्रवृत्तिर्दुर्वारेत्याशयकतया समाधानग्रन्थे पूर्वशब्देन परिभाषायाग्रहणमनुचितम्। तथासति-तादृशशङ्काया अनिस्तारात्। किंच "कार्यकालपक्षे त्रिपद्यां तदुपस्थितावपि पूर्वं प्रति परासिद्धत्वा" दिति स्वरसन्धिप्रकरणस्थशेखरग्रन्थे पूर्वपदेन सापादिकबहिरङ्गशास्त्रग्रहणस्यैव स्वारसिकतया तदनुरोधेनात्रापि तथैव ग्रहणमुचितम्। किंच प्रागुपदर्शितविसर्जनीयसूत्रस्थोद्योतग्रन्थे सापादिक-बहिरङ्गशास्त्रदृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वात्त्रिपाद्यामस्या अप्रवृत्तिरित्यर्थस्य कण्ठत उक्तत्वेनात्रै तद्ग्रन्थस्यान्यथाव्याख्यानं सर्वथा नागेशानभिमतमिति बोध्यम्। यद्यपि कैयटेन "नचात्रान्तरङ्ग-बहिरङ्गयोर्युगपत्समवधानमस्ती" ति भाष्यव्याख्यावसरे "अत्र विषये अन्तरङ्गबहिरङ्गयोर्युग-पदेकस्यां बुद्धावपेक्षितपरस्परमवस्थानं नास्ति पूर्वस्यां परिभाषायां परस्य विसर्जनीयस्यासिद्धत्वा-दन्तरङ्गाभावाद्रेफस्य तदपेक्षबहिरङ्गत्वाभावाद्बहिरङ्गपरिभाषानुपस्थानात्प्राप्नोत्येव विसर्जनीय" इत्युक्तम्। तेन च परिभाषादृष्ट्या अन्तरङ्गस्यासिद्धत्वमित्यर्थ आपाततः प्रतीयते। तथापि "पूर्वस्यामित्याद्यसिद्धत्वा" दित्यन्तग्रन्थमेकाभिप्रायेण व्याख्याय तदुत्तरग्रन्थं "युक्तयन्तरमाह। अन्तरङ्गाभावाद्रेफस्येती, त्यवतार्य" त्रैपादिकान्तरङ्गस्य सपादसप्ताध्यायीस्थरेफविधायकदृष्ट्या असिद्धत्वेनैतन्निरूपितबहिरङ्गत्वमेव तस्य नास्तीत्यर्थ "इति तदाशयं विवृण्वता उद्योतग्रन्थेन असिद्धत्वादित्यन्तो ग्रन्थो यथोद्देशपक्षाभिप्रायकः तदुत्तरग्रन्थः कार्यकालपक्षाभिप्रायक इति च स्पष्टमेव लभ्यत इति बोध्यम्। भाधिकारीयेष्वप्यन्तरङ्गेषु नास्याः प्रवृत्तिः। अस्या अन्तरङ्गशास्त्र-लिङ्गत्वेन तत्समानाश्रयत्वात्परिभाषादृष्ट्या अन्तरङ्गस्यैवान्तरङ्गदृष्ट्या परिभाषाया अप्यसिद्धवद-त्राभादित्यनेनासिद्धत्वाद् "यद्यपीदं तत्रासिद्धम्। तत्त्विहसिद्ध" मिति न्यायस्य तत्र वक्तुमशक्यत्वात् अत्रत्यं तत्त्वमाकरादवसेयम्। ननु त्रैपादिकान्तरङ्गशास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्यतः प्रागेव तदेकवाक्यतापन्नया बहिरङ्गपरिभाषया सापादिकबहिरङ्गस्यासिद्धत्वप्रतिपादने तदेकवाक्यतापन्नपूर्व-त्रासिद्धसूत्रघटकपूर्वत्रेत्यनेन सापादिकबहिरङ्गस्य ग्रहीतुमशक्यतया तद्दृष्ट्या तस्यासिद्धत्वप्रतिपा-दनासंभवात्तन्निरूपितबहिरङ्गत्वस्य सापादिके सत्त्वेन संभवत्येव तया तस्यासिद्धत्वप्रतिपादनमित्या-

न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः। किं च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः। अतः कार्यकालपक्षे ऽपि त्रिपाद्यामस्या अनुपस्थितिरेव॥ अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्ती रुक्त्वाऽतो-

---

शङ्कते। [नचेत्यादिना।] [अनयेति।] बहिरङ्गपरिभाषयेत्यर्थः। [पूर्वस्येति।] सापादिकबहिरङ्गस्येत्यर्थः। [पूर्वत्रेत्यनेनेति।] तदेकवाक्यतापन्नपूर्वत्रेत्यनेनेत्यर्थः। [एवं हीति।] परस्परनिमित्तव्याघाताद्वाभ्यां परस्परप्रतिबन्धे क्रियामाणं इत्यर्थः। [विनिगमनाविरहादिति।] अन्तरङ्गशास्त्रैकवाक्यतापन्नयोरनयोर्मध्ये इयमेव पूर्वं व्यवस्थापिका इयं नेत्यत्र विनिगमकाभावादित्यर्थः। [अप्रवृत्त्यापत्तेरिति।] तदुक्तं भाष्ये "कुतो नु खल्वेतत् द्वयोः परिभाषयोस्सावकाशयोस्समवस्थितयोः पूर्वत्रासिद्धमिति च, असिद्धं बहिरङ्गमिति च, पूर्वत्रासिद्धमित्येतामुपमृद्यासिद्धं बहिरङ्गमन्तरङ्ग इत्येतया व्यवस्था भविष्यति। न पुनरसिद्धं बहिरङ्गमन्तरङ्ग इत्येतामुपमृद्य पूर्वत्रासिद्धमित्येतया व्यवस्था स्यात्। अतः किम् अतोऽयुक्तः परिहारो नवा बहिरङ्गलक्षणत्वादि" ति। इदं च विनिगमकाभावमभ्युपेत्योक्तम्। वस्तुतो विनिगमकमस्तीत्याह। [किंचेति।] [प्रत्यक्षत्वेनेति।] अष्टाध्यायीसूत्रेषु पाठात् श्रावणत्वेनेत्यर्थः। [तेनेति।] पूर्वत्रेत्यनेनेत्यर्थः। [आनुमानिक्या इति।] ज्ञापकसिद्धत्वेनानुमनिक्या इत्यर्थः। [कार्यकालपक्षेऽपीति।] अपिना यथोद्देशपक्षसमुच्चयः। [अनुपस्थितिरेवेति।] उपस्थितावप्युक्तरीत्या सापादिकबहिरङ्गासिद्धत्वस्य वक्तुमशक्यतया फलाभावादनुपस्थितिरेवेत्यर्थः। उक्तार्थे भाष्यसंमतिं दर्शयति। [अत एवेति।] पक्षद्वयेऽपि त्रिपाद्यामस्या अनुपस्थितेरिष्टत्वादेवेत्यर्थः। [उपक्रम्येति।] अनेनोपसंहारस्य यथोद्देशाभिप्रायकत्वं निरस्तम्। उपक्रमोपसंहारयोरैकरूप्यस्यौचित्यात्। [उक्तयुक्तीरिति।] पूर्वंप्रतीत्यादि-

युक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना। त्रिपादीस्थे ऽन्तरङ्गे कर्तव्ये ऽयं परिहारो न युक्त इति तदर्थः। किं तु वचनमेवारब्धव्यमिति तदाशयः॥ अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य दोष इति वचनमेवारब्धम्। अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव। ये ऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति ते ऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक्॥

---

प्रागुक्तयुक्तीरित्यर्थः। तद्भाष्यस्यैकदेश्युक्तित्वनिरासायाह। [सिद्धान्तिनेति।] [अयं परिहार इति।] न वा बहिरङ्गलक्षणत्वादिति परिहार इत्यर्थः। [न युक्त इति।] संयोगान्तस्य लोपः रदाभ्यामित्यादिषु यत्र यत्रायं परिहार उक्तस्ससर्वोऽपि न युक्त इत्यर्थः। [वचनमेवेति।] विसर्जनीयोऽनुत्तरपद इति वचनमेव नार्कुटो नार्पत्य इत्यादौ विसर्गवारणायारब्धव्यमित्यर्थः। अत्र वचनमित्येकवचनं प्रकृताशयेन। जातौ वा। तेन वचनानीत्यर्थः। उक्तस्यैवार्थस्य सिद्धान्तिसंमतत्वे मानमाह। [अत एवेति।] त्रिपाद्यामस्या अप्रवृत्तेरेवेत्यर्थः। लक्ष्यानुरोधात् क्वचिदानुमानिकेनापि प्रत्यक्षबाध इत्यभिमानेन प्रवृत्तां "यदा तु लक्ष्यदर्शनवशाद्बहिरङ्गपरिभाषा आश्रीयते यथा चक्रकेष्विष्टतो व्यवस्थेति तदा युक्त एव परिहारो न वा बहिरङ्गलक्षणत्वादि" तीति कैयटाद्युक्तिं खण्डयति। [येऽपीति।] ननूठ्ग्रहणज्ञापिताया अस्याः परिभाषाया धर्मिग्राहकसाजात्यादन्तरङ्गे कर्तव्ये जातं बहिरङ्गमसिद्धमित्यर्थस्यैवौचित्यात्तत्कालप्राप्तं च बहिरङ्ग-

अत एव ओमाङोश्चेत्याङ्ग्रहणं चरितार्थम्। तद्धि खट्वा ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति संप्रसारणाच्चेति

---

मसिद्धमित्यर्थकथने मानाभावोऽत आह। [अत एवेति।] समकालप्राप्तबहिरङ्गस्याप्यनेनासिद्धत्वादेवेत्यर्थः। [चरितार्थमिति।] एवं चेदमेव द्वितीयार्थे मानमिति भावः। तस्योक्तार्थे ज्ञापकत्वमुपपादयति। [तद्धीति।] आङ्ग्रहणमित्यर्थः। पदस्य विभज्यान्वाख्यान एव गुणसवर्णदीर्घयोस्समकालप्राप्तिसंभव इत्याशयेनाह। [खट्वेति।] [पररूपार्थमिति।] अन्यथा गुणं बाधित्वा परत्वात्सवर्णदीर्घे ततो गुणेन खट्वोढ इति रूपसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। न च दीर्घापेक्षया गुणस्य नित्यत्वात्पूर्वं गुणे वृद्धिप्राप्तौ तद्बाधनार्थमाङ्ग्रहणस्य चारितार्थ्यात्कथं तस्योक्तार्थज्ञापकत्वमिति वाच्यम्। शब्दान्तरस्य प्राप्त्या तस्याप्यनित्यत्वमित्याशयात्। किंच गुणोत्तरमोकारेऽचःपरस्मिन्निति स्थानिवत्त्वेन सवर्णत्वातिदेशे दीर्घस्यापि नित्यत्वाच्च। ननु-उभयोरप्युभयापेक्षत्वेन समत्वात्कथं सवर्णदीर्घापेक्षया गुणस्यान्तरङ्गत्वम्। किंच प्रयोगीयोच्चारणक्रमेण पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं सवर्णदीर्घस्यैवास्तीति ज्ञापितेऽपि न स्वांशे चारितार्थ्यमत आह। [साधनबोधकेति।] [उपसर्गयोग इति।] तत्संज्ञकशब्देन योग इत्यर्थः। [समुदायेनेति।] उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थः। [अन्तरङ्गत्वमिति।] अन्तरङ्गार्थक शब्दनिमित्तकत्वेन धातूपसर्गकार्यस्य गुणस्यान्तरङ्गत्वमिति भावः। ननूक्तरीत्या प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य गुणे सत्त्वेऽपि प्रयोगीयोच्चारणक्रमेणान्तरङ्गत्वस्य दीर्घेऽपि सत्त्वादुभयोरन्तरङ्गयोः परत्वाद्दीर्घे तद्व्यर्थमेवेति चेन्न। आङ्ग्रहणस्योक्तार्थज्ञापकतापरभाष्यप्रामाण्येन तादृशान्तरङ्गत्वस्य पट्व्या मृद्व्येत्याद्युदाहरणपराचः परस्मिन्निति सूत्रस्थभाष्यप्रामाण्येन च प्रयोगीयोच्चारणक्रमाधीन पूर्वोपस्थितनिमित्तकत्वप्रयुक्तान्तरङ्गबहिरङ्गभावस्यैकपदाश्रितकार्यमात्र-

सूत्रे भाष्ये स्पष्टम्। एहीत्यनुकरणस्य शिवादिशब्दसंबन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसंप्रसारणाच्चेति सूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय

---

विषयकत्वमित्यभ्युपगमेन प्रकृते सवर्णदीर्घस्य नानापदाश्रितत्वेन तादृशान्तरङ्गत्वस्यात्राव्यवस्थापकत्वम्। किञ्चोक्तरूपान्तरङ्गत्वस्योभयोस्तुल्यत्वेऽपि दीर्घे सवर्णत्वस्यापि निमित्तत्वेन संख्याकृताल्पनिमित्तकत्वेनाप्यन्तरङ्गत्वस्य गुणे सत्त्वाच्च। नन्वेवमपि शिवसंबोधनके शिवघटितषष्ठीसमासे वा एहीति वदेत्याद्यनुकरणे शिव एहीत्यादौ प्रकृतिवदनुकरणमित्यनेनैकारे आङ्त्वातिदेशे तत्र वृद्धिं बाधित्वा पररूपविधानार्थमाङ्ग्रहणस्य चारितार्थ्यात्कथमुक्तार्थज्ञापकत्वमत आह। [एहीत्यनुकरणस्येति।] [अनित्यमिति।] अत एव यत्तदेतेभ्य इति निर्देशसङ्गतिः। अन्यथा त्यदादीनामित्येकशेषे तदसङ्गतिरिति भावः। ननु तेन न्यायेन प्रकृतिपर्याप्तधर्मस्यानुकरणेऽतिदेशेऽपि तदेकदेशधर्मस्य तदेकदेशेऽतिदेशे मानाभावः। अत एवाश्वयस्यास्यवामस्येति पदसमुदायस्यैकदेशभूतास्यवामेत्यस्यानुकरणभूतादस्यवामशब्दात्तदस्मिन्नस्तीति मत्वर्थे मतौ छस्सूक्तसाम्नोरित्यनेन छप्रत्ययेऽस्यवामीयमित्यत्र सुपो न लुक्। अन्यथा तत्रापि प्रकृत्येकदेशवृत्तिसुप्त्वस्यानुकरणैकदेशेऽनेन न्यायेनातिदेशे तत्प्रवृत्तिर्दुर्वारा स्यात्। तथा च प्रकृते आङ्त्वस्य प्रकृत्येकदेशधर्मत्वात्तेन न्यायेनातिदेशासंभवादिमे शङ्कासमाधाने निर्दले। नचापो योनियन्मतुष्वित्यनेन मतुपि सप्तम्या अलुग्विधानमेव प्रकृत्येकदेशधर्मस्याप्यनुकरणैकदेशेऽतिदेशे मानम्। तद्धि अप्सुमानित्यत्रालुगर्थम्। तत्र सप्तम्यन्तानुकरणभूताप्सुशब्दादेव मतुब्वाच्यः। प्रथमासमर्थादेव मतुब्विधानात्। तथाचैकदेशधर्मस्यातिदेशानङ्गीकारे तत्र लुकः प्राप्तेरेवाभावेनालुग्विधानं व्यर्थमेव स्यादिति वाच्यम्। तत्र मतिञ्वित्येव पाठस्य युक्ततया अप्सुमानित्यत्रास्यवामीयतीत्यत्रेव सुपोऽभावादेव लुकोऽप्रवृत्त्या मतुप्यलुग्विधाने फलाभावस्य च ग्रन्थकृता अलुगुत्तरपद इति सूत्रे उद्योतेऽलुक्प्रकरणे शेखरे च स्पष्टमुक्ततया तस्यैकदेशधर्मातिदेशेऽमानत्वादिति चेत्सत्यम्। अलुग्विधायके वार्तिके मतुब्विति पठित्वा अप्सुमन्तावाज्यभागावित्युदाहृतवतां वृत्तिहरदत्तादीनां मतेनास्य ग्रन्थस्य प्रवृत्ततया अदोषात्। अत्र मतिञ्वित्येव पाठस्य यथा युक्तत्वं तथा

लब्धाङ्गत्वे एतदप्रवृत्तेः। यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन। उपसर्गेण तत्संज्ञकशब्देन साधनेन

---

ग्रन्थकृता अन्यत्र निरूपितमिति तत एवावसेयम्। एतेनास्य ग्रन्थस्य ग्रन्थकृदभिप्रेतत्वं मन्यमाना हैमवतीकारा अन्ये च परास्ताः। यत्तु हैमवतीकाराः अनुकरणैकदेशेऽपि प्रकृत्यवयवधर्मस्यातिदेशः। अतएवास्यवामीयमित्यत्र तन्न्यायानित्यत्वेन वारणं भाष्ये कृतम्। अत एव जहि जोडमित्यादौ जोडंजहीति समुदायानुकरणेऽवयवस्य सुप्त्वात्तस्य लुक्सिद्धिरित्याहुः। तन्न। अनुकरणभूतेनास्यवामशब्देन विभक्त्यर्थस्याप्रतिपादनात्सुपोऽभावाल्लुगभाव इत्यर्थस्यैव भाष्यकैयटयोस्स्पष्टमुक्तत्वात्। अनित्यत्वेन वारणस्य काप्यनुपलम्भात् नहि जोडमित्यत्र "जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति" इत्यनेन जहीतितिङन्तस्य कर्मवाचकेन सह समासस्योक्ततया तस्य समुदायानुकरणत्वे जोडमित्यस्य कर्मवाचकत्वाभावेन समासाप्राप्तेः। जहीत्येतत्तिङन्तमिति हरदत्तोक्तेरसाङ्गत्यापत्तेश्च। किञ्च तेन जोडकर्मकत्यागरूपक्रियाबोधस्यैव सर्वैरनुभूयमानतया स्वरूपबोधस्य कस्याप्यभावेन तस्यानुकरणपरत्वं सर्वथा न युक्तम्। इति शब्दप्रयोगमात्रेण तद्भ्रमस्तु न युक्तः। अन्यत्रापीतिशब्दघटितवाक्ये एवमेवापत्तेः। यदपि चन्द्रिकाकाराः। मतिष्वितिपाठे ऐहीत्येतदन्तर्गतस्यैकारमात्रस्यानुकरणे प्रसक्तदोषस्य परिहारार्थमयमुद्योग इत्याहुः। तदपि न। एकारमात्रस्यानुकरणत्वेऽन्यस्याननुकरणत्वे तयोस्सम्बन्धायोगात्। एहीत्यनुकरणस्येतिग्रन्थस्वारस्यभङ्गापत्तेश्च। शिव ए इत्यत्रैव शङ्कासमाधानपरोऽयं ग्रन्थ इत्युक्तिस्तु ग्रन्थस्वारस्याननुगुणमित्यवधेयम्। प्रसङ्गाद्धातूपसर्गयोःकार्यमन्तरङ्गमित्यस्य विषयविशेषं व्यवस्थापयिष्यन् "पूर्वं धातुरुपसर्गेणे"ति भाष्येण सामान्यतो धातूपसर्गकार्यस्यान्तरङ्गत्वमिति प्राचां मतं खण्डयति। [यत्त्वित्यादिना।] प्रथमत उपसर्गद्योत्यार्थेन सम्बन्धस्य स्वस्यापीष्टत्वात्तदाशयमाह। [तत्संज्ञकशब्देनेति।] एवंचोपसर्गसम्बन्धस्य प्राथमिकत्वात्तत्प्रयुक्तं कार्यमन्तरङ्गम्। साधनसम्बन्धस्य पाश्चात्यतया तत्प्रयुक्तं कार्यं बहिरङ्गमिति तदाशयः। साधनशब्दस्य करणमात्रपरत्वभ्रमनिरासायाह। [कारकेणेति।]

कारकेण तत्प्रयुक्तकार्येण च। अत एवानुभूयत इत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिरिति, तन्न। क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य संबन्धौचित्यात्। अत एव सुट्कात्पूर्व इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गे-

---

तावताप्यर्थासिद्धेराह। [तत्प्रयुक्तकार्येणेति।] साधनबोधकप्रत्ययेनेत्यर्थः। [अत एवेति।] पूर्वं धातोरुपसर्गयोगादेवेत्यर्थः। [अनुभूयत इति।] सुखमिति शेषः। [कर्मणि लकारेति।] अन्यथा केवलभूधातोरकर्मकत्वात्तदसिद्धिरिति भावः। [क्रियाया इति। धातुत इति शेषः।] [साध्यत्वेन बोधादिति।] निष्पाद्यत्वरूपेण बोधादित्यर्थः। सिद्धान्ते तद्रूपेण बोधविषयताया एव क्रियास्वरूपत्वात्। उत्पाद्यमानत्वेनेति यावत्। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं यद्वैजात्यं तदेव साध्यत्वम्। तेन रूपेण प्रतीयमानत्वमेव क्रियात्वमिति तु प्राचां मतम्। [साध्यस्य चेति।] तत्त्वेन प्रतीतस्येत्यर्थः। [साधनाकाङ्क्षयेति।] साध्यसाधनयोर्मिथो निरूप्यनिरूपकभावापन्नत्वात्तयोर्नियतसाकाङ्क्षत्वमिति भावः। [तत्संबन्धोत्तरमेवेति।] साधनसंबन्धोत्तरमेवेत्यर्थः। एवेन तत्पूर्वव्यवच्छेदः। तत्संबन्धं विना तत्प्रतीतेरपर्यवसानादिति भावः। [निश्चितक्रियाबोधेनेति।] निश्चितसाध्यत्वकक्रियाबोधेनेत्यर्थः। [कार्यप्रवृत्युत्तरमेवेति।] अन्यथा साधनसंबन्धानवगतेर्निश्चितक्रियाऽबोधात्तद्योगनिमित्तकोपसर्गसंज्ञकशब्देन योगो वक्तुमशक्य इत्याशयः। [क्रियायोगेति।] स च क्रियाविशेषणीभूतार्थद्योतकत्वरूपः। तन्निमित्तकेत्यर्थः। [औचित्यादिति।] अन्यथा साध्यत्वानिश्चयात्क्रियात्वाप्रतीत्या तद्योगनिमित्तकोपसर्गसंज्ञकशब्देन योगोऽनुचित इति भावः। [अत एवेति।] पूर्वं धातुरुपसर्गेणेत्यस्यायुक्तत्वादेवेत्यर्थः।

# णेत्युक्त्वोक्तयुक्त्याऽस्यैव युक्तत्वमुक्तं, साधनं हि क्रियां निर्वर्तयतीत्यादिना भाष्ये। उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः।

---

[उक्तयुक्त्येति।] क्रियाया स्साध्यत्वेनेत्यादिप्रागुक्तयुक्त्येत्यर्थः। [तस्यैवेति।] द्वितीयमतस्यैवेत्यर्थः। [क्रियामिति।] तत्प्रतीतिमित्यर्थः। ननु निष्पत्तेः पूर्वमुपसर्गद्योत्यविशेषसंबन्धवत्तिङादिप्रतिपाद्यकर्त्रादिरूपकारकसंबन्धोऽपि दुर्वचः। नह्यनिष्पन्नेनार्थेन कस्य चित्सम्बन्धो भवतीति चेत्सत्यम्। क्रियाकारकयोर्निष्पाद्यनिष्पादकभावस्य निर्विवादतया कारकनिरूपितं निष्पाद्यत्वमेव क्रियायां सम्बन्धः। स चाश्रयत्वसम्बन्धावच्छिन्ननिष्पत्तिरेवेति न तस्य निष्पत्त्यन्तरसापेक्षत्वम्। अनवस्थाप्रसङ्गात्। उपसर्गबोध्यविशेषसम्बन्धो विशेषणविशेष्यभावः। स च वस्तुनिष्पत्त्यनन्तरभावी। नह्यनिष्पन्ने घटे रक्तोऽयं श्यामोऽयमिति व्यवहारः। तस्मात्क्रियारूपस्य वस्तुनो निष्पत्त्यनन्तरमेव विशेषसम्बन्ध इति तस्य निष्पत्तिसापेक्षत्वम्। तदुक्त "मभिनिर्वृत्तस्ये" ति भाष्यप्रतीकमुपादाय गतिर्गताविति सूत्रे कैयटे "सतोऽह्यर्थस्य विशेषणेन सम्बन्धो दृश्यते साधनायत्तं च क्रियायास्सत्त्वम्। ननु चासत् साधनेन वा कथं सम्बध्यत इति चेत्साधनेन तस्या उत्पाद एव सम्बन्धः। साधनादवाप्तजन्मा क्रिया उपसर्गेण विशेष्यत" इति। नन्वेवमुक्तप्रयोगे कथं कर्मणि लकारसिद्धिः। उपसर्गसम्बन्धमन्तरा केवलभूधातोः सकर्मकत्वाभावादित्यत आह। [उपसर्गद्योत्येति।] अनुभवादिरूपेत्यर्थः। [धातुनैवेति।] उपसर्गरहितेन केवलधातुनैवेत्यर्थः। [अर्थाभिधानादिति।] उपसर्गद्योत्यार्थविशिष्टार्थाभिधानादित्यर्थः। [उक्तेष्विति।] अनुभूयते सुखमित्यादिष्वित्यर्थः। [लकारादिसिद्धिरिति।] अयं भावः। उपसर्गाणां वाचकत्वे तदर्थसम्बधस्य तत्सम्बन्धं विना ज्ञातुमशक्यतया पूर्वं तत्सम्बन्ध आवश्यकः। तेषां तु न वाचकत्वम्। किंतु द्योतकत्वमेव। तच्च समभिव्याहृतधातुनिष्ठविशिष्टार्थविषयकशक्त्यभिव्यञ्जकत्वम्। तथा च धातूनामनेकार्थत्वात्तेषामेवोपसर्गद्योत्यार्थविशिष्टे शक्तिरिति विशिष्टैव क्रिया साधनेन साध्यते। न तु साधनादवाप्तरूपा सावन्यतो विशेषं लभते। तदुक्तम्, सुट्कात्पूर्व इति सूत्रे भाष्ये, "यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरीकृत्य धातुस्साधनेन

पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसंबन्धः॥ एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् सम् कृ तीत्यवस्थायां

---

युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुस्साधनेन युज्यते पश्चादुपसर्गेणेति। आस्यते गुरुरित्यकर्मकः। उपास्यते गुरुरिति केन सकर्मकस्स्यादि" ति। धातूपसर्गसमभिव्याहाराधीनत्वेन योऽर्थस्तवाभिमतस्तं विशिष्टार्थं केवलो धातुरेव स्वार्थं कृत्वा तस्य साध्यत्वेन बोधाय साधनेन युज्यते। पश्चा दुपसर्गसंज्ञकशब्देन। यस्तूपसर्गाणां वाचकत्वमभ्युपेत्य शब्दसम्बन्धवदर्थसम्बन्धोऽपि साधनसम्बधानन्तरमेवेति मन्यते तस्यास्यते उपास्यत इत्यनयो रुभयोरप्यकर्मकत्वात्कथमुक्तप्रयोगद्वयोपपत्तिरिति तदाशयः। एवं च धातोरुपसर्गसंज्ञकशब्देन पूर्वमसम्बन्धेऽपि तदर्थेन सह सम्बन्धस्य प्रागेव सत्त्वात्तं विशिष्टार्थमादाय धातोस्सकर्मकत्वात्कर्मणि लकारादिसिद्धिरिति। नन्वेवं धातुनैव विशिष्टार्थप्रतीतावुपसर्गाणामप्रयोग एव स्यादित्यत आह। [पश्चाच्छ्रोतृबोधायेति।] अन्यथा केवलात्ततोऽन्यत्राप्रतीयमानोऽर्थस्तैर्न बुध्येतेति भावः। तदुक्तं गतिर्गताविति सूत्रे कैयटे "विशिष्टैव क्रियासाधनेनोह्यते ततश्च प्रयोक्ता विशिष्टायाः क्रियायास्साधनेन सम्बन्धं प्रतिपादयितुं धातूपसर्गयोस्समुदायं प्रयुङ्क्ते" इति। एवं च पूर्वं धातुरुपसर्गेणेति भाष्ये उपसर्गेणेत्यस्य तद्द्योत्यार्थेनेत्यर्थः। पश्चादुपसर्गेणेत्यत्र उपसर्गेणेत्यस्य तत्संज्ञकशब्देनेत्यर्थ इति नानयोः पक्षयोर्विरोधः। एतेन तयोर्यथाश्रुतार्थपरत्वमभिप्रेत्य णेरध्ययने प्रत्यय इत्यादिनिर्देशैः क्वचित्साधनप्रयुक्तकार्यात्पूर्वमुपसर्गनिमित्तककार्यप्रवृत्तिं ज्ञापयित्वा, पूर्वं धातुस्साधनेनेत्यस्य तद्विषयत्वमपरस्य तदन्यविषयत्वमिति न विरोध इति दीक्षिताद्युक्तमपास्तम्। उक्तरीत्या तयोरेकवाक्यतयैव निर्वाहे ज्ञापकत्वाद्याश्रणस्यानौचित्यात्। ततश्च धातोः पूर्वमुपसर्गद्योत्यार्थेन सह सम्बन्धः। ततो वाचकप्रत्ययसमभिव्याहाराधीनस्साधनसम्बन्धः। तत उपसर्गसंज्ञकशब्देन सम्बन्ध इति क्रमात्तदनुरोधेन तत्प्रयुक्तकार्याणामन्तरङ्गबहिरङ्गभाव इति बोध्यम्। [एवं चेति।] सर्वतः पूर्वं धातोरुपसर्गद्योत्यार्थविशेषेण सम्बन्धे चेत्यर्थः। [अन्तरङ्गतरार्थकेति।] पूर्वं बुद्धिस्थत्वेनान्तरङ्गतरो योऽर्थस्तद्बोधकेत्यर्थः। सम्, कृ, इत्यवस्थायां सुडिति कैयटोक्तेरुक्तरीत्या अयुक्तत्वं ध्वनयितुमाह। [सम्, कृ, ति इत्यवस्थायामिति।] साधनसम्बन्धोत्तरमुपसर्गसंज्ञकशब्देन सह सम्बन्धे सतीति भावः।

द्वित्वादितः पूर्वं प्रवर्तते ततो द्वित्वादि॥ अत एव प्रणिदापयतीत्यादौ णत्वं यदागमा इति न्यायेन समाहितं भाष्ये॥ अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः॥ अन्यथान्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः। यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्ग-

---

[द्वित्वादित इति।] तस्य बाह्यसाधनकार्यप्रत्ययनिमित्तकत्वात्ततःपूर्वं सुट्प्रवर्तत इति भावः। किञ्च संपरिभ्यामुपसृष्टस्येत्यर्थेन ततःपूर्वमेव सुट्। संपरिभ्यामित्यस्य पञ्चम्यन्तत्वेऽपि ताभ्यां परत्वयोग्यस्येत्यर्थेन ततःपूर्वमेव सुडिति कात्पूर्वग्रहणं न कार्यमिति बोध्यम्। उक्तमर्थं प्रमाणयति। [अत एवेति।] पूर्वं धातोस्साधनेन योगादेवेत्यर्थः। [समाहितमिति।] पुगागमोत्तरं दामात्रस्यानर्थकत्वान्नेर्घुनिरूपितोपसर्गत्वाभावाण्णत्वं न स्यादित्याशङ्क्य यदागमन्यायेन पुगागमविशिष्टे घुत्वात्तस्य च क्रियावाचकत्वेन तन्निरूपितोपसर्गत्वस्य नौ सत्त्वाण्णत्वं सिध्यतीति समाहितमिति भावः। पूर्वमुपसर्गयोगे तु णिचःप्रागेव णत्वप्रवृत्त्या तदसङ्गतिरिति भावः। नच सपादसप्ताध्यायीस्थकार्यप्रवृत्तिसम्भावनायां त्रैपादिकस्यासिद्धतया पूर्वमुपसर्गयोगेऽपि कथं णत्वप्रवृत्तिरिति वाच्यम्। विरोधे सत्येव त्रैपादिकासिद्धत्वप्रवृत्त्या इह पुगूणत्वयोर्यौगपद्येन प्रवृत्तावप्यविरोधेन तदप्रवृत्तौ परत्वाण्णत्वप्रवृत्तेरित्याशयात्। एवं भाष्यसंमतेऽर्थे सूत्रसंमतिमपि दर्शयति। [अत एवेति।] [अन्तरङ्गत्वादिति।] पूर्वोपस्थितनिमित्तकत्वेन दीर्घस्यान्तरङ्गत्वमिति भावः। उक्तभाष्यानुरोधेन धातूपसर्गयोःकार्यमन्तरङ्गमित्यस्य विषयविशेषं व्यवस्थापयति। [यदुपसर्गेत्यदिना।] [उपसर्गार्थाश्रितमिति।] उपसर्गद्योत्यार्थविशेषाश्रितमित्यर्थः। तस्य तदर्थाश्रितत्वे हेतुमाह। [विशिष्टेति।] अर्थविशिष्टोपसर्गनिमित्तत्वादित्यर्थः। तथा च उपसर्गाणां स्वरूपनिर्देशेष्वर्थवद्ग्रहणपरिभाषया अर्थविशिष्टस्यैवोपसर्गस्य निमित्तत्वादर्थद्वारा तन्निमित्तककार्यस्य पूर्वमुपस्थितया तन्निमित्तकं कार्यमन्तरङ्गमित्ययं धातूपसर्गयोःकार्यमन्तरङ्गमित्यस्य विषयः। अस्ति च सुडागमस्यैवं विधमन्तरङ्गत्वम्। तद्विधौ संपरिभ्यामिति स्वरूपतस्तयो

निमित्तत्वात्तदन्तरङ्गम्। यत्तु न तथा, तत्र पूर्वगतसाधननिमित्तकमेवान्तरङ्गम्। अत एव न धात्विति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्ये उक्तम्। किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिरित्युपपदमतिङिति सूत्रे भाष्ये स्पष्टम्॥ भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः। अत एव णेरध्ययने इति निर्देशः संगच्छते। इदं च सामान्यापेक्षं ज्ञापकं

---

स्तदर्थस्य च निमित्तत्वेनोपादानात्। प्रत्यय इत्यादौ सवर्णदीर्घस्य न तादृशमन्तरङ्गत्वम्। तद्विधावुपसर्गस्य स्वरूपेणानुपादानात्। णत्वविधावप्युपसर्गात्परत्वं निमित्तम्। तच्च प्रयोगकाल एव संभवतीति न प्रणिदापयतीत्यादीनां णत्वमस्य विषय इति बोध्यम्। [यत्तु न तथेति।] उपसर्गीयवर्णसम्बन्धिकार्यमुपसर्गानाश्रितत्वेन सुतरां तदर्थानाश्रितमित्यर्थः। [तत्रेति।] तद्विषयइत्यर्थः। [पूर्वगतेति।] पूर्वसंम्बद्धेत्यर्थः। [साधननिमित्तकमेवेति।] साधनबोधकप्रत्ययनिमित्तकमेवेत्यर्थः। [अत एवेति।] धातूपसर्गयोरित्यस्योक्तविषयत्वादेवेत्यर्थः [भाष्ये उक्तमिति।] न धात्विति निषेधापेक्ष्या गुणो बहिरङ्ग इत्युक्तमित्यर्थः। सामान्यतो धातूपसर्गकार्यस्यान्तरङ्गत्वे तु तदसङ्गतिरिति भावः। तत्रैव दोषान्तरमाह। [किंचेति।] [समास इति।] सहेति योगविभागेन कुगतिप्रादय इत्यनेन वेति भावः। [ऐकस्वर्यादीति।] धातूपसर्गविशिष्टस्य समासप्रयुक्तैकस्वरत्वापत्तिरित्यर्थः। आदिना एकपदत्वसङ्ग्रहः। नन्वस्तूक्तरीत्या साधनबोधकप्रत्ययविषये तदुत्पत्त्यनन्तरमेवोपसर्गयोग इति। यत्र तु भावार्थक एव प्रत्ययो यथा व्यत्ययो विपर्यय इत्यादौ तत्रोपसर्गसमभिव्याहारप्रयुक्तो दोषस्तदवस्थ एवेत्यत आह। [भवार्थप्रत्ययस्यापीति।] [पूर्वमेवेति।] उपसर्गसंज्ञकशब्दयोगादिति शेषः। अत्र मानमाह। [अत एवेति।] नन्वेवमप्यस्य ज्ञापकस्य साजात्यात्कृन्मात्रविषयकत्वे भावतिङन्ते दोष एवेत्यत आह। [सामान्यापेक्षमिति।]

भावतिङो ऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि त्वतिङिति निषेधान्न तत्र दोषो यदि भावतिङ्युपसर्गयोगो ऽस्तीत्यलम् ॥

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्। यथा रुदादिभ्यः सार्वधातुक इत्यत्र रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः। एतेन यत्

---

[उत्पत्तेरिति।] अस्येष्टत्वादिति शेषः। [अन्यथेति।] तद्विषये पूर्वमुपसर्गयोग इत्यर्थः। [समासापत्तिरिति।] धातूपसर्गयोरिति शेषः। तथाचोक्तदोषापत्तिरिति भावः। [तिङित्विति।] पूर्वं भावतिङ उत्पत्तौ सत्यामित्यर्थः। [न तत्र दोष इति।] समासापत्तिरूपउक्तदोषो नेत्यर्थः। वस्तुतो ज्ञापकस्य विशेषापेक्षत्वेऽपि न दोषः। भावतिङ्युपसर्गयोगस्यैवाभावादित्याह। [यदीति।] अन्यदपि दीक्षितादयुक्तिं खण्डयति। [यत्त्विति।] [अधिकस्येति।] सामान्यधर्मापेक्षया अधिकस्येत्यर्थः। [सार्वधातुकत्वं चेति।] निमित्तमिति शेषः। [तत्रेति।] उक्तसूत्रे इत्यर्थः। [आवश्यकमिति।] तिङ्शित्सार्वधातुकमित्यनेन धातुविहितप्रत्ययसंज्ञकतिङामेव सार्वधातुकसंज्ञाविधानेन तयोस्तज्ज्ञानमावश्यकमिति भावः। [इति यासुडिति।] इति हेतोर्यासुडन्तरङ्ग इत्यर्थः। यासुटो धात्वधिकारीयतया धातुसामान्यापेक्षत्वादन्तरङ्गत्वम् इटस्तु सार्वधातुकाक्षिप्तधातुत्वरूपसामान्यधर्मावरुद्धरुदादित्वरूपविशेषधर्मसापेक्षत्वाद्बहिरङ्गत्वमिति भावः। तथा च सामान्यधर्मापेक्षशास्त्रापेक्षया विशेषधर्मापेक्षे यत्र शास्त्रे सामान्यधर्मापेक्षया अन्यःकश्चन विशेषधर्मोऽधिको निमित्तकोटौ प्रविशति तत्ततो बहिरङ्गम्। तथाविधं च सामान्यापेक्षमन्तरङ्गमिति तदाशयः। [एतेनेति।] सामान्यविशेषोभयापेक्षस्यैव विशेषापेक्षस्य बहिरङ्गत्वमित्यभिधानेनेत्यर्थः।

अनुदात्तङित इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयान्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वाद् बहिरङ्गाः स्यादय इति, तत्परास्तम्। विशेषापेक्षत्वे ऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्। परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति, तन्न। विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात्। भाष्य एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्य-

---

[तस्येति।] स्यादिविधेरित्यर्थः। [तत्त्वस्येति।] बहिरङ्गत्वस्येत्यर्थः। [दुरुपपादत्वादिति।] स्यादिविधौ निमित्तभूतयोर्लृलुटोर्लत्वरूपसामान्यधर्मस्य वस्तुतस्सत्वेऽपि इड्विधौ सार्वधातुकत्वज्ञा नाय प्रकृतेर्धातुत्वज्ञानस्येव तयोस्तत्त्वज्ञानाय तत्र लत्वज्ञानस्य सर्वथा अनपेक्षितत्वात्तस्य तत्र कथं चिदपि निमित्ततया अनुपादानान्न तस्य बहिरङ्गत्वमिति भावः। नन्वेवमनुदात्तङित इत्यादेस्तिबादिविध्येकवाक्यतया विधायकत्वमिति पक्षे स्यातस्योर्लावस्थायामेव प्रवृत्त्या तद्विषये ताभ्यां व्यवधानात्तिबाद्यसिद्धिः। तत्राधिकृतस्य धातोरित्यस्य विहितपञ्चम्यन्तत्वात्तत्समानाधिकरणस्यानुदात्तङित इत्यस्यापि विहितपञ्चमीत्वमिति पक्षे तत्सिद्धावपि पक्षान्तरे तदसिद्धिरत आह। [बहिरङ्गत्वाच्चेति।] तथा च स्याद्यपेक्षया अन्तरङ्गत्वात्तिबादिष्वनुदात्तङित इत्यादेःपरसप्तमीत्वेऽपि न दोष इति भावः। [अनुमानेनोपस्थितावपीति।] व्याप्येन धूमेन व्यापकस्य वह्नेरिवानुमानेनोप स्थितावपीत्यर्थः। [तस्येति।] सामान्यधर्मस्येत्यर्थः। [मानाभावेनेति।] शब्दादनुपस्थितस्य शब्दतो निमित्तत्वे मानाभावेनेत्यर्थः। [अनुपपादनादिति।] उभयत्राप्येकैकस्यैव निमित्तत्वेन समत्वादिति भावः। ननु सम्भवमात्रेण तस्य निमित्तत्वमङ्गीक्रियते। अन्यथा स्यादिति रूपासिद्धेरत आह। [भाष्य इति।] नन्वेवं कथं तद्रूपसिद्धिरिति चेन्न। यासुटो नित्यत्वेन प्रथमं प्रवृत्त्या तत्सिद्धेः। अङिटोस्तु यासुटि

नुल्लेखाच्च। यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्ते ऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिर्भाष्ये। द्विगोर्लुगनपत्ये इति लुग्विधानात्तद्धि-

---

कृतेऽपृक्तसार्वधातुकस्याभावेनाप्राप्त्या अनित्यत्वमिति बोध्यम्। ननु मतुप्सूत्रे भाष्येऽस्यार्थस्य स्पष्टतयोल्लेखेनायं हेतुरसिद्ध इति शङ्कानिरासाय तद्भाष्यमनूद्य दूषयति। [यत्त्वित्यादिना।] [आशङ्क्येति।] आशङ्कां कृत्वेत्यर्थः। किं तच्छङ्कायास्समासान्मतुप्प्राप्तिरित्याशयः, उत वाक्यात्। वाक्येऽपि प्रत्येकपदाभ्यां वा उत समुदायाद्वा तत्प्राप्तिरभिमतेति मनसि विकल्प्य सिद्धान्ती समाधत्ते। [प्रत्येकमिति।] प्रत्येकपदाभ्यामित्यर्थः। [असामर्थ्यादिति।] तयोः परस्परसापेक्षत्वेन प्रत्येकपदयोरसामर्थ्यमिति भावः। [समुदायादिति।] पञ्चन्, जस्, गो, जसिति पदसमुदायादित्यर्थः। [अप्रातिपदिकत्वादिति।] समासग्रहणकृतनियमेन वाक्यस्याप्रातिपदिकत्वादित्यर्थः। [समासेनोक्तत्वादिति।] एतदुत्तरं न मतुबिति शेषः। मतुबर्थसम्बन्धस्य समासेनोक्तत्वादुक्तार्थानामिति न्यायेन ततो न मतुबिति भावः। [उक्तेऽपि हीति।] हि, यत, उक्तेऽपि प्रत्ययार्थे यथा पाञ्चनापितिरित्यत्र द्विगोस्तद्धितो भवति एवमिहापि द्विगोर्मतुप् प्राप्नोतीति तदाशयः। पाञ्चनापितिरित्यत्र पञ्चानां नापितानामपत्यमित्यर्थे तद्धितार्थद्विगोरपत्ये इञि तस्यानपत्य इति निषेधान्न लुगिति बोध्यम्। यद्यपि सिद्धान्ते तद्धितार्थ इति विषयसप्तमी। तथा च तद्धितार्थे विषये समास इत्यर्थो न तु वाच्य इति। एवं चोक्तेऽपि हि प्रत्ययार्थ इत्यनुपपन्नम्। समासेन प्रत्ययार्थस्यानुक्तत्वात्। तथापि पूर्वपक्षी तस्य वाच्य इत्येवार्थं मन्यते। न तु विषय इति न दोषः। [लुग्विधानादिति।] लुग्विधानाज्ज्ञापकादित्यर्थः। अन्यथा उक्तार्थत्वा-

तार्थद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः। ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानो ऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेस्संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः। ततः सिद्धान्त्येकदेश्याह। अन्तरङ्गत्वाद् बहुव्रीहिः। कान्तरङ्गता। अन्यपदार्थे बहुव्रीहिर्विशिष्टे ऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धिते ऽस्तिग्रहणं क्रियत-

---

त्तद्धिताभावे तद्वैयर्थ्यं स्पष्टमेवेति भावः। [तत इति।] उक्तेऽपि हि प्रत्ययार्थ इत्याद्यनन्तरमित्यर्थः। [सावकाशद्विगोरिति।] तत्राप्रथमान्तत्वेन बहुव्रीह्यप्राप्तेर्द्विगोस्सावकाशत्वमिति भावः। [प्रकृते इति।] पञ्चगुरित्यादावित्यर्थः। [तमवकाशमिति।] द्वैमातुर इत्यादिरूपमुक्तमित्यर्थः। [पूर्वपक्षीति।] द्विगोरुक्तस्थलेषु सावकाशत्वसत्त्वेऽपि तदज्ञानेन प्रवृत्ततयाऽस्य तत्त्वमिति भावः। कैयटोक्तं तदाशयमाह। [अन्यपदार्थ इति।] तथाचापवादत्वादित्यस्य विशेषविहितत्वमात्रादित्यर्थ इति साव-काशत्वेऽपि न क्षतिः विशेषविहितत्वाद्बाधक इत्येव तदाशयादिति भावः। [सिद्धान्त्येकदेशीति।] अस्यान्तरङ्गत्वादित्यंशे एकदेश्युक्तित्वादन्यांशे अतत्वाच्च तदुक्तित्वमिति भावः। [अन्यपदार्थे इति।] तन्मात्र इत्यर्थः। [विशिष्टे इति।] विशेषणविशिष्ट इत्यर्थः। [तस्मिंश्चास्येति।] अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिंस्तद्धिते=तद्विधायके मतुप्सूत्रे अस्तिग्रहणं क्रियत इत्यर्थः।

इति। अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति। नैषा सिद्धान्त्युक्तिः। एतावताप्यपवादत्वाहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्। किञ्चोक्तरीत्या परत्वेनैव बाधसिद्धेः। किंचात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्। न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्। अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये। न चार्थ-

---

[अधिकेति।] बहुव्रीहिनिमित्तभूतान्यपदार्थापेक्षया अधिको योऽस्त्यर्थः तदपेक्षो यो मतुप् तदर्थनिमित्तक इत्यर्थः। अस्य बहुव्रीहिस्वीकर्तृत्वांशे सिद्धान्त्युक्तित्वेऽपि अन्यांशेऽतत्त्वादाह। [नैषेति।] [एतावतापीति।] अधिकार्थापेक्षत्वेन द्विगोर्बहिरङ्गत्वसत्त्वेऽपीत्यर्थः। अपवादत्वाहानौ हेतुमाह। [अच्सामान्येति।] [विशिष्टेति।] विशिष्टः अधिको यस्सवर्णः तत्पदार्थप्रवृत्तिनिमित्तं यत्सावर्ण्यं तद्विशिष्टो योऽच् तदपेक्षेत्यक्षरार्थः। सावर्ण्यविशिष्टाजपेक्ष इति यावत्। इदं चापवादत्वमभ्युपेत्य। वस्तुतस्तदेव नेत्याह। [किंचेति।] [उक्तरीत्येति।] द्वैमातुर इत्यादौ द्विगोस्सावकाशत्वस्योक्तत्वेनापवादत्वासंभवात्परत्वेनैव बहुव्रीहेर्द्विगुबाधकत्वसिद्धावन्तरङ्गत्वपर्यन्तानुधावनं विफलमेवेत्यन्तरङ्गत्वाद्बहुव्रीहिरित्येषा न सिद्धान्त्युक्तिरिति भावः। नन्वस्यैकदेश्युक्तित्वेपि विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यर्थस्यात्र सूचितत्वाद्भाष्ये क्वाप्यनुल्लेखादित्युक्तिरयुक्तैवेत्यत आह। [किञ्चात्रेति।] अत्र द्विगावित्यर्थः। [अधिकापेक्षत्वेनैवेति।] अधिकनिमित्तकत्वेनैवेत्यर्थः। [बहिरङ्गत्वमिति।] एतदुत्तरमभिमतमिति शेषः। [केवलविशेषेति।] अधिकापेक्षत्वशून्यकेवलविशेषेत्यर्थः। [अत एवेति।] केवलविशेषापेक्षत्वेन बहिरङ्गत्वस्य तत्रानभिमतत्वादेवेत्यर्थः। [नोक्तं भाष्ये इति।] अन्यथा तदप्युक्तं स्यात्। प्राथम्यात्तदेव वा उक्तं

कृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्। एकदेश्युक्तित्वेनादोषात्। अत एवास्तिग्रहणं नोपाध्यर्थं किं त्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम्। अत एव तदोः सः साविति सूत्रे ऽनन्त्ययोरिति चरितार्थम्। अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्ग-

---

स्यादिति भावः। [इद मिति।] इदमपीत्यर्थः। त्वदुक्तरीत्या योजनमपीति भावः। [अत एवेति।] अस्यैकदेश्युक्तित्वादेवेत्यर्थः। [नोपाध्यर्थमिति।] तदभावेऽपि शब्दशक्तिस्वभावाद्बहुव्रीहेरिव मतुपोऽप्यस्त्यर्थविषयतासंभवादिति भावः। [अस्तिशब्दादिति।] धनार्थकास्तिशब्दादित्यर्थः। अस्तिमानित्यत्रेति भावः। अस्तिसामानाधिकरण्ये मतुब्विधानेनास्तीत्यव्ययस्य सत्तावदर्थकतया सत्ताप्रतिपादनाय तत्समवधानेऽस्तिक्रियायाः फलाभावेन प्रयोगाप्रसक्त्या अस्तिसामानाधिकरण्यासंभवान्मतुपोऽप्राप्तिरतस्ततो मतुबर्थं सूत्रेऽस्तिग्रहणमित्याशयः। तदुक्तं भाष्ये। "अस्तिसामानाधिकरण्ये मतुब्विधीयते। नचास्तेरस्तिसामानाधिकरण्य" मिति। गवादीनां संभवव्यभिचाराभ्यामस्तिसामानाधिकरण्यं संभवति। अस्तेस्त्वव्यभिचारादस्तिसामानाधिकरण्यासंभव इति तदाशयं कैयट आह। [त्वदभिमतमिति।] सिद्धान्त्येकदेश्यभिमतमधिकापेक्षत्वरूपं बहिरङ्गत्वमपीत्यर्थः। उक्तरीत्या तयोस्समत्वादिति भावः। अपिरपवादत्वसमुच्चायकः। [सिद्धान्तिनेति।] सिद्धान्तित्वेन तवाभिमते नतदेकदेशिनेत्यर्थः। [एतदिति।] पञ्चगुरित्यादिरूपमित्यर्थः। वस्तुतस्तुनैषा सिद्धान्त्युक्तिः। द्वैमातुर इत्यादौ सावकाशद्विगोःपरत्वेनैव बहुव्रीहिणा बाधसिध्या तदर्थं वचनारम्भस्य निष्फलत्वात्। ईदृशान्तरङ्गत्वे सूत्रकारसंमतिमपि दर्शयति। [अत एवेति।] [अन्यथेति।] सामान्यापेक्षस्यान्तरङ्गत्वे इत्यर्थः। [प्रत्ययसामान्येति।] विभक्तिसामान्येत्यर्थः।

त्वादन्त्यस्यात्वे ऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ पादः पदिति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ॥

नन्वेवमसुस्नुवदित्यत्र लघूपधगुणादुवङो ऽल्पनिमि-

---

[तद्वैयर्थ्यमिति ।] स इत्यादावन्त्यदकारस्य सत्वव्यावृत्तये कृतमनन्त्यग्रहणं व्यर्थमेव स्यादित्यर्थः। एवं दीक्षिताद्यभिमतनिरुक्तान्तरङ्ग बहिरङ्गभावे सूत्रभाष्यासंमतिं प्रदर्श्यानुदात्तङित इति सूत्रस्थ-कैयटोक्तान्तरङ्गबहिरङ्गभावेऽपि भाष्यासंमतिं दर्शयति। [पादःपदिति ।] [एतदन्तरङ्गेति ।] लमात्रा-पेक्षत्वादित्यादिप्रागुक्तान्तरङ्गेत्यर्थः। [सूचित इति ।] तत्र हि निर्दिश्यमानपरिभाषाप्रयोजनकथनावसरे अरुदितामित्यादाविट्तामाद्योस्संप्रधारणायां परत्वादिटमाशङ्क्यान्तरङ्गत्वात्तामादय इत्युक्तम्। कैयटेन च प्राग्लादेशेभ्यो धात्वधिकारात्तेषामन्तरङ्गत्वमुपपादितम्। सामान्यविशेषोभयानपेक्षत्वेऽपि कैयटोक्त-दिशा केवलविशेषापेक्षत्वेनैव बहिरङ्गत्वाङ्गीकारेतु तामादीनां तसादिरूपविशेषापेक्षत्वेन तादृश बहिरङ्गत्वस्यैव सत्त्वादन्तरङ्गास्तामादय इति भाष्योक्तिरनुपपन्नैव स्यात्। तथाप्राग्लादेशेभ्यो धात्वधिकार इत्यङ्गीकारेऽपि तामादीनामन्तरङ्गताया वक्तुमशक्यतया कैयटोक्तिरप्यनुपपन्नैव स्यादतस्ताभ्यां तदभाव एव सूचित इत्याशयः। एतेन "केचित्तु प्रतिपदोक्तत्वेनैव तामादीनामन्तरङ्गत्वमिति भाष्याशयः। कैयटश्च प्राग्लादेशेभ्यो धात्वधिकारादनैमित्तिकत्वेनान्तरङ्गत्वमभिप्रैतीति युक्तमेव। आतृतीय-समाप्तेर्धात्वधिकारेऽपि यासुड्विधिघटकस्य परस्मैपदेष्विरयस्य विषयसप्तम्यन्ततया लावस्थायामेव यासुटि तद्व्यवधाने क्रियास्तामित्यादौ तामादीनां प्रवृत्तये धातोरित्यस्य विहितपञ्चम्यन्ततया परनिमित्तकत्वाभावस्य सुवचत्वात्। तस्मादुपदर्शितान्तरङ्गबहिरङ्गभावनिराकरणे नानयोर्भाष्यकैयटयोः प्रामाण्यसम्भव इत्याहु" रिति वाक्यार्थचन्द्रिकाकाराद्युक्तिरपास्ता। [एवमिति ।] प्रागुक्तज्ञापकद्वयेन जाततत्कालप्रातिकबहिरङ्गविषये परिभाषाया इवोक्तविधान्तरङ्गत्वादेरुक्तभाष्यादिप्रामाण्यादङ्गीकारे इत्यर्थः। [अल्पनिमित्तत्वाभावादिति।] उवङः अजादित्वं प्रत्ययत्वमुवर्णान्तत्वं धातुत्वं च निमित्तमिति निमित्तचतुष्टयापेक्ष उवङ्। गुणोऽपि लघ्वीमुपधामङ्गं सार्वधातुकं चाश्रयतीति न तदपेक्षया

त्त्वाभावादुवङ् न स्यादिति चेत्। न। तत्रान्तःकार्यत्व-रूपान्तरङ्गत्वसत्त्वात्। अन्तः कार्यत्वं च पूर्वोपस्थित-निमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात्॥ इदमन्त-रङ्गत्वं लोकन्यायसिद्धमिति मनुष्यो ऽयं प्रातरुत्थाय प्रथमं स्वशरीरकार्याणि करोति ततः सुहृदां ततः

---

उवङोऽल्पनिमित्तत्वमिति भावः। [अन्तःकार्यत्वमिति।] अन्तर्भूतनिमित्तककार्यत्वमित्यर्थः। [पूर्वोपस्थितनिमित्तकत्वमिति।] लौकिकप्रयोगीयोच्चारणक्रमेण पूर्वोपस्थितनिमित्तकत्वमित्यर्थः। ननु प्रक्रियाक्रमेण गुणनिमित्तस्य तिपःप्रथममुपस्थितत्वेन वक्ष्यमाणाचःपरस्मिन्निति सूत्रस्थभाष्येण तादृशान्तरङ्गताया एव लाभाच्च तस्यैवान्तरङ्गत्वं युक्तमिति चेन्न। लावस्थायामेव चङःप्रवृत्त्या तत्क्रमेणाप्युवङ्निमित्तस्यैव प्रथममुपस्थित्या अदोषात्। लादेशोत्तरं तत्प्रवृत्तावपि तत्प्रवृत्तेः प्राक्-लघूपधगुणस्य प्राप्तेरेवाभावेन तदानीं वस्तुतो लादेशस्य सत्त्वेऽपि तत्र तन्निमित्तत्वाज्ञानादुभयोरपि निमित्तयोर्युगपदेवोपस्थित्या पट्व्येत्यादाविवार्थक्रमेण प्रत्यासन्ननिमित्तकतायाःकस्मिन्नप्यभावाच्छ्रुत-क्रमानुरोधेन प्रत्यासन्ननिमित्तकस्य उवङोऽन्तरङ्गत्वात्प्रथमं प्रवृत्तेस्सुवचत्वात्। एवमेव रियतिधियतीत्यादावपि बोध्यम्।" सचङन्तस्यान्तरङ्गलक्षणत्वा "दिति किङिति चेति सूत्रस्थं भाष्यं चात्रार्थे मानं बोध्यम्। यद्यपि" यथैवचानुपूर्व्या अर्थानां प्रादुर्भावस्तथैव च शब्दानामपि तद्वत्कार्यैरपि भवितव्य "मित्यचःपरस्मिन्निति सूत्रस्थभाष्ये आर्थप्रत्यासत्तिरेव दर्शिता। तथापि तदसंभवे श्रौतप्रत्यासत्तेरप्यन्तरङ्गताप्रयोजकत्वं वक्तुं शक्यम्। लोकन्यायेन प्रत्यासन्नवर्तिन-एवान्तरङ्गताया लाभात्। सा चप्रत्यासत्तिस्सतिसम्भवे आर्थी ग्राह्या। असम्भवे तु श्रैत्यपीति विभावनीयम्। ईदृशान्तरङ्गत्वस्य न्यायसिद्धत्वं दर्शयति। [इदमिति।] पूर्वोपस्थितनिमित्त-कत्वरूपमन्तरङ्गत्वमित्यर्थः। [लोकन्यायसिद्धमितीति। अस्याचःपरस्मिन्निति सूत्रे भाष्ये स्पष्टमित्यनेनान्वयः। तमेव लोकन्यायं दर्शयति। [मनुष्योऽयमित्यादिना।] [स्वशरीरेति।] शरीरस्य सुखादिसाक्षात्कारायतनत्वात। [तत स्सुहृदामिति।] सौहार्दस्यासत्तिहेतुत्वात्।

संबन्धिनाम्। अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात्पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरङ्गतया ऽसिद्धत्वादित्यनेनाचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम्॥ तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्य तादृशे ऽन्तरङ्गे ऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊठ् सूत्रे कैयटे स्पष्टम्। अत एव वाय्वोरित्यादौ वलि लोपो यणः

---

[ततस्सम्बन्धिनामिति।] अवश्यकर्तव्यत्वादिति भावः। [शास्त्रकृत्कल्पित इति।] अनेन वस्तुतस्तस्यासत्त्वं सूचितम्। शब्दार्थसम्बन्धस्य नित्यत्वाद्युगपदेव सकलार्थप्रतीतेःक्रमाभिधानस्यासङ्गतत्वात्। किंतूपेयप्रतिपत्तये उपायभावेनासत्यमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्य शास्त्रवासनाकल्पितोऽयं प्रक्रियादशायां क्रमः। अर्थवदुद्देश्यकप्रातिपदिकसंज्ञोद्देश्यकङ्यायुद्देशेन शास्त्रे स्वादिविधानादिति भावः। [तत्क्रमेणैवेति।] बोधक्रमेणैवेत्यर्थः। [तद्बोधकेति।] तदर्थबोधकेत्यर्थः। [तत्क्रमेणैव तत्कार्याणीति।] येन क्रमेण शब्दोपस्थितिस्तेनैव क्रमेण तत्कार्याणीत्यर्थः। [पट्व्येत्यादाविति।] पदस्य विभज्यान्वाख्याने इति भावः। [पूर्वयणादेश इति।] तन्निमित्तस्येकारस्यार्थक्रमेण प्रथमं प्रादुर्भावात्तस्य प्रथममुपस्थितेरिति भावः। [तदपीति।] उपदर्शितलोकन्यायसिद्धं तदप्यन्तरङ्गत्वमित्यर्थः। [अत एवेति।] तत्र तस्य तदनियामकत्वादेवेत्यर्थः। अन्यथाऽन्तरङ्गवलि लोपदृष्ट्या बहिरङ्गयणादेशस्यासिद्धत्वादेव तद्वारणसंभवे तदसङ्गतिः स्पष्टैवेति भावः। नन्वेवमपि क्रमेणान्वाख्याने कथमत्रानया परिभाषया निर्वाहो भाष्याद्युक्तोऽत

स्थानिवत्त्वेन वारितो ऽचःपरस्मिन्नित्यत्र भाष्यकृता। क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम्॥ यत्त्वेवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति, तच्चिन्त्यम्। स्राजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतो-

---

आह। [क्रमेणेति।] [उक्तोदाहरणे इति।] पूत्व्येत्यादावित्यर्थः प्रादुद्रुवदित्यादौ तु लस्य तदादेशस्य वा प्रवृत्तिमन्तरा चङादीनां प्रवृत्तेरेवाभावेन तत्प्रवृत्त्युत्तरमुवङ्गुणयोरुभयोरपि प्राप्तिसत्त्वेन श्रुतक्रमानुरोधेनान्वाख्यानेऽप्युक्तरीत्यैवान्तरङ्गत्वमिति बोध्यम्। [पूर्वप्रवृत्तिकत्वमिति।] पूर्वयणादेशनिमित्तस्य पूर्वं स्थितत्वादन्यस्याभावाच्चासंदिग्धप्रथमप्रवृत्तिकत्वरूपमित्यर्थः। [बहिरङ्गस्यासिद्धत्वमपीति।] तत्र कर्तव्ये बहिरङ्गस्य परयणादेशस्यासिद्धत्वमपीत्यर्थः। [अप्राप्तिरूपमिति।] "यथैव चानुपूर्व्या अर्थानां प्रादुर्भावस्तथैव शब्दानामपि। तद्वत्कार्यैरपि भवितव्य" मित्यचःपरस्मिन्निति सूत्रस्थभाष्योक्तदिशा पूर्वयणादेशप्रवृत्त्यनन्तरमेव विभक्तेःप्रवृत्त्या तत्प्रवृत्तिकाले परयणादेशनिमित्तस्याभावात्तस्याप्राप्तिरूपमेवासिद्धत्वमिति भावः। एवंच तत्पक्षे तत्रान्तरङ्गपरिभाषाप्रवृत्तेरवसरः प्रसक्तिर्वा नेति सूचितम्। मनुष्योऽयमित्यादिलोकन्याये प्रातस्सद्धानोत्तर मवश्यकर्तव्यतया युगपत् क्रमेण वा उपस्थितेषु स्वीयसुहृत्संबन्धिकार्येष्वासत्तिवशेन पूर्वपूर्वं तत्तत्कार्याणां प्रवृत्तिदर्शनात्तन्न्यायसिद्धेनान्तरङ्गत्वेनाप्यन्तरङ्गप्रवृत्तिकाले कथंचिदप्युपस्थितस्यैव बहिरङ्गस्या सिद्धताया न्याय्यतया क्रमेणान्वाख्यानेऽन्तरङ्गप्रवृत्तिकाले बहिरङ्गस्य कथमप्यनुपस्थितत्वान्नैतत्परिभाषाविषयत्वमिति बोध्यम्। दीक्षितादिमतं खण्डयति। [यत्त्विति।] [एवं रीत्येति।] पूर्वश्रुतनिमित्तकमन्तरङ्गमित्येवं रीत्येत्यर्थः। [विन्मतोर्लुकीति।] विन्मतोर्लुगित्यनेन विनो लुकि सतीत्यर्थः। यद्वा आदिशब्देन गविष्ठइत्यादेः परिग्रहे विन्मतोरिति यथाश्रुतमेव। आद्ये विनोऽन्त्ये मतुपश्च लुकस्सत्वादिति बोध्यम्। [टिलोपस्येति।] लुगुत्तरं पुनः प्राप्तस्य टिलोपस्येत्यर्थः। अस्य वारणप्रयासस्येत्युत्तरेणान्वयः। ननु विषयभेदेन टिलोपस्य भिन्नत्वाद्येन नाप्राप्तिन्यायेन पूर्वटिलोपस्य लुका

लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यैका-जिति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फ-ल्यापत्तेः। त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्ध-त्वेनानायासतस्तद्वारणात्। भाष्ये ईदृशरीत्या बहिरङ्ग-सिद्धत्वस्य क्वाप्यनाश्रयणाच्च॥ परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च॥

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधि-केतीच एकाचोऽमिति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा

---

बाधेऽप्यपरबाधः कथमत आह। [जातिपक्षेति।] तत्पक्षेऽनपेक्षितविषयविशेषं टिलोपमात्रं तेन न्यायेन लुका बाध्यत इति भावः। ननु प्रकृत्यैकाजिति प्रकृतिभावेन पुनष्टिलोपस्याप्राप्त्या किमर्थमयं प्रयासोऽत आह। [प्रयोजनखण्डनावसर इति।] [भाष्यकृत् कृतस्येति।] प्रकृत्यैकाजिति सूत्रे इत्यर्थः। [त्वदुक्तरीत्येति।] पूर्वस्थानिकस्याप्यन्तरङ्गत्व इत्यर्थः। [अनायासत इति।] जातिपक्षेण वारणप्रयासमन्तरेणैवेत्यर्थः। [तद्वारणादिति।] पुनष्टिलोपवारणसंभवादित्यर्थः। ननूपेयप्रतिपत्त्यार्था उपाया अव्यवस्थिता इति हर्युक्तेरुपायस्योपायान्तरादूषकत्वान्नेदं भाष्यं तदसत्व-साधकमत आह। [भाष्ये ईदृशरीत्येति।] ननु भाष्ये क्वाप्यनाश्रयणेऽप्यप्रतिषेधादप्रतिषिद्धमनुमतमिति न्यायेन तदप्यस्त्वत आह। [परिभाषायामिति।] [निमित्तपरत्वादिति।] तथाच न हि कार्यीतिन्यायेन स्थानिनो निमित्तत्वाभावात् पूर्वस्थानिकस्यान्तरङ्गत्वमिति भावः। ननु द्विषंतप इत्यादावन्तरङ्गे अनुस्वारे कर्तव्ये खिदन्तोत्तरपदनिमित्तकस्य मुमो बहिरङ्गतया असिद्धत्वे अनुस्वारानापत्तिः। अत उत्तरपदाधिकारेऽस्याः परिभाषाया अप्रवृत्तिरिति इच एकाचोऽमिति सूत्रे भाष्ये उक्तम्। तथा च श्रियंमन्यं ब्राह्मणकुलमित्यादावप्यन्तरङ्गे ह्रस्वमोर्लुकि खिदन्तोत्तरपदनिमित्तकस्यैच एकाचोमिति सूत्रविहितस्यामोऽसिद्धत्वाभावे लुकि तदसिद्धिरत आह। [इयं चेति।] [पूर्वपक्ष्युक्तिरितीति।]

नादर्तव्या। परन्तप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः॥ नव्यमते ऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीये ऽन्तरङ्गे आभीयस्य बहिरङ्गस्य

---

पूर्वपक्षिण उक्तिरितीत्यर्थः। भाष्ये या उक्तिः सा पूर्वपक्षिण इति हेतोस्सा नादर्तव्येत्यन्वयः। तत्र हि भाष्ये "अथेह कथं भवितव्यम्, श्रियमात्मानं मन्यते ब्राह्मणकुलं श्रियंमन्यं ब्राह्मणकुलमिति। आहोस्वित् श्रिमन्यमितिविप्रतिपत्तौ, श्रियं मन्यमिति भवितव्यमिति सिद्धान्तिनोक्ते ततः पूर्वपक्षिणा स्वमोर्नपुंसका दिति लुक्कस्मान्न भवतीति शङ्किते सिद्धान्तिना नाप्राप्ते लुक्ययमारभ्यते, स यथैव सुपो धातुप्रातिपदिकयोरित्येतं लुकं बाधते, एवं स्वमोर्नपुंसकादित्येतमपि लुकं बाधेत इति बाध्यसामान्यचिन्तामाश्रित्य समाधाने कृतेऽपि पुनः पूर्वपक्षिणा बाध्यविशेषचिन्तामाश्रित्य येन नेति न्यायेन सुपो धात्विति लुक एवाम् प्रत्ययो बाधकस्स्यान्नतु स्वमोरित्यस्यापीति शङ्किते,ततस्सिद्धान्तिना तत्पक्षेऽपि "एवं तर्हि असिद्धं बहिरङ्गमन्तरङ्ग इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुङ् न भविष्यतीति समाहितम्। तदुत्तरं पूर्वपक्षिणा" नैषा परिभाषा उत्तरपदाधिकारे शक्या विज्ञातुम्। इह हि दोषस्स्यात्। द्विषंतपः परंतप इत्युक्तम्। कार्यकालपक्षेऽपि त्रैपादिकान्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्विसर्जनीयसूत्रस्थभाष्यतो लाभादनुस्वारदृष्ट्या मुमोऽसिद्धत्वाभावादनुस्वारस्य सिद्धतया उत्तरपदाधिकारेऽस्या अप्रवृत्तौ फलाभावान्नैषा सिद्धान्त्युक्तिरिति नादर्तव्येत्याशयः। तदेतद्ध्वनयन्नाह। [परंतप इत्यादाविति।] [तदप्रवृत्तेरिति।] पक्षद्वयेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेरित्यर्थः। प्राचीनमतेऽपि तस्य तदुक्तित्वमेवेत्याह। [नव्यमतेऽपीति।] दीक्षितादिमतेऽपीत्यर्थः। [अन्यथासिद्धेति।] यथोद्देशपक्षाश्रयणरूपप्रकारान्तरेण सिद्धेत्यर्थः। [तस्येति।] उक्तभाष्यस्येत्यर्थः। [तदुक्तित्वमिति।] पूर्वपक्ष्युक्तित्वमित्यर्थः। [आहुरिति।] भाष्यानुयायिन इत्यर्थः। नन्वेतत्परिभाषाभ्युपगमे पपुषः पश्येत्यादौ पदस्य विभज्यान्वाख्याने पपा, वस् असिति स्थिते नित्यत्वात्प्रतिपदविधित्वेनान्तरङ्गत्वाद्वा इटं बाधित्वा संप्रसारणेऽपि बहिरङ्गतया तस्यासिद्धत्वादातो लोप इटिचेत्याकारलोपानापत्तिरत आह। [आभीय इत्यादि।] [आभीयस्य बहिरङ्गस्येति।]

समानाश्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम्। एवं सिचि वृद्धेर्येन नाप्राप्तिन्यायेना-

---

अस्य नानेनासिद्धत्वमित्यनेनान्वयः। तत्र हेतुमाह। [समानाश्रयस्येति।] अन्तरङ्गस्येति शेषः। अस्य व्यवहितेनासिद्धत्वादित्यनेनान्वयः। [असिद्धत्वादिति।] आभीयबहिरङ्ग-परिभाषादृष्ट्या आभीयान्तरङ्गस्यासिद्धवदत्राभादित्यनेनासिद्धत्वादित्यर्थः। अयं भावः। अन्तरङ्गपरिभाषाया वाहऊठ् सूत्रस्थतया आभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्या त्रिपाद्या इवासिद्धवदित्यनेनासिद्धत्वात्तत्र तस्या अप्रवृत्तिः। परिभाषायाः स्वोपस्थापकसमानाश्रयत्वेनान्त-रङ्गशास्त्राश्रय एव परिभाषाया अप्याश्रय इति समानाश्रयत्वमप्यव्याहतम्। किंच परिभाषाया वाहऊठ्सूत्रस्थतया सत्समानाश्रयत्वस्यापि सत्त्वेन पपुष इत्यादौ बहिरङ्गसंप्रसारणसमानाश्रयत्वा-दन्तरङ्गबहिरङ्गदृष्ट्या परिभाषायाः परिभाषादृष्ट्या तयोश्चासिद्धवदित्यनेनासिद्धत्वान्न तत्र तस्याः परिभाषायाः प्रवृत्तिः। परिभाषाप्रवृत्तयेऽन्तरङ्गबहिरङ्गयोः परिभाषायाश्च विद्यमानत्वेन बुद्धिसन्नि-धेरपेक्षितत्वादिति। स्पष्टं चेदमसिद्धवदिति सूत्रे उद्योते। एतेन बहिरङ्गस्याभीयत्वविशेषणं समानाश्रयत्वविशेषणं च व्यर्थमिति विजयाकृदुक्तमपास्तम्। समानाश्रयस्येत्यस्य बहिरङ्गविशेषणत्वा-भावात्। आभीयत्वविशेषणे फलस्योक्तत्वाच्च। असिद्धवदित्यस्य प्रत्याख्यानेत्वनित्यत्वात्परि-भाषायाऽत्राप्रवृत्तिरिति बोध्यम्। [भाष्ये स्पष्टमिति।] तत्रहि वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यम्। किं प्रयोजनं पपुषः पश्य निन्युषः पश्य लुलुवुषः पश्य वसोस्संप्रसारणे कृते ऽचीत्याकारलोपादीनि यथा स्युः। किं पुनः कारणं न सिद्ध्यन्ति। बहिरङ्गलक्षणत्वाद-सिद्धत्वाच्चेत्युक्त्वा समानाश्रयवचनात्सिद्धम्। समानाश्रयमसिद्धं भवति। व्याश्रयं चैतत्। वसावाकारलोपादीनि वस्वन्तस्य विभक्तौ संप्रसारणमित्यनेनासिद्धत्वादिति द्वितीयहेतुं संखण्ड्य, ततस्तत्र भवेदसिद्धत्वं प्रत्युक्तं बहिरङ्गलक्षणं तु नैव प्रत्युक्तमित्याशङ्क्य नैष दोषः। बहिरङ्ग-मन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गम्। नचात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवधानमस्ति। इत्युक्तम्। अनेन च प्रागुक्तार्थः स्पष्ट इति बोध्यम्। प्रसङ्गादन्यमपि तदप्रवृत्तिविषयं दर्शयति। [एवमिति।] [सिचि वृद्धेरिति।]

न्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीतीको गुणेति सूत्रे भाष्ये स्पष्टम्॥ ५० ॥

नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्योठो ऽसिद्धत्वादन्त-

---

अस्यैकदेशे बाधकत्वेऽन्वयः। सिचि वृद्धेर्येन नाप्राप्तिन्यायेन यदन्तरङ्गबाधकत्वं तन्मूलकमित्यर्थः। एतेनात्र ज्ञापकत्वासम्भवस्तदनुपयोगश्च सूचितः। तथाहि अत्रार्थे ह्म्यन्तेति सूत्रे णिश्विग्रहणस्य ज्ञापकत्वमिको गुणेति सूत्रे भगवता प्रदर्शितम्। तद्धि "नोनयतिध्वनयत्येलयत्यर्दयतिभ्य" इत्यनेन छन्दसि च्लेश्चङ्निषेधे औनयीत् ऐलयीदित्यादौ अश्वयीदित्यत्र च सिचि वृद्धिरित्यनेन प्राप्ताया वृद्धेः प्रतिषेधार्थं कृतम्। यदि सिच्यन्तरङ्गमस्ति तदा अन्तरङ्गत्वाद्गुणेऽयादेशे च कृते यान्तत्वादेव वृद्धिनिषेधसिद्धौ तद्व्यर्थं स्यात्। अतः तदेवात्रार्थे ज्ञापकमिति तदाशयः। फलंत्वचिरायीत्। अजिरायीदित्यादीति च। परंत्वौनयीदश्वयीदित्यादावन्तरङ्गमपि गुणं बाधित्वा येन नेति न्यायेन सिचि वृद्धेः प्राप्तौ तन्निषेधाय णिश्विग्रहणस्य चरितार्थतया न तस्य ज्ञापकत्वसम्भवः। अचिरायीदित्यादावन्तरङ्गत्वाद्गुणे कृतेऽपि वार्णपरिभाषया अयादेशं बाधित्वा सिचि वृद्धौ रूपसिद्ध्या नापि तस्य प्रयोजनम्। भाष्ये तयोर्ज्ञापकत्वप्रतिपादनं तु एकदेशिनोरुक्तिप्रत्युक्तिपरमिति, बाधकत्वमूलकमिति वदतो ग्रन्थकृदाशयः। स्पष्टं चेद मुद्योते। [भाष्ये स्पष्टमिति।] तत्र हि वृद्धिग्रहणप्रयोजनविचारे सिचि वृद्धिरित्यत्रेक्परिभाषया इक इत्यस्योपस्थितौ तस्येग्लक्षणत्वसंपत्त्या न्यनुवीत् न्यधुवीदित्यादौ क्ङिति चेति गुणनिषेधस्सिध्यतीति फलमुक्त्वा "नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशोऽनन्त्यत्वाद्वृद्धिर्न भविष्यतीति तन्निराकृत्य यदि सिच्यन्तरङ्गं भवति, अकार्षीत् अहार्षीत्। गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न भविष्यतीत्युक्तम्। अत्र यदीत्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम्। तदुत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरित्युद्योते स्पष्टम्। ५०

अपवादत्वसंगत्या आह। [नन्वेवमिति।] अन्तरङ्गपरिभाषाया स्वीकारे इत्यर्थः। [इत्यादाविति।] आदिना अष्टादशोत्यस्य संग्रहः। तत्रोत्तरपदनिमित्तकस्यात्वास्यासिद्धत्वादन्तरङ्गस्सवर्णदीर्घो न स्यादिति भावः। [बहिरङ्गस्येति।] यण्निमित्ताजपेक्षया बहिर्भूतकिञ्चि-

रङ्गो यण् न स्यादत आह ॥

नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र षत्वतुकोरसिद्ध इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्। अन्यथाऽधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानासंभवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्ध-

---

मित्तकत्वेनोठो बहिरङ्गत्वमिति भावः। [तुग्ग्रहणं ज्ञापकमिति।] यद्यपि विप्रतिषेधसूत्रे भाष्ये एनामुपक्रम्य "आचार्यप्रवृत्तिर्ज्ञापयति। भवत्येषा परिभाषेति। यदयं षत्वतुकोरसिद्ध इत्याह।" इत्युक्तम्। तेन च संपूर्णसूत्रस्य ज्ञापकत्वं प्रतीयते। तथापि तत्र षत्वग्रहणं द्वन्द्वनिर्दिष्टत्वादेवोपात्तम्। न तु तस्य ज्ञापकत्वसंभवः वक्ष्यमाणयुक्तेरित्याशयेन षत्वग्रहणं विहाय तुग्ग्रहणस्यैव ज्ञापकत्वमुक्तमिति बोध्यम्। ज्ञापकत्वमुपपादयति। [अन्यथेति।] एतत्परिभाषानङ्गीकार इत्यर्थः। [अधीत्येत्यादाविति।] अधिपूर्वादिण्धातोः क्त्वाप्रत्यये, अधि, इ, त्वा इत्यवस्थायामित्यर्थः। [समासोत्तरं ल्यप्प्रवृत्त्येति।] ल्यपस्समासनिमित्तकत्वात्ततः पूर्वं ल्यपोऽप्राप्तेरिति भावः। [पूर्वं समासे जाते इति।] पूर्वपदसम्बन्धेन ल्यपः पूर्वं समासे इत्यर्थः। [तत्रेति।] समास इत्यर्थः। [नित्यतयेति।] "संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समास इत्यभियुक्तोक्त्येति भावः। [एकादेश इति।] संहितानिमित्तके सवर्णदीर्घे इत्यर्थः। [एकादेशस्य बहिरङ्गतयेति।] नन्वत्रैकादेशस्य धातूपसर्गकार्यत्वेनान्तरङ्गताया एव सत्त्वादिदमयुक्तमिति चेन्न। यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात्तदन्तरङ्गम्। यत्तु न तथा तत्र पूर्वगतसाधनकार्यमेवान्तरङ्गमिति ग्रन्थकृता प्रागुक्तत्वेन प्रकृते सवर्णदीर्घस्य विशिष्टोपसर्गनिमित्तकत्वाभावे-

त्वेन तद्वैयर्थ्यं स्पष्टमेव। पदद्वयसंबन्धिवर्णद्वयापेक्षं बाहिरङ्गमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन न धातुलोप इति सूत्रे संयोगान्तस्य लोप इति सूत्रे च भाष्ये स्पष्टम्। यत्तु षत्वग्रहणमपि ज्ञापकमन्यथा को ऽसिचदित्यादौ पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति।

---

नान्तरङ्गताया वक्तुमशक्यत्वात्। [तद्वैयर्थ्यमिति।] एकादेशस्य बहिरङ्गासिद्धत्वेनैव तुकस्सिद्धौ तत्र सूत्रे तुको ग्रहणं व्यर्थं सदस्या ज्ञापकम्। ज्ञापितायां त्वस्यामचोऽन्यानन्तर्यनिमित्तके तुक्येकादेशस्यानया असिद्धत्वनिषेधात्तुकोऽप्राप्तौ तुग्ग्रहणं तत्र चरितार्थमिति भावः। ननु समासप्रवृत्तये पूर्वपदसंबन्धविवक्षायां धातूपसर्गयोस्संहिताया नित्यतया समासात्प्राक् परत्वात्सवर्णदीर्घेणैव भाव्यतया कथमेकादेशात्प्राक् समासप्रवृत्तिः। नचान्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधत इत्यनेन ल्यपस्तत्प्रयोजकसमासस्य च प्राबल्यबोधनात्सवर्णदीर्घापेक्षया समासस्य पूर्वं प्रवृत्तिर्युज्यत एवेति वाच्यम्। धर्मिग्राहकसाजात्यात्तेन न्यायेनान्तरङ्गनिमित्तविनाशकल्यपस्तत्प्रयोजकसमासस्यैव च प्राबल्यबोधनात्प्रकृते ल्यपस्तन्निमित्तविनाशकत्वाभावेन तदप्रवृत्तेरिति चेन्न। पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेति निषेधेनैकादेशस्याप्रवृत्त्या पूर्वं समासप्रवृत्तेस्सुवचत्वात्। तत्र पूर्वपदत्वेनोत्तरपदत्वेन च निमित्तत्वमपेक्षितमित्यत्र तु मानाभाव इति भावः। किंच पूर्वमेकादेशप्रवृत्तावपि पूर्वान्तवद्भावेनैकादेशविशिष्टे गतित्वस्य, परादिवद्भावेन समर्थत्वस्य च सत्त्वेन समासप्रवृत्तिस्सुलभा। व्यपवर्गानपेक्षणेनोभयत आश्रयणेऽप्यन्तादिवद्भावो निर्बाध इति बोध्यम्। नन्वन्तरङ्गबहिरङ्गशब्दाभ्यां शब्दमर्यादया घटकनिमित्तकमन्तरङ्गं घटितनिमित्तकं बहिरङ्गमित्यर्थस्यैव लाभात्कथं तुग्दीर्घयोरन्तरङ्गबहिरङ्गभाव इत्यत आह। [पदद्वयसम्बन्धीति।] [भाष्ये स्पष्टमिति।] अनेन न केवलं घटितघटकनिमित्तकत्वेनैवान्तरङ्गबहिरङ्गभावः किन्त्वन्यादृशोऽपि

तन्न। इणः पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात्। एकादेशस्य परादित्वेनौसिचादित्यस्य पदत्वेन पदादित्वाभावान्न सात्पदाद्योरित्यनेन निषेधः। त्रैपादिके ऽन्तरङ्गे कार्यकालपक्षे

---

भाष्यप्रामाण्यात्स्वीकार्य इति सूचितम्। निरूपितं चैतत् प्राक्। तत्राद्ये किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणमार्धधातुकनिमित्ते धातुलोपे सति ये गुणवृद्धी प्राप्नुतस्ते न स्त इति। आहोस्विद्गुणवृद्धिविशेषणं धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न स्त इत्याशङ्क्य, तत्राद्य पक्षे उपेद्धः प्रेद्ध इत्यत्रार्धधातुकनिमित्तकधात्वंशलोपस्य सत्त्वेनानेन निषेधाद्गुणो न स्यादिति दोषं प्रदर्श्य बहिरङ्गो गुणः अन्तरङ्गः प्रतिषेधः असिद्धं बहिरङ्गमन्तरङ्ग इति स परिहृतः। एकपदापेक्षत्वेनान्तरङ्गे निषेधे कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्य गुणस्यासिद्धत्वान्निषेधाप्रवृत्तिरिति तदाशयः। अन्त्ये दध्यत्रेत्यत्र यस्य संयोगान्तलोपमाशङ्क्य, यणःप्रतिषेधो वाच्यो न वा बहिरङ्गलक्षणत्वादित्युक्तम्। एकपदाश्रितत्वेनान्तरङ्गसंयोगान्तलोपदृष्ट्या पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्य यणोऽसिद्धत्वान्न लोप इति तदाशयः। एतेनोक्तान्तरङ्गबहिरङ्गभावःस्पष्ट इति भावः। नन्वेवं कोऽसिचदित्यादावेकादेशस्यापि तथाविधत्वेन बहिरङ्गतया षत्वदृष्ट्या असिद्धत्वात् षत्वाप्रवृत्तौ षत्वग्रहणस्यापि व्यर्थतया तुम्ग्रहणस्यैव ज्ञापकत्वकथनमयुक्तमत आह। [यत्वित्यादिना।] [समत्वादिति।] पूर्वान्तवद्भावेनैकादेशविशिष्टस्य, एकदेशविकृतन्यायेन सिचादित्यस्य च पदत्वात् षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वं तुल्यमिति न तद्दृष्ट्या एकादेशस्यासिद्धत्वसंभव इति भावः। नन्वेवमपि पदस्यादिः पदादिरिति षष्ठीसमासे पदादादिः पदादिरितिपञ्चमीसमासे वा सात्पदाद्योरिति निषेधेनात्र षत्वाप्रवृत्तौ तत्र सूत्रे षत्वग्रहणं व्यर्थमेवेत्यत आह। [एकादेशस्य परादिवद्भावेनेति।] विनिगमनाविरहादिति भावः। ननु परादिवद्भावेनौसिचादित्यस्य पदत्वे इणः पूर्वपदसंबन्धित्वाभावेनोभयोस्तुल्यत्वाभावाद्युक्तमेवोक्तरीत्या तस्यापि ज्ञापकत्वमत आह। [त्रैपादिके इति।] [कार्यकालपक्षेऽपीति।] अपिः कैमुतिकन्यायेन यथोद्देशसमुच्चायकः। किंच प्रपूर्वादुपपूर्वाद्वा वसेः क्विपि वचि स्वपीत्यादिना

ऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च। परिभाषार्थस्त्वचोऽन्यानन्तर्यनिमित्तके ऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न। बहिष्पदेन

---

संप्रसारणे गुणे प्रोः उपोः, इत्यस्माद्भावे त्वप्रत्यये प्रोष्ट्वमुपोष्ट्वमित्यादौ ह्रस्वात्तादौ तद्धित इति षत्वसंपादनायासिद्धवचने षत्वग्रहणस्यावश्यकतया न ज्ञापकत्वसंभवः। तत्र षत्वस्याप्युभया-पेक्षत्वेनैकादेशापेक्षया अन्तरङ्गत्वं वक्तुमशक्यमिति बोध्यम्। यत्वेतत्परिभाषार्थनिरूपणपरे "अचोरानन्तर्यमाश्रित्य यत्र कार्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठत" इति कैयटग्रन्थे अचोरिति द्विवचनान्तसत्त्वेन परिभाषायामजानन्तर्य इत्यत्राचोरानन्तर्यमिति द्विवचनान्तेन समास इत्यभिप्रेत्य पूर्वपरिभाषास्थमन्तरङ्गपदमत्र संबध्य यत्रान्तरङ्गे अचोरानन्तर्यमाश्रितं तत्र बहिरङ्गपरिभाषा नोपतिष्ठत इत्यस्या अर्थमाहुः। तदयुक्तम्। तथा सति तुकोऽजूद्वयानन्तर्यनिमित्तकत्वाभावेन ज्ञापनोत्तरमपि तुग्ग्रहणस्य स्वांशे चारितार्थ्याभावात्तस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपर-विप्रतिषेधसूत्रस्थभाष्यासङ्गतेः। यदप्यन्तरङ्गबहिरङ्गशब्दावुभावप्यध्याहृत्य यत्रान्तरङ्गे, बहिरङ्गे उभयत्र वा, अचोरानन्तर्यमाश्रितं तत्र निषेध इत्याहुः। तदपि न। तथा सति पचावेदमित्यस्य बहिरङ्गपरिभाषोदाहरणत्वप्रतिपादनपरविप्रतिषेधसूत्रस्थभाष्यासङ्गतेः। प्रेद्ध इत्यत्रान्तरङ्गनिषेधदृष्ट्या बहिरङ्गगुणस्यासिद्धत्वप्रतिपादनपर न धातुलोप इति सूत्रस्थभाष्यविरोधापत्तेश्च। अतः प्रागुक्तकैयट-ग्रन्थे द्वित्वमविवक्षितम्। असिद्धं बहिरङ्गमन्तरङ्ग इत्युक्त्वा नाजानन्तर्य इति वक्ष्यामीतिभाष्योक्त्या तत्रत्यान्तरङ्गपदस्यैवात्र संबन्धो न्याय्यः। अजानन्तर्य इति सप्तम्यन्तार्थेऽन्वयानुरोधादित्याशयेन परिभाषार्थं निरूपयति। [परिभाषार्थस्त्विति।] परिभाषायामचः आनन्तर्यमजानन्तर्यमित्येक-वचनान्तेन समासः। अच इति संबन्धसामान्ये षष्ठी। न तु स्थानषष्ठी। ज्ञापकभूम्यनु-रोधात्। आनन्तर्य इत्यस्यानुवृत्तान्तरङ्ग इत्यनेनान्वयः। तथाचाज्निष्ठान्यानन्तर्यनिमित्तके-ऽन्तरङ्गे कर्तव्ये इति फलितोऽर्थः। ज्ञापकस्य सजातीयविषयत्वादाह। [जातस्येति।] परिशेषादाह। [बहिरङ्गस्येति।] बहिरङ्गत्वस्य सर्वथा निषेद्धुमशक्यत्वाद्बहिष्ट्वपदं तत्प्रयुक्ता-

बाहरिङ्गम्। तस्य भावो बहिष्ट्वम् बहिरङ्गत्वम्। तत्प्रयुक्ता-सिद्धत्वस्य न प्रक्लृप्तिः न प्राप्तिरिति। असिद्धं बहिरङ्ग-मन्तरङ्ग इत्युक्त्वा नाजानन्तर्य इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात्॥ तेन पचावेद-मित्यादौ न दोषः। अन्तरङ्गस्याच्स्थानिककार्यस्यैत्वस्या-न्यानन्तर्यनिमित्तकत्वाभावात्॥ जातस्य बहिरङ्गस्येत्यु-क्त्याऽयजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम्। अत एवेण्ङिशीनामाद्गुणः सवर्णदीर्घत्वा-

---

सिद्धत्वे उपचरितमित्याशयेनाह। [तत्प्रयुक्तासिद्धत्वस्येति।] नन्वन्तरङ्ग इत्यस्य लाभे त्वदुक्तार्थलाभः। स एव न। अक्षरमर्यादया तदप्रतीतेः। स्वेच्छया अर्थकल्पने तु किमिति प्रचीनोक्तार्थत्यागोऽत आह। [असिद्धमिति।] [इति भाष्योक्त्येति।] एवमानुपूर्वीकया भाष्योक्त्येत्यर्थः। [अनुवृत्तिसूचनादिति।] उक्त्वेति क्त्वान्तेनात्र तदानन्तर्यबोधनं भगवतस्त-त्रत्यान्तरङ्गपदस्यात्रानुवृत्तिसूचनार्यैवेति भावः। [तेनेति।] अन्तरङ्गपदानुवर्तनेनेत्यर्थः। [न दोष इति।] नानेनासिद्धत्वनिषेध इत्यर्थः। धर्मिग्राहकमानसिद्धस्य जातस्येत्यंशस्य फलमाह। [जातस्येति।] [इत्यादाविति।] आदिना प्रादुद्रुवदित्यस्य संग्रहः। [बहिरङ्गदीर्घगुणादेरिति।] अत्राद्ये दीर्घस्य पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनान्त्ये गुणस्य परस्थितनिमित्तकत्वेन च बहिरङ्गत्वं बोध्यम्। यद्यपि पदसंस्कारपक्षे अयजे इन्द्रमित्यादौ बहिरङ्गासिद्धत्वस्य नोपयोगः। धियतीत्यादौत्वियङ् विधाविवर्णोवर्णान्तधातोरेव प्राधान्येनोद्देश्यतया तस्याज्निष्ठान्यानन्तर्यनिमित्तककार्यत्वाभावान्निषेधा-विषयत्वेनासिद्धत्वसिद्धिरिति नेदमुभयमत्र जातस्येत्यंशस्य फलं भवति। तथापि पट्व्या मृद्व्येत्यादावचः परस्मिन्निति सूत्रभाष्योक्तं परयणादेशीयबहिरङ्गासिद्धत्वमस्यासाधारणं फलं बोध्यम्। धर्मिग्राहकमानसिद्धेऽत्रार्थे वार्तिकमपि प्रमाणयति। [अत एवेति।] अस्या

च्छचङन्तस्यान्तरङ्गलक्षणत्वादित्यादि संगच्छते। अत एवोमाङोश्चेत्याङ्ग्रहणं चरितार्थम्। तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे वृद्धिबाधनार्थम्। न चाक्षद्यू-

---

जातबहिरङ्गासिद्धत्वविषयकत्वादेवेत्यर्थः। अत्राद्यं विप्रतिषेधसूत्रस्थम्। अयज इन्द्रम्, वृक्ष इन्द्रम् त इन्द्रमित्यादौ सवर्णदीर्घं बाधित्वा क्रमेणेण्ङिशीनामाद्गुणस्यान्तरङ्गत्वापूर्वं प्रवृत्तिरन्तरङ्गं बलीय इत्यस्य प्रयोजनमिति तदर्थः। अन्त्यं क्ङिति चेति सूत्रस्थम्। उपधारोरवीत्यर्थं तत्र तन्निमित्तग्रहणे कृते सति शचङन्ते रियति प्रादुद्रुवदित्यादौ तिन्निमित्तकलघूपधगुणस्य ग्क्ङिन्निमित्तकत्वाभावान्निषेधानापत्तिरित्याशङ्क्येदमुक्तम्। अन्तरङ्गत्वादियङुवङोः कृतयोरनुपधात्वाद्गुणो न भविष्यतीति तन्निमित्तग्रहणे सत्यपि तत्र न दोष इति तदर्थः। [इत्यादिकमिति।] आदिपदेन नित्यः परयणादेशः परश्चासौ व्यवस्थया। युगपत्संभवो नास्ति बहिरङ्गेण सिध्यतीत्यचः परस्मिन्निति सूत्रस्थश्लोकवार्तिकसंग्रहः। उक्तार्थे सूत्रमपि प्रमाणयति। [अत एवेति।] [धातूपसर्गकार्यत्वेनेति।] धातुतः क्रियायास्साध्यत्वेन प्रतीत्या साध्यस्य च साधनाकाङ्क्षानैयत्येन तद्बोधकप्रत्ययस्य प्रथममुत्पत्तौ ततः स्वार्थद्योतकत्वेन साकाङ्क्षतया धातोरुपसर्गेण योगे पश्चाच्छिवशब्दस्य समुदायेन योग इति प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं गुणस्यात्र बोध्यम्। न तु धातूपसर्गकार्यत्वमात्रेण। गुणस्य विशिष्टोपसर्गनिमित्तकत्वाभावात्। [वृद्धिबाधनार्थमिति।] समकालप्राप्तबहिरङ्गविषयेऽप्यस्याः प्रवृत्तौत्वनेन निषेधाद्बहिरङ्गपरिभाषाया अप्रवृत्तौ परत्वात्सवर्णदीर्घे तत आद्गुणे शिवेहीति रूपसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। एवं च तत्रत्यमाङ्ग्रहणं यावता विना अनुपपत्तिरिति न्यायेनान्तरङ्गपरिभाषायास्समकालप्राप्तबहिरङ्गासिद्धत्वविषयकत्वमिवास्या जातबहिरङ्गासिद्धत्वविषयकत्वमपि ज्ञापयतीति बोध्यम्। अत्र विशेषं वक्तुं सर्वमतसाधारणं दोषमाशङ्कते। [नचेति।]

रित्यत्र यणि कृते ऊठो ऽसिद्धत्वाद्वलि लोपापत्तिरिति वाच्यम्। अचोऽन्यानन्तर्यनिमित्तकेन्तरङ्गे कर्तव्ये कृते च तस्मिन्यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये नासिद्धत्वमिति तदर्थात्। असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः॥ अत एव नलोपः सुपिति सूत्रे कृति तुग्ग्रहणं चरितार्थम्। अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्यान्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव।

---

[असिद्धत्वादिति।] लोपनिमित्तापेक्षया परस्थितनिमित्तकत्वेनोठो बहिरङ्गत्वादिति भावः। यणादेशस्य तु नानेनासिद्धत्वम्। उभयोस्तुल्यनिमित्तत्वेनान्तरङ्गबहिरङ्गभावस्याभावादिति बोध्यम्। कैयटादिमतरीत्या एतद्दोषं वारयति। [कृते च तस्मिन्निति।] न मुन इति वदिति भावः। [एतदर्थादिति।] एतत्परिभाषार्थादित्यर्थः। तदर्थादिति क्वचित्पाठः। आद्य पाठ एव तु स्वारसिकः। एतत्परिभाषाङ्गीकर्तृभिरेतद्दोषवारणायोक्तं खण्डयति। [असिद्धपरिभाषाया इति।] स्वमतेऽस्या अनावश्यकताया वक्ष्यमाणत्वात्। [अनित्यत्वेनेति।] अप्रवृत्त्येति शेषः। [तद्वारणेत्विति।] वलि लोपापत्तिवारणेत्वित्यर्थः। [तेनैव सिद्धेरिति।] अक्षद्यूरित्यत्र यणादेशानापत्तिरूपदोषवारणस्यापि तदनित्यत्वेनैव सिद्धेरित्यर्थः। वैयर्थ्यस्येष्टत्वनिराकरणाय मानान्तरेणाप्येनां द्रढयति। [अत एवेति।] परिभाषासत्त्वादेवेत्यर्थः। [अन्यथेति।] परिभाषानङ्गीकार इत्यर्थः। [बहिर्भूतेति।] तुङ्निमित्तभूतक्विबपेक्षया बहिस्स्थितेत्यर्थः। [बहिरङ्गतयेति।] यद्यपि नलोपविधौ भ्यामो न साक्षान्निमित्तत्वेनाश्रयणम्। किंतु पदत्वद्वारा। तथापि क्वचित्परंपरया निमित्तस्याप्यङ्गपदेन ग्रहणमिति भावः। [सिद्धे इति।] तुग्वारणे सिद्धे इत्यर्थः। [तद्वैयर्थ्यमिति।] कृति तुग्ग्रहणवैयर्थ्यमित्यर्थः। परिभाषाङ्गीकर्तृमते तत्सार्थक्यं दर्शयति।

मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः॥ न चैवं सति ह्रस्वस्य पितीति सूत्रस्थभाष्यविरोधः। तत्र हि ग्रामणिपुत्र इत्यत्रेको ह्रस्वो ऽङ्य इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। नाजानन्तर्य इत्यस्य सत्त्वे तत्र तदप्राप्तेरसंगतिः स्पष्टैवेति वाच्यम्। तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्॥ अत एवाचः परस्मिन्निति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्यानया ऽसिद्धत्वात्पूर्व-

---

[ममत्विति।] [तुकीति।] तद्विधायके ह्रस्वस्येति सूत्र इत्यर्थः। [अजानन्तर्यसत्त्वादिति।] अचोऽन्यानन्तर्याश्रयण सत्त्वादित्यर्थः। [न दोष इति।] एतत्परिभाषया बहिरङ्गासिद्धत्वनिषेधात्तद्वैयर्थ्यरूपो दोषो नेति भावः। अन्तरङ्गपरिभाषाया अनित्यत्वेन तत्सार्थक्यकथनं तु न युक्तम्। इष्टस्थलेऽप्यनित्यत्वेनाप्रवृत्तौ न्यायस्य निर्विषयत्वापत्तेः। स्वातन्त्र्येण परिभाषां प्रत्याख्यातुं शङ्कते। [नचैवमिति।] परिभाषाङ्गीकारे इत्यर्थः। [ग्रामणिपुत्र इत्यत्रेति।] ग्रामण्यः पुत्रो ग्रामणिपुत्र इति षष्ठीसमास इत्यर्थः। [तुकमाशङ्क्येति।] प्रत्ययलक्षणेन क्विपमाश्रित्येति भावः। [बहिरङ्गेति।] क्विबपेक्षया परस्थितोत्तरपदनिमित्तकत्वेन ह्रस्वस्य बहिरङ्गत्वमिति भावः। [तत्रेति।] ग्रामणिपुत्र इत्यत्रेत्यर्थः। [तदप्राप्तेरिति।] अनेन निषेधाद्बहिरङ्गासिद्धत्वाप्राप्तेरित्यर्थः। [अस्या इति।] नाजानन्तर्य इत्यस्या इत्यर्थः। ननूक्तफलानां ज्ञापकानां च सत्त्वात्कथमनावश्यकत्वमत आह। [एतज्ज्ञापकेनेति।] तुग्ग्रहणादिनेत्यर्थः। [अत एवेति।] अस्यानावश्यकत्वेनासत्त्वादेवेत्यर्थः। [अनयेति।] बहिरङ्गपरिभाषयेत्यर्थः।

यणादेशः साधितः। अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेष्वित्युक्तं संप्रसारणाच्चेति

---

[साधित इति।] अन्यथा अनेन निषेधात्तदप्रवृत्त्या तदसङ्गतिरिति भावः। ननु धर्मिग्राहकसाजात्यात्सूत्रवार्तिकादिप्रामाण्याच्चास्या जातबहिरङ्गविषयकतायाः प्रागुपदर्शितत्वाद्युगपत्प्राप्तिविषये पट्व्व्येत्यादावेतस्याः प्रसक्तेरेवाभावेन कथमिदं भाष्यं तदनावश्यकत्वसाधकमत आह। [अत एवेति।] उक्तएवार्थः। [पुनः क्वापीति।] विप्रतिषेधसूत्रातिरिक्ते क्वापि पुनर्नोल्लिखितेत्यर्थः। नन्वन्तरङ्गपरिभाषाश्रयणेऽक्षद्यूरित्यादौ प्रसक्तातिप्रसङ्गवारणाय विप्रतिषेधसूत्रेऽस्याः परिभाषायास्तज्ज्ञापकस्य च भगवता कण्ठत उक्तत्वेनान्यत्र पुनरनुल्लेखो नाऽसत्त्वसाधक इत्यत आह। [अत एवेति।] अस्या असत्त्वादेवेत्यर्थः। [उपक्रम्येति।] अस्येत्युक्तमित्यनेनान्वयः। संप्रसारणाच्चेति सूत्रे भाष्येऽन्तरङ्गपरिभाषामुपक्रम्य, इत्युक्तमिति योजना। किमित्युक्तमित्याकाङ्क्षायामाह। [विप्रतिषेधसूत्र इति।] एतदुत्तरमुपदर्शितानीति शेषः। तत्र हि भाष्ये, आङि पररूपवचनस्यान्तरङ्गबलीयस्त्वे ज्ञापकत्वं प्रतिपाद्य, विप्रतिषेधसूत्रसाध्यानि बहूनि प्रयोजनानि तस्य प्रतिपाद्य "नैतानि सन्ति प्रयोजनानि, विप्रतिषेधेनाप्येतानि सिद्धानीत्युक्त्वा, वृक्षा, अत्रेत्यादितदसाध्यमेकं फलं प्रदर्शितम्। वृक्ष, अस्, अत्रेत्यवस्थायां सकारस्य रुत्वे, पूर्वसवर्णदीर्घस्य, अतो रोरित्युत्वस्य च प्राप्तावन्तरङ्गत्वाद्दीर्घस्य प्रवृत्तिस्तत्फलमिति तदाशयः। पदसंस्काराश्रयणे तस्याप्यन्यथासिद्धिरित्याशयेन" नचावश्यमिदमेव प्रयोजनम्, आद्ये योगे बहूनि प्रयोजनानि सन्ति, तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेष्वित्युक्तम्। तत्राद्ये योगे इत्यस्य विप्रतिषेधसूत्रे, इत्यर्थमुद्योतकार आह। ततोऽन्यत्र भाष्ये क्वापि तत्प्रयोजनविचाराभावादिति बोध्यम्। ननु तावता कथमस्या असत्त्वलाभः। अन्तरङ्गपरिभाषाश्रयणे

सूत्रे भाष्ये, प्रतिविधानं च परिभाषाविषये ऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम्॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासा-

---

प्रसक्तदोषप्रतिविधानेष्वन्यतमत्वेनास्या अपि भगवता तत्र प्रतिपादितत्वादत आह। [प्रतिविधानं चेति।] [परिभाषाविषय इति।] अन्तरङ्गपरिभाषाविषय इत्यर्थः। [अनित्यत्वाश्रयणमेवेति।] एवेनान्यप्रतिविधाननिरासः। [ध्वनितमिति।] तत्र दोषशब्दस्य बहुवचनान्तत्वेन प्रतिविधेयमित्यस्यैकवचनान्तत्वेन च बहूनां दोषाणां परिभाषानित्यत्वरूपमेकमेव प्रतिविधानमिति भाष्यकाराशयः प्रतीयते। यद्येनां परिभाषां तत्सूत्रोक्तान्यन्यानि च प्रतिविधानानि भाष्यकारोऽभिप्रैष्यत्तदा दोषेषु प्रतिविधानान्यप्युक्तानीत्येवावक्ष्यत्। तथा अनुक्त्यावैकमेवानित्यत्वरूपं प्रतिविधानं सर्वेषामिति तदाशयः। अन्तरङ्गानपीत्यादयोऽपि तदपवादभूता अनावश्यका एव। तत्फलानामपि परिभाषानित्यत्वेनैव सिद्धेः। निखिलापि तज्ज्ञापकसामग्री अन्तरङ्गपरिभाषानित्यत्व एव प्रमाणम्। अनावश्यकत्वेऽपि तेषामुल्लेखः परिभाषाया अप्रवृत्तिविषयपरिज्ञानार्थः। अक्षद्यूरित्यादौ यलोपवारणमपि परिभाषानित्यत्वेनैवोपपद्यते। विप्रतिषेधसूत्रोक्तानि नाजानन्तर्य इत्यादीनि प्रतिविधानानि परिभाषाया अप्रवृत्तिविषयज्ञापनार्थमेकदेशिना प्रतिपादितानीत्युपाध्यायगूढाशयः। तदेतदभिसंधायोपसंहरति, अलमितीति दिक्। ५१

एवमन्तरङ्गपरिभाषाश्रयणे प्रसक्तदोषप्रतिविधायकत्वेन विप्रतिषेधसूत्रस्थभाष्योक्तां नाजानन्तर्यपरिभाषां निरूप्य तत्प्रतिविधायकत्वेन तत्र सूचितामन्यामपि परिभाषां निरूपयति। [नन्वेवमिति।] अन्तरङ्गपरिभाषास्वीकारे इत्यर्थः। [इत्यादाविति।] आदिना भाष्योक्तस्य गोमानिवाचरति गोमत्यते यवमत्यत इत्यादेस्सङ्ग्रहः। [पदद्वयनिमित्तकेति।] इदं च प्रकृताभिप्रायेण। गोमत्यत इत्यादौ तु वृत्तेः पदद्वयानपेक्षत्वेऽपि सुबन्तापेक्षत्वेन लोपस्य च तद्घटकपञ्चम्यन्तोपात्तहलन्तशब्दस्वरूपापेक्षत्वेन नुमादेस्तद्घटकसप्तम्यन्तोपात्तसर्वनामस्थानापेक्षत्वेन, च वृत्त्यपेक्षया तेषामन्तरङ्गत्वं बोध्यम्। [समासाश्रितत्वेनेति।] समासपदं वृत्तिमात्रोपलक्षणम्।

# श्रितत्वेन बहिरङ्गं लुकं बाधित्वान्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह ॥

---

वृत्तिप्रयोज्यत्वेनेत्यर्थः। [बहिरङ्गं लुकमिति।] क्वचित्परंपरया निमित्तस्याप्यङ्गपदेन ग्रहणात्तत्प्रयोज्यस्य लुकोऽपि बहिरङ्गत्वमिति भावः। [अन्तरङ्गत्वादिति।] समासघटकहलन्तशब्दस्वरूपनिमित्तकत्वेनान्तरङ्गत्वमिति भावः। [नुमादयस्स्युरिति।] प्रत्ययलक्षणेनेति भावः। ननु गोमत् स् प्रिय स् इत्यवस्थायां समासप्रवृत्तेः प्रागेव हल्ङ्यादिलोपप्राप्त्या तदानीं लुकोऽप्राप्त्या च तयोस्संप्रधारणा अनुपपन्ना। किं तु हल्ङ्यादिलोपसमासयोस्सा कर्तुं युक्तेति चेन्मैवम्। समासस्याप्यन्यपदार्थान्तर्भावेण वृत्तिकल्पनोत्तरमेव प्राप्त्या ततःपूर्वमेव हल्ङ्यादिलोपप्राप्त्या च तयोरपि यौगपद्याभावेन संप्रधारणानुपपत्तेस्तुल्यत्वात्। किंच तथा सति लोपापेक्षया समासस्य प्राबल्यं वाच्यम्। अथापि तदुत्तरं पुनर्हल्ङ्यादिलोपे नुमाद्यापत्तेर्दुर्वारतया लुकोऽपि बलवत्त्वमावश्यकमिति तयोरेव सा कृता। किं चान्ततो लुग्लोपयोरेव फलभेदसत्त्वेन तयोरेव संप्रधारणा युक्तेत्याशयेन च तथोक्तिः। अत एव विप्रतिषेधसूत्रे भाष्ये लोपापेक्षयैव लुको बलवत्त्वमुक्तम्। प्रत्ययोत्तरपदयोश्चेति सूत्रे च नुमाद्यपेक्षया लुको बलवत्त्वमुक्तम्। तद्विषय एव रूपभेदस्य सत्त्वात्तयोरेव सा युक्तेति तदाशयः। यद्यपि लोपाद्यपेक्षया लुको बलवत्त्वबोधनेऽपि समासस्य बलवत्त्वाबोधने ततः प्रागेवान्तरङ्गत्वात्तेषां प्रवृत्तावस्या वैयर्थ्यापत्त्या तत्प्रयोजकसमासस्यापि प्राबल्यबोधनमावश्यकमेव। अत एवाग्रे तत्प्रयोजकसमासादेरप्यनेन बलवत्त्वं बोध्यत इति ग्रन्थकृता वक्ष्यते। तथापि समासाविषये तत्कुलं, द्यः, श्व इत्यादौ लोपाद्यपेक्षया लुकोबलवत्त्वबोधनस्यावश्यकत्वेन तयोरेव संप्रधारणा कृतेत्यवधेयम्। अन्तरङ्गानपीत्यपिना तदपेक्षया दुर्बलस्य परस्यापि बाधनं कैमुत्यन्यायसिद्धम्। अत एव तत्कुलमित्यादौ परमपि त्यदाद्यत्वं बाधित्वा अनेन न्यायेन स्वमोरित्यनेन लुक् सिद्धिः। अत एव च द्यः श्व इत्यादौ परमपि हल्ङ्यादिलोपं बाधित्वा अव्ययादाप्सुप इति लुक्प्रवृत्तिः। अन्यथा प्रत्ययलक्षणेन सर्वनामस्थानपरत्वादत्वसन्तस्येति दीर्घापत्तिः। नन्वपिशब्दघटितपाठे तत्कुलमित्यादौ लुगर्थं कृतस्य "त्यदादिभ्यश्चेति वक्तव्य" मिति स्वमोर्नपुंसकादिति सूत्रस्थवार्तिकस्य वैयर्थ्यापत्तिः। अनेनैव न्यायेन परमपि त्यदाद्यत्वं

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥

अत्र च प्रत्ययोत्तरपदयोश्चेति सूत्रं ज्ञापकम्। त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन

---

बाधित्वा स्वमोर्नपुंसकादित्यनेन लुक्सिद्धेः। अपिशब्दाभावे तु लुकः परबाधकत्वस्यानेनाबोधनात्तत्कुलमित्यादौ स्वमोरिति लुकं बाधित्वा परत्वात्प्राप्तस्य त्यदाद्यत्वस्य बाधनाय तत्सार्थकमिति चेन्न। यदि पूर्वं लुक् न स्यात्तदा त्यदाद्यत्वेऽम्भावस्स्यादिति संभावनायास्सत्वेनापवादशास्त्रप्रवृत्तिसंभवनायां पूर्वमुत्सर्गशास्त्रं न प्रवर्तत इत्यर्थकेनोपसंजनिष्यमाणन्यायेन पूर्वं लुकोऽप्रवृत्त्या तच्चारितार्थ्यात्। किञ्च "केचित्तु अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्यत्रापिग्रहणान्नित्यानां परेषां च बाधनमिच्छन्तः त्यदाद्यत्वं लुका बाध्यत इत्याहुः। तथाचोच्यते" सर्वविधिभ्यो लुग्विधिर्बलीयानितीति" तत्रत्यकैयटग्रन्थेन "वचनं विनापीष्टसिद्धिं दर्शयति, केचित्त्विति, त्यदादिभ्यश्चेति वक्तव्यमिति भाष्ये काकुः। न वक्तव्यमित्यर्थः। हेतुस्तु प्रसिद्ध एव, अन्तरङ्गानपीतिन्यायरूप" इति तद्व्याख्यानपरोद्योतग्रन्थेन च तद्वार्तिकस्यानावश्यकत्वबोधनात्। अत एव प्रत्ययोत्तरपदयोश्चेति सूत्रे भाष्ये विप्रतिषेधसूत्रेऽन्यत्र च कैयटेऽपिशब्दघटित एव पाठ इति बोध्यम्। एतेन वस्तुतस्तु अन्तरङ्गानपीत्यपिशब्दघटितपाठो न कुत्रापि भाष्ये दृश्यते। केषांचिन्मतेनोपन्यस्तः कैयटेन। तथाच बहिरङ्गलुक एवानेन बलवत्त्वं बोध्यते। अत एव स्वमोर्नपुंसकात् त्यदादिभ्यश्चेति भाष्ये पठितमिति हैमवतीकारोक्तमपास्तम्। प्रत्ययोत्तरपदयोश्चेति सूत्रे भाष्ये एवापिशब्दघटितपाठस्य दृष्टत्वात्। नन्वनेन न्यायेन लुकः परादिबाधकत्वे भवतादित्यादौ परमपि तातङं बाधित्वा अतो हेरित्यनेन हेर्लुक्स्यादिति चेन्न। ज्ञापकसिद्धं न सर्वत्रेति न्यायेनास्य न्यायस्यानित्यत्वादप्रवृत्तिरित्यर्थस्य ग्रन्थकृता तत्रैवोक्तत्वात्। ज्ञापकत्वमाह। [अत्रचेति।] परिभाषायामित्यर्थः। तस्य तत्त्वमुपपादयति। [त्वत्कृतमित्यादाविति।] आदिना त्वया कृतस्त्वदीय इत्यादिसंग्रहः। [अन्तरङ्गत्वादिति।] उक्तरीत्येति भावः। [विभक्तिनिमित्तकेनेति।] सूत्रे एकवचनशब्दस्यार्थपरत्वेऽपि, त्वं डित्थः

त्वमावेकवचन इत्यनेन सिद्धे इदं व्यर्थं सत्तज्ज्ञापकम्। ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्, एवं तर्ह्यत्रत्यमपर्यंतग्रहणा

---

पुत्रो यस्येति त्रिपदबहुव्रीहौ युष्मद्‌डित्थपुत्र इत्यत्र त्वादेशवारणायाष्टन आविभक्ताविस्यतो विभक्ताविस्यनुवृत्तेरावश्यकत्वात्तस्य तन्निमित्तकत्वमिति भावः। अत एव भाष्ये "किमर्थमिद-मुच्यते न त्वमावेकवचन इत्येव सिद्धम्। न सिद्ध्यति। एकवचन इत्युच्यते, नचात्रैकवचनं पश्यामः।" इत्युक्तम्। सूत्रे एकवचनपदस्यार्थपरत्वेऽप्येकार्थयोर्युष्मदस्मदोर्विभक्तेरेकवचनस्यैव संभवेनानुवृत्तविभक्तिपदमेकवचनपरमिति तदाशयः। [इदमिति।] सूत्रमित्यर्थः। [तज्ज्ञापकमिति।] परिभाषाज्ञापकमित्यर्थः। ननूक्तस्थले तेन सिद्धावपि तद्बाधकानामेकवचननिमित्तकानामन्येषा-मादेशानां बाधनार्थं सूत्रस्यावश्यकत्वात्कथं ज्ञापकत्वमिति शङ्कते। [नन्विति।] [इत्यादाविति।] आदिना तुभ्यं हितं त्वद्धितम्। तवायं त्वदीय इत्यादिसंग्रहः। अग्रिमादिशब्देन तु तुभ्यादिपरिग्रहः। [बाधनार्थमिति।] ननु युष्मद्, स्, पुत्र स् इत्यवस्थायां समासात् प्रागलौकिके वाक्ये तवादीनां प्राप्त्या, प्रत्ययोत्तरपदयोरित्यस्य च विभक्त्या व्यवधानेनोत्तरपद-परत्वाभावादप्राप्त्या च कथं तद्बाधनार्थत्वं तस्य। नच विभक्तेरपि प्रत्ययत्वेन तामादायैव तत्र तत्प्राप्तिरिति वाच्यम्। उत्तरपदसाहचर्येण वृत्तिचरमावयवस्यैव प्रत्ययस्य ग्रहणेन विभक्तिमादाय तत्प्रवृत्तेरसंभवात्। अन्यथा त्वया मयेत्यादावपि तेनैव सिद्धे त्वमावेकवचन इत्यस्य वैयर्थ्यापत्तेरिति चेन्न। उपसंजनिष्यमाणन्यायेन प्रक्रियादशायामप्यस्य तव ममादिबाधकत्वसंभवात्। अस्ति ह्यत्र यदि तवममादिशास्त्रं न प्रवर्तेत तदा समासे सुब्लुकि प्रत्ययोत्तरपदयोश्चेति सूत्रं प्रवर्तेतेति संभावना। नच सामर्थ्यादेव तन्न्यायमाश्रित्य तवादिबाधकतायाः कल्पनीयतया ततो वरं तत्सामर्थ्येन परिभाषाकल्पनमेव। तथा सति न साक्षाच्छास्त्रबाध इति वाच्यम्। दधतीत्यादौ, अदभ्यस्तादित्यादिना तथा बाधस्य क्लृप्ततया तदाश्रयणेनैव सूत्रस्य चारितार्थ्यसंभवेऽक्लृप्त-परिभाषाकल्पनाया अन्याय्यत्वात्। नचास्य तवममादिबाधनमात्रफलकत्वे तवममौ ङस्यवृत्ता-वित्येव सिद्धेरिदं सूत्रं व्यर्थं सदस्यां ज्ञापकमिति वाच्यम्। तथा सति षष्ठ्या आक्रोश इत्यलुकि तवपुत्र इत्यादौ तवादेशानापत्तेरिति बोध्यम्। [अत्रत्येति।] प्रत्ययोत्तरपदयोरिति

नुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः॥

---

सूत्रस्थेत्यर्थः। [मपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति।] तदनुवृत्तिस्सामर्थ्यात्सूत्रस्यान्यार्थत्वमपि बोधयन्ती परंपरया परिभाषाज्ञापिकेत्यर्थः। तथाच तदनुवृत्तिसहितं संपूर्णसूत्रं ज्ञापकमिति यावत्। अयं भावः। यदि केवलं बाधकबाधनार्थमेवेदं सूत्रं स्यात्तदा अन्तरेणापि मपर्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशा अपवादा इति न्यायेन त्वत्पुत्र इत्यादौ मपर्यन्तस्यैव त्वमयोस्सिद्धतया तदनुवृत्तेः फलाभावेन तत्सामर्थ्यात्त्वत्कृतमित्याद्यर्थत्वमपि तस्य सूत्रस्यावश्यं वाच्यम्। तत्र च मपर्यन्तेऽन्तरङ्गत्वाल्लुकः पूर्वं विभक्तिनिमित्तकेन त्वमावेकवचन इत्यनेनैव त्वाद्यादेशसिद्धौ तदनुवृत्तिर्व्यर्था सती एतज्ज्ञापिका। ज्ञापनोत्तरं त्वेतद्विषये तवादीनामप्राप्त्याऽस्य तद्बाधकत्वासंभवेनोत्सर्गसमानदेशा इति न्यायस्याप्रवृत्त्या त्वत्पुत्र इत्यादौ त्वत्कृतमित्यादौ च मपर्यन्तस्यादेशविधानार्थं तदनुवृत्तिस्सूत्रं च सार्थकमिति। अत एवाग्रे ग्रन्थकृता तदनुवृत्तेस्त्वत्कृतमित्यादौ मपर्यन्तस्य त्वाद्यादेशविधानार्थत्वं प्रतिपाद्य तत्र च त्वमावेकवचने इत्यनेनैव सिद्धे तस्या वैयर्थ्यमुक्त्वा प्रकृतपरिभाषाज्ञापकत्वमभिहितम्। यदि केवलतदनुवृत्तेरेव ज्ञापकत्वमभिमतं स्यात्तदा, उत्सर्गसमानदेशा इति न्यायेनैव तद्वैयर्थ्यमाशङ्क्य तस्या ज्ञापकत्वं वदेत्। अत एवचानुपदं प्रत्ययग्रहणस्य युष्मदादिभ्य आचारक्विपि त्वाद्यादेशसंपादकतया साफल्यसत्त्वात्तस्य ज्ञापकता नोपपद्यत इत्याशङ्कां मनसि निधाय संपूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्येन तेभ्य आचारक्विपोऽनभिधानं वक्ष्यति। यदि केवलतदनुवृत्तेरेव ज्ञापकत्वं भाष्यकृदभिमतं स्यात्तदा तदसंगतिस्स्पष्टैव। किञ्च "नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्, किम्। ये चान्ये एकवचनादेशाः प्राप्नुवन्ति तदर्थमेतत्स्यात्। तद्यथा तव पुत्र स्त्वत्पुत्रो, मम पुत्रो मत्पुत्रः। यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति। यद्यत्रान्ये एकवचनादेशास्स्युर्मपर्यन्तग्रहणानुवृत्तिरनर्थिकास्यात्" इति यदिगर्भितेन स्यादिति स्युरिति च संभावनालिङ्घटितेन च तत्सूत्रस्थभाष्येण, यद्यत्रान्ये इत्यादि भाष्यव्याख्यावसरे "स्युरित्यस्य प्राप्नुयुरित्यर्थः। तद्बाधनार्थं चेदं स्यात्तदेति शेष" इति शेषपूरणेन व्याख्यानपरतत्रत्योद्योतग्रन्थेन च तदनुवृत्तिसहितसंपूर्णसूत्रस्यैव ज्ञापकत्वमित्यर्थस्स्वरसतः प्रतीयते। उद्योते चोऽवधारणे। निपातानामनेकार्थत्वात्। तद्बाधनार्थमेवेदं स्यादित्यर्थः। अनेन च यदि बाधकबाधनार्थमेवेदं स्यात्तदा, उत्सर्गसमानदेशा इति

युष्मदादिभ्य आचारक्विप् तु न, संपूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्। ह्रस्वनद्याप इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च। एवमेवैकार्थकाभ्यां प्रातिपदिकप्रकृतिकाणिचोऽप्यनभिधानं बोध्यम्। एतेन तत्रादेशार्थं प्रत्ययग्रहणं

---

न्यायेनैव मपर्यन्तस्यादेशे सिद्धे, तदनुवृत्तिर्व्यर्था स्यात्। तथा च तदनुवृत्तिरन्यार्थत्वमप्यस्य सूचयन्ती परंपरया परिभाषाज्ञापिकेति ध्वन्यत इत्यत्रेयम्। ननु युष्मदस्मच्छब्दाभ्यामाचारक्विपि विभक्तिपरत्वाभावेन त्वमावेकवचन इत्यस्याप्राप्त्या मपर्यन्तस्य प्रत्ययनिमित्तकयोस्त्वमयो र्विधानाय मपर्यन्तग्रहणानुवृत्तेः प्रत्ययग्रहणस्य च चारितार्थ्येन कथं तदनुवृत्तिसहितसंपूर्णसूत्रस्य ज्ञापकत्वमत आह। [युष्मदादिभ्य इति।] [संपूर्णसूत्रस्येति।] मपर्यन्तग्रहणानुवृत्तिसहितसंपूर्णसूत्रस्येत्यर्थः। न केवलं ताभ्यामेव, अपितु हलन्तप्रातिपदिकसामान्यादेव तस्यानभिधानमित्याह। [ह्रस्वनद्याप इतीति।] तत्रहि " अथास्य कस्मान्न भवतीत्यादिना कास्प्रत्ययादित्यनेन विहितस्यामो नुटमाशङ्क्य तत्राम अमन्त्र इति छेदेन तस्याकाररूपानुबन्धेन सानुबन्धकत्वादग्रहणमिति समाधाय " सतर्ह्येवमर्थमनुबन्धः कर्तव्यः। ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थमनुबन्धः कर्तव्यः। नार्थ इत्संज्ञापरित्राणार्थेन। इत्कार्याभावादित्संज्ञा न भविष्यति। इदमस्तीत्कार्यम्। मिदचोऽन्त्यात्पर इति। प्रत्ययान्तादयं विधीयते। तत्र नास्ति विशेषः। मिदचोऽन्त्यात्पर इति वा परत्वे, प्रत्ययःपरश्चेति वा " इत्युक्तम्। प्रत्ययान्तानां सर्वेषामजन्तत्वात्तत्र प्रत्ययपरत्वान्त्यादचः परत्वयोर्नास्ति विशेषः। यद्यपि सर्वप्रातिपदिकेभ्य इत्यनेन हलन्तप्रातिपदिकेभ्यः क्विपि हलन्ता अपि प्रत्ययान्तास्सन्ति। तथापि तदेकीयं मतम्। तन्मतेऽप्यस्मादेव भाष्यप्रामाण्यात् हलन्तेभ्य आचारक्विपोऽनभिधानमिति तदाशयं कैयट आह। अवगल्भादिष्वप्यकारान्तरप्रश्लेषेण तस्यैवानुबन्धत्वस्वीकारेण तेऽप्यजन्ता एवेति भावः। एवंचोक्तभाष्यकैयटाभ्यां हलन्तेभ्य आचारक्विपोऽनभिधानं स्पष्टमेवेति बोध्यम्। नन्वेवमपि युष्मदस्मच्छब्दाभ्यां प्रातिपदिकप्रकृतिके णिचि त्वाद्यादेशसंपादकतया प्रत्ययग्रहणस्य चारितार्थ्येन कथं तस्य ज्ञापकत्वमत आह। [एवमेकार्थकाभ्यामिति।] युष्मदस्मच्छब्दा-

भ्यामिति शेषः। नन्वेवं मपर्यन्तस्येति सूत्रे भाष्ये परिग्रहणप्रयोजनकथनावसरे युष्मदस्मच्छब्द-प्रकृतिकणिजन्तादाचारक्विपो भगवतोक्तत्वेन तद्विरोधापत्तिरिति चेन्न।" अवधिद्योतनार्थं परिग्रहणं कर्तव्यम्। मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशास्युः। क्व च मान्ते युष्मदस्मदी युष्मानाचष्टे, अस्मानाचष्टे इति णिचि युष्मयति अस्मयति। युष्मयतेरस्मयतेश्चाप्रत्यये " इत्युक्त्या तद्भाष्यस्य बह्वर्थविषयकतायाः स्पष्टतया तद्विरोधाभावात्। सावेकाचस्तृतीयाया इति सूत्रस्थभाष्येण चैकवचनान्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्तानामनभिधानं बोध्यम्। स्पष्टं चेदं तत्रैवोद्योते। यत्तु त्वमावेकवचन इत्यस्य विषयव्यवस्थापनाय प्रत्ययोत्तरपदयोरित्यत्र विभक्तिग्रहणानुवृत्त्या प्रत्यये उत्तरपदे च परतो या विभक्तिस्तस्यामित्येव तदर्थो वाच्यः। एवं च त्वत्पुत्र इत्यादावेतत्सूत्र-विधेययोस्त्वमयोर्निरवकाशत्वादलौकिके वाक्ये सुपो धातुप्रातिपदिकयोरित्यतःप्रागेव प्रवृत्तेर्विनैव प्रयासं भाष्यकारोपपादितत्वममादिबाधकत्वं स्वरसत उपपद्यते। एवं च प्रातिपदिकप्रकृतिके णिचि क्विपि वा प्रत्ययपरकविभक्तिपरत्वासंभवेन तन्निमित्तकयोस्त्वमयोरप्राप्त्या तथाविधे चारितार्थ्यस्य दुर्वचत्वादनभिधानाश्रयणं मूलकृतो दुराग्रहमूलकमेवेति वाक्यार्थचन्द्रिकाकृतः औत्तराहाश्च वदन्ति। तदयुक्तम्। तथासत्यनेन न्यायेन पूर्वं लुकि न लुमतेति निषेधेन प्रत्ययलक्षणाप्रवृत्तौ प्रत्ययोत्तरपदपरकविभक्तेरभावेन ज्ञापनोत्तरमपि सूत्रस्य स्वांशे चारितार्थ्यस्य दुर्निरूपतया ज्ञापकत्वानुपपत्तेः। यदि तु न लुमतेति निषेधस्यानित्यत्वादप्रवृत्त्या प्रत्ययलक्षणेन तत्संभव इत्युच्यते तदा त्वमावेकवचन इत्येव सिद्धे पुनस्तद्वैयर्थ्यं स्पष्टमेव। प्रत्ययोत्तरपदयोरिति सूत्रविषये तदनित्यत्वमन्यत्र तु नेति तु वक्तुमशक्यम्। मानाभावात्। अत एव वृत्तौ " पूर्वयोगो विभक्ताविव ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः " इत्युक्तम्। तेन चात्र विभक्तिग्रहणाननुवृत्तिस्स्पष्टं लभ्यत इति बोध्यम्। यत्तु कैयटादयः सूत्रस्य तव ममादिबाधनार्थत्वेऽपि न केवला मपर्यन्तानुवृत्तिरेतज्ज्ञापिका, उत्सर्गसमानदेशा अपवादा इति न्यायस्य श्नमकजादिषु व्यभिचारादपवादानां नियोगत उत्सर्गसमानदेशत्वालाभेन सर्वादेश-त्ववारणाय तदनुवृत्तेरावश्यकत्वात्। अतस्तव ममादय आदेशाः स्थानिप्रक्लृप्त्यर्थमिहानुवर्तन्ते। तथाच तवादीनां प्रसङ्गे त्वमौ भवत इत्यर्थेन मपर्यन्तस्यैव तयोस्सिद्धौ तदनुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति। ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्ति-र्ज्ञापनाय भवति। केवला हि तदनुवृत्तिर्लाघवाय स्यात्। गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः। ततो ज्ञापनाय न प्रभवेदित्याहुः। तदयुक्तम्। अतिगुरुत्वात्। ज्ञापितेऽपि

चरितार्थमित्यपास्तम्॥ ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। न चोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभिचारादिति चेत्। न। श्नमि मित्त्वेन बहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात्॥ अत एव तस्मिन्नणि चेत्यनेन युष्माकाद्यादेशविधानं चरितार्थम्, अन्यथा

---

तवाद्यनुवृत्तेस्सार्थक्यस्योपपादयितुमशक्यत्वाच्चेति ध्वनयन्नाह। [नन्विति।] [अनुवृत्तिरपीति।] अपिना सूत्रसमुच्चयः। यथा केवलं सूत्रं तवादिबाधनार्थत्वेन चरितार्थं तथा केवला तदनुवृत्तिरपि तवादीनां सर्वादेशत्ववारणाय चरितार्थेति कथं तस्यापि बाधकत्वमिति भावः। [असिद्धवत्सूत्रस्थभाष्यसंमतेनेति।] तत्रहि भाष्ये एधीत्यस्य तत्सूत्रप्रयोजनत्वखण्डनावसरे "उक्तमेत्वं लोपापवादो विज्ञास्यते। नच सकारस्य लोपःप्राप्नोतीत्युक्तम्।" उक्तन्यायानाश्रयणे एत्वस्य लोपस्थान्यकारस्थानिकत्वासंभवेन तदसङ्गतिरेवेति भावः। [तस्येति।] उत्सर्गसमानेति-न्यायस्येत्यर्थः। [आदाविति।] आदिना बहुचस्संग्रहः। [व्यभिचारादिति।] शबपवाद-भूतस्यापि श्नमो धातोःपरत्वेनाप्रवृत्त्या कापवादस्याप्यकचः कल्पबादेरपवादभूतस्यापि बहुचः प्रातिपदिकात्परत्वेनाप्रवृत्त्या च तन्न्यायस्य तत्र व्यभिचार इति भावः। [श्नमीति।] इयं बहुचीत्यादि च विषयसप्तमी। बाधेऽपीत्यनेनान्वयः। श्नमादिविषये मित्त्वेन तत्तद्विधिसूत्र-घटकपुरस्ताद्ग्रहणप्राक्टिग्रहणाभ्यां च तद्विषये तन्न्यायस्य बाधेऽपीत्यर्थः। [उत्सर्गस्येति।] असति बाधके सर्वत्र प्रमाणस्यौत्सर्गिकस्य तन्न्यायस्यात्र त्यागे मानाभाव इति भावः। [अत एवेति।] सर्वथा तदत्यागादेवेत्यर्थः। [अन्यथेति।] उक्तविषये व्यभिचारेण सर्वथा

ऽऽकङादेशमेव विदध्यात्। आकङि तवकाद्यादेशयोरेत दपवादयो रुक्तन्यायेनान्त्यादेशत्वापत्तिरतस्ताद्विधानमिद-मेव च तज्ज्ञापकम्। यद्यपि विरोधे बाधकत्वमिति वार्तिकमते ऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयट-रीत्या नायं नियमः। तथापि युष्माकाद्यादेशविधानज्ञापित

---

तदनङ्कारे इत्यर्थः। [विदध्यादिति।] अस्य ङित्वादन्त्यादेशत्वेऽपि तदपवादभूतयो-स्तवकममकादेशयोरनेकाल्त्वात्सर्वादेशत्वसिद्ध्या मात्रालाघवेनाकङमेव विदध्यादिति भावः। सत्यपि लाववे तदविधाने बीजमाह। [आकङीति।] क्रियमाण इति शेषः। [उक्तन्यायेनेति।] उत्सर्गसमानेति न्यायेनेत्यर्थः। [तद्विधानमिति।] युष्माकाद्यादेशविधानमित्यर्थः। [इदमेव चेति।] युष्मकाद्यादेशविधानमेवेत्यर्थः। [विरोधे बाधकत्वमिति।] सर्वथा असंभवरूपविरोधे सत्येव बाधकत्वमित्यर्थः। [अयं न्याय इति।] उत्सर्गसमानदेशा अपवादा इति न्याय इत्यर्थः। उत्सर्गापवादयोस्समानदेशत्व एव तादृशविरोधसम्भवेन तन्मते एव स न्याय इति भावः। [विनापि विरोधमिति।] अपिना विरोधसमुच्चयः। [सत्यपि संभव इति।] अपिना असंभव-समुच्चयः। [बाधकत्वमिच्छतीति।] विशेषविधानमात्रेणेति शेषः। तकन्यायमूलकेन येन नाप्राप्तिन्यायेनेति भावः। ननु विनापि विरोधं सत्यपि संभव इत्यपिशब्दाभ्यामसंभवरूपविरोधस्यापि बाधप्रयोजकताया उक्तत्वात्सर्वथा तन्न्यायाभावो ऽत्र मते दुर्वचोऽत आह। [नायं नियम इति।] सर्वथा उत्सर्गसमानदेशत्वमेवापवादानामिति नियमो नेत्यर्थः। एवं च तेनानिर्वाहान्मपर्यन्ता-नुवृत्तेस्सफलत्वेन कथं तस्या ज्ञापकत्वमिति भावः। [तथापीति।] तादृशनियमाभावेऽपीत्यर्थः।

उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद् भाष्यमपि तत्स्वीकारे मानम्॥ एवं च मपर्यन्तानुवृत्तिस्त्वतत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था। तत्र चान्तरङ्गत्वात्त्वमावित्येव सिद्धे व्यर्था सैतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवादेशार्थं सा चारितार्थेति तदाशयः॥

---

[उत्सर्ग इति।] उत्सर्गसमानदेशा इत्यौत्सर्गिको न्याय इत्यर्थः। [स्वीक्रियत एवेति।] अन्यथा तदादेशविधानस्य वैयर्थ्यापत्तेरिति भावः। [प्रकृते इति।] त्वाद्यादेशविषय इत्यर्थः। ननु यथोत्तरं मुनीनां प्रामाण्यादनियम एव युक्तो नोत्सर्गस्वीकार इत्यत आह। [एतद्भाष्यमपीति।] मपर्यन्तानुवृत्तेःप्रकृतपरिभाषाज्ञापकत्वप्रतिपादनपरं भाष्यमपीत्यर्थः। अपिना युष्माकाद्यादेशविधानसंग्रहः। एवं च द्वयोरसमत्वेनेष्टतो व्यवस्थया युष्माकाद्यादेशविधानसहकृतेनैतद्भाष्येण प्रकृते औत्सर्गिकस्य तादृशनियमस्याङ्गीकारात्तदनुवृत्तेर्ज्ञापकता सुस्थैवेति भावः। तदाह। [एवं चेति।] औत्सर्गिकस्यास्य न्यायस्याश्रयणे च मपर्यन्तानुवृत्तिमन्तरापि तवादिबाधनार्थस्यास्य सूत्रस्य मपर्यन्त एव प्रवृत्त्या त्वत्पुत्र इत्यादिरूपसिद्धावित्यर्थः। [आदेशविधानार्थेति।] अस्य वाच्येति शेषः। तदनुवृत्त्या तु न केवलं बाधकबाधनार्थत्वमेवास्य किंतु त्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्थत्वमपीति ज्ञायत इति भावः। [तत्र चेति।] त्वत्कृतमित्यादावित्यर्थः। [अन्तरङ्गत्वादिति।] उक्तरीत्यालुगपेक्षयेत्यादिः। [व्यर्था सेति।] मपर्यन्तानुवृत्तिर्व्यर्था सतीत्यर्थः। [एतज्ज्ञापिकेति।] परम्परया एतत्परिभाषाज्ञापिकेत्यर्थः। तदनुवृत्तिसहितं संपूर्णं सूत्रं ज्ञापकमिति भावः। कैयटोक्तरीत्या ज्ञापकत्वे ज्ञापितेप्यस्मिन् तवाद्यनुवृत्तेस्स्वांशे चारितार्थ्यं नेति सूचयन् स्वमते चारितार्थ्यं दर्शयति। [ज्ञापितेत्वस्मिन्निति।] [एतद्विषये इति।] प्रत्ययोत्तरपदयोरिति सूत्रविषय इत्यर्थः। [अप्राप्त्येति।] विभक्तिपरत्वाभावादिति भावः। [अभावेनेति।] असंभवेनेत्यर्थः। एतदुत्तरमुत्सर्गसमानदेशा इति न्यायाविषयत्वेनेति शेषः। [मपर्यन्तस्यैवेति।] एवकारेणाधिकव्यवच्छेदः। [चारितार्थेति।]

यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासंभवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तं, तन्न। अन्तरङ्गाणामप्यपवादबाधकत्वेन तद्विषये तदप्रवृत्तेः। वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव भाष्यरीत्या तु वाचानिक-

---

अन्यथा अनेकाल्त्वात्सर्वादेशत्वं स्यादिति भावः। हरदत्तोक्तं ज्ञापकत्वं खण्डयति। [यत्त्विति।] [अन्तरङ्गप्रवृत्ताविति।] एतन्न्यायानाश्रयणे लुकःपूर्वं क्वचिदन्तरङ्गयोस्त्वमयोः क्वचित्तवममयोश्च प्रवृत्तावित्यर्थः। [मपर्यन्तासम्भवेनेति।] पूर्वं मपर्यन्तस्य त्वाद्यादेशानां जातत्वादिति भावः। [अन्तरङ्गाणामपीति।] अपिर्नित्यादिसमुच्चायकः। [तद्विषय इति।] अपवादभूतप्रत्ययोत्तरपदयोरिति सूत्रविषय इत्यर्थः। [तदप्रवृत्तेरिति।] तवाद्यप्रवृत्तेरित्यर्थः। एवं च तत्र मपर्यन्तसम्भवेन तत्राधिकव्यवच्छेदाय तदनुवृत्तेस्सार्थकतया न तथा ज्ञपकत्वप्रतिपादनं युक्तमिति भावः। ननु यथा उत्सर्गसमानदेशा इति न्यायो वार्तिकमते तथा युष्माकाद्यादेशविधानमपि तद्रीत्यैवेति कथमौत्सर्गिकस्यापि तन्न्यायस्य भाष्यमते स्वीकारः। कथं वा तन्नये ज्ञापकत्वोपपत्तिरत आह। [वस्तुत इति।] [इदं ज्ञापकमिति।] भाष्योक्तं मपर्यन्तग्रहणानुवृत्तिरूपं ज्ञापकमिति भावः। [वार्तिकरीत्यैवेति।] असम्भव एव बाधकत्वमिति वार्तिकरीत्यैवेत्यर्थः। वार्तिककृता एकस्य कार्यिणः कार्यद्वययोगकृतासम्भव एव बाधकत्वमित्यङ्गीकारात्तन्मते उत्सर्गसमानेति न्यायस्य कथं चिदुपपत्त्या उक्तज्ञापकत्वसंभव इति भावः। [भाष्यरीत्या त्विति।] सत्यपि सम्भवे बाधनं भवतीति भाष्यनये इत्यर्थः। [वाचनिक एवेति।] तन्मते उत्सर्गेति न्यायस्याभावेनाधिकव्यवच्छेदाय तदनुवृत्तेरावश्यकत्वेन ज्ञापकत्वासम्भवादिति भावः। यद्यपि नाजानन्तर्य इति परिभाषाविषय इव प्रकृतेऽप्यन्तरङ्गविषयेऽन्तरङ्गपरिभाषानित्यत्वेनैव निर्वाहस्तथापि परनित्यादिबाधनार्थं वाचनिक्येषा आवश्यकीत्याशयः। यदि तु विप्रतिषेधे परमित्यत्रापरमिति च्छेदेन परं इष्टं कार्यमित्यर्थेन वा तद्विषयेऽपि लक्ष्यानुरोधेन लुकः पूर्वं प्रवृत्त्या इष्टसिद्धिरित्युच्यते तदा तत्सिद्धार्थानुवादक एवायं न्यायो नापूर्व इति बोध्यम्। तदेतध्वनयन्नाह। आहुरिति।

एवायमर्थ इत्याहुः ॥ इयं सुपो धात्विति लुग्विषयैवेति केचित्। एङ्ह्रस्वात्संबुद्धेः न यासयोरिति सूत्रस्थाकरप्रामाण्येन लुङ्मात्रविषया। आद्ये हे त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम्। अन्त्ये ऽन्तरङ्गांश्च विधीन् सर्वो ऽपि लुग्बाधते न तु सुब्लुगेव। अत एव सनीस्रंस इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्या-

---

[केचिदिति।] अस्य न्यायस्य लुङ्मात्रविषयकत्वे अनेन न्यायेन तद्ब्राह्मणकुलमित्यादौ त्यदाद्यत्वात्पूर्वं स्वमोर्नपुंसकादिति लुका इष्टसिद्धौ तत्र सूत्रे त्यदादिभ्यश्चेति वक्तव्यमिति वार्तिकासंगतिः। अत इयं सुपो धात्विति लुग्विषय एवेति तदाशयः। केचिदित्यनेन सूचितामरुचिं दर्शयति। [एङ्ह्रस्वादिति।] कैयटसंग्रहायाह। [आकरेति।] भाष्यकैयटेत्यर्थः। तदेतत्क्रमेणोपपादयति। [आद्ये इति।] एङ्ह्रस्वादिति सूत्रे इत्यर्थः। [भाष्ये उक्तमिति।] तत्रहि हेत्रपु, इत्यादौ संबुद्धिलोपलुकौ संप्रधार्य "अपृक्तसंबुद्धिलोपाभ्यां लुग्विप्रतिषेधेने" ति वार्तिकं "न वा लोपलुकोर्लुगवधारणाद्यथा अनडुह्यते" इति प्रत्याख्यातम्। कैयटेन च "अन्तरङ्गानपि विधीन्बाधमानो लुग्बलवानित्यतुल्यबलेन लोपेन स्पर्धां नार्हतीति विप्रतिषेधो नोपन्यसनीय" इत्युक्तम्। अपिना परनित्ययोस्संग्रहात्परनित्यान्तरङ्गबाधकत्वेनापवादतुल्यत्वात्तद्विषये विप्रतिषेधसूत्रादीनामप्राप्तिरिति तदाशयः। [अन्त्ये इति।] न यासयोरिति सूत्रे इत्यर्थः। [अन्तरङ्गांश्चेति।] अप्यर्थकेन चेन परनित्ययोस्संग्रहः। [अत एवेति।] न्यायस्य लुङ्मात्रविषयत्वादेवेत्यर्थः। [नलोपो नेति।] अन्यथा यङन्तादचि पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद्यङो ऽचि चेति लुकः पूर्वमनिदितामिति लोपस्स्यादिति भावः। [पञ्चभिरिति।] अत एवेत्यस्यात्रापि संबन्धः।

दावेकादेशात्प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्। एतद्विरोधाद्यत्तद्राजस्येति सूत्रे कैयटेनेक्तमङ्गानतिक्रान्तो ऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात्तद्राजस्येति लुग्न स्यादिति शङ्कापरभाष्यव्याख्यावसरे अन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवा-

---

[एकादेशेति।] टापा सहैकादेशे इत्यर्थः। [लुगिति।] लुक्तद्धितलुकीति लुक्च भवतीत्यर्थः। तत्रहि भाष्ये "त्यकनःप्रतिषेध" इति वार्तिकखण्डनाय "मृदस्तिकनिती" त्वनिर्देशस्य ज्ञापकत्वमुक्त्वा तत्खण्डनाय पञ्चमृत्तिक इत्यादौ क्रीतार्थस्य ठकोऽध्यर्धेति लुकि लुक्तद्धितलुकीति टापो लुकि निमित्ताभावादित्वाप्राप्तावित्वनिर्देशस्य सफलतया न तस्य ज्ञापकत्वसंभव इत्युक्तव। तदुपपादनायान्तरङ्गांश्च विधीन् सर्वोऽपि लुग् बाधत इत्युक्तम्। नन्वेवं कैयटग्रन्थयोः पूर्वापरविरोध इत्याशङ्क्याह। [एतद्विरोधादिति।] उक्तभाष्यकैयटद्वयविरोधादित्यर्थः। [कैयटेनोक्तमिति।] अस्य वक्ष्यमाणेन बोध्यत इतीत्यनेनान्वयः। [भाष्यव्याख्यावसर इति।] तद्राजस्येति सूत्रस्य बहुवचने परतो यस्तद्राजस्तस्य लुगित्यर्थे पदावधिके ऽन्वाख्यानेऽङ्गानतिक्रान्तो-ऽत्यङ्ग इत्यत्र अति अङ्ग अण् शसित्यवस्थायां तद्राजलुकं बाधित्वा परत्वात्सामासिके लुकि नलुमतेति निषेधेन प्रत्ययलक्षणाप्राप्त्या बहुवचनपरत्वाभावाल्लुङ् नस्यादतो "बहुत्वे लुग्वक्तव्यः" "बहुवचन इत्युच्यते नचात्र बहुवचनं पश्यामः" इत्यादि भाष्यव्याख्यावसरे नचात्रेति भाष्यप्रतीकमुपादाय "अन्तरङ्गानपि विधीन्सुपोधातुप्रातिपदिकयोरित्ययं लुक् प्रत्ययोत्तर-पदयोश्चेति ज्ञापकादस्यैवात्र संभवाद्बाधत इति भाव इति तदाशयं कैयट आह। अस्यैवात्र सम्भवा-दित्यस्य प्रत्ययोत्तरपदयोरित्येतद्विषये सुब्लुक एव सम्भवाद्धर्मिग्राहकसाजात्या त्तस्यैव बलीयस्त्वं युक्तम्। नान्यलुकः। अत स्सुब्लुगपेक्षया तद्राजलुको बलवत्त्वं वक्तुमशक्यमिति तदाशयः। [अयं लुगिति।] तद्राजस्येति लुगित्यर्थः। [इत्याशङ्क्येति।] इत्याशङ्कां मनसि निधायेत्यर्थः।

नेन बलवत्त्वं बोध्यत इति तत्प्रौढ्येति द्रष्टव्यम्। लुगपेक्षया लुको बलवत्वस्य वक्तुमशक्यत्वादिति तदा शङ्कासमाधानं वक्तुं युक्तम्॥ अनेन न्यायेनान्तरङ्ग-

---

[तत्प्रौढ्येति।] यत्कैयटेनोक्तं तत्प्रौढिवादेनेत्यर्थः। तस्य प्रौढिवादत्वे हेतु माह। [लुगपेक्षयेति।] [अशक्यत्वादिति।] प्रागुक्ततद्राजसूत्रस्थभाष्यप्रामाण्याद्धर्मिग्राहकसाजात्याच्च लुगतिरिक्त-कार्यान्तरापेक्षयैव लुको बलवत्त्वं वक्तुं शक्यम्। न तु लुगपेक्षया लुक इति भावः। [तदाशङ्कासमाधानमिति।] स्वोत्प्रेक्षितशङ्कासमाधानमित्यर्थः। [युक्तमिति।] स्वपूर्वापरग्रन्थ-संदर्भेण भाष्यप्रामाण्येन च तथैव वक्तुं युक्तं नतु सुब्लुक एवेत्येवं रीत्येत्यर्थः। ननु सत्यामस्यां परिभाषायां सर्वस्तोम इत्यादिबहुव्रीहौ सर्वस्य सुपीत्याद्युदात्तं बाधित्वा अनेन न्यायेन सामासिके लुकि ततः परत्वाद्बहुव्रीहिप्रयुक्ते पूर्वपदप्रकृतिस्वरे सर्वशब्दस्य स्वत उञ्छादित्वेनान्तोदात्तत्वा-दन्तोदात्तपूर्वपदकत्वापत्तिः। इष्यते तु तत्राद्युदात्तपूर्वपदकत्वमत आह। [अनेन न्यायेनेति।] [अन्तरङ्गनिमित्तविनाशकलुक एवेति।] अत्रेदृशनियमाङ्गीकारे तु सौवरीणां सप्तमीनां तदन्त-सप्तमीत्वात्कृतेऽपि लुकि प्रत्ययलक्षणेन सुबन्तसर्वशब्दत्वस्य सत्त्वेन स्वरप्राप्त्या लुक स्तन्निमित्त-विनाशकत्वाभावेन न तदपेक्षया लुको बलवत्त्वमनया बोध्यते। ततश्च सामासिकलुकः पूर्वं सर्वस्य सुपीत्याद्युदात्तत्वे तत स्समासे लुकि च कृते तदुत्तरं बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरेणाद्युदात्तपूर्वपदकत्वसिद्धिरिति भावः। यदित्वत्रेदृशसंकोचानङ्गीकारेऽपि न दोषः। अनेन न्यायेन समासे लुकि च सति परमपि बहुव्रीहिस्वरं बाधित्वा प्रतिपदविधित्वेनान्तरङ्गत्वात्स-र्वस्य सुपीत्याद्युदात्तत्वे ततो बहुव्रीहिस्वरेणाद्युदात्तपूर्वपदकत्वसिद्धेरित्युच्यते, तदा अर्गृहीत्यादि-सिद्धिरेतत्फलं बोध्यम्। तत्रह्यनेन न्यायेन लघूपधगुणात्पूर्वमुतश्चेति हेर्लुकि तन्न सिध्येत्। निरुक्तरीत्या संकोचकरणे तु लुकोऽन्तरङ्गगुणनिमित्तविनाशकत्वाभावात्तन्न्यायाऽप्रवृत्तावन्तरङ्गे गुणे ततस्संयोगपूर्वत्वान्न हेर्लुगिति तत्सिद्धिरित्यवधेयम्। ननु गोमत्प्रिय इत्यादौ नुमपेक्षया सामासिकलुकः प्रकृतपरिभाषया प्राबल्यबोधनेऽपि समासस्य तदभावात्तदपेक्षया ऽन्तरङ्गत्वात्पूर्वं

निमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः॥ ५२ ॥

नन्वेवं सौमेन्द्रे ऽन्तरङ्गत्वाद्गुणे पूर्वपदात्परेन्द्रशब्दाभावेन नेन्द्रस्य परस्येति वृद्धिनिषेधो व्यर्थः। अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः। किं च

---

हल्ङ्याब्दिलोपे नुमाद्यापत्तिर्दुर्वारेवेत्यत आह। [तत्प्रयोजकसमासादीनां चेति।] आदिना वृत्तिमात्रपरिग्रहः। अत एव गोमानिवाचरति गोमत्यत इत्यादौ नुमाद्यपेक्षया पूर्वमनेन न्यायेन क्यङः प्रवृत्तौ ततो लुकि न नुमाद्यापत्तिरिति बोध्यम्। ५२

[नन्वेवमिति।] समकालप्रातबहिरङ्गासिद्धत्वाङ्गीकार इत्यर्थः। [सौमेन्द्र इति।] सोमेन्द्रौ देवते अस्येत्यर्थे सास्य देवतेत्यणि देवताद्वन्द्वे चे त्यनेन प्राप्ताया उभयपदवृद्धे र्नेन्द्रस्य परस्येत्यनेन निषेधे पूर्वपदस्यैव वृद्धौ सौमेन्द्र इति रूपम्। तादृशे नेन्द्रस्य परस्येति सूत्रलक्ष्ये इत्यर्थः। [अन्तरङ्गत्वादिति।] पदद्वयापेक्षत्वेन वृद्धेर्बहिरङ्गत्वं वर्णमात्रापेक्षत्वाच्च गुणस्यान्तरङ्गत्वमिति भावः। किंच वृद्धिनिमित्तापेक्षया पूर्वोपस्थितनिमित्तकत्वेन गुणस्यान्तरङ्गत्व बोध्यम्। [पूर्वपदात्परेन्द्रशब्दाभावेनेति।] नेन्द्रस्य परस्येत्यत्र परत्वत्य सावधिकत्वेन प्रत्यासत्त्या पूर्वपदावधिकस्यैव तस्य ग्रहणात्पूर्वपदात्परस्येन्द्रशब्दस्य न वृद्धिरित्यर्थात्पूर्वमेकादेशे पूर्वपदात्परेन्द्रशब्दाभावेन निषेधो व्यर्थस्स्यादिति भावः। नन्वन्तादिवद्भावेन ततः परेन्द्रशब्दस्य सत्त्वान्निषेध स्सार्थक इत्यत आह। [अन्तादिवद्भावस्त्विति।] [निषिद्ध इति।] पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरः स्फूर्तिकत्वेन विरुद्धातिदेशद्वयस्य युगपदसंभवः। यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ययोः प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति भावः। ननूभयत आश्रयणेऽन्तादिवत्त्वाभावेऽपि तत्सत्वेऽपि व्यपवर्गभावेऽपि वा विकारविशिष्टे सौमेऽन्तवद्भावेन पूर्वपदत्वे न्द्रशब्दे एकदेशविकृतन्यायेनेन्द्रशब्दत्वातिदेशे सामर्थ्यादन्त्याकारस्य प्राप्ताया वृद्धेर्निषेधकतया तस्य चारितार्थ्यान्न तद्वैयर्थ्यमत आह। [किंचेति।]

वृद्धिरप्यत्र न प्राप्नोति। अन्तादिवत्त्वोभयाभावे ऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानच्कत्वात्। एकस्यैकादेशेन परस्य नित्येन यस्येति लोपेनापहारात्। न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्। उत्तरपदाद्यच्स्थानिकत्वाद्

---

[वृद्धिरपीति।] अपिरेवार्थे। तथाच वृद्धेः प्राप्तेरेवाभावेन निषेधो व्यर्थ इति भावः। तदप्राप्तिं दर्शयति। [उभयाभावेऽपीति।] उभयत आश्रयण इति निषेधादिति भावः। [न्यायेनेति।] अस्योत्तरपदत्वेऽपीत्यनेनान्वयः। [इत्यस्याभावेनेति।] देवताद्वन्द्वे चेत्यस्य देवतावाचकद्वन्द्वघटकयोः पूर्वोत्तरपदयोर्वृद्धिरित्येवार्थेन तत्र पौर्वापर्यलक्षणस्य व्यपवर्गस्यानपेक्षितत्वादन्तादिवत्सूत्रस्याहार्यारोपबोधकत्वेन विरुद्धयोरपि धर्मयोस्तेनातिदेष्टुं शक्यत्वादुभयतआश्रणेऽपि बाधकाभाव इति भावः। [तदाश्रयणे चेति।] उभयत आश्रयणे चेत्यर्थः। [एकस्येति।] प्रथमस्येत्यर्थः। [परस्येति।] द्वितीयस्येत्यर्थः। नन्वेकदेशविकृतन्यायेनोत्तरस्योत्तरपदत्वातिदेशपक्षे उक्तरीत्या तस्यानच्कत्वेऽप्युभयत आश्रयणपक्षे परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वं मान्तस्यैकदेशविकृतन्यायेन पूर्वपदत्वमिति पक्षे च तस्य साच्कत्वेन वृद्धेः प्राप्त्या निषेधस्सफल इत्यत आह। [नचेति।] [परादिवद्भावेनेति।] परादिवद्भावेनैवेत्यर्थः। उत्तरस्यैवकारस्यात्र संबन्धात्। एवेनैकदेशविकृतन्यायव्यवच्छेदः। [उत्तरपदत्वमिति।] एकदेशविकृतन्यायादुभयत आश्रयणाद्वा पूर्वपदत्वमित्यपि बोध्यम्। [उत्तरपदाद्यच्स्थानिकत्वादिति।]

वृद्धेस्तदभावेनाप्राप्तेः। ताद्रूप्यानतिदेशात्। अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम्। अत एव पूर्वैषुकामशम इत्यादावन्तरङ्गत्वाद् गुणे वृद्धिर्न स्यादित्याशङ्कितम्।

---

इन्द्ररूपदेवतावाचकोत्तरपदाद्यच्स्थानिकत्वादित्यर्थः। [तदभावेनेति।] देवताद्वन्द्वे चेत्यस्य देवतावाचकद्वन्द्वघटकयोः प्रत्यासत्त्या देवतावाचकयोरेव पूर्वोत्तरपदयोरचामादेरचो वृद्धिरित्यर्थेन एकादेशविशिष्टस्य परादिवद्भावेनोत्तरपदत्वातिदेशेऽपि तादृशविकारविशिष्टे त्यज्यमानद्रव्योद्देश्यस्वरूपस्य मन्त्रस्तुत्यादिरूपस्य वा देवतावाचकत्वस्याभावेन विशेषणाभावप्रयुक्तविशिष्टाभावविधया इन्द्ररूपदेवतावाचकोत्तरपदत्वाभावादेकारे तदाद्यच्स्थानिकत्वाभाव इत्यर्थः। नह्येन्द्रशब्दे इन्द्ररूपदेवतावाचकत्वं क्वचित्प्रसिद्धमिति भावः। नन्वेकादेशविशिष्टे इन्द्ररूपदेवतावाचकत्वाभावस्यैकारोत्तरन्द्रशब्दत्वरूपानुपूर्व्यभावप्रयुक्तत्वेन तदभावस्य चेकारवैकल्यमूलकत्वेन चैकादेशे इकरत्वातिदेशे विशिष्टस्योक्तरूपदेवतावाचकत्वमार्थसमाजग्रस्तमिति वृद्धिप्राप्तिरस्त्येवेतीदमसङ्गतमत आह। [ताद्रूप्यानतिदेशादिति।] तयोः रूपं तद्रूपं तद्रूपमेव ताद्रूप्यमिति स्वार्थे ष्यञ्। तयोरेकादेशस्थानिनोर्यद्रूपमकारत्वेकारत्वाद्यात्मको धर्मस्तस्यानतिदेशादित्यर्थः। वर्णमात्रवृत्तिधर्मानतिदेशादिति भावः। [अन्यथेति।] अन्तादिवत्सूत्रेण वर्णमात्रवृत्तिधर्मातिदेश इत्यर्थः। [भाष्ये स्पष्टमिति।] तत्र हि "वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो न वा अताद्रूप्यातिदेशा" दित्युक्तम्। [अत एवेति।] ईदृशे विषये अन्तादिवद्भावैकदेशविकृतन्यायाभ्यामनिर्वाहादेवेत्यर्थः। [इत्याशङ्कितमिति।] दिशोऽमद्राणामित्यतो दिश इत्यनुवर्तमाने प्राचां "ग्रामनगराणा" मित्यनेन विहिता वृद्धि र्न स्यादित्याशङ्कितमित्यर्थः। तदाशयस्तु दिग्वाचकात्परेषां ग्रामनगरान्यतरवाचकानामुत्तरपदानामचामादेरचो वृद्धिरिति तदर्थात्पूर्वशब्देषुकामशमीशब्दावयवयो रेकादेशे तद्विशिष्टस्य पूर्वान्तवद्भावेन पूर्वपदत्वातिदेशेऽवशिष्टस्यैकदेशविकृतन्यायेनोत्तरपदत्वातिदेशेऽपि च दिग्वाचकपूर्वपदात्परग्रामवाच्युत्तरपदस्याभावाद्वृद्धेरप्राप्तिः। अशास्त्रीयेणैकदेशविकृतन्यायेनैकादेशविरहिते, षुकामशमीशब्देऽशास्त्रीयस्य ग्रामवाचकत्वस्यातिदेष्टुं शक्यत्वेऽपि शास्त्रीयेणान्तव-

वृद्धिरप्यत्र न प्राप्नोति। अन्तादिवत्त्वोभयाभावे ऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानच्कत्वात्। एकस्यैकादेशेन परस्य नित्येन यस्येति लोपेनापहारात्। न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्। उत्तरपदाद्यच्स्थानिकत्वाद्

---

[वृद्धिरपीति।] अपिरेवार्थे। तथाच वृद्धेः प्राप्तेरेवाभावेन निषेधो व्यर्थ इति भावः। तदप्राप्तिं दर्शयति। [उभयाभावेऽपीति।] उभयत आश्रयण इति निषेधादिति भावः। [न्यायेनेति।] अस्योत्तरपदत्वेऽपीत्यनेनान्वयः। [इत्यस्याभावेनेति।] देवताद्वन्द्वे चेत्यस्य देवतावाचकद्वन्द्वघटकयोः पूर्वोत्तरपदयोर्वृद्धिरित्येवार्थेन तत्र पौर्वापर्यलक्षणस्य व्यपवर्गस्यानपेक्षितत्वादन्तादिवत्सूत्रस्याहार्यारोपबोधकत्वेन विरुद्धयोरपि धर्मयोस्तेनातिदेष्टुं शक्यत्वादुभयतआश्रणेऽपि बाधकाभाव इति भावः। [तदाश्रयणे चेति।] उभयत आश्रयणे चेत्यर्थः। [एकस्येति।] प्रथमस्येत्यर्थः। [परस्येति।] द्वितीयस्येत्यर्थः। नन्वेकदेशविकृतन्यायेनोत्तरस्योत्तरपदत्वातिदेशपक्षे उक्तरीत्या तस्यानच्कत्वेऽप्युभयत आश्रयणपक्षे परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वं मान्तस्यैकदेशविकृतन्यायेन पूर्वपदत्वमिति पक्षे च तस्य साच्कत्वेन वृद्धेः प्राप्त्या निषेधस्सफल इत्यत आह। [नचेति।] [परादिवद्भावेनेति।] परादिवद्भावेनैवेत्यर्थः। उत्तरस्यैवकारस्यात्र संबन्धात्। एवेनैकदेशविकृतन्यायव्यवच्छेदः। [उत्तरपदत्वमिति।] एकदेशविकृतन्यायादुभयत आश्रयणाद्वा पूर्वपदत्वमित्यपि बोध्यम्। [उत्तरपदाद्यच्स्थानिकत्वादिति।]

वृद्धेस्तदभावेनाप्राप्तेः। ताद्रूप्यानतिदेशात्। अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम्। अत एव पूर्वैषुकामशम इत्यादावन्तरङ्गत्वाद् गुणे वृद्धिर्न स्यादित्याशङ्कितम्।

---

इन्द्ररूपदेवतावाचकोत्तरपदाद्यच्स्थानिकत्वादित्यर्थः। [तदभावेनेति।] देवताद्वन्द्वे चेत्यस्य देवतावाचकद्वन्द्वघटकयोः प्रत्यासत्त्या देवतावाचकयोरेव पूर्वोत्तरपदयोरचामादेरचो वृद्धिरित्यर्थेन एकादेशविशिष्टस्य परादिवद्भावेनोत्तरपदत्वातिदेशेऽपि तादृशविकारविशिष्टे त्यज्यमानद्रव्योद्देश्यत्वरूपस्य मन्त्रस्तुत्यादिरूपस्य वा देवतावाचकत्वस्याभावेन विशेषणाभावप्रयुक्तविशिष्टाभावविधया इन्द्ररूपदेवतावाचकोत्तरपदत्वाभावादेकारे तदाद्यच्स्थानिकत्वाभाव इत्यर्थः। नह्येन्द्रशब्दे इन्द्ररूपदेवतावाचकत्वं क्वचित्प्रसिद्धमिति भावः। नन्वेकादेशविशिष्टे इन्द्ररूपदेवतावाचकत्वाभावस्यैकारोत्तरन्द्रशब्दत्वरूपानुपूर्व्यभावप्रयुक्तत्वेन तदभावस्य चेकारवैकल्यमूलकत्वेन चैकादेशे इकरत्वातिदेशे विशिष्टस्योक्तरूपदेवतावाचकत्वमार्थसमाजग्रस्तमिति वृद्धिप्राप्तिरस्त्येवेतीदमसङ्गतमत आह। [ताद्रूप्यानतिदेशादिति।] तयोः रूपं तद्रूपं तद्रूपमेव ताद्रूप्यमिति स्वार्थे ष्यञ्। तयोरेकादेशस्थानिनोर्यद्रूपमकारत्वेकारत्वाद्यात्मको धर्मस्तस्यानतिदेशादित्यर्थः। वर्णमात्रवृत्तिधर्मानतिदेशादिति भावः। [अन्यथेति।] अन्तादिवत्सूत्रेण वर्णमात्रवृत्तिधर्मातिदेश इत्यर्थः। [भाष्ये स्पष्टमिति।] तत्र हि "वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो न वा अताद्रूप्यातिदेशा" दित्युक्तम्। [अत एवेति।] ईदृशे विषये अन्तादिवद्भावैकदेशविकृतन्यायाभ्यामनिर्वाहादेवेत्यर्थः। [इत्याशङ्कितमिति।] दिशोऽमद्राणामित्यतो दिश इत्यनुवर्तमाने प्राचां "ग्रामनगराणा" मित्यनेन विहिता वृद्धि र्न स्यादित्याशङ्कितमित्यर्थः। तदाशयस्तु दिग्वाचकात्परेषां ग्रामनगरान्यतरवाचकानामुत्तरपदानामचामादेरचो वृद्धिरिति तदर्थात्पूर्वशब्देषुकामशमीशब्दावयवयो रेकादेशे तद्विशिष्टस्य पूर्वान्तवद्भावेन पूर्वपदत्वातिदेशेऽवशिष्टस्यैकदेशविकृतन्यायेनोत्तरपदत्वातिदेशेऽपि च दिग्वाचकपूर्वपदात्परग्रामवाच्युत्तरपदस्याभावाद्वृद्धेरप्राप्तिः। अशास्त्रीयेणैकदेशविकृतन्यायेनैकादेशविरहिते, षुकामशमीशब्देऽशास्त्रीयस्य ग्रामवाचकत्वस्यातिदेष्टुं शक्यत्वेऽपि शास्त्रीयेणान्तव-

**तदेकदेशमात्रस्य विकाराभावाच्च॥ तदुक्तं भाष्ये "इन्द्रे द्वावचावेको यस्येति लोपेनापहृतो पर एकादेशेन ततो ऽनच्क इन्द्रशब्दः संपन्नस्तत्र कः प्रसंगो वृद्धे" रिति॥ मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातो ऽत आह॥**

## पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गो ऽप्येकादेशो न॥५३॥

---

द्भावेनैकादेशविशिष्टेऽशास्त्रीयस्य दिग्वाचकत्वस्यातिदेष्टुमशक्यत्वात्। तथा परादिवद्भावेनैकादेश विशिष्टे, उत्तरपदत्वातिदेशेऽप्यशास्त्रीयस्य ग्रामवाचकत्वस्य तेनातिदेष्टुमशक्यतया तदप्राप्तिरिति। एवं चानेन भाष्येणेदृशे विषये ताभ्यामसिद्धिरिति स्पष्टमेव लभ्यत इति बोध्यम्। ननु मास्तु परादिवद्भावेनैकादेशविशिष्टे उत्तरपदत्वादिकम्। किंतु यथा मान्ते एकदेशविकृतन्यायेन पूर्वपदत्वादिकं तथा तेनैव न्यायेन विकारविशिष्टे उत्तरपदत्वं देवतावाचकत्वं चास्तु, तथाच वृद्धिप्राप्तिरस्त्येवेत्यत आह। [तदेकदेशमात्रस्येति।] तदेकदेशमात्रसंबन्धिविकारप्रयोज्य-विकारविशिष्टं यत्तदन्यवन्नेति तदर्थादुभयत्रापि तेनैव न्यायेनोभयमानेतुमशक्यमिति भावः। उक्तमर्थं प्रमाणयति। [तदुक्तमिति।] विप्रतिषेधसूत्रेऽन्तादिवत्सूत्रे च भाष्ये इति भावः। [एक इति।] अन्त्योऽकार इत्यर्थः। [पर इति।] तदन्य आदिरिकार इत्यर्थः। ननु मरुदिन्द्रशब्दयोर्द्वन्द्वे ततोऽणि मारुदिन्द्रमित्यत्रैकादेशाभावाद्वृद्धिप्रसंगे निषेधस्य सफलतया कथं तद्वैयर्थ्यमत आह। [मरुदादिभिरिति।] [इन्द्रस्यैवेति।] अजाद्यदन्तत्वादभ्यर्हितत्वाच्चेति भावः। सोमेन्द्रशब्दयोर्द्वन्द्वे तु महाप्रलयपर्यन्तस्थायित्वेन शिवशिरोभूषणत्वेन चेन्द्रापेक्षया सोमस्याभ्यर्हितत्वात्सोमशब्दस्यैव पूर्वनिपात इति तद्भाष्याशयः। [पूर्वोत्तरपदनिमित्तककार्यादिति।] निमित्तत्वं चात्र यथा कथं चित्। न तु पूर्वपदत्वादिनैवेत्याग्रहः। वस्तुभूतं पूर्वपदमुत्तरपद-मुभयं वा यत्र शब्दतोनिमित्तं तथाविधं कार्यमस्या विषयः। अत एव परमाहं परमायमित्यादाव-नया परिभाषया एकादेशात्पूर्वमाहाद्यादेशसमर्थनपरमदस औ सुलोपश्चेति सूत्रस्थं भाष्यं संगच्छते।

अत्र च नेन्द्रस्येति निषेध एव ज्ञापक इत्यन्तादिवच्च विप्रतिषेधे परमिति सूत्रयोर्भाष्ये स्पष्टम्॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप्स्यादत आह॥

अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते॥ ५४ ॥

---

अन्यथा त्वाहौ सावित्यादौ पूर्वोत्तरपदयोरनिमित्तत्वेन तदसंगतिस्स्पष्टैव। शब्दत इत्युक्तेर्भावेऽनलाक्ष इत्यादावेतन्निषेधाप्रवृत्त्या यणः पूर्वं गुणे रूपसिद्धिः। अन्यथा यणादेशोऽपि वस्तुतः पूर्वोत्तरपदयोर्निमित्तत्वेन प्रकृतनिषेधप्रवृत्तौ तदसिद्धिः। किंच परिभाषायामेकादेशपदं सन्धिकार्योपलक्षणम्। तेन रात्रिमट इत्यादौ रात्रेः कृतीति मुमः पूर्वमन्तरङ्गो यणादेशो नेति सकलेष्टसिद्धिरिति बोध्यम्। [ज्ञापक इति।] तस्य यथा ज्ञापकत्वं तदवतरण एव निरूपितम्। [भाष्ये इति।] तत्र हि " कः प्रसङ्गो वृद्धेरिति प्रागुक्तभाष्योत्तरं " पश्यति त्वाचार्यः पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेशः। ततो नेन्द्रस्येति निषेधं शास्ति " इत्युक्तमिति बोध्यम्। ५३

[एव मपीति।] उक्तपरिभाषात्रयेण स्थलत्रये निर्वाहेऽपीत्यर्थः। [इत्यादाविति।] आदिना प्रखाय प्रखन्येत्यादिसंग्रहः। [अन्तरङ्गत्वादिति।] पदद्वयाश्रयसमासनिमित्तकल्यबपेक्षया एकपदसंबन्धिप्रकृतिप्रत्ययापेक्षत्वेन ल्यब्निमित्तभूतसमासघटकनिमित्तकत्वेन वा अन्तरङ्गत्वादित्यर्थः। [हित्वादिष्विति।] दधातेर्हिरित्यादिभिर्हित्वादिषु कृतेष्वित्यर्थः। आदिना द्यतिस्यति जनसनेत्यादिसंग्रहः। [ल्यप्स्यादिति।] तथाचानिष्टरूपापत्तिरित्यर्थः। [अन्तरङ्गानपीति।] अपिना प्राग्वत्परादिसंग्रहः। [ल्यब्ग्रहणमस्यां ज्ञापकमिति।] तद्धि प्रपूर्वाददधातोः क्त्वाप्रत्यये ल्यपि जग्ध्यादेशविधानार्थं कृतम्। तत्र ह्युक्तरीत्यान्तरङ्गत्वा-ल्ल्यबादेशात्पूर्वं ति कितीत्यनेनैव जग्ध्यादेशे सिद्धे ल्यब्ग्रहणं व्यर्थं सदस्यां ज्ञापकमिति भावः। [भाष्ये स्पष्टमिति।] तत्र हि ति कितीत्येव सिद्धे ल्यब्ग्रहणं किमर्थमित्याशङ्क्य " एवं तर्हि

अदोजग्धिरिति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहण-मस्या ज्ञापकमित्यदो जग्धिरित्यत्र भाष्ये स्पष्टम् ॥५४॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृते ऽन्तरङ्गत्वात्सवर्ण-दीर्घे तदसिद्धिरत आह॥

वार्णादाङ्गं बलीयो भवति॥ ५५ ॥

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः॥ अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थ-

---

सिद्धे सति यल्ल्यब्ग्रहणं करोति, तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधत-इतीत्युक्तम्। इदं तु बोध्यम्। धर्मिग्राहकसाजात्याद्यादृशान्तरङ्गनिमित्तविनाशकत्वं ल्यप-स्तादृशान्तरङ्गबाधकत्वमेव प्रकृतपरिभाषया बोध्यते। अत एव प्रेष्य गत इत्यादाविच्छत्यादेर्ण्य-न्तात् त्त्वाप्रत्यये लघूपधगुणे पश्चा ल्ल्यपि लघुपूर्वत्वाभावा ल्ल्यपि लघुपूर्वादिति णे रयादेशो न। अन्यथा प्रकृतपरिभाषया गुणात्पूर्वं ल्यबुत्पत्तौ ततो गुणायादेशयोः प्राप्तयोः प्रतिपदोक्तत्वेनान्त-रङ्गत्वाद्गुणात्पूर्वमयादेशो दुर्वारः स्यात्। परिभाषाफलं तु प्रदाय, प्रधाय, प्रखन्य प्रस्थाय-प्रक्रम्य, आपृच्छ्य प्रदीव्य प्रपठ्येत्यादौ क्रमेण हित्व दत्त्वात्वेत्व दीर्घत्वशूठिटां ल्यपः प्रागप्रवृत्ति रित्याहुः। ५४

[एवमपीति।] उक्तविषयेषूक्तपरिभाषाभिर्निर्वाहेऽपीत्यर्थः। [इत्यादाविति।] आदिना इयेषेत्यादिसंग्रहः। द्विर्वचनेऽचीति निषेधेन द्वित्वात्प्राक् वृध्यादेर्न प्रवृत्तिरित्याशयेनाह। [द्वित्वे कृते इति।] [अन्तरङ्गत्वादिति।] वृध्यादिनिमित्तापेक्षया पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्ग-त्वादित्यर्थः। [तदसिद्धिरिति।] इयायेत्यादिरूपासिद्धिरित्यर्थः। सवर्णदीर्घोत्तरं वृध्यायादेशयो-रायेत्यस्यैव प्राप्तेरिति भावः। [वार्णादाङ्गमिति।] वर्णनिमित्तककार्यादङ्गाधिकारीयं कार्यं बलवदिति परिभाषार्थः। [तेनेति।] उक्तवचनाङ्गीकारेणेत्यर्थः। [तत्सिद्धिरिति।] वृध्युत्तरं दीर्घाप्राप्त्या

मसवर्णग्रहणमस्या ज्ञापकम्। तद्धीषतुरित्यादावियङा-दिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे त्वीषतुरित्यादावन्त-रङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम्। इयङुवङौ ह्यभ्याससंबन्धिनिमित्तकत्वाद् बहिरङ्गौ। न चेयङादि-रपवादो, येन नाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्त-

---

आयादेशे तत इयङि इयायेति रूपसिद्धिरित्यर्थः। अत्र ज्ञापकमाह। [असवर्णग्रहणमिति।] [तद्धीति।] हि, यतः तत्, असवर्णग्रहणमीषतुरित्यादावियङ्व्यावृत्त्यर्थमतस्तदस्या ज्ञापकमित्यर्थः। [इत्यादाविति।] आदिना ऊषतुरित्यादिपरिग्रहः। [इयङादीति।] कित्त्वाद्गुणाभावे सवर्णेऽचि परत इयङादिव्यावृत्त्यर्थमित्यर्थः। अत्रादिपदेनोषतुरित्यादावुवङ्परिग्रहः। ज्ञाप-कत्वमस्योपपादयति। [एतदिति।] [बाधादिति।] अस्येयङुवङोरित्यादिः। [तद्व्यर्थमिति।] सवर्णदीर्घोत्तरं तयोः प्राप्तेरेवाभावेनासवर्णग्रहणं व्यर्थं सदुक्तार्थज्ञापकमित्यर्थः। ननूभयोरपि परनिमित्तकत्वस्य तुल्यत्वात्कथं सवर्णदीर्घस्यान्तरङ्गत्वमत आह। [इयङुवङौ हीति।] [अभ्याससंबन्धिनिमित्तकत्वादिति।] अभ्याससंबन्धिसमुदायभूताङ्गनिमित्तकत्वादित्यर्थः। [बहिरङ्गा-विति।] हि यत इयङुवङावङ्गनिमित्तकत्वेन बहिरङ्गावत स्तद्घटकसतम्यन्तोपात्तसवर्णाज्-निमित्तकत्वेन सवर्णदीर्घोऽन्तरङ्ग इत्यर्थः। अभ्याससंबन्धनिमित्तकत्वादिति पाठे तु इयङ्विधौ य्वोरित्यस्यानुवृत्त्या तयोरेव स्थानित्वेनाभ्याससंबन्धस्य निमित्ततायाः सुवचतया ऽन्तरङ्गत्वेनाभि-मतसवर्णदीर्घसंबन्धिपञ्चम्यन्तोपात्ताग्रूपनिमित्तघटिताभ्यासनिमित्तकत्वेन संख्याकृताधिकनिमित्तद्धि-कत्वेन वा इयङुवङोर्बहिरङ्गत्वमित्याशयः। इयङुवङोरभ्याससंज्ञोत्तरं प्रवृत्त्या ततः प्रागेव सवर्णदीर्घप्राप्त्या पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं सवर्णदीर्घस्य, इयङुवङोस्तु परकालप्राप्ति-कत्वेन बहिरङ्गत्वमिति तु न वक्तुं शक्यम्। सवर्णदीर्घस्यापि हलादिशेषोत्तरमेव प्राप्त्या, तस्य चाभ्याससंज्ञाप्रवृत्तिमन्तरा दुर्लभत्वेन द्वयोरपि युगपदेव प्राप्तेः। [अपवाद इति।] सवर्ण-

# यणपवादत्वस्यैव निर्णयादिति प्राञ्चः ॥

---

दीर्घापवाद इत्यर्थः। प्रकृतलक्ष्ये तस्यावश्यं प्राप्तेरिति भावः। [यणपवादत्वस्यैवेति।] यथा कुप्वोःकपौ चेति सूत्रं स्वीयोद्देश्यतावच्छेदकव्यापकीभूतोद्देश्यतावच्छेदकस्य विसर्जनीयस्य स इत्यस्यैव तन्न्यायेन बाधकं नतु शर्परे विसर्जनीय इत्यस्य, एवमिदमपि स्वीयोद्देश्यतावच्छेदकव्यापकीभूतोद्देश्यतावच्छेदकस्य यण एव बाधकं नतु सवर्णदीर्घस्यापि। तस्य स्वविषये इयर्तीत्यादावप्राप्तेरिति भावः। नन्वेयर्तीत्यादौ ऋ ऋ ति इति स्थिते यणं बाधित्वा तक्रन्यायेनार्तिपिपर्त्योश्चेतीत्वे पुनरुत्सर्गस्य यणोऽप्रवृत्त्या न तस्यापि सकललक्ष्यप्राप्तिरिति वाच्यम्। तक्रन्यायेनबाधकत्वस्थले न्यायानुरोधेन पुनरुत्सर्गस्याप्रवृत्तावपि तत्प्राप्ते र्दुर्निवारतया यण इयङ्विषयीभूतसकललक्ष्यप्राप्तेस्सुवचत्वात्। किंचाभ्यासविकारेषु परस्परविरोधपरिहारपूर्वकसमावेशस्यैवेष्टत्वेनेत्वात्पूर्वं ऋ ऋ ति इत्यवस्थायामपवादत्वाद्यणं बाधित्वा प्राप्तं सवर्णदीर्घं परत्वाद्बाधित्वा उरदत्वे हलादिश्शेषे तत इत्वे तस्य यणपवादत्वाभावेन तदुत्तरं तत्प्राप्तेस्सुवचत्वात्। ननु ऋ ऋ ति इत्यवस्थायां यणं बाधित्वा तक्रन्यायेनेत्वं प्राप्तं तन्निराकृत्य परत्वाल्लघूपधगुणः प्राप्तः। तमपसार्यान्तरङ्गत्वाद्यणादेशः। तदपवादत्वादित्वमित्येवं चक्रकेण निरुक्तस्थले यणो दुर्लभत्वादियङ् यणोरपवादापवादकभावस्य दुर्निरूपतयेदमसङ्गतमिति चेन्न। ऋ ऋ ति इति स्थितेऽभ्यासस्य लघूपधगुणयण्सवर्णदीर्घेत्वोरदत्वानां पञ्चानां प्राप्तावपवादत्वाद्यणं बाधित्वा प्राप्तं सवर्णदीर्घमुक्तरीत्या परत्वादिना बाधित्वा ततः पूर्वमभ्यासविकारेति न्यायेनेत्वात्पूर्वमनैमित्तिकत्वेन प्रतिपदविधित्वेन चान्तरङ्गत्वाद्गुणात्पूर्वं चोरदत्वे हलादिश्शेषे तत इत्वे यणः प्राप्त्या चक्रकस्यासंभवात्। यद्यपीत्वोत्तरं लघूपधगुणस्य पुनः प्राप्तिरस्ति। तथापि प्रतिपदविधित्वेनान्तरङ्गत्वात्तं बाधित्वा इयङः प्रवृत्तिरिति न चक्रकापत्तिरिति बोध्यम्। नन्वीषतुरित्यादाविकारांशे यण एव सकललक्ष्यप्राप्तत्वेन तदपवादत्वेऽपि दीर्घस्य तत्त्वाभावेन तदपवादत्वाभावादन्तरङ्गत्वेनेयङः पूर्वं सवर्णदीर्घस्य प्रवृत्त्या तदंशे ऽसवर्णग्रहणस्य वैयर्थ्येऽ प्यूखतुरित्यादावुकारांशे यणं बाधित्वा सवर्णदीर्घस्यैव सकललक्ष्यप्राप्त्या तद्बाधनेन प्राप्तस्योवङो व्यावृत्तये ऽसवर्णग्रहणस्यावश्यकत्वात्कथं तद्वैयर्थ्यं कथं वा तस्य निरुक्तार्थज्ञापकत्वमिति चेन्न। तस्योकारांशमात्रव्यावृत्त्यर्थत्वेऽभ्यासस्यानाविति न्यासेनैव तत्सिद्धावसवर्णग्रहणस्य व्यर्थत्वेन तस्योक्तार्थज्ञापकत्वे बाधकाभाव

परेत्वेतत्परिभाषाभावे ऽभ्यासस्येति सूत्रमेव व्यर्थम्। न चेयायेयेषेत्यादौ चरितार्थम्। तयोरपि पूर्वप्रवृत्त-गुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेऽचीति रूपाति-

---

इत्याशयात्। नन्वेतत्परिभाषाज्ञापनपरदाश्वानिति सूत्रस्थ नाप्यकारीयोपक्रमोपसंहाराभ्यां विशिष्ट-सूत्रस्यैव ज्ञापकतालाभादसवर्णग्रहणस्य ज्ञापकत्वमिति प्राचीनोद्घोषो न युक्त इत्याशयेन सिद्धान्तमाह। [परेत्विति।] [पूर्वप्रवृत्तगुणस्येति।] द्विर्वचनेऽचीत्यत्र रूपातिदेशपक्षस्यैव सिद्धान्तत्वेन भगवता प्रतिपादितत्वाद्द्वित्वात्पूर्वं गुणवृद्ध्योः प्रवृत्तिरित्याशयः। [रूपातिदेशेनापहर इति।] ननु यत्किंचिन्निमित्तवैकल्येन विधीनामप्रवृत्तिप्रसंगे तन्निमित्तसंपादनायातिदेशशास्त्रप्रवृत्तिर्दृश्यते। यथा चक्रे इत्यादौ यणादेशोत्तरं द्वित्वनिमित्तभूतैकाच्त्वस्याभावेन द्वित्वाप्रवृत्तिप्रसंगे तत्संपादना-यास्यातिदेशस्य प्रवृत्तिः। इयेषेत्यादौ तु सत्स्वपि गुणादिषु द्वित्वनिमित्तभूतैकाच्त्वस्याविघाते-नातिदेशानावश्यकत्वात्किमर्थमतिदेशप्रवृत्तिः। किंच तत्प्रवृत्तावप्यतिदेशस्याहार्यज्ञानरूपत्वेनाहार्य-स्थानिरूपबुद्ध्या द्वित्वप्रवृत्तावपि नहि रजतत्वभ्रमप्रयुक्ता प्रवृत्तिश्शुक्तिं न गोचरयतीति न्यायेना-देशरूपतापन्नस्यैव द्वित्वेन भाव्यम्। ननु तद्रूपापहारेण स्थानिरूपतापन्नस्य द्वित्वमिति कथमियेषेत्यत्र द्वित्वोत्तरं पुनर्गुणस्य प्राप्तिः। लघूपधत्वाभावादिति चेन्नैवम्। द्वित्वविधावेकाच्-त्वस्येव धातुत्वस्यापि निमित्तत्वात्तस्य च गुणवृद्ध्यादिभिरन्यथाभूतेष्वतिदेशमन्तरा दुर्लभत्वा-त्तादृशनिमित्तसंपादनायातिदेशप्रवृत्तेरावश्यकत्वात्। एकदेशविकृतन्यायेन धातुत्वं तु न लभ्यम्। तस्य द्रोणत्वादिवदुक्तपरिमाणवृत्तिधर्मत्वेन तेन न्यायेनानेतुमशक्यत्वात्। निमित्तातिदेशपक्षे आहार्यस्थानिनिमित्तबुद्ध्या कार्यप्रवृत्तावपि प्रधानकार्यातिदेशपक्षे वास्तविकस्थानिकार्यस्येव रूपाति-देशपक्षेऽप्यतिदेशेन वास्तविकस्थानिरूपस्यैवोत्पत्तेर्वाच्यतया तस्याश्चादेशरूपापहरमन्तरा दुर्ल-भत्वात्तदपहारेण स्थानिरूपतापन्नस्यैव द्वित्वे तदुत्तरं गुणवृद्धिप्रवृत्ते स्सुवचत्वात्। अत एव क्रोष्टा, क्रोष्टारावित्यादिसिद्धिः। अन्यथा आहार्यतृजन्तरूपबुद्ध्या अप्तृन्नित्यादिदीर्घप्रवृत्तावपि वस्तुतो ऋकाराभावेन ऋदुशनेत्यनङः ऋतोङीति गुणस्य चानापत्तिः। समुदाये तृजन्तरूप-

देशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तेः। न चेयर्तीत्यादौ तच्चरितार्थम्। तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात्। य्वोरित्यनु-

---

वृद्धावप्युकारे ऋकारबुद्धेरभावादिति बोध्यम्। [पुनः प्राप्तेति।] षाष्ठद्वित्वस्य द्विः प्रयोगरूपत्वादविकारत्वेनोत्तरखण्डस्यागन्तुकत्वेन च लक्ष्यभेदादिति भावः। नचातिदेशविधौ कालावधारणाद्द्वित्वकर्तव्यतायामेव तत्प्रवृत्त्या कृते द्वित्वे तादृशरूपनिवृत्तेः स्वत एव सिद्धत्वात्किमर्थं गुणवृद्ध्यादीनां पुनः प्रवृत्त्याश्रयणमिति वाच्यम्। अतिदेशेन वास्तविकस्थानिरूपस्यैवोत्पत्त्या पुनर्गुणादिप्रवृत्तिमन्तरा अतिदिष्टरूपनिवृत्तेरयोगात्। कालावधारणेन तादृशरूपनिवृत्तौ तु चक्रतुरित्यादावभ्यासेऽकारश्रवणानापत्तिः। कालावधारणं तु कृतद्वित्वानां ये गुणवृद्ध्यादय आदेशास्तेषां कार्यान्तरं प्रत्यतिदेशनिवर्तकम्। अत एव द्वित्वोत्तरं गुणवृद्ध्योः कृतयोः पुनरतिदेशप्रवृत्त्या इणो यण् एरनेकाच इत्यादीनामप्रवृत्तिरिति बोध्यम्। [अन्तरङ्गत्वादिति।] पूर्वोपस्थितनिमित्तकत्वेन दीर्घस्यान्तरङ्गत्वमिति भावः। [दीर्घापत्तेरिति।] एवं चेयेषेत्यत्रासवर्णाच्परत्वाभावादेवेयङोऽप्राप्तिः। इयायेत्यत्र तु णलकारमादाय तत्प्राप्तिसंभवेऽपि तत्र प्रत्यासत्त्या, अभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणमित्यर्थस्याग्रे वक्ष्यमाणतया तदप्राप्तिरिति भावः। [तदिति।] संपूर्णसूत्रमित्यर्थः। [चरितार्थमिति।] तत्रोक्तरीत्या अभ्यासे उरदत्वहलादिशेषत्वानां प्रवृत्तौ सवर्णदीर्घस्याप्राप्त्या तत्रेयङ्संपादकतया सूत्रं चरितार्थमित्याशयः। [उरित्येव ब्रूयादिति।] एतेन संपूर्णसूत्रव्यवच्छेदः। नैकमुदाहरणमितिन्यायेनानेकलक्ष्यसंग्राहकं सूत्रं न कुर्यादिति भावः। नन्वेवं ऋवर्णान्ताङ्गस्याचि परे इयङित्यर्थेऽलोन्त्यपरिभाषया अन्त्यऋकारस्येयङि निरुक्तप्रयोजनासिद्धिः। अङ्गावयवर्कारस्याचि परे इयङित्यर्थेप्यभ्यासर्कारस्यार्तिपिपर्त्योश्चेतीत्वे उत्तरखण्डस्य सार्वधातुकार्धधातुकयोरिति गुणेऽङ्गावयवर्काराभावात्तदसिद्धिरत आह। [य्वोरितीति।] उकारानुवृत्तेरसुपयोगादेकदेशे स्वरितत्वप्रतिज्ञानाच्चेकारोऽनुवर्तत इति भावः। नन्वेतदनुवृत्त्या अङ्गावयवर्कारस्थानिकेकारस्येयङित्यर्थेन निरुक्तप्रयोजनसिद्धावपि ऋधातो यङ्लुक्यभ्यासाकारस्य रिगागमे, अरियर्तीत्यादौ तदसिद्धिः।

वर्तते। इणो यणिति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङित्यर्थः। अभ्यासस्यार्ताविति अभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम्॥ न च ए ऐ ओ औशब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं, तथा ओणृधातोर्ण्वुलन्तादिच्छाक्यजन्तात्सन्युवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम्। षाष्ठप्रथ-

---

तत्रेकारस्य ऋकारस्थानिकत्वाभावादत आह। [साहचर्यादिति।] सूत्रान्तरसाहचर्याश्रयणे मानाभावादाह। [व्याख्यानाच्चेति।] एकदेशे स्वरितत्वप्रतिज्ञया अचिश्नुधात्वित्यतो धातुग्रहणानुवृत्तिमूलकादित्यर्थः। नन्वेवमपि, ऋवर्णान्तधातुमात्रग्रहणापत्तिरत आह। [अर्तेरिवर्णस्येति।] विशेषणविशेष्यभावे कामचारादनुवृत्तधातोर्विशेषणत्वाभ्न तदन्तविधिः। तथाच, ऋधातोरिकारस्याचि परे इयङित्यर्थादियर्तीत्यादिसिद्धिरिति भावः। कैयटाद्युक्तिं खण्डयति। [अभ्यासस्येति।] अभ्यासेवर्णस्येयङ्स्यादृधाताविति तदर्थः। विनिगमनाविरहादाह। [अभ्यासस्यार्तेरिति।] ऋधातोरभ्यासस्येयङित्यर्थः। [गुरुत्वादिति।] मात्रागौरवस्य पदगौरवस्य च सत्त्वादिति भावः। अत्र न्यासे यङ्लुक्यस्याप्रवृत्त्यापत्तिस्तु न। श्तिपा शपेति निषेधस्य भाष्येऽदर्शनादित्याशयः। सूत्रस्यान्यार्थमप्यावश्यकत्वान्न प्रागुक्तन्यासेन सिद्धिरित्याह। [नचेति।] [तथेति।] उक्तस्थल इवेत्यर्थः। [उवोणकीयिषतीत्याद्यर्थमिति।] यथेष्टं नामधातुष्वित्युक्त्या प्रथमस्यैकाचो द्वित्वे तद्रूपम्। [षाष्ठप्रथमाह्निकान्तस्थभाष्येति।] दाश्वानितिसूत्रस्थभाष्येत्यर्थः। तत्रहि प्रकृतपरिभाषाज्ञापनावसरेऽभ्यासस्येति सूत्रस्येयर्तीत्यादौ चारितार्थ्यमाशङ्क्य नैकमुदाहरणमित्यादिना समाहितम्। एभ्य आचारक्विपोऽभिधानेत्वेषामपि तदुदाहरणत्वेन तदुक्तिरसंगता स्यादिति भावः। वदव्रजेतिसूत्रस्थभाष्यादप्ये ऐ ओ औ, शब्देभ्य आचारक्विपोऽनभिधानं लभ्यते। तत्रह्यतो ल्रान्तस्येतिसूत्राददृग्रहणमनुवर्त्य वदव्रज्योरकारस्य धातोरवयवस्याचश्च वृद्धिरित्येव सिद्धे हल्ग्रहणं जातिग्रहणार्थम्। तेनाराङ्क्षीदित्यादिसिद्धमित्युक्त्वा तत्राजन्तस्य धातोरित्यर्थवारणाय हल्ग्रहणमित्या-

माह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात्। अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात्। एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता॥ यद्यपि भाष्ये यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवतीति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते। अग्रे

---

शङ्क्यादन्ते लोपेन दीर्घान्ते फलाभावेनेगन्ते सिचि वृद्धिरित्यनेन सिद्धया, सन्ध्यक्षरान्तस्य धातोरभावेन च फलाभावादजन्तस्येति नार्थ इत्युक्तम्। सत्यभिधानेऽन्त्ये तादृशप्रयोगस्यैवासंभव इत्याह। [अन्त्ये इति।] [दुर्लभत्वादिति।] यथेष्टं नामधातुष्वित्यनेन हलादिनामधातुषु प्रथमद्वितीयतृतीयाद्येकाचामन्यतमस्य यथेष्टं द्विर्वचनसत्त्वे ऽप्यजादिष्वाद्येतराणामेवैकाचां द्वित्वप्रवृत्त्या तादृशप्रयोगो दुर्लभ इति भावः। आद्येऽपि प्रत्ययान्तत्वादामीयङः प्राप्तिरेव न। प्रत्ययग्रहणसपनीयतत्स्थानेऽनेकाच इति वक्तव्यमित्यर्थस्य नागेशानभिप्रेतत्वादिति बोध्यम्। [एवंचेति।] उक्तरीत्या ऋधातोरन्यत्र सूत्रस्याचरितार्थ्येन तत्र च उरिति न्यासेनैव सिद्धया चेत्यर्थः। अत्र मते भाष्यविरोधमाशङ्क्य परिहरति। [यद्यपीत्यादिना।] [तदुपपादनग्रन्थेनेति।] ज्ञापकत्वोपपादनग्रन्थेनेत्यर्थः। [संपूर्णसूत्रस्यैवेति।] एवेनासवर्णपदमात्रव्यवच्छेदः। इयाय, उवोखेत्यादावसवर्णेऽच्यभ्यासस्येयङादिविधानार्थं हि तत्सूत्रम्। यदीयं परिभाषा न स्यात्तदा अन्तरङ्गसवर्णदीर्घात्पूर्वं गुणादिप्रवृत्ते दुर्लभत्वात्तदन्तरेणासवर्णपराभ्यासालाभात्सूत्रं व्यर्थं स्यादिति तदाशयः। एवं चैतदनुरोधेनोपक्रमभाष्यस्थासवर्णग्रहणमित्यस्यासवर्णपदं गृह्यते ऽस्मिन्नित्यधिकरणल्युडन्तत्वाश्रयणेन, असवर्णस्य ग्रहणं यस्मिन्निति व्यधिकरणबहुव्रीह्याश्रयणेन वाऽ सवर्णपदघटितं संपूर्णसूत्रमित्यर्थोऽवश्यं वाच्य इति भावः। उपक्रमभाष्येणापाततोऽसवर्णग्रहणस्य ज्ञापकत्वप्रतीतावप्युपसंहारभाष्येण संपूर्णसूत्रस्यैव तत् स्फुटं प्रतीयत इत्याह। [अग्रेऽपीति।]

ऽपि नैतदस्ति ज्ञापकमत्यर्थमेतत्स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्। न चाकृतव्यूहपरिभाषायेयेषेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभवनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम्। तस्या असत्त्वात्। सत्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च। न चान्तरङ्गत्वाद्दीर्घेऽपीयायेत्यादौ पूर्वान्त-

---

[ग्रहणस्यैवेति।] एवेन संपूर्णसूत्रव्यवच्छेदः। [ज्ञापकत्वेत्विति।] एतदुत्तरं तत्खण्डनावसर इति शेषः। [तद्व्यावर्त्यप्रदर्शनेनेति।] असवर्णग्रहणव्यावर्त्यप्रदर्शनेनेत्यर्थः। [तत्सार्थक्यमेवेति।] असवर्णपदसार्थक्यमेवेत्यर्थः। नन्वकृतव्यूहपरिभाषाप्रवृत्तौ निमित्तविनाशसंभावनाया अपि निमित्ततया अग्रे वक्ष्यमाणत्वात्प्रकृते तादृशसंभवनायास्सत्त्वेन तया परिभाषया गुणादितः पूर्वं सवर्णदीर्घस्याप्रवृत्तावियाय, इयेषेत्यादौ सूत्रस्य सार्थक्यसंभवात्कथं संपूर्णसूत्रस्य ज्ञापकत्वमिति शङ्कते। [नचेति।] स्वसिद्धान्तरीत्या आह। [तस्या इति।] अकृतेत्यस्या इत्यर्थः। कैयटादिरीत्या आह। [सत्त्वे वेति।] [एतद्भाष्येति।] प्रकृतपरिभाषाज्ञापकत्वपरभाष्येत्यर्थः। [प्रवृत्तियोग्यकालोत्तरमेवेति।] यथा सेदुष इत्यादौ क्रमिकान्वाख्यानेऽन्तरङ्गभूतेडागमरूपकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकसंप्रसारणविधे र्विभक्त्युत्पत्यनन्तरं प्राप्तिरिति भावः।

वत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थम्। न चाचिश्न्वित्यनेन सिद्धिः वृद्धिबाधनार्थत्वादिति वाच्यम्। प्रत्यासत्त्या ऽसवर्णपदेनाभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः॥

---

[इवर्णत्वाच्चेति।] अस्य स्वत इत्यादिः। [णल्यसवर्ण इति।] णल्रूपेऽसवर्णेऽचीत्यर्थः। [वृद्धीति।] अचोञ्णितीति प्राप्तवृद्धीत्यर्थः। [प्रत्यासत्त्येति।] अभ्यासस्येवर्णोवर्णयोरसवर्णे अचीयङुवङावित्यर्थे ऽभ्याससंबन्ध्यसवर्णाच एव प्रत्यासन्नत्वादिति भावः। ननु प्रत्यासत्तिन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यादविशेषेणासवर्णाज्मात्रस्य ग्रहणं कुतो नेत्यत आह। [शास्त्रबाधकल्पनापेक्षयेति।] व्याप्तिन्यायमाश्रित्य वृद्धिशास्त्रबाधकल्पनेन सूत्रसार्थक्यसंपादनापेक्षयोक्तपरिभाषाज्ञापनेनैव तत्संपादनं युक्तमिति भावः। यद्यपि कृदतिङिति सूत्रभाष्योक्तरीत्या एकादेशस्याचः परस्मिन्निति स्थानिवद्भावेनाभ्यासस्योत्तरखण्डेन व्यवधानादसवर्णाच्परत्वाभावान्न तत्र सूत्रं चरितार्थमित्येवात्र समाधिर्वक्तुं युक्ता। अत एव दाश्वानितिसूत्रे उद्योते, इमामाशङ्कां कृत्वा " कृदतिङिति सूत्रभाष्योक्तरीत्या ऽचःपरस्मिन्निति स्थानिवत्त्वेन तदप्रवृत्तेरित्येव समाहितम्। तथापि परत्वादन्तवद्भावस्य स्थानिवद्भावप्रतिबन्धकत्वान्नात्र स्थानिवत्त्वेनोक्तशङ्कानिरास इत्याशयेन वा, उपायान्तरप्रदर्शनाय वाऽत्रैवमुक्तमिति बोध्यम्। वस्तुतस्तु कृदतिङितिसूत्रस्थभाष्यप्रामाण्यादन्तवद्भावो न स्थानिवद्भावप्रतिबन्धकः। पूर्वविप्रतिषेधेन स्थानिवत्त्वस्यैवेष्टत्वात्। तत्राऽतिङ्ग्रहणाभावे तिङामपि कृत्संज्ञायां भवतीत्यादौ विकरणान्तस्य ह्रस्वस्येति तुगापत्तिरित्युक्त्वा तत्र धातुग्रहणानुवृत्त्या विकरणान्ते धातुत्वाभावान्न दोष इति समाधायैवमपि चिकीर्षतीत्यादौ शबेकादेशस्य पूर्वान्तवत्त्वेन धातुत्वस्य सुवचतया तुगागमो दुर्वार इत्याशङ्क्यैकादेशस्याचः परस्मिन्निति स्थानिवद्भावेन शपा व्यवधानात्तिरूपकृत्प्रत्ययपरत्वाभावात्तदप्रवृत्तिरिति समाहितम्। एतेनान्तवद्भावस्य स्थानिवद्भावाप्रतिबन्धकत्वं स्पष्टमेव लभ्यत इति स्थानिवत्त्वेनैव तादृशशङ्कानिरासे

# सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव।

---

एवमुक्तिरुपायान्तरप्रदर्शनायैवेति बोध्यम्। एतेन दाश्वानितिसूत्रस्थप्रागुक्तोद्योतग्रन्थादर्शनेन वा दर्शनेऽपि तदर्थस्य स्वोत्प्रेक्षितत्वभ्रमजननाय वा " केचित्तु सवर्णदीर्घोत्तरमेकादेशस्य स्थानिवद्भावादस्येकारस्य णलात्मकासवर्णाच्परत्वाभावेनैव तत्रेयङादेशस्याप्रवृत्तिः। अचःपरस्मिन्निति हि यत्किंचित्सामान्यापेक्षया पूर्वत्वेन दृष्टस्यापि विधौ प्रवर्तत इत्यादि, वदन्तीत्यन्ता वाक्यार्थचन्द्रिकाकृदुक्तिरपास्ता। अस्यार्थस्य ग्रन्थकृताऽन्यत्रोक्तत्वात्। नन्वेतत्परिभाषाभ्युपगमे गाङ्गतावित्यसाद्धातोर्लट्यातामादौ गा, अ, आते इत्यवस्थायामन्तरङ्गादपि सवर्णदीर्घात्पूर्वमनया परिभाषया, आतो ङित इत्यस्य प्रवृत्तौ गाते इति रूपासिद्धिः। तथाचास्य धातोरादादिकत्वे भौवादिकत्वे च न विशेष इति सिद्धान्तव्याकोपः। इयादेशप्रवृत्त्यप्रवृत्तिरूपविशेषस्य सत्त्वात्। तथा यया तयेत्यादौ त्यदाद्यत्वोत्तरं टापः पूर्वमिनाद्यादेशापत्तिरतः केषांचिन्मतानुरोधेनाह। [सा चेयमिति।] [समानकार्यित्व एवेति।] समानोद्देश्यत्व एवेत्यर्थः। तत्त्वं च वार्णशास्त्रीयोद्देश्यतासमानाधिकरणोद्देश्यताकत्वमाङ्गशास्त्रस्येति बोध्यम्। उक्तरूपं कार्यित्वं चागमादेशसाधारणमित्यागमविषयेऽप्यस्य न्यायस्य प्रवृत्तिः। अत एव वारिणीत्यादिसिद्धिः। अन्यथा नुमःपूर्वमन्तरङ्गत्वात्सवर्णदीर्घे तदसिद्धिस्स्पष्टैव। यद्यपि ह्रस्व इति सूत्रे शेखरे तत्रानुवृत्तस्याभ्यासस्येत्यस्य वैयधिकरण्येन संबन्धमुक्त्वा "अत एव छो इत्यस्यात्वे लिटि छशब्दस्य द्वित्वेऽन्तरङ्गत्वाद्दीर्घादित्यनेन तुक्यनजन्तस्यापि ह्रस्वसिद्धिरित्युक्त्वा, वार्णादाङ्गमितितूभयोरादेशत्व एवेति तद्भाव इत्युक्तम्। तथापि तस्य ग्रन्थस्य दीर्घोऽकित इति सूत्रस्थ " तदन्ताग्रहणाद्वेति वार्तिकानुसारेण प्रवृत्ततया न तद्विरोधः। तदेतत्तद्भाव इत्यत्र तत्पदोपादानेन ग्रन्थकृता सूचितम्। एवं झोऽन्त इति सूत्रे शेखरेऽन्यत्रापि च यत्र क्वचिदस्याः परिभाषायाः समानस्थानिकत्व एव प्रवृत्तिरित्युक्तम्। तत्रापि स्थानिपदं कार्यिमात्रोपलक्षणमिति न तद्विरोधः। नच वारिणीत्यादावपवादत्वात्सवर्णदीर्घं बाधित्वा नुमीष्टसिद्ध्याऽस्य न्यायस्यागमविषयेऽपि प्रवृत्तौ फलाभाव इति वाच्यम्। वारिणी वारिणेत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव नुमो न्याय्यत्वात्। नच लक्ष्यानुसाराद्बाध्यसामान्यचिन्तया स्वविषये प्राप्तस्य सर्वस्यापि नुम् बाधक

इति न दोष इति वाच्यम्। लक्ष्यानुसरणस्य लक्षणैकचक्षुष्कदुर्ज्ञेयत्वादिति बोध्यम्। नन्वेवमवचच्छतुः, चिच्छादयिषति चेच्छिद्यत इत्यादावभ्यासह्रस्वत्वेत्वगुणाद्यपेक्षयान्तरङ्गत्वात्तुक्य-नजन्तत्वादेते विधयो न प्राप्नुवन्तीत्याशङ्क्याभ्यासावयवस्याच इत्यादिना वैयधिकरण्येनान्वय-प्रतिपादनपरदीर्घोऽकित इति सूत्रस्थभाष्यविरोधः। अन्तरङ्गमपि तुकं बाधित्वा अनया परिभाषया ह्रस्वादीनां प्रथमप्रवृत्ताविष्टसिद्ध्या वैयधिकरण्येनान्वयप्रयासस्य निष्फलत्वादिति वाच्यम्। तद्भाष्यस्य "तदन्ताग्रहणाद्दे" ति वार्तिककाराशयवर्णनपरतायां उद्योते ग्रन्थकृता स्पष्टमुक्तत्वात्। वस्तुतस्तु संभवति सामानाधिकरण्ये वैयधिकरण्यान्वयस्यान्याय्यत्वादजन्ता-भ्यासस्येत्यादिरूपेण सामानाधिकरण्येनैव तत्र तत्रान्वयो वाच्यः। अवचच्छतुरित्यादौ त्वनया परिभाषया तुकः पूर्वं ह्रस्वादीनां प्रवृत्त्या न दोष इति भाष्याकूतमिति ग्रन्थकृदाशयः। अत एव वृत्तौ पदमञ्जर्यां च ह्रस्व इत्यादिसूत्रेष्वजन्तस्याभ्यासस्येत्येवं सामानाधिकरण्येनैवान्वयो दर्शितः। अस्य न्यायस्यागमादेशसाधारणत्वादेव च्छ्वोरिति सूत्रस्थतुग्ग्रहणस्य प्रकृतपरिभाषानित्यत्व-ज्ञापकतापरवक्ष्यमाणग्रन्थसंगतिः। तद्धि विश्नः प्रश्न इत्यादौ तुग्विशिष्टस्य छस्य शकारादेशविधानार्थं कृतम्। अस्यानित्यत्वानङ्गीकारेत्वन्तरङ्गमपि तुकं बाधित्वा, आङ्गत्वाच्छादेशे तुकोऽप्राप्त्या तद्व्यर्थमिति तदाशयः। अस्य न्यायस्यादेशमात्रविषयकत्वे तस्यैतन्न्यायाविषयतया तेन निर्देशेनैतदनित्यत्वज्ञापनमसंगतमेव स्यात्। नच तेनाप्यादेशविषयकत्वमेवास्य न्यायस्य ज्ञाप्यताम्। किं सामान्यतोऽनित्यत्वज्ञापनेनेति वाच्यम्। तथा सति येन विधिरितिसूत्रभाष्यो-दाहृते स्योन इत्यत्र गुणात्पूर्वं यणोऽसिद्ध्यापत्तेः आङ्गत्वाद्गुणस्यैव न्याय्यत्वात्। नच पुगन्तसाहचर्येण लघूपधगुणस्यापि हलन्त एव प्रवृत्त्या न तत्र दोष इति न सामान्यतोऽनित्यत्व-ज्ञापने फलमिति वाच्यम्। तथा सति, रियति, अधुसुवदित्यादौ लघूपधगुणात्पूर्वमन्तरङ्गत्वादुवङः प्रवृत्तिरित्याशयक "शचङन्तस्यान्तरङ्गलक्षणत्वा" दिति क्ङिति चेति सूत्रस्थभाष्यविरोधापत्तेः। नन्वेवमनित्यत्वस्य सर्वथा आवश्यकत्वे तेनैव सर्वनिर्वाहेऽयं संकोचकरणप्रयासो विफल एवेति चेत्सत्यम्। ये केचन धर्मिग्राहकमानादस्य न्यायस्य समानाश्रयत्व एव प्रवृत्तिरिति वदन्ति, तन्मतेऽपि समानकार्यित्वरूपसमानाश्रयत्व एवास्य प्रवृत्तिर्वाच्या, न तु समाननिमित्तकत्वरूपे, तथा सति धर्मिग्राहकमानविरोधादिति विशेषं कथयितुमस्यार्थस्य ग्रन्थकृतोक्तत्वात्। तदेतद्ध्व-नयन्ननुपदमेव सीरदेवाद्युक्तं तत्खण्डयति। यत्त्वित्यादिना। एवं च सामान्यतोऽनित्यत्वमेव ग्रन्थकृदभिमतम्। मतान्तररीत्या संकोचकरणेऽपि समानकार्यित्व एवेत्येव संकोचः कार्यो

यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न-ज्ञापिते ऽपीयायेयेषेत्याद्यसिद्धेः। सूत्रवैयर्थ्यस्य तदवस्थ-त्वाच्च। स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्य-त्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः। न चैवम-पीयायेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादेः स्थानि-

---

न तु समाननिमित्तकत्व एवेति, समानस्थानिकत्व एवेति वा, आद्ये धर्मिग्राहकमानविरोधात्। अन्त्ये ह्रस्व इत्यादिसूत्रेषु वैयधिकरण्यान्वयप्रयासस्य वारिणीत्यादिसिद्ध्ये लक्ष्यानुसरणप्रयासस्य च स्वीकार्यत्वादिति ग्रन्थकृतो गूढाभिसन्धिरिति सुधियो विभावयन्तु। एतेन पुगन्तसाहचर्येण लघूपधगुणस्यापि हलन्ताङ्ग एव प्रवृत्त्या स्योन इत्यादावदोषेण न सामान्यतोऽनित्यत्वाश्रयणे फलमिति यागेश्वरपण्डितोक्तमादेशविषय एव प्रवृत्तिरिति मिश्राद्युक्तं चापास्तम्। यत्तु न्यासकारादयः, समाननिमित्तकत्वरूपसमानाश्रयत्व एवास्याः प्रवृत्तिः। अत एव स्योन इत्यत्र गुणात्पूर्वमन्तरङ्गत्वाद्यणादेश इति येन विधिरिति सूत्रभाष्योक्तं संगच्छत इत्याहु, स्तन्मतं खण्डयति। [यत्त्वित्यादिना।] [समानाश्रयत्व एवेति।] एवेनोक्तकार्यित्वव्यवच्छेदः। तथा सति स्योन इत्याद्यसिद्धेरिति तदाशयः। [इत्याद्यसिद्धेरिति।] असमाननिमित्तकत्वेन प्रकृतपरिभाषाया अप्रवृत्तावन्तरङ्गत्वाद्गुणादितः पूर्वं सवर्णदीर्घे, आय, ईषेत्याद्यापत्तेरिति भावः। इष्टापत्तिमभ्युपेत्याह। [सूत्रेति।] अभ्यासस्येति सूत्रेत्यर्थः। एवं च ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावेन ज्ञापकत्वासङ्गतिरिति भावः। नन्वेवं कथं स्योन इत्यादिसिद्धिरत आह। [स्योन इत्यत्र त्विति।] [वक्ष्यमाणरीत्येति।] अनुपदमिति शेषः। [एव मपीति।] प्रकृत-परिभाषया सवर्णदीर्घात्पूर्वं गुणवृद्ध्योः प्रवृत्तावपीत्यर्थः। [वृद्ध्यादेस्स्थानिवत्त्वेनेति।] ननु वृद्ध्युत्तरमियङादेशात्पूर्वमन्तरङ्गत्वादायादेशे, इ, आय, इति स्थिते वृद्धौ स्थानिवत्त्वेन सवर्णातिदेशेऽपि तदादेशे, आयादेशे तदभावात्कथ मियङो दौर्लभ्यम्। नच वृद्धावतिदिष्टस्य

सवर्णत्वस्य पुनस्तदादेशे आयादेशे, अतिदेशादियङ्दुर्लभ इति वाच्यम्। लक्ष्ये लक्षणन्यायेन पुनःस्थानिवत्त्वात्प्रवृत्तेः। विकारकृतलक्ष्यभेदस्यानाश्रयणात्। अत एवैतिकेत्यादौ प्रत्ययस्थादितीत्वं सिद्ध्यति। अन्यथा पूर्वं टाबेकादेशस्य स्थानिवद्भावेन ततस्त्यदाद्यत्वनिष्पन्नाकारेण सह जातस्य पररूपस्य पुनः स्थानिवत्त्वेनाकारद्वयव्यवधानादाप्परककारभावात्तदनापत्तिर्दुर्वारा। इत्वविधानसामर्थ्यादकारद्वयव्यवधानेऽपीत्वं भवतीति तु वक्तुमशक्यम्। सर्विकेत्यादौ तस्य चारितार्थ्यादिति चेदत्र केचित्। स्थानिवद्भावप्रकरणे स्वस्थानिस्थानिनोऽपि स्वस्थानित्वेन ग्रहणादायादेशस्थानिभूतवृद्धिस्थानिनोऽप्यायादेशस्थानित्वेन तद्वृत्तिसवर्णत्वस्यायादेशेऽतिदेशे, इयङो दौर्लभ्यमित्याशयात्। अत एव सुनयिकेत्यादौ धात्वन्तयकोस्तु नित्यमित्यनेन नित्येत्वसिद्धिः। अन्यथा आनुमानिकस्थानिवद्भावेन गुणोत्तरं ने इत्यस्मिन् धातुत्वातिदेशेऽप्यायादेशोत्तरं यान्ते तदभावात्तदसिद्धिस्स्यात्। स्थानिस्थानिनोऽपि स्वस्थानित्वेन ग्रहणे तु नीवृत्तिधातुत्वस्य यान्तेऽतिदेशान्न दोषः। अत एव च यून हत्यादौ सवर्णदीर्घोत्तरं न संप्रसारण इति निषेधसिद्धिः। अन्यथा संप्रसारणस्थानिकपूर्वरूपादेशस्य सवर्णदीर्घस्य स्थानिवत्त्वेन संप्रसारणत्वस्यातिदेष्टुमशक्यतया निषेधप्रवृत्तेर्दौर्लभ्यमेव स्यात्। यूनस्तिरिति निर्देशश्चात्रार्थे मानमिति वदन्ति। अन्येतु निर्देशादस्मादतिदेशविषये लक्ष्ये लक्षणन्यायस्याप्रवृत्तिरित्येव कल्पयितुं युक्तम्। एतिकेत्यादौ तु न यासयोरितिनिषेधादित्वविधावविशेषेणैकादेशस्य स्थानिवत्त्वाभावकल्पनेनैव निर्वाह इत्याहुः। ननु कथंचिदुक्तरीत्या स्थानिवद्भावेनायादेशे स्थानिवृत्तिसवर्णाच्त्वातिदेशेऽपि तद्घटकाकारेऽसवर्णाच्त्वस्य सत्त्वात्तदादायेयङ्सुलभः। अतिदिश्यमानधर्मो हि स्वाश्रयसामानाधिकरण्येनैव स्वविरुद्धधर्मनिवर्तको नत्वन्यथा। अत एवाचःपरस्मिन्निति सूत्रे भाष्ये परस्मिन्नित्यस्य युवजानिरित्यत्र यलोपं फलत्वेन प्रदर्श्य तत्र स्थानिवद्भावेन समुदायेऽच्त्वातिदेशेऽपि तद्घटकनकारनिष्ठं वल्त्वमादाय यलोपसिद्ध्या नेदं प्रयोजनमित्युक्तम्। अभावात्मकप्रधानकार्यातिदेशपक्षेऽपि स्थानिनि यन्न भवति तदादेशेऽपि न भवतीति तदर्थाद्विशिष्टादेशनिमित्तकस्यैव कार्यस्य निवृत्तिर्न तु तदवयवनिमित्तकत्वेन प्राप्तस्य। अत एव तत्पक्षेऽपि परस्मिन्नित्यस्य युवजानिरित्येतन्न प्रयोजनमित्याशयेन "योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेश इत्युक्तम् तत्रैव भाष्ये। एवं च स्थानिवद्भावेनेयङो दौर्लभ्योक्तिरयुक्तेति चे, दिदानीमियेषेत्यादिलक्ष्यानुरोधादियङ्विधावसवर्ण इत्यस्य प्रसज्यप्रतिषेधपरत्वेन व्याख्येयत्वादवयवेऽसवर्णाच्त्वस्य सत्त्वेऽपि समुदाये स्थानिवत्त्वेन लब्धं सवर्णाच्त्वमादायासवर्ण इति प्रतिषेधादियङो दौर्लभ्य-

वत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम्। सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः। तच्च सामान्यापेक्षमभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति। अत एवारतीत्यादौ यणादेशस्य

---

मित्याशयात्। पर्युदासपरत्वेन व्याख्याने वियायेत्यादौ सत्यपि स्थानिवद्भावे प्रागुक्तरीत्याऽवयवगतमसवर्णत्वमादायेयङ् प्रवृत्त्या सूत्रस्य चारितार्थ्यादियेषेत्यत्र स्थानिवद्भावेनैकारे सवर्णत्वातिदेशादियङ्न स्यात्। प्रसज्यप्रतिषेधेन व्याख्यानेवियायेत्यत्रापि सूत्रस्य चारितार्थ्याभावेन यावताविनेति न्यायेन वक्ष्यमाणरीत्या स्थानिवद्भावनिषेधज्ञापनादुभयत्रापीयङ् सिद्धिः। स्थानिवद्भावनिषेधज्ञापनोत्तरंत्वसवर्ण इत्यस्य पर्युदासपरत्वेऽपि न दोष इति त्वन्यदेतदिति बोध्यम्। [सामान्यापेक्षमिति।] असति बाधके प्रमाणानां सामान्ये पक्षपातादिति भावः। [अभ्यासकार्ये इति।] एतत्फलं तु निन्य इत्यत्रोत्तरनकारस्यानिदितामित्यनेन लोपाभावः। अन्यथोत्तरखण्डावयवेकारस्थानिकस्य यणोऽनेन स्थानिवत्त्वनिषेधे हलन्ताङ्गत्वस्य सत्त्वेन लोपस्स्यात्। एतद्विशेषणे तु नलोपस्याभ्यसकार्यत्वाभावादेतन्निषेधाप्रवृत्त्या स्थानिवद्भावेन हलन्ताङ्गत्वाभावान्न दोष इति बोध्यम्। [तदुत्तरखण्डादेशस्येति।] एतत्फलं वव्रश्चेत्यत्रोरदत्वस्य स्थानिवद्भावेन संप्रसारणत्वाद्वकारस्य संप्रसारणाभावः। अन्यथाऽभ्याससंबद्धयादेशस्याप्युरदत्वस्य स्थानिवत्वनिषेधे वस्य संप्रसारणपरत्वाभावान्नसंप्रसारण इति निषेधाप्रवृत्त्याऽभ्यासवकारस्य संप्रसारणापत्तिरिति भावः। यदि तु न संप्रसारण इति निषेधोऽपि शास्त्रबोधितत्वात्कार्यमेवेति तस्यात्राभ्यासकार्यपदेन ग्रहणमित्युच्यते, तदा एतद्विशेषणाभावेऽप्यस्य स्थानिवद्भावस्य तत्कार्यप्रतिबन्धकत्वाभावादेतन्निषेधाप्रवृत्त्या स्थानिवत्त्वेन संप्रसारणत्वे, इष्टसिद्धिरिति नेदमस्य फलम्। किंतु प्रयोजनान्तरमन्वेष्यम्। [अत एवेति।] उक्तज्ञापकस्येयङुवङ्मात्रविषयकत्वमनङ्गीकृत्य सामान्यतोऽभ्यासकार्यमात्रविषयकत्वाङ्गीकारादेवेत्यर्थः। [आरतीत्यादाविति।] ऋधातोर्यङ्लुगन्ताल्लटि झिप्रत्यये सन्यङोरिति द्वित्वे झस्यादादेशेऽभ्यसस्योरदत्वे हलादिश्शेषे रुग्रिकौ च

स्थानिवत्त्वादभ्यासस्य ढ्रलोप इति दीर्घो दुर्लभ इत्यपास्तम्। दीर्घविधौ तन्निषेधाच्च। अरियृयादित्यत्र तु स्थानिवत्त्वेनेयङ् भवत्येव। तस्य स्थानिवत्वस्याभ्यास-

---

लुकीत्यभ्यासस्य रुगागमे अर्, ऋ, अतीत्यवस्थायामुत्तरखण्डऋकारस्य यणि रोरीत्यनेन रेफस्य लोपे ढ्रलोप इतिदीर्घे चोक्तरूपसिद्धिः। उक्तज्ञापकस्य सामान्यापेक्षत्वानङ्गीकारे तु दीर्घे कर्तव्ये उत्तरखण्डादेशस्य यणः स्थानिवत्त्वे तत्र रेफलोपनिमित्तकपरत्वाभावाद्दीर्घो न स्यादिति भावः। ननु स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदितिनियमात्कथमत्र स्थानिवत्त्वनिषेधः। नच फलाभावाद्दीर्घविषये तादृशनियमानाश्रयणमिति वाच्यम्। विव्यतुरित्यादावुपधायां चेत्यनेन प्राप्तदीर्घवारणाय तदावश्यकतायाः कौमुद्यामेवोक्तत्वादिति चेन्न। तत्सूत्रे प्रत्यासत्त्या हल्परकधातूपधाभूतवकारपरकस्य धात्ववयवस्यैवेको ग्रहणेन तत्र सत्यपि स्थानिवत्त्वनिषेधेऽभ्यासस्य धातुत्वाभावात्तदवयवस्येको धात्ववयवत्वाभावादेव तत्र दीर्घवारणेन दीर्घांशे तादृशनियमस्यानुपयोग इत्याशयात्। अत एव न पदान्तेतिसूत्रप्राप्तस्थानिवद्भावनिषेधस्य तेन नियमेन वारणेऽपि पूर्वत्रासिद्धीये न स्थानिवदित्यनेन स्थानिवत्त्वनिषेधस्य दुर्वारतया तेन स्थानिवत्त्वनिषेधेऽपि न तत्र दीर्घः। नच सामर्थ्यादस्यापि निषेधस्य तादृशनियमो निवर्तक इति वाच्यम्। तदपेक्षया प्रत्यासत्तिमूलकेन निरुक्तव्याख्यानेनैव तत्र दीर्घवारणस्य न्याय्यत्वात्। अत एव परिपूर्वाद्व्येञः क्विपौ सर्वत्र प्रसारणिभ्यो ड इति डप्रत्यये टिलोपे च सति परिव्य इत्यत्रोपसर्गसम्बन्धीकारस्योपधायां चेति दीर्घस्याप्रवृत्तिस्सिद्धा। अन्यथा अत्रादेशस्य लोपरूपत्वेन सत्यपि तादृशनियमे दीर्घविधौ स्थानिवत्त्वनिषेधस्य सुवचतया वित्यतुरित्यादाविव स्थानिवद्भावेन दीर्घवारणस्याशक्यतया स्यादेव दीर्घ इति बोध्यम्। तत्कार्यप्रतिबन्धकीभूतेत्यस्य फलमाह। [अरियृयादिति।] ऋधातोर्यङ् लुगन्तादाशीर्लिङि द्वित्वेऽभ्यासस्योरदत्वे हलादिश्शेषेऽभ्यासस्य रिगागमे, अरि, ऋ, यादित्यवस्थायामियङः परत्वाद्रिङादेशे पुनःप्रसङ्गविज्ञानात्तस्य स्थानिवत्त्वेनेयङादेशसिद्धिः। अत्र तादृशविशेषणाभावेत्वनेन स्थानिवत्त्वनिषेधादसवर्णाच्परत्वाभावेनेयङ् न स्यात्। सति तु तद्विशेषणेऽत्र स्थानिवद्भावस्याभ्यासकार्यसाधकत्वेऽपि तत्प्रतिबन्धकत्वाभावेन निषेधाप्रवृत्त्या इयङ्सिद्धि-

रिति भावः। यदि तु क्रमिकान्वाख्याने पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वमादाय रिङः प्रागेवेयङः प्रवृत्तिरित्युच्यते। तदेदं विशेषणं व्यर्थमिति केचित्। वस्तुतस्तु पदस्य विभज्यान्वाख्याने प्रक्रियाक्रमाधीनपूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं रिङ एवास्तीतीयङः पूर्वं रिङादेशे स्थानिवत्त्वेनैवेयङादेशप्रवृत्तेर्वाच्यतया, इदं विशेषणमावश्यकमेव। यदि तु पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वादेतद्विषये क्रमिकान्वाख्यानमेवाश्रित्य कालिकेन च तादृशान्तरङ्गत्वेन रिङःपूर्वमियङादेश इत्युच्यते तदा एतद्विशेषणफलमरियूतीत्यादि बोध्यम्। ऋधातोर्यङ् लुगन्ताल्लटि झिप्रत्यये, अदादेशे द्वित्वेऽभ्यासकार्येषु, रिकि अरि ऋ, अतीत्यवस्थायां वर्णमात्राश्रयत्वेनान्तरङ्गत्वादियङः पूर्वं यणादेशे ततःस्थानिवत्त्वेनासवर्णाच्परत्वादियङि तत्सिद्धिः। अभ्यासकार्ये तदुत्तरखण्डादेशस्य स्थानिवत्त्वं नेत्येतावन्मात्रोक्तावनेन स्थानिवद्भावनिषेधात्तदसिद्धिः। उक्तविशेषणदाने तु प्रकृते स्थानिवत्त्वस्याभ्यासकार्यसाधकत्वेऽपि प्रतिबन्धकत्वाभावेन न निषेधप्रसक्तिरिति बोध्यम्। नचात्रापि वर्णमात्राश्रयत्वेन यणादेशस्येव प्रागुक्तदिशा, इयङोऽप्यन्तरङ्गत्वादुभयोरन्तरङ्गयोः परत्वादियङादेशे, इदमपि फलं दुर्निरूपमिति वाच्यम्। इयङपेक्षया नित्यत्वाद्यण एव प्रवृत्त्या फलस्य सुवचत्वात्। नचैतद्विशेषणे, इयायेत्यत्रायादेशस्य स्थानिवत्त्वेन लघूपधगुणापत्तिः। तत्स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावेनैतन्निषेधस्याप्राप्तेरिति वाच्यम्। बहिर्भूतप्रत्ययापेक्षत्वेन बहिरङ्गगुणापेक्षयाऽन्तरङ्गत्वादियङः प्रवृत्त्या अदोषात्। नचैवमचकाणदित्यत्र काण्यादीनां वेति ह्रस्वाभावपक्षे वृद्धेः स्थानिवत्त्वे लघुत्वादभ्यासस्य लघुपरत्वेन सन्वद्भावापत्तिः। तत् स्थानिवद्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावेनोक्तनिषेधाप्रवृत्तेरिति वाच्यम्। अभ्याससंबन्धिकार्यमात्रे कर्तव्येऽभ्यासानावयवकधातोर्योऽयमवयव उत्तरखण्डसंबन्धी, अभ्यासादव्यवहितपराङ्गरूपस्तस्य य आदेशस्तस्याभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति तदर्थेनादोषात्। अत एव यातिरित्यादिसिद्धिः। यातेर्यङन्तात् क्तिचि द्वित्वे यङोऽकारस्यातोलोप इत्यनेन लोपे लोपोव्योर्वलीत्यनेन यकारस्य लोपे यङोऽकारलोपस्य स्थानिवत्त्वेनोत्तरखण्डसंबन्ध्याकारस्य लोपे पुनर्यलोपे यातिरिति सिद्धिः। अभ्याससंबन्ध्याकारस्य तु न पुनर्लोपः। उत्तरखण्डसंबन्ध्याकारलोपस्य स्थानिवत्त्वात्। अभ्यासकार्ये तदुत्तरखण्डादेशस्येत्यत्र निरुक्तार्थाविवक्षणे तूत्तरखण्डसंबन्ध्याकारलोपस्यानेन स्थानिवत्त्वनिषेधात्पुनरालोपे यलोपे च प्रत्ययमात्रस्य श्रवणं प्रसज्येत। ईदृशार्थविवक्षणे तूत्तरखण्डसंबन्ध्याकारस्याभ्यासादव्यवहितपरत्वाभावान्न तदादेशस्यानेन स्थानिवत्त्वनिषेध इति बोध्यम्। एतेनौनदित्यादावत उपधाया इति वृद्ध्यापत्तिरित्यपि परास्ता। तत्राभ्यासोत्तरखण्डस्यानर्थकत्वेन

कार्यप्रतिबन्धकत्वाभावात् ॥ इयं चाङ्गसंबन्धिन्याङ्ग एवेति स्वरितो वेति सूत्रे भाष्ये। तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः। इयं चानित्या च्छ्वोरिति सतुङ्निर्देशात्। अन्यथान्तरङ्गत्वात्पूर्वं तुकः शादेशे

---

तन्मात्रे धातुत्वस्य वक्तुमशक्यतयाऽभ्यासविशिष्टस्यैव धातुत्वादुत्तरखण्डसंबन्ध्यल्लोपस्याभ्यासानवयवकधात्ववयवादेशत्वाभावेनाभ्यासादव्यवहितपराजादेशत्वाभावेन च प्रकृतनिषेधाप्रवृत्त्याऽल्लोपस्य स्थानिवत्त्वेन वृद्ध्यप्राप्तेः। नचैवमभ्यासकार्य इति विशेषणं व्यर्थम्। निन्य इत्यत्रोत्तरखण्डसंबन्धाकारस्याभ्यासादव्यवहितपरत्वाभावेनैव प्रकृतनिषेधाप्रवृत्त्या दोषाभावादिति वाच्यम्। धर्मिग्राहकमानलब्धस्य तादृशविशेषणस्याभावे तादृशप्रत्यासत्तेरप्याश्रयितुमशक्यतया तल्लाभायैव तदुपादानादिति बोध्यम्। [अङ्गसंबन्धिन्याङ्ग एवेति।] धर्मिग्राहकसाजात्यादङ्गनिष्ठोद्देश्यताकेऽङ्गाधिकारीये कार्य एवेयं परिभाषा प्रवर्तत इत्यर्थः। [यणुत्तरमाडुक्त इति।] अन्यथाऽनया परिभाषया यणः पूर्वमाट एव प्रवृत्तिर्न्याय्येति भावः। ईदृशार्थविवक्षणेत्वाट आङ्गत्वेऽप्याङ्गोद्देश्यकत्वाभावेन प्रकृतपरिभाषाया अप्रवृत्त्या, अन्तरङ्गत्वादाटः पूर्वं यणः प्रवृत्तिरिति भावः। नन्वेवमपि स्योन इत्याद्यसिद्धिः। सिवेर्बाहुलकादौणादिके नप्रत्यये, ऊठि सि, ऊ, न, इत्यवस्थायामन्तरङ्गमपि यणं बधित्वाऽनया परिभाषया लघूपधगुणापत्तेः। तत्र गुणस्य वार्णशास्त्रीयोद्देश्यतासमानाधिकरणोद्देश्यताकत्वरूपसमानकार्यित्वस्याङ्गोद्देश्यकाङ्गाधिकारीयकार्यत्वस्य च सत्त्वेन निरुक्तरीत्या संकोचकरणेऽपि प्रकृतपरिभाषाप्रवृत्तेर्दुर्वारत्वादत आह। [इयं चानित्येति।] एव चावश्यकेन सामान्यतोऽनित्यत्वेनैव सर्वनिर्वाहे प्रागुक्तरीत्या संकोचकरणमनावश्यकमेवेति बोध्यम्। अनित्यत्वे मानमाह। [सतुक्निर्देशादिति।] छकारात्पूर्वं प्रश्लेषेण तकारनिर्देशादित्यर्थः। तद्धि विश्नःप्रश्न इत्यादौ शादेशात्पूर्वमन्तरङ्गत्वाच्छे चेति तुकि तद्विशिष्टस्य शादेशार्थम्। अन्यथा छकारस्य शकारेऽपि तकारश्रवणापत्तिः। नचाकृतव्यूहपरिभाषया न पूर्वं तुगिति वाच्यम्। तस्या असत्त्वात्। अस्या अनित्यत्वाभावेत्वन्तरङ्गादपि तुकः

**तुको ऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥**

**नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणे ऽपीटः श्रवणापत्तिरिति चेत्।**

---

पूर्वमनया परिभाषया शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः। [अन्यत्रेति।] शेखरादावित्यर्थः।

नन्वेवमिति। अन्तरङ्गत्वेनाभिमतस्य सर्वथा प्रथमप्रवृत्त्यङ्गीकार इत्यर्थः। [इत्यादाविति।] आदिना पपुष इत्यादिसंग्रहः। [अन्तरङ्गत्वादिटीति।] यथा पट्व्येत्यादौ क्रमेणान्वाख्याने पूर्वयणादेशप्रवृत्तिकाले परयणादेशनिमित्तस्यासत्त्वान्निश्शङ्कं पूर्वयणादेशस्य प्रवृत्तिरेवमत्रापि क्रमेणान्वाख्याने सद्लृधातोःक्वसौ द्वित्वे एत्वाभ्यासलोपयोश्च कृतयोस्सेद् वसित्यस्यामवस्थायां बहिरङ्गत्वेनाभिमतसंप्रसारणनिमित्तस्य शसोऽभावान्निश्शङ्कं वलादिलक्षणे इटीत्यर्थः। वस्तुतोऽन्तरङ्गत्वेनाभिमतस्य प्रथमं प्रवृत्तौ दोष इत्यर्थप्रतिपादन एवात्र ग्रन्थकृतस्तात्पर्यं नत्वन्तरङ्गपरिभाषासंचारे। अन्तरङ्गप्रवृत्तिकाले जातत्वस्य समकालप्राप्तत्वस्य वा बहिरङ्गेऽसत्त्वेन तत्परिभाषाया इदानीमविषयत्वात्। निरूपयिष्यते चेदमग्रे ग्रन्थकृता। अन्तररङ्गपरिभाषा निरूपणावसरे पट्व्येत्यादिविषये "क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वम्। बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्य" मित्युक्त्या, अचःपरस्मिन्निति सूत्रे उद्योते "तत्र पदस्यैव विभज्यान्वाख्याने सर्वेषां युगपत्प्राप्तावनया व्यवस्था। क्रमेणान्वाख्याने तु पूर्ववृत्तिकत्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्य परयणादेशस्य बहिरङ्गत्वं तु निमित्ताभावादप्राप्तिरूपं बोध्यमित्युक्त्या च तत्पक्षेऽन्तरङ्गपरिभाषाया अव्यवस्थापकत्वध्वननात्। एतत्परिभाषाज्ञापनोत्तरं तु परिभाषाद्वारा अन्तरङ्गप्रवृत्तिकाले बहिरङ्गस्योपस्थितत्वादेतत्प्रवृत्तिरिति त्वन्यदेतत्। [इटश्श्रवणापत्तिरिति।] तत्स्थानिकस्य यणःश्रवणापत्तिरित्यर्थः। नचान्तरङ्गे यणि कर्तव्ये बहिर्भूतप्रत्ययनिमित्तकत्वेन बहिरङ्गस्य संप्रसारणस्यासिद्धत्वात्कथं यणिति वाच्यम्। अक्षद्यूरित्यादाविव नाजानन्तर्य इति निषेधेनान्तरङ्गपरिभाषाया अप्रवृत्तेः। नच

अत्र केचित्।

अकृतव्यूहाः पाणिनीयाः॥ ५६ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भाविनि निमित्तविनाश इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते ऽन्तरङ्गं

---

सत्यपि यणादेशे यलोपदृष्ट्या संप्रसारणस्य बहिरङ्गत्वेनासिद्धत्वाद्वल्परत्वे लोपो व्योरित्यनेन यलोपे सेदुष इति रूपसिद्ध्या न दोष इति वाच्यम्। अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये तत्र च कृते यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये बहिरङ्गस्य बहिरङ्गासिद्धत्वं नेति नाजानन्तर्य इत्यस्यार्थस्वीकारेणाक्षद्यूरित्यादाविव वलि लोपस्याप्रवृत्त्या निरुक्तदोषस्य तदवस्थत्वादिति बोध्यम्। [केचिदिति।] दीक्षितादय इत्यर्थः। अस्याहुरित्युत्तरेणान्वयः। परिभाषाघटकाकृतव्यूहा इत्यस्यार्थमाह। [न कृत इत्यादिना।] तत्र व्यूहशब्दार्थमाह। [विशिष्टो ऊहो निश्चय इति।] निश्चये वैशिष्ट्यं दर्शयति। [शास्त्रप्रवृत्तिविषय इति।] [यैरिति।] पाणिनिप्रोक्तव्याकरणशास्त्राध्येतृभिरित्यर्थः। एवं च वैयाकरणाः शास्त्रप्रवृत्तिविषयकनिश्चयाभाववन्त इति वाक्यार्थः फलितः। नन्वेवं सकलशास्त्रवैयर्थ्यप्रसङ्ग इत्यत आह। [भाविनीति।] भावलक्षणसप्तमीयम्। वस्तुत इट्संप्रसारणयोरन्तरङ्गत्वबहिरङ्गत्वयोस्सत्त्वात्फलितार्थाभिप्रायेणाह। [बहिरङ्गेणेत्यादि।] [पश्चात्संभाविते इति।] उत्तरकालभाविनीत्यर्थः। अस्य यथाश्रुतार्थकत्वं तु न युक्तम्। संभावनानिवेशस्योत्तरत्र करिष्यमाणतयाऽस्य ग्रन्थस्य तदभिप्रायकताया अयुक्तत्वात्। तदभिप्रायकत्वे सूत्थितादौ यद्येकादेशो न स्यात्तदा वृद्धिस्स्यादिति संभावनया प्रकृतपरिभाषाविषयतायास्सुवचतया "नचेत्यादिवक्ष्यमाणशङ्काग्रन्थस्य" "आदेशद्वारैव निमित्तविनाशसत्त्वेनाक्षते" रिति तत्समाधानग्रन्थस्य चानुपपत्तेः। यत्त्वत्र ज्ञापकं "गोरतद्धितलुकीति सूत्रे तद्धितग्रहणम्। तद्धि राजगवीयतीत्यादौ सुब्लुकि निषेधो माभूदित्येवमर्थं क्रियते। एतत्परिभाषाभावेत्वन्तरङ्गत्वाल्लुकः पूर्वं टचःप्रवृत्त्या इष्टसिद्ध्या तद्वैयर्थ्यं स्पष्टमेव। ज्ञापितेत्वस्मिन् लुको भावित्वेनालुग्रूपनिमित्त-

नेति यावत्। अत्र च ज्ञापकं समर्थानां प्रथमादिति सूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्। अन्यथाऽन्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्या आदिवृद्ध्या

---

विनाशाट्टचोऽसिद्ध्यापत्त्या तत्सफलमिति केचित्। तन्न। अन्तरङ्गानपीति न्यायेन टचःपूर्वं लुक एव प्रवृत्त्या तद्धितग्रहणाभावे सुब्लुकस्सत्त्वेन टचोऽप्रवृत्त्यापत्त्या तदर्थं तत्र तद्धितग्रहणस्यावश्यकत्वेन तद्वैयर्थ्याभावात्। तद्ध्वनयन्नत्र ज्ञापकमाह। [अत्रचेति।] [समर्थानामितीति।] तत्र समर्थग्रहणं न तावद्धस्त्रमुपगोरपत्यं चैत्रस्येत्यादावसामर्थ्ये तद्धितव्यावृत्त्यर्थम्। स्वार्थे परिपूर्णं पदमर्थान्तरेणोपसंक्रामतीति कुत्सित इति सूत्रस्थभाष्योक्तन्यायेन सार्थकतद्धितानां सुबन्तादेवोत्पत्त्या तेषां पदविधित्वेन समर्थपरिभाषयैवासामर्थ्ये तद्वारणसंभवात्। किंचानभिधानादप्यसामर्थ्ये न तद्धितोत्पत्तिरिति भाष्ये स्पष्टम्। तथाचात्र समर्थानामिति पदं न प्रसिद्धसामर्थ्यबोधकम्। किंतु शक्तपर्यायः। शक्तत्वं चार्थप्रतिपादकत्वम्। तच्च परिनिष्ठितस्यैव। नह्यकृतसन्धिकार्यस्यापरिनिष्ठितस्य सु, उत्थित इत्यादेः कल्पनयाप्यर्थवत्त्वमस्ति। तदुक्तं भाष्ये "अथैतत्समर्थग्रहणं नैव कर्तव्यम्। कर्तव्यं च। किं प्रयोजनम्। समर्थादुत्पत्तिर्यथा स्यादसमर्थान्माभूदिति। किं पुनस्समर्थम्। अर्थाभिधाने यत्समर्थम्। किं पुनस्तत। कृतवर्णानुपूर्वीकं पदमिति" कृतवर्णानुपूर्वीकमित्यस्य कृतसन्धिकार्यमित्यर्थः। एवं च कृतसन्धिकार्यादित्यर्थकं तदिति भावः। तदाह। [तद्धीति।] समर्थग्रहणं हीत्यर्थः। अत्र प्रसिद्धिद्योतकस्य हिशब्दस्य प्रत्ययोत्पत्त्यर्थमित्युत्तरेणान्वयः। तेन च तस्यान्यार्थत्वनिरासस्सूचितः। [अन्यथेति।] एतत्परिभाषाभावे इत्यर्थः। [अन्तरङ्गत्वाद्दीर्घे इति।] क्रमेणान्वाख्याने सवर्णदीर्घोत्तरं सुबुत्पत्त्यनन्तरमेव बहिरङ्गत्वेनाभिमतवृद्धिनिमित्तस्येञः प्रवृत्त्या सुबुत्पत्तेः प्राक्सवर्णदीर्घप्रवृत्तिकाले बहिरङ्गत्वेनाभिमतवृद्धिनिमित्तस्येञोऽभावात्तदप्राप्त्या पूर्वं दीर्घे कृते इत्यर्थः। [प्रत्ययेति।] इञादिप्रत्ययेत्यर्थः। [तद्व्यर्थतेति।] समर्थपदव्यर्थतेत्यर्थः। ज्ञापितेत्वस्मिंस्तच्चारितार्थ्यमाह। [तत्रहीति।] सूत्थितादावित्यर्थः। [आदिवृद्ध्येति।] बहिरङ्गभतया

सवर्णाच्त्वविनाशः स्पष्ट एव ॥ न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्। तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः ॥ न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्।

---

आदिवृद्ध्येत्यर्थः। [सवर्णाच्त्वविनाश इति।] अन्तरङ्गसवर्णदीर्घनिमित्तभूतसवर्णाच्त्वविनाश इत्यर्थः। तथाचानया परिभाषया पूर्वं सवर्णदीर्घाप्रवृत्तावकृतसन्धेरेवेञि आदिवृद्धावावादेशे च सावुत्थितिरिति स्यादतस्तद्व्यावृत्त्यर्थं समर्थग्रहणमिति भावः। अस्य स्वांशे चारितार्थ्यं विघटयति। [नचेति।] [अत्रेति।] सूत्थितादावित्यर्थः। [वृद्ध्यप्राप्त्येति।] वृद्धिनिमित्तस्येञस्तदानीमभावादिति भावः। [आदेशे इति।] दीर्घरूपे आदेशे इत्यर्थः। [वृद्धिप्राप्तावपीति।] एकादेशोत्तरमिञः प्रवृत्त्या निमित्तसत्त्वेन वृद्धिप्राप्तावपीत्यर्थः। [तन्निमित्तविनाशाभाव इति।] यथा सेदुष इत्यादौ बहिरङ्गसंप्रसारणेनान्तरङ्गेण्निमित्तवलादित्वस्य विनाशस्तथा, अत्र बहिरङ्गवृद्ध्या, अन्तरङ्गसवर्णदीर्घनिमित्तभूताक्त्वसवर्णाच्त्वयोर्विनाशाभाव इत्यर्थः। तथा च ज्ञपितेऽप्यत्रैतत्परिभाषाऽप्रवृत्त्या न समर्थग्रहणस्य स्वांशे चारितार्थ्यमिति भावः। [तद्द्वारैवेति।] आदेशविनाशद्वारैवेत्यर्थः। एवेन साक्षात्त्वव्यवच्छेदः। एकादेशोत्तरं वृद्धिप्रवृत्तावेकादेशेऽनुवर्तमानस्य सवर्णदीर्घनिमित्तभूताक्त्वस्य विनाशादादेशविनाशद्वारा तन्निमित्तविनाश इति भावः। यथा श्रीपायेत्यत्र सुपि चेति दीर्घप्रवृत्तौ तन्निमित्तस्यादेशेऽनुवर्तमानस्यावर्णत्वस्यातोलोपप्रयुक्तो विनाशः सन्निपातपरिभाषाप्रवृत्तौ निमित्तं तद्वद्दीर्घनिमित्तस्याक्त्वस्यादेशेऽनुवर्तमानस्य बहिरङ्गवृद्धिप्रयुक्तोविनाशः प्रकृतपरिभाषाप्रवृत्तौ निमित्तं स्यादतस्समर्थग्रहणमावश्यकमित्याशयः। पुनरन्यथा समर्थग्रहणस्य स्वांशे चारितार्थ्याभावमाशङ्कते। [नचेति।] [वृद्धेरसिद्धत्वादिति।] नन्वन्तरङ्गपरिभाषया अन्तरङ्गशास्त्रप्रवृत्तेः पूर्वं जातस्य तत्प्रवृत्तिकाले प्राप्तस्य वा बहिरङ्गस्यान्तरङ्गदृष्ट्या असिद्धतायाः प्रागुपदर्शितत्वात्प्रकृतेऽन्तरङ्गप्रवृत्त्युत्तरं प्राप्तायावृद्धेस्तया असिद्धत्वप्रतिपादनं कथमिति

समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात्॥ यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति। तन्न। असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्तव्ये ऽसिद्धत्वं

---

चेदत्रोच्यते। अन्तरङ्गे कर्तव्ये जातस्य तत्कालप्राप्तस्य वा बहिरङ्गस्यासिद्धत्वमित्यर्थो नापूर्वः। किन्त्वरङ्गप्रवृत्तिकाले तत्प्रापकतया प्रतिबन्धकतया वा यदुपस्थितं बहिरङ्ग तस्यैवासिद्धत्वं नानुपस्थितस्य मानाभावादिति न्यायसिद्धोऽयमर्थः। तथा च सत्यामस्यां परिभाषायां प्रकृतपरिभाषाप्रवृत्तिप्रयोजकस्यान्तरङ्गनिमित्तविनाशस्य निष्पादकत्वेन प्रकृतपरिभाषाद्वाराऽन्तरङ्ग प्रवृत्तिप्रतिबन्धकतया तत्प्रवृत्तिकाले बहिरङ्गायावृद्धेरुपस्थितत्वाद्युक्तमेवान्तरङ्गदृष्ट्या तस्या असिद्धत्वमिति। यद्वा प्रकृतपरिभाषाप्रवृत्तिहेतोरन्तरङ्गनिमित्तविनाशस्य निष्पादकत्वात्तत्प्रापकत्वेनोपस्थितायावृद्धेरेतत्परिभाषादृष्ट्या असिद्धत्वमन्तरङ्गपरिभाषया, इहाभिधित्सितम्। अस्याःपरिभाषाया अन्तरङ्गत्वं त्वस्या अन्तरङ्गनिवर्तकत्वात्तन्निमित्तकत्वेनेति। एतेन स्वकीयबुद्धिगोचरस्यैव बहिरङ्गप्रयुक्तान्तरङ्गनिमित्तविनाशस्यैतत्परिभाषाप्रवृत्तिप्रयोजकत्वेनान्तरङ्गदृष्ट्या बहिरङ्गस्यासिद्धत्वेऽपि परिभाषादृष्ट्या तस्य सिद्धत्वात्प्रवर्तत एव परिभाषेति शङ्कापि निरस्तेति बोध्यम्। एवं च समर्थग्रहणस्य पुनरचारिताथ्योद्यावता विनेति न्यायेन सामाधत्ते। [समर्थग्रहणेनेति।] [एतद्विषये इति।] अकृतव्यूहपरिभाषाविषय इत्यर्थः। [तस्या इति।] अन्तरङ्गपरिभाषाया इत्यर्थः। [अप्रवृत्तेरपीति।] अपिरेतत्परिभाषासमुच्चायकः। नन्वेवं समर्थग्रहणेन सामान्यतोऽन्तरङ्गपरिभाषानित्यत्वज्ञापनेनैव सेदुष इत्यादिरूपसिद्धौ कृतमेतत्परिभाषाज्ञापनप्रयासेनेत्याशयेन शङ्कते। [यत्त्विति।] [अनित्यत्वमेवेति।] एवेन प्रकृतपरिभाषानिरासः। [तन्नेति।] अत्रासंभवादित्यन्तो हेतुः। [असिद्धत्वं बोध्यत इति।] तत्परिभाषायाः प्रागुक्तज्ञापकद्वयेनान्तरङ्गप्रवृत्तिकाले कथमप्युपस्थितस्यैव बहिरङ्गस्यासिद्धत्वं बोध्यते न तु तदानीं सर्वथा अनुपस्थितस्य तत्प्रवृत्त्युत्तरं प्राप्तस्य बहिरङ्गस्येति प्रकृतपरिभाषाया असत्वेऽन्तरङ्गप्रवृत्तिकाले बहिरङ्गस्य कथमप्यनुपस्थितत्वान्न तद्विषयत्वमिति भावः। ननु तत्र कृतेऽपीत्यध्याहारेण तदुत्तरं-

बोध्यते न तु जाते ऽन्तरङ्गे तस्य तत्त्वं बोध्यते मानाभावात् फलाभावाच्च। एवं च सूस्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात् ॥ अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्।

---

प्राप्तस्यापि कुतो नासिद्धत्वमत आह। [मानाभावादिति।] तथा शेषपूरणेन व्याख्यानस्य धर्मिग्राहकमानविरुद्धत्वादिति भावः। ननु फलबलात्तथापि कल्प्यत इत्यत आह। [फलाभावादिति।] अनन्यथासिद्धलक्ष्यरूपफलाभावादित्यर्थः। [एवं चेति।] तत्र तथा अर्थाभावे चेत्यर्थः। [परिभाषेति।] अन्तरङ्गपरिभाषेत्यर्थः। ननु पट्व्येत्याद्युदाहरणविषये "क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वम् बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्य" मित्यन्तरङ्ग परिभाषानिरूपणावसरे ग्रन्थकृतोक्तत्वात्तद्वदत्रापि तत्परिभाषा संचारस्य युक्तत्वादिदमयुक्तमिति चेन्न। तत्पक्षे तत्राप्यन्ततस्तत्परिभाषाऽविषयत्वमेव ग्रन्थकृदाकूतमिति प्रागुपदर्शितत्वात्। ननु कथं चिदपि तत्परिभाषाविषयत्वमाश्रित्य तदनित्यत्वज्ञापने अन्तरङ्गानपीत्यादेरप्यनेनैव गतार्थतेति लाघवम्। अतिरिक्तपरिभाषाज्ञापनेन तु न तत्संभव इति गौरवमिति शङ्कां निराकर्तुमाह। [अन्तरङ्गानपीति।] [इत्यादेरपीति।] आदिना अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधत इत्यस्य संग्रहः। वार्णपरिभाषायाः पूर्वोत्तरपदनिमित्तक कार्यात्पूर्वमित्यस्याश्च नास्यामन्तर्भावः। तद्विषये ऊवे, ऊवाते, आग्नींन्द्र स्सौमेद्र इत्यादौ बहिरङ्गभूतोवङानङ्भ्यामन्तरङ्गैकादेशनिमित्तविनाशस्य दुर्निरूपत्वात्। नन्वन्तरङ्गानपि विधीन् बहिरङ्गो ल्यबित्येतद्विषये प्रदायेत्यादौ बहिरङ्गेण ल्यबादेशेनान्तरङ्गददाद्यादेश निमित्तस्य तकारादित्वस्य विनाशाद्भवतु तस्याः परिभाषाया अस्यामन्तर्भावः। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्यस्यास्तु कथमन्तर्भावः। तद्विषये गोमत्प्रिय इत्यादावन्तरङ्गत्वाद्धल्ङ्याादिलोपे विषयाभावेन बहिरङ्गस्य लुकोऽप्राप्त्या तत्कृतनिमित्तविनाशस्य दुर्वचत्वादत आह। [एतत्प्रवृत्ताविति।] [संभवानापीति।] अपिर्वास्तविकनिमित्तविनाशसमुच्चायकः। यदि पूर्वमन्तरङ्गं न स्यात्तदा

अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना॥ अल्लोपोऽन इति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम्। तद्ध्र्यान इत्यादौ लोपवारणाय। अन्यथा दीर्घाभावे लोपसंम्भावनयैतत्परिभाषाबलाद्दीर्घा-

---

बहिरङ्गेणान्तरङ्गनिमित्तविनाशः स्यादिति संभावनेत्यर्थः। [अत एवेति।] संभावनाया अपि निमित्तत्वादेवेत्यर्थः। [अन्यथेति।] संभावनाया एतत्परिभाषा निमित्तत्वानङ्गीकारे इत्यर्थः। [लोपस्यैवापत्तेरिति।] सेदुष इत्यादौ बहिरङ्गसंप्रसारणेनान्तरङ्गेडागमनिमित्तभूतवलादित्वस्येवान्तरङ्गलोपनिमित्तविनाशस्य लुका भावित्वाभावेन प्रकृतपरिभाषाया अप्राप्तेरित्यर्थः। तथा च नुमापत्तिरिति भावः। उक्तार्थाङ्गीकारे तत्र तदापत्तिं वारयति। [अस्ति चेति।] चस्त्वर्थे। [अत्रापीति।] गोमद्दण्डीत्यादावपीत्यर्थः। [संभावनेति।] एवं च सूत्थितादावपि यद्येकादेशो न स्यात्तदा वृद्ध्या सवर्णदीर्घविनाशस्स्यादिति संभावनया प्रकृतपरिभाषाप्रवृत्तेस्सुवचतया आदेशद्वारकपरंपरया निमित्तविनाशग्रहणमनावश्यकमित्याशयः। नन्वेतत्परिभाषाङ्गीकारेऽ ल्लोपोऽन इति सूत्रस्थं तपरकरणमनर्थकं स्यादत आह। [अल्लोपोऽन इति।] [परिभाषानित्यत्वेति।] अकृतव्यूहपरिभाषानित्यत्वेत्यर्थः। तदेतद्दर्शयति। [तद्धीत्यादिना।] [आन इति।] अन प्राणने इत्यस्माद्धातोः क्विप्यनुनासिकस्य क्विझलोरित्यनेन दीर्घे शसि रूपम्। [लोपवारणायेति।] आकारस्य लोपवारणायेत्यर्थः। [अन्यथेति।] अनित्यत्वाभावे इत्यर्थः। [लोपसंभावनयेति।] लोपेन दीर्घनिमित्तविनाशसंभावनयेत्यर्थः। [दीर्घाप्राप्ताविति।] यदि दीर्घो न स्यात्तदा लोपेन दीर्घनिमित्तोपधाभूताकारविनाशःस्यादिति संभावनया प्रकृत-

प्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ॥

समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते। अकृतव्यूहाः पाणिनीया इति। तेन पपुष इत्यदावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तेत इति वदन्न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमाभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत्। सूत्थितादित्रिवृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति समर्थानामिति ॥

---

परिभाषाबलाद्दीर्घप्राप्तावित्यर्थः। [तद्वैयर्थ्यमिति।] तपरकरणवैयर्थ्यमित्यर्थः। अनित्यत्वज्ञापनफलं त्वति बकानित्यत्राकच् सिद्धिः। अन्यथा तन्निमित्तभूतसर्वनामत्वस्य भाविना समासप्रयुक्तेनोपसर्जनत्वेन विनाशसंभावनायास्सत्त्वेन प्रकृतपरिभाषया तदसिद्धिस्स्यात्। प्रकृतिप्रत्यापत्तिवचनमप्यत्रार्थे ज्ञापकमिति मूल एव स्पष्टम्। [इत्याहुरिति।] अस्य पूर्वेण केचिदित्यनेनान्वयः। इत्थमस्या दीक्षिताद्यभिप्रेतं वाक्यार्थं निरूप्य कैयटाभिमतमर्थमाह। [समर्थानामितीति।] [कैयटस्त्विति।] अस्याभिप्रैतीत्यनेनान्वयः। तस्यैतदाशयकत्वे बीजमाह। [वदन्निति।] पूर्वं कृतोऽपीडागमो निवर्तेत इति तदुक्त्या अस्या ईदृशार्थकत्वं तदभिप्रेतमिति सूचितमिति भावः। [कार्यस्थितिरूप इति।] यथा दण्डनाशेऽपि घटस्थितिरूप इत्यर्थः। अत्र पक्षे समर्थग्रहणस्य चारितार्थ्यमाह। [सूत्थितादित्रीति।] [वृद्धाविति।] सत्यामिति शेषः। [दीर्घनिवृत्ताविति।] प्रकृतपरिभाषयेत्यर्थः। ननु कृतदीर्घात् सूत्थितशब्दादित्रि दीर्घरूपादेशस्य वृद्धौ नैमित्तिकस्य दीर्घस्य वृद्ध्यैव निवर्तनात्परिभाषया तद्विनाशस्याशक्यत्वात्परिभाषाया अप्रवृत्त्या ज्ञापनोत्तरमपि समर्थग्रहणस्य न स्वांशे चारितार्थ्यम्। किञ्च दीर्घविनाशेऽपि देवदत्तहन्तृहननन्यायेनोकाराभावात्सावुत्थिरित्यनिष्ट-

लोकन्यायसिद्धश्चायमर्थः। तथा हि। लोके निमित्तं द्विविधं दृष्टम्। कार्यस्थितौ नियामकं तदनियामकं च। आद्यं यथा न्यायनये ऽपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात्। वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं यथा दण्डादि। तन्नाशेऽपि घटनाशादर्शनात्। शास्त्रे लक्ष्यानुरोधाद्य-

---

रूपानापत्त्या न स्वांशे चारितार्थ्यमिति चेदत्रोच्यते। निमित्तस्य विनाशे तत्प्रयुक्तकार्यविशेषविशिष्टस्य स्थाने तत्कार्यरहितस्वरूपातिदेशस्यानया बोधनान्नैमित्तिकविनाशस्य उकारश्रवणस्य चोपपत्त्या तदुत्तरं वृद्ध्यावादेशयो स्सावुत्थितिरिति स्यादतस्समर्थग्रहणं स्वांशे चरितार्थमिति। ननु ज्ञापकानपेक्षत्वेनेदमेव युक्तम् नाद्यमतमित्याह। [लोकन्यायसिद्धश्चेति।] चोऽप्यर्थे। वक्ष्यमाणलोकदृष्टान्तसिद्धोऽपीत्यर्थः। तथा च न्यायसिद्धार्थानुवादकमेवात्र पक्षे समर्थग्रहणमिति लाघवमिति भावः। [निमित्तं द्विविधमिति।] स्वस्थितौ कार्यस्थितिसंपादकम्। स्वास्थितावपि तत्स्थितिसंपादकं चेति क्रमेणार्थः। [अपेक्षाबुद्धिरिति।] अयमेकोऽयमेक इत्यादिरूपेत्यर्थः। [अभ्युपगमादिति।] तस्याः द्वित्वजनकतायास्तन्नाशे द्वित्वनाशस्य च तैरभ्युपगमात्सा स्वस्थितावेव कार्यस्थितिनियामिका। तत्रैवापरं दृष्टान्तमाह। [वेदान्तिनये इति।] अस्य तथेत्यादिः। [विक्षेपस्थितीति।] संसारस्थितीत्यर्थः। प्रारब्धस्य भोगतो नाश्यत्वेन ब्रह्मज्ञानोत्तरमपि प्रारब्धनाशपर्यन्तं संसारानुवृत्तिर्दुर्वारा। अत एव कैश्चिद्योगिभिर्योगबलेनैकस्मिन्नेव जन्मनि कायव्यूहेनानेकजन्मभोग्यप्रारब्धानुभवेन संसारमोक्षाय प्रयतनं तन्मोक्षश्च दृश्यत इति भावः। [द्वितीयमिति।] स्वास्थितावपि कार्यस्थितिनियामकमित्यर्थः। [तन्नाशेपीऽति।] दण्डनाशेऽपीत्यर्थः। नन्वेवमपि शास्त्रे वैपरीत्यं कुतोऽनेत्यत आह। [शास्त्रे इति।] तथाचाद्यदृष्टान्तसिद्धोऽयं न्याय इति भावः। एवमत्र पक्षे ऽस्या लोकन्यायसिद्धत्वमुक्त्वा दीक्षितादिमते तन्नेत्याह।

वस्था ॥ भाविनि निमित्तविनाशो पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ॥

परे तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टं समर्थानामिति सूत्रे कैयटे। ऽसिद्धव-

---

[भाविनीति।] [न कश्चिन्न्याय इति।] ननु "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर" मिति लोकन्यायस्य तत्रापि सत्त्वादिदमयुक्तमिति चेन्न। पूर्वाकरणपश्चान्निवर्तनयोर्लाघवगौरवप्रतिपादन एव तत्तात्पर्यात्। तदाह। [नापीति।] [संप्रतिपन्न इति।] युक्त इत्यर्थः। ननु न्यायाद्यभावेऽपि ज्ञापकसिद्ध एव सोऽर्थोऽत आह। [समर्थानामिति।] [लोकसिद्धेति।] आद्यलोकदृष्टान्तसिद्धेत्यर्थः। [तदाशय इति।] कैयटाशय इत्यर्थः। अत्र केचिदित्यनेन कैयटोऽभिप्रैतीत्यनेन च पक्षद्वयेऽपि सूचितामरुचिं प्रकटयन् सिद्धान्तमाह। [परेत्विति।] [पदावधिकेऽन्वाख्याने इति।] सुप्तिङ्रूपविभक्तिपर्यन्तं भागमन्वाख्येयत्वेन संस्थाप्य तस्य शास्त्रेण साधुत्वान्वाख्याने क्रियमाणे इत्यर्थः। लक्ष्यानुरोधात्तत्पक्षस्यैव तत्राश्रयणे चेत्यपि बोध्यम्। इड्विधावेकाज्ग्रहणसामर्थ्येन कृतद्विर्वचनानामेकाचामित्यर्थाद्द्वित्वादितःपूर्वमिटोऽप्राप्तेराह। [सेद्वसिति।] [प्रतिपदविधित्वादिति।] प्रतिपदोक्तत्वेन शीघ्रोपस्थिकतयेत्यर्थः। [संप्रसारणे इति।] पूर्वरूपे चेत्यपि बोध्यम्। [तत्सिद्धिरिति।] अकृतव्यूहपरिभाषासाध्यलक्ष्यसिद्धिरित्यर्थः।

त्सूत्रे कैयटे च स्पष्टमेतत्। यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं, तथापि पूर्वप्रवृत्तै सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरू-

---

तथा च नैषा परिभाषा आवश्यकीति भावः। नचोक्तरीत्या पूर्वं संप्रसारणेऽपीडपेक्षया तस्य बहिरङ्गत्वेनासिद्धत्वात्स्यादेवेडिति वाच्यम्। तस्यानित्यत्वेनेहाऽप्रवृत्तेः। परनित्यान्तरङ्ग प्रतिपदविधयो विरोधिसन्निपाते तेषां मिथःप्रसंगे परबलीयस्त्वमिति प्रत्ययोत्तरपदयोश्चेति सूत्रस्थकैयटेन प्रतिपदविधित्वस्यापवादत्वसमक्षकत्वसूचनात्तद्विषयेऽन्तरङ्गपरिभाषाया अप्रवृत्तेश्च। स्पष्टं चेदमसिद्धवदत्राभादिति सूत्रे वसुसंप्रसारणमज्विधाविति वार्तिकव्याख्यावसरे उद्योते। तध्द्वनयन्नाह। [यद्यपीत्यादीना।] [अनवकाशत्वे सत्येवेति।] शेषाद्विभाषेतिसूत्रस्थभाष्य प्रामाण्यादिति भावः। तत्रहि प्रतिपदविहितसमासान्तानां कबभावे सावकाशत्वेन बाधकत्वायोगात्तद्विषये परत्वात्तान् बधित्वा कप् स्यादतो याभ्यःप्रकृतिभ्यः समासान्ताः प्रतिपदमनुक्तास्ताभ्य एव कबर्थं शेषग्रहणमावश्यकमित्युक्तम्। निरवकाशत्वाभावेऽपि केवलप्रतिपदोक्तत्वस्य बाधकत्वप्रयोजकत्वे तदसङ्गतिरिति भावः। [नियामकं भवत्येवेति।] शीघ्रोपस्थितिकत्वेनेति भावः। नन्विडागमविधायके वस्वेकाजिति सूत्रेऽपि वसोस्तथैवोपादानादुभयोस्समत्वमेवेति चेन्न। तस्य क्रादिनियमप्रापितस्येटो नियामकत्वेनेतरव्यावृत्तिमात्रतात्पर्यकतया आर्धधातुकस्येड्वलादेरित्यस्यैव तत्रेड्विधायकत्वेन तस्य तत्त्वाभावात्। नच स्वमते नियमशास्त्राणां विधिमुखेन प्रवृत्त्या तस्यतत्त्वमस्त्येवेति वाच्यम्। अस्य ग्रन्थस्य समर्थानामिति सूत्रस्थकैयटाशयवर्णनपरत्वेन तन्मते तेषां निषेधमुखेनैव प्रवृत्त्या अदोषात्। स्वमते तु द्वित्वादितः पूर्वमेव संप्रसारणस्य प्राप्त्या पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वेन संप्रसारणस्य प्रथमं प्रवृत्तिः। नच विश्वौह इत्यादाविव पूर्वस्थितनिमित्तकत्वेनेडागमस्याप्यन्तरङ्गत्वमिति वाच्यम्। तथा सत्युभयोरन्तरङ्गयोःपरत्वान्नित्यत्वाच्च संप्रसारणस्य पूर्वं प्रवृत्तेस्सुवचत्वात्। किञ्च तत्र निमित्तवाचिना अङ्गपदेन सप्तम्यन्त पञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयस्यैव ग्रहणमित्यर्थस्य प्रागुपदर्शितत्वेनात्र षष्ठ्यन्तोपात्तस्य वसोरङ्गपदेन ग्रहीतुमशक्यत्वादिति बोध्यम्। [तदाशय इति।] कैयटाशय इत्यर्थः। नन्वेतत्परि-

पितं चैतद् बहुशः शब्देन्दुशेखरादौ ॥ समर्थानामिति सूत्रस्थसमर्थग्रहणं तु विष्वुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव ॥ ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये। तत्र हि वैक्षमाणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम्।

---

भाषासाध्यलक्ष्यस्यान्यथा सिद्ध्या परिभाषानभ्युपगमे सौत्थितिरित्यादावन्तरङ्गत्वात् कृतदीर्घेभ्य एव प्रत्ययोत्पत्त्या समर्थानामिति व्यर्थमत आह। [समर्थग्रहणंत्विति।] [अकृतसंधेः प्रत्ययदर्शनेनेति।] विष्वक्शब्दा "द्विष्वगित्युत्तरपदलोपश्चाकृतसंधे" रितिवार्तिकाद्विषु, अच् इत्यस्यामेवावस्थायां नप्रत्ययस्य उत्तरपदलोपस्य च दर्शनेनेत्यर्थः। न च वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरिदमयुक्तमिति वाच्यम्। उत्तरोत्तरमुन्यभिप्रेतार्थे पूर्वपूर्वमुनीनां तात्पर्यस्य सत्त्वेन तदर्थस्यापि पाणिनितात्पर्यविषयत्वात्। [सर्वत्रेति।] तद्धितविषये तदन्यलक्ष्येषु वैक्ष्यमाणिरित्यादिषु सर्वत्रेत्यर्थः। [तथेति।] अकृतसंधेःप्रत्यय इत्यर्थः। [भ्रमवारणायेति।] प्रत्यक्षस्य सर्वतो बलवत्त्वात्क्वचिद्विषुण इत्यादिलक्ष्ये तथा दर्शनेन सर्वत्र तथैवेति भ्रमस्यादतस्तदपसारणेन कृतसंधेरेव प्रत्यय इत्यर्थं स्पष्टं बोधयितुं समर्थग्रहणमिति भावः। [न्यायेति।] अन्तरङ्गन्यायेत्यर्थः। [अनुवाद एवेति।] न तु क्रमिकान्वाख्यानमाश्रित्यापूर्वतया परिभाषाज्ञापकमिति भावः। [ध्वनितं चेदमिति।] समर्थग्रहणस्योक्तरीत्या अन्तरङ्गन्यायसिद्धार्थानुवादकत्वं ध्वनितमित्यर्थः। तत्प्रकारमेव दर्शयति। [तत्रहीति।] [उक्तमिति।] "वृद्धेरेकादेशो भवति। अन्तरङ्गत्वा" दित्यस्य वैक्षमाणिःसौत्थितिरिति चोदाहरणं दत्तमित्यर्थः। पदस्य विभज्यान्वाख्याने वि, ईक्षमाण, असित्यवस्थायां पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गमेकादेशं बाधित्वाऽनैमित्तिकत्वेनान्तरङ्गत्वादिञि, ततो वृद्ध्येकादेशयोः प्राप्तौ परामपि वृद्धिं बाधित्वाऽन्तरङ्गत्वादेकादेशो भवति। वार्णपरिभाषात्वानित्यत्वान्न प्रवर्तत इति तदाशयः। क्रमेणान्वाख्यानमाश्रित्यापूर्वतया परिभाषाज्ञापनार्थत्वेत्वनया पूर्वमेकादेशस्याप्रवृत्त्या समर्थग्रहणेनैव तत्र तस्य पूर्वं प्रवृत्तेर्वाच्यतया अन्तरङ्गपरिभाषोदाहरणत्वमसङ्गतं स्यात्। किञ्च तत्पक्षे सुबुत्पत्तेःप्रागेवैकादेशस्य प्राप्त्या तदानीं

किञ्च विभज्यान्वाख्याने सु उत्थित अस् इ इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहण-मित्यत्रैव सूत्रे कैयटे स्पष्टम्। अत एवासिद्धवत्सूत्रे वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यादिति भाष्ये उक्तम्। पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटो ऽप्राप्तावुस्निमित्तक एवातो लोप

---

वृद्धेर्निमित्ताभावेनाप्राप्त्या तयोरसंप्रधारणा चानुपपन्ना। तथा च तेन लक्ष्यानुरोधादत्र विषये पदस्य विभज्यान्वाख्यानमेव। तत्र चान्तरङ्गन्यायसिद्धार्थानुवादकत्वमेव समर्थग्रहणस्येति च सूचितमिति बोध्यम्। समर्थग्रहणस्यापूर्वतया प्रकृतपरिभाषाज्ञापकत्वं सर्वथा न संभवतीत्यमुमर्थं द्रढयितुमाह। [किञ्चेति।] [प्राप्तवृद्धीति।] एकादेशं बाधित्वा प्राप्तवृद्धीत्यर्थः। [अत्रैव सूत्रे इति।] समर्थानामितिसूत्र एवेत्यर्थः। तथा च वार्णपरिभाषाप्रवृत्त्यभ्युपगमे समर्थग्रहणस्य वैयर्थ्याभावान्न-प्रकृतपरिभाषाज्ञापकत्वसंभवः। अनित्यत्वात्तदप्रवृत्तौ तु लाघवादन्तरङ्गन्यायसिद्धार्थानुवाद-कत्वमेव तस्य युक्तम् नत्वपूर्वतया परिभाषाज्ञापनमिति सर्वथा परिभाषाभाव एव तेन सूचित इति बोध्यम्। तमेवार्थं भाष्यसंमत्यापि द्रढयितुमाह। [अतएवेति] विभज्यान्वाख्याने प्रतिपदविधित्वादिटःपूर्वं संप्रसारणस्येष्टत्वादेवेत्यर्थः। [पूर्वोक्तकैयटेति।] प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वादिटःपूर्वं संप्रसारणमिति समर्थानामिति सूत्रस्थकैयटरीत्येत्यर्थः। [इटोऽप्राप्त्येति।] वलादित्वाभावादिति भावः। [उस्निमित्तक एवेति।] एवेनेड्निमित्तकत्वव्यवच्छेदः। एवं चासिद्ध-वत्सूत्रारम्भे संप्रसारणस्य लोपे कर्तव्ये तत्सूत्रप्राप्तासिद्धत्ववारणाय वार्तिकमावश्यकमिति भावः।

इति तदाशयः। अन्यथाऽन्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसंगतिः॥ अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्तिककृताऽरब्धं भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गमन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव॥

---

[तदाशय इति।] उक्तभाष्याशय इत्यर्थः। [अन्यथेति।] क्रमेणान्वाख्यान इत्यर्थः। [अन्तरङ्गत्वादिटीति।] निमित्ताभावात्संप्रसारणस्य तदानीमप्राप्तौ निश्शङ्कमिडागमप्रवृत्ताविर्त्यर्थः। [तन्निमित्तक एवेति।] एवेन संप्रसारणनिमित्तकत्वव्यवच्छेदः। [तदसङ्गतिरिति।] संप्रसारणस्य सिद्धत्वकथनासङ्गतिरित्यर्थः। एवञ्च तद्भाष्येणात्र विषये पदस्य विभज्यान्वाख्यानमित्येव लभ्यत इति तत्पक्षे फलाभावात्परिभाषाभावस्सूचित इति भावः। ननु क्रमेणान्वाख्यानेऽपि दीक्षितमते प्रकृतपरिभाषया पूर्वमिटोऽप्रवृत्तावुसुनिमितक एवातोलोप इति न तद्भाष्यासङ्गतिः। कैयटमतेऽपि संप्रसारणोत्तरमिट इव तन्निमित्तकातोलोपस्यापि प्रकृतपरिभाषया निवृत्तावुसुनिमित्त-कतयैव पुनरालोपस्य वक्तव्यतया तस्य सिद्धत्ववचनमावश्यकमेवेति न तद्भाष्यासङ्गतिः। तथा च न तेन त्वदुक्तार्थलाभोऽत आह। [अत एवेति।] परिभाषाया असत्त्वादेवेत्यर्थः। [आरब्धमिति।] प्रति, अच्, असित्यस्यामवस्थायामन्तरङ्गत्वात्प्राप्तस्य यणो वारणायारब्धमित्यर्थः। एतत्परिभाषासत्त्वे तु यण्निमित्तस्याकारस्य लोपेन निवृत्त्या अनया परिभाषया पूर्वं यणोऽप्रवृत्तौ प्रवृत्तावपि वा अकार-लोपोत्तरं निवृत्तौ प्रतिषेधवचनमनर्थकं स्यादिति भावः। ननु प्रकृतपरिभाषाऽपर्यालोचनया तदारम्भान्न तद्विरोधोऽत आह। [भाष्यकृता चेति।] चो भिन्नक्रमः। न प्रत्याख्यातं चेत्यर्थः। एतत्सत्त्वे त्वनया तद्वार्तिकं प्रत्याख्यायादित्यर्थः। प्रत्यङ्गशब्दस्यानेकार्थत्वादाह। [अन्तरङ्गमिति।] एवञ्च चाविति सूत्रं प्रति यदन्तरङ्गं तस्य प्रतिषेधो वाच्य इति तदर्थः। [तद्वैयर्थ्यमिति।] उक्तरीत्या वार्तिकवैयर्थ्यमित्यर्थः। ननु प्रतीच इत्यादौ यणाद्यादेशवारणाय प्राचीनाचार्यैरारब्धस्यास्य वचनस्य "इहान्ये आचार्याश्चौ प्रत्यङ्गस्य प्रतिषेधमाहुः, तदिहापि साध्यम् नैष दोषः, एतदेव

अत एव च्छ्वोरिति सूत्रे अवश्यमत्र तुगभावार्थो यत्न कार्यो ऽन्तरङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसंगतमिति स्पष्टमेव। न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः। अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः॥ किञ्चानयैव प्रत्ययोत्तरपदयोश्च अदो जग्धिर्ल्यप्ति कितीत्यनयोश्चा-

---

ज्ञापयत्याचार्यः। न चौ प्रत्यङ्गं भवतीति। यदयं चौ दीर्घत्वं शास्तीति'' चाविति दीर्घविधानाद्-ज्ञापकाद्घणाद्यप्रवृत्तिमास्थाय भगवता प्रत्याख्याततत्वेन तस्याप्रत्याख्याततत्वकथनं तेन प्रकृतपरिभाषा-प्रत्याख्यानं च न युक्तमत आह। [अतएवेति।] अस्या असत्त्वादेवेत्यर्थः। [सूत्रे इति।] अस्य भाष्य इत्यनेनान्वयः। [अत्रेति।] प्रश्नःप्रष्टेत्यादावित्यर्थः। [यत्न इति] सतुक्कनिर्देश-रूपो यत्न इत्यर्थः। [अन्तरङ्गत्वादिति।] छमात्रापेक्षत्वात्तुकोऽन्तरङ्गत्वम्, बहिर्भूतप्रत्ययापेक्ष-त्वाच्छादेशस्यबहिरङ्गत्वमिति भावः। [तुकोऽप्राप्त्येति।] तुङ्निमित्तस्य छस्य विनाशोन्मुखत्वादिति भावः। तस्य दीक्षिताद्युक्तं परिभाषानित्यत्वज्ञापकत्वं खण्डयति। [नचेति।] [एतदिति।] सतुक्कनिर्देश इत्यर्थः। तदाशयः=भाष्याशयः। [अक्षरस्वारस्यभङ्गापत्तेरिति।] अन्तरङ्गतुङ्निवर्तकोपायस्य सुतरामभावे हि तथा कथनमुचितमिति भावः। नच व्रच्छतेरप्रत्यये, वान्, वाञ्छौ, वाञ्छ, इत्यादौ केवलछमात्रस्य तुगभावार्थं तत्र यत्नावश्यकत्वं भाष्यकारोऽभिप्रैतीति न तेन प्रकृतपरिभाषाभावो लभ्यत इति वाच्यम्। तथा सति तद्विषये यथालक्षणमप्रयुक्त इत्यक्षरस्वारस्य-भङ्गापत्तेः। अन्यथा हि सतुक्कनिर्देशेन तत्र शादेशाभावमुद्भाव्य वाञ्छौ, वाञ्छ, इत्येवेष्यत इत्येव वदेदिति भावः। एतत्परिभाषास्वीकारे भाष्यान्तरविरोधमाह। [किञ्चेति।] [अनयैवेति।] प्रकृतपरि-भाषयैवेत्यर्थः। [अनयोरिति।] मपर्यन्तग्रहणानुवृत्तिल्यब्ग्रहणविशिष्टयोरित्यर्थः। [चारितार्थ्येनेति।]

रितार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत ॥

किञ्चैषा भाष्ये न दृश्यते। तदुक्तमसिद्धवत्सूत्रे कैयटेन निमित्तापाये नैमित्तकस्याप्यपाय इति परिभाषाया भाष्यकृताऽनाश्रयणादिति ॥ पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छतीत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक् ॥ ५६ ॥

---

त्वत्कृतमित्यादौ त्वाद्यादेशनिमित्तभूताया विभक्तेर्लुका विनाशोन्मुखत्वेन पूर्वं त्वाद्यादेशाप्रवृत्तौ लुकि त्वाद्यादेशार्थमाद्यस्य, तथा जग्ध्यादेशनिमित्तस्य तादिकित्त्वस्य ल्यपा विनाशोन्मुखत्वेन पूर्वं तदप्रवृत्तौ ल्यपि जग्ध्यादेशार्थं द्वितीये ल्यब्ग्रहणस्य च चारितार्थ्येनेत्यर्थः। [अन्तरङ्गबाधकतेति।] अन्तरङ्गानपीत्यादिपरिभाषाद्वयज्ञापनद्वारा अन्तरङ्गबाधकतेत्यर्थः। भाष्ये क्वाप्यदर्शनेन च नैषा भाष्यसंमतेत्याह। [किञ्चैषेति।] स्वोक्तेऽस्मिन्नर्थे वृद्धसम्मतिं दर्शयति। [तदुक्तमिति।] इत्थमेनां परिभाषां दूषयित्वा पदसंस्कारे प्राचीनप्रदर्शितं परिभाषाफलं दूषयति। [पदसंस्कार इति।] [इत्याद्येवेति।] न तु भाविन्यवसानभङ्गे विसर्जनीयस्य पूर्वमप्रवृत्तिः प्रवृत्तस्य वा निमित्तस्यावसानस्य विनाशे निवृत्तिरिति भावः। एवेन हरिर्गच्छतीत्यादिव्यावृत्तिः। तथा प्रयोगस्यापि दर्शनात्पक्षान्तरमाह। [तद्विषय इति।] पदान्तरसंबद्धपदसंबन्धिविसर्गविषय इत्यर्थः। [अनाश्रयणं वेति।] पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वादीदृशे विषये वाक्यसंस्कारस्यैवाश्रयणेनेष्टसिद्ध्या न तद्बलकल्प्यत्वमस्या इति भावः। ५६

## अन्तरङ्गादप्यपवादो बलवान् ॥ ५७ ॥

तत्रापवादपदार्थमाह।

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५८ ॥

प्राप्त इति भावे क्तः येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यकप्राप्तावित्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्।

---

परनित्येति संग्राहकवाक्याच्चरममर्थं निष्कृष्य प्रमाणयति। [अन्तरङ्गादपीति।] अपिना परादिसङ्ग्रहः। क्रमप्राप्तापवादबलीयस्त्वबोधनमेवात्रस्य स्सन्दर्भः। [तत्रेति।] उक्तपरनित्येति परिभाषैकदेशबोधकेऽन्तरङ्गादपीति वाक्य इत्यर्थः। घटकत्वं सप्तम्यर्थः। तत्पदेन चान्तरङ्गादपीति वाक्यस्य परामर्शः। तथा च तादृशवाक्यघटकं यदपवादपदं तदर्थकर्मकं वर्तमानकालिकं कथनमिति तदर्थः। एतेन वक्ष्यमाणलोकन्यायेनैवापवादस्यान्तरङ्गादिबाधकत्वं सिध्यतीति न तदर्थं वचनापेक्षा। किन्त्वपवादपदार्थनिर्णयार्थमेवेदं वचनमिति सूचितम्। अत्रापवादशब्द उभयविधबाधकपरः येन नेति न्याये बाधक शब्दोऽप्येवमेव। उभयविध बाधकस्वरूपप्रतिपादनस्यैवाभिप्रेतत्वात्। प्राप्तशब्दे कर्मणि क्तप्रत्यये कर्मार्थस्यानुपयोगादन्वयायोगाच्चाह। [भावे क्त इति।] नपुंसके भावे क्त इत्यनेनेति भावः, तथा च येनेति कर्तरि तृतीया। कर्तृकर्मणोरिति षष्ठी तु न। न लोकेति निषेधात्। न च नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानमिति वार्तिकात्तद्योगे कर्तृतृतीयाया अनुपपत्तिरिति वाच्यम्। सतां गतमित्यादौ शेषत्वविवक्षया षष्ठीशेष इत्यनेनैव षष्ठीप्रवृत्तिमास्थाय तद्वार्तिकस्य भगवता प्रत्याख्यातत्वेन कर्तृत्वविवक्षायां तृतीयाया निर्बाधत्वात्। तदेतदाह,। [यत्कर्तृकेति।] प्राप्तावावश्यकत्वलाभे बीजं दर्शयति। [नञ्द्वयस्येति।] येन प्राप्ते इत्येव वक्तव्य

**एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः। तदप्राप्तियोग्ये ऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम्॥**

---

नञ्द्वयोपादानेन प्राप्तावावश्यकत्वलाभ इति भावः। तच्चापवादत्वेनाभिमतशास्त्रसंबन्धिनी या प्राप्ति स्तद्व्यापकीभूतप्राप्तिकत्वम्। एवं च सति फलितमर्थमाह। [एवं चेति।] [विशेषेति।] विशेषशास्त्रे उद्देश्यभूतं यद्विशेषधर्मावच्छिन्नं तद्वृत्ति र्यस्सामान्यधर्मस्तदवच्छिन्नोद्देश्यकशास्त्रस्य प्रत्यासत्त्या तेन विशेषशास्त्रेण बाध इत्यर्थः। तथा च समान्यत्वविशेषत्वयोः परस्परापेक्षत्वेन नान्यापेक्षयो स्तयो र्बाध्यबाधकभाव इति भावः। तथा च व्यापकधर्मावच्छिन्नोद्देश्यकस्य व्याप्यधर्मावच्छिन्नोद्देश्यकं शास्त्रं बाधकमिति यावत्। उद्देशता चात्र साक्षात्परंपरासाधारणी, तत्तद्विशेषणवैशिष्ट्येन सङ्कुचिता च ग्राह्या। उक्तार्थस्योपपत्तिं दर्शयति। [तदप्राप्तेति।] हि=यत उत्सर्गप्राप्तियोग्यताविरहविशिष्टे लक्ष्ये चारितार्थ्याभावो बाधकत्वे बीजमत उक्तार्थलाभ इति भावः। तेन तदभाववदवृत्तित्वरूपव्याप्यत्वस्य बाधकता प्रयोजकत्वलाभात्। [एतस्येति।] परेत्यादिघटकापवादस्येत्यर्थः। [बाधकत्वे इति।] परादिबाधकत्वे इत्यर्थः। यथा वृद्धिरेचीति शास्त्रीयैजव्यवहितपूर्वत्वविशिष्टात्वरूपोद्देश्यतावच्छेदकव्यापकत्वस्याद्गुण इत्येतच्छास्त्रीयाजव्यवहितपूर्वत्वविशिष्टात्वरूपोद्देश्यतावच्छेदके सत्त्वेनाद्गुण इत्यस्य वृद्धिरेचीत्यनेन बाधः। एवं "ह्रस्वनद्यापोनुट्" आमि सर्वनाम्नस्सुडित्येतच्छास्त्रीयोद्देश्यतावच्छेदकयोर्ह्रस्वान्ताद्यात्परत्वविशिष्टाम्त्वादन्तसर्वनामाव्यवहितपरत्वविशिष्टाम्त्वयो व्याप्यव्यापकभावस्य सत्त्वेन सुटा नुटो बाधः। एव मकस्सवर्णे दीर्घ इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकीभूतसवर्णाजव्यवहितपूर्वत्वविशिष्टाकत्वस्याद्गुणः इको यणचीत्येतदन्यतरोद्देश्यतावच्छेदकव्याप्यत्वस्य सत्त्वेन तयो दीर्घेण बाधः। एवं कुप्वोः ≍क≍पौ च, विसर्जनीयस्य स इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकयोः कवर्गपवर्गाव्यवहितपूर्वत्वविशिष्ट विसर्जनीयत्व खरव्यवहितपूर्वत्वविशिष्ट विसर्जनीयत्वयोः परस्परं व्याप्यव्यापकभावस्य सत्त्वाद् व्याप्यधर्मावच्छिन्नोद्देश्यकेन कुप्वोरित्यनेन विसर्जनीयस्य स इत्यस्यैव बाधः। न तु शर्परे विसर्जनीय इत्यस्य। तदुद्देश्यतावच्छेदक-

धर्मानाक्रान्ते "कःखनति" कःपचतीत्यादौ कुप्वोरित्येतच्छास्त्रीयोद्देश्यताया स्सत्त्वेनास्य तद्व्याप्यत्वाभावात्। एवमचिर ऋत इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकस्याजव्यवहितपूर्वत्व-विशिष्ट तिसृ, चतुसृ सम्बन्धि ऋकारत्वस्य गुणदीर्घोत्वान्यतमसम्बन्ध्युद्देश्यतावच्छेदकत्वाभाव वत्यवृत्तित्वेन, व्याप्यत्वात्तेन तेषां त्रयाणां बाधः। एवमुरऋदित्येतच्छास्त्रीयोद्देश्यतावच्छेदकस्य, चङ्परणिजव्यवहितपूर्वत्वविशिष्टोपधाभूतऋत्वस्य, गुणवृद्धीत्वान्यतमशास्त्रीयोद्देश्यतावच्छेदकत्वा-भाववत्यवृत्तित्वेन, व्याप्यत्वात्तेन तेषां त्रयाणां बाधः। एव मचो रहाभ्यामित्यत्र रहाभ्यामिति पञ्चम्या रेफे द्वित्वनिमित्तताया अपूर्वबोध्यत्वेन विधेयत्वादनचि चेत्यत्र यर इति षष्ठ्या यरि द्वित्वकार्यिताया अपूर्वबोध्यत्वेन विधेयत्वाच्च, तादृशविधेयतानिरूपितोद्देश्यतावच्छेदकयो र्यत्वरेफत्वयोः परस्परं व्याप्यव्यापकभावस्य सत्त्वेन व्याप्येन द्वित्वनिमित्तत्वेन व्यापकस्य द्वित्व-कार्यित्वस्य लक्ष्यानुरोधात्सामान्येन बाधः। अतो "मद्रह्रद" इत्यादौ "अचो रहाभ्या" मित्यनेनापि रेफस्य न द्वित्वम्। यद्वा पूर्वोत्तरसूत्रयोः रेफातिरिक्तस्यैव यरो ग्रहणादर्था-धिकारानुरोधादत्रापि तथैव ग्रहणाददोषः। न चैवमिको यणचीत्यत्र विशेषविहितेन कार्यित्वेनेको निमित्तत्वस्य बाधाद्दध्युदकमित्यादौ यणादेशानापत्तिरिति वाच्यम्। तस्मादित्युत्तरस्येति ज्ञापकेन तत्र निमित्तत्वस्याबाध इति कैयटेन दत्तोत्तरत्वत्। वस्तुतस्तु मत्वर्थ इत्यादौ निमित्तत्वाभाववतीकि कार्यित्वस्य सत्त्वेन तस्य तद्व्याप्यत्वाभावान्न बाध इति स्पष्टमुद्योते। एवं लोपो व्योरित्यत्रापि विशेषविहितेन कार्यित्वेन न निमित्तत्वबाधः। जीवेरदानुप्रत्यये जीरदानु-रित्यत्र निमित्तत्वानाक्रान्ते वकारे उद्देश्यत्वस्य सत्त्वेन तस्य तद्व्याप्यत्वाभावात्। तस्य प्रकारान्तरेण सिद्धिमास्थाय तत्सूत्रे वकारग्रहणप्रत्याख्यानपक्षे तु बाधशङ्काया एवानुदयः। एवं परम्परया द्वितीयद्विर्वचनोद्देश्यतावच्छेदकस्य धातुसंबन्ध्यादिभूताच्त्वस्य प्रथमद्विर्वचनोद्देश्यताव-च्छेदकीभूतधात्ववयवप्रथमैकाच्त्वाभाववदवृत्तित्वेन व्याप्यत्वात्प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधः। एवं परम्परया "अलोऽन्त्यस्य आदेःपरस्ये" त्येतच्छास्त्रीयोद्देश्यतावच्छेदकयो रल्समुदायोत्तरस्थानषष्ठ्यन्तपदबोध्यत्व, परशब्दप्रयोज्यविषयतानिरूपितविषयिताश्रय यत्किञ्चि-न्निरूपितपरत्वविशिष्टस्थानषष्ठ्यन्तपदबोध्यत्वयोः परस्परं व्याप्यव्यापकभावस्य सत्त्वेन व्याप्य-धर्मावच्छिन्नोद्देश्यकेनादेःपरस्येत्यनेनालोऽन्यस्येत्यस्य बाधः। एवं ञ्णित्प्रत्ययाव्यवहितपूर्वत्व विशिष्टाजन्ताङ्गत्व तादृशोपधाभूतात्त्वैतदन्यतरत्वाभाववति सुश्रुतोऽपत्यं सौश्रुत इत्यादौ तद्धितेष्वचा-मादेरित्येतच्छास्त्रीयोद्देश्यतावच्छेदकस्य ञ्णित्तद्धिताव्यवहितपूर्वत्वविशिष्टप्रातिपदिकसम्बन्ध्या-

किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाध-बोधनम्। अन्यथानवकाशत्वेनैव बाधे सिद्धे एत-त्कथनवैयर्थ्यापत्तेस्तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि वैय-

---

ज्वत्त्वस्य सत्त्वेनादिवृद्ध्यन्त्योपधावृद्ध्युद्देश्यतावच्छेदकयोः परस्परं व्याप्यव्यापकभावाभावादादिवृद्धे-रन्त्योपधावृद्धिबाधकत्वानुपपत्त्या ऽनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्येन तदुपपादनमुपपद्यते। एवमन्यत्रापि बाध्यत्वेन बाधकत्वेन च जिघृक्षितशास्त्रीयसङ्कुचितोद्देश्यतावच्छेदकधर्मयोः परम्परयोद्देश्यतावच्छेदकधर्मयोर्वा व्याप्यव्यापकभावेन, बाध्यबाधकभावः स्वयमूहनीय इत्यलम्। एवं लौकिकन्यायद्वयसाधारणमपवादपदार्थं निरूप्याचारितार्थ्यं हि बाधकत्वे बीजमित्येव सिद्धे तदप्राप्तियोग्ये इति विशेषणस्य सार्थक्यं प्रदर्शयन्, अन्ततोऽस्य न्यायस्य, तक्रन्यायविषयकत्वमेव न तु माठरन्यायविषयकत्वम्, तद्विषये वचनसामर्थ्यादेव बाधकत्वस्य सिद्धत्वादिति, विशेषं वक्तुमाह। [किञ्चेति।] [अनेन न्यायेनेति।] येन नेति न्यायेनेत्यर्थः। [तत्प्रवृत्त्युत्तरमपीति।] उत्सर्गशास्त्रप्रवृत्त्युत्तरमपीत्यर्थः। अपिना तत्पूर्वकालतत्समकालयो-स्समुच्चयः। [चारितार्थ्ये इति।] चारितार्थ्य एवेत्यर्थः। चारितार्थ्येऽपीति पाठे अपिरेवार्थे। यद्वा अपिशब्दस्य भिन्नक्रमेण तत्प्रवृत्त्युत्तरमित्यनन्तरं योजनया तत्पाठेऽपि निरुक्तार्थलाभः। एतेन तडित्यादौ पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वसिद्धिः। संयोगान्तलोपोत्तरं संयोगादिलोपस्य चारितार्थ्याभावेऽपि तत्प्रवृत्तिसमकालमस्यापि प्रवृत्तौ बाधकाभावेन सर्वथा निरवका-शत्वाभावादनेनैव न्यायेन बाधकत्वस्य वक्तव्यत्वात्। [तद्बाधबोधनमिति।] उत्सर्गबाधबोधनमित्यर्थः। [अन्यथेति।] सर्वथा अचारितार्थ्य एव बाधकत्वाङ्गीकारेण तदप्राप्तियोग्ये इति विशेषणत्यागे इत्यर्थः। [एतत्कथनेति।] येन नेति न्यायकथनेत्यर्थः। भाष्ये इति शेषः। ननु भाष्येऽप्यनेन न्यायेन सर्वथा निरवकाशत्व एव बाधकत्वं प्रदर्श्यत इति कुतो न वक्तुं शक्यमत आह। [तक्रकौण्डिन्यन्यायेति।] एतद्दृष्टान्ततयेति शेषः तुल्यत्वे हि दृष्टान्ततेति भावः। यद्यपि बहुषु पुस्तकेषु "तदप्राप्तियोग्येऽचारितार्थ्यं हि बाधकत्वे बीजमिति ग्रन्थानन्तरं" अतएवायादय इति सूत्रे इत्यादि, एवं तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममित्यन्तो ग्रन्थः। तदुत्तरं किञ्चेत्यादि तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यादित्यन्तो ग्रन्थश्चोपलभ्यते। तेनैव

र्थ्यापत्तेश्च। यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशे- नापि द्वितीयद्विर्वचनेन बाधः। यथा वादेरपि प्रवृत्त्या चरितार्थेनादेः परस्येत्यनेनालोऽन्त्यस्येत्यस्य बाधः॥ तदुक्तं मिदचो ऽन्त्यादिति सूत्रे भाष्ये सत्यपि सम्भवे बाधनं भवतीति। अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात्॥

---

च क्रमेण बहुभिर्व्याख्यातम्। गदासहितपुस्तके तु बाधकत्वे बीजमिति ग्रन्थानन्तरं किञ्चेत्यादि- प्रागुक्तग्रन्थः तदुत्तरमत एवेत्यादिग्रन्थश्च दृश्यते। तेनैव क्रमेण च गदाकृताऽपि व्याख्यातम्। तत्र गदाकृता धृतःक्रम एव स्वारसिकः। अन्यव्याख्यातृभिरादृते क्रमे एवमत्रेत्यादिग्रन्थस्य, तदुत्तरं किञ्चेत्यादिग्रन्थस्य च सर्वथा अस्वारसिकत्वात्। गदाकृद्धृतपाठक्रमे तु तदप्राप्तियोग्ये इति विशेषणसार्थक्यप्रतिपादनाय, तदुत्तरं किञ्चेत्यादिग्रन्थः स्वारसिकः। एवमित्यादिग्रन्थोऽपि यथा द्वितीयद्विर्वचनस्य प्रथमद्विर्वचनोत्तरं चारितार्थ्येऽपि, तदव्याप्तोऽवकाशो न, एवमायादीनां- शबाद्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नेति सममेवेति ग्रन्थश्चात्यन्तं स्वारसिक इति बोध्यम्। स्पष्टार्थमस्य न्यायस्योदाहरणद्वयमाह। [यथेति।] [सावकाशेनापीति।] अपिर्भिन्नक्रमः। तदुत्तरमपि सावकाशेनेत्यर्थः। [आदेरपीति।] आदेःपरस्येत्यस्यालोऽन्त्यपरिभाषाऽप्राप्तियोग्यस्थले- ऽचारितार्थ्ये सत्यपि तया परिभाषयाऽन्त्यस्य कार्यप्रवृत्त्युत्तरं तत्प्रवृत्तिकाले तत्पूर्वं वा आदेरपि कार्यप्रवर्तकतया तस्य चारितार्थ्येन सर्वथा निरवकाशत्वेनालोन्त्यपरिभाषाबाधकत्वस्य वक्तुमशक्य- तयाऽनेनैव न्यायेन बाध इति भावः। सत्यपि सावकाशत्वे बाधकत्वमिति निरुक्तार्थे भाष्यसम्मतिं दर्शयति। [तदुक्तमिति।] [सत्यपीति।] अपिना सर्वथा निरवकाशत्वसङ्ग्रहः। [अन्यथेति।] सर्वथा निरवकाशत्व एव बाधकत्वाङ्गीकारे इत्यर्थः। [तद्दानोत्तरमिति।] दधिदानोत्तरमित्यर्थः। [तत्पूर्वं वेति।] दधिदानात्पूर्वमित्यर्थः। इदमुपलक्षणं तत्समकालस्यापि, एवञ्च तद्वदत्रापि चारितार्थ्ये

अत एवायादय इति सूत्रे गोपायिष्यतीत्यादावायादीन्बा-

---

सत्यपि बाधकत्वं भवतीति भावः। उक्तमेवार्थं भाष्यान्तरेण द्रढयति। [अत एवेति।] कृते चारितार्थ्ये सत्यपि तदप्राप्तियोग्येऽचारितार्थ्यमात्रेणानेन बाधकत्वाङ्गीकारादेवेत्यर्थः। [इति सूत्रे इति।] तत्र हि भाष्ये तत्सूत्रे आर्धधातुक इति परसप्तमीत्याशयेन आयादिभ्यो यदार्धधातुकं तस्मिन् परे वा आयादीनां निवृत्ति र्भवतीति वा, आहोस्विदायादिप्रकृतेर्यदार्धधातुकं तस्मिन् परे वा आयादीनामुत्पत्तिर्भवतीति वेति पक्षद्वयं विचारितम्। तत्राद्यपक्षस्यायमाशयः। एतद्वाक्यनिरपेक्षै-रायादिविधायकवाक्यैः परनिमित्तानपेक्षा आयादयःसामान्येन विधीयन्ते। तत आर्धधातुके परे तेषामनेन वा निवृत्तिःक्रियत इति। अत्र पक्षे निवृत्तिशब्दः सूत्रे निर्देष्टव्य इति आयादय इत्यस्य पञ्चम्या विपरिणाम इति च तदाशयः। द्वितीयपक्षस्य तु गुपूधूप, ऋतेरीयङ् कमेर्णिङिति, सूत्रत्रयस्यायं शेषः। तथा च तैरेकवाक्यतया अर्धधातुके परत आयादयो वा विधीयन्ते। गुपूधूपेत्यत्रैवार्धधातुके वेति वक्तव्ये पृथक्पाठसमार्थ्याद्भिन्नवाक्यतया, सार्वधातुकेऽपि विधीयन्ते। तथा च भिन्नवाक्यतया सर्वधातुके नित्यमेकवाक्यतयाऽर्धधातुके विकल्पेन चायादयो विधीयन्ते, इत्याशयः। तत्राद्य पक्षे गुप्तिर्जुगोपेत्यादेरिष्टस्यासिद्धिः। निमित्तानपेक्षया गुपूधूपेत्यनेन प्रथममायप्रत्यये ततः प्रत्ययान्तत्वात् क्तिनं बाधित्वा अप्रत्ययादित्यनेनाकारप्रत्यये तस्मिन् परे आयस्यानेन वा निवृत्तावपि क्तिनोऽसिद्धेः। तथा आमि परत आयस्य वा निवृत्तावपि जुगोपेतीष्टस्यासिद्धिः। गोपा, गोपांचकारेत्यनिष्टं प्राप्नोति इति दोष उद्भावितः। द्वितीयपक्षे तु गुपूधातोः स्त्रियां क्तिनि, आर्धधातुकपरत्वस्य सत्त्वादनेन वा आयप्रत्यये, गोपायतिरित्यनिष्टं प्रसज्येत गोपायेतिचेष्टं न सिध्यति इति दोष उद्भावितः। तदुत्तर-मुक्तदोषवारणाय, आयादयो वा, सार्वधातुके नित्यमिति न्यासेनायादीनविशेषेण विकल्पेन विधाय, सार्वधातुके तेषां नित्यत्वेन विधानमुक्तम्। तथा च पारिशेष्यादार्धधातुके विकल्पस्सिद्ध्य-तीति न प्रागुक्तदोषलेश इति च तदाशयः। अथ तदुत्तरम्। "स्यादिबलीयस्त्वन्तु विप्रतिषेधेन तुल्यनिमित्तत्वात्। स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति, किं कारणम्? विप्रतिषेधेन तुल्यनिमित्त-त्वात्। तुल्यं वा निमित्तमायादीनां स्यादीनाञ्च। स्यादीनामवकाशः। करिष्यति। हरिष्यति।

धित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः। गोपायतीत्यादावपि शप्स्यादिः प्राप्नोति। न च सति शप्यसति वा न विशेषः। अन्यदिदानीमिदमुच्यते नास्ति विशेष इति। यदुक्तमायादीनां स्यादिभिरव्याप्तो ऽवकाश इति स नास्त्यवकाश इति भाष्ये उक्तम्॥ एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्ये

---

आयादीनामवकाशः। गोपायति। धूपायतीति। इहोभयं प्राप्नोति गोपायिष्यति धूपायिष्यतीति परत्वात् स्यादयः प्राप्नुवन्तीत्याशङ्का कृता तदेतदाह। [इत्याशङ्क्येति।] तथा च सकृद्गतिन्यायेन पुनरायादयो न स्युः अपवादविषये उत्सर्गाप्रवृत्त्या आयादयो वेति सामान्यसूत्रेणापि नायादय इति भावः। लादेशोत्तरं स्यतासी इति पक्षे सार्वधातुके नित्यमित्यनेन विहितायादीनां स्यादीनां च, तुल्यनिमित्तत्वात् स्यादिभिस्तेषां परत्वाद्बाधः प्राप्नोतीति तदाशयः। तदुत्तरं "नवा आयादिविधानस्यानवकाशत्वात्। अनवकाशा आयादयः उच्यन्ते च ते वचनाद्भविष्यन्ती" त्युक्तम्। सार्वधातुके नित्यमित्यनेन विहितायादीनां स्याद्यप्राप्तियोग्येऽचारितार्थ्यात्तैस्स्यादीनामनवकाशत्वाद्बाध इति तदाशयः। तदेतदाह। [अनवकाशा आयादय इति।] यथाश्रुतन्यासेन वा आयादयो वेति न्यासान्तरेण वा प्राप्तायादीनान्तु नानवकाशत्वम्। स्याद्यप्राप्तियोग्ये लिटि, आशीर्लिङि च तद्विहितायादीनां चारितार्थ्यात्। ननु गोपायतीत्यादिरवकाशोऽत आह। [गोपायतीत्यादावपीति।] [शप् स्यादिति।] स्याद्यन्तर्गतः शप् प्राप्नोतीत्यर्थः। [स्यादिभिरव्याप्तोऽवकाश इति।] स्यादिविध्युद्देश्यतावच्छेदकानाक्रान्ता प्रवर्तनभूमिरित्यर्थः। [नास्त्यवकाश इति।] विशेषाभावेऽपि पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः। [भाष्ये उक्तमिति।] एवं च शपि कृते चरितार्थानामप्यायादीनामनवकाशत्वप्रतिपदनपरेणानेन भाष्येणोत्सर्गशास्त्रप्रवृत्तिकालिकस्वप्राप्तियोग्यलक्ष्यशून्यत्वलक्षणमनवकाशत्वमुभयसाधारणं बाधकताबीजमिति सूचितम्। तदाह। [एवमिति।] द्वितीयद्विर्वचनवदित्यर्थः। [अत्रेति।] गोपायतीत्यत्रेत्यर्थः। [तत्प्रवृत्त्युत्तरमिति।] शप् प्रवृत्त्युत्तरमित्यर्थः।

**ऽपि तद्व्याप्तो ऽवकाशो नास्तीति सममेव॥ अत एव विषयभेदेऽप्यपवादत्वम्। अत एवाचिरादेशेन नुटो ऽप्यपवादत्वाद् बाधमाशङ्क्य न तिसृचतसृ इति ज्ञापकेन**

---

[तद्व्याप्त इति।] स्वादिभिरव्याप्त इत्यर्थ। [सममेवेति।] तुल्यमेवेत्यर्थः। यथा प्रथमद्विर्वचनोत्तरं द्वितीयद्विर्वचनस्य चारितार्थ्येऽपि तद्व्याप्तस्यावकाशस्याभावाद्द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधः एवमत्रापीति भावः। ननु प्रागुक्तलोकन्यायेन विषयैक्ये सर्वथाऽसंभवरूपविरोधाभावेऽप्युत्सर्गप्राप्तिकालिकप्राप्तियोग्यलक्ष्यविरहरूपविरोधेन बाधकत्वमस्तु। विषयभेदे तु कथं बाधकत्वम्। ब्राह्मणेभ्यो दधि दीयताम्, अन्येभ्यस्तक्रमित्यादौ बाध्यबाधकभावस्यादृष्टत्वादत आह। [अत एवेति।] उक्तलोकदृष्टान्तेन सत्यपि सम्भवे बाधकत्वप्रतिपादनपरमिदचोऽन्त्यात्पर इति सूत्रस्थभाष्यप्रामाण्यात्कथंचिदपि व्याप्यव्यापकभावापन्नोद्देश्यतावच्छेदकोर्बाध्यबाधकभावाङ्गीकारादेवेत्यर्थः। [विषयभेदेऽपीति।] साक्षादुद्देश्यतावच्छेदकयोर्भेदेन यौगपद्यासम्भवरूपविरोधाभावेऽपीत्यर्थः। [अपवादत्वमिति।] तदप्राप्तियोग्ये अचारितार्थ्यरूपबाधबीजस्य सत्त्वादित्यर्थः। ब्राह्मणेभ्यो दधि दीयतामन्येभ्यस्तक्रमित्यादौ तु तक्रदानदधिदानयोस्सामानाधिकरण्यस्यैवाभावेन व्याप्यव्यापकभावस्य सुतरामभावान्न बाध्यबाधकभाव इत्यन्यत्। उक्तमेवार्थं प्रमाणान्तरेण द्रढयति। [अतएवेति।] विषयभेदेऽप्यपवादत्वाङ्गीकारादेवेत्यर्थः। [नुटोऽपीति।] तद्विषये बाध्यसामान्यचिन्ताया आश्रयणाद्गुणादीनामिव नुटोऽपि बाधमाशङ्क्येत्यर्थः। [ज्ञापकेनेति।] नुटं बाधित्वा रादेशे तदुत्तरं नुटोऽप्राप्त्या तिसृचतस्रोर्नाम्परत्वासम्भवेन दीर्घस्य प्राप्तेरेवाभावान्नामि परे तयो दीर्घनिषेधविधानं व्यर्थं स्यादतो रादेशनुटो र्न बाध्यबाधकभाव इति तदाशयः। विषयभेदे तदनङ्गीकारे तु तयोर्बाध्यबाधकभावशङ्कायाः ज्ञापकेन तद्वारणं च सुतरामसङ्गतं स्यादिति भावः। ननु चरितार्थविषयस्य तक्रकौण्डिन्यन्यायस्य विषयभेदेऽपि प्रवृत्तिरिति खलु प्रस्तावः। अचिरादेशस्तु सर्वथा निरवकाशो नुटं बाधते। न हि कृते नुट्यचिरादेशस्य प्रसक्तिरस्ति। ततश्च कथमिदं भाष्यं न्यायस्य विषयभेदे प्रवृत्तौ गमकं स्यादिति चेन्न। नुडुत्तरं चारितार्थ्याभावेऽपि तत्प्रवृत्तिसमकालमस्यापि प्रवृत्तौ बाधकाभावेन

समाहितं तृज्वत्सूत्रे भाष्ये। तेन निषेधेन विषयभेदेऽप्य-ऽपवादत्वाभाव एव बोध्यते इति कश्चित्, तन्न। विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः।

---

सर्वथा निरवकाशत्वाभावात्तक्रन्यायेनैव बाधकत्वस्य वक्तव्यत्वात्। अतएव तडित्यादावनेन न्यायेन पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वमुपपद्यते। अन्यथा तत्रापि संयोगान्त-लोपोत्तरं संयोगादिलोपस्य चारितार्थ्याभावेन तदनुपपत्तिः। तत्र माठरकौण्डिन्यन्यायेन बाधकत्वा-ङ्गीकारे तु संयोगादिलोपोत्तरं तस्यासिद्धत्वात्संयोगान्तलोपापत्तिः। विवेचितं चैतन्मदीये गुरुप्रसादशेषे। एतेन "केचित्तु यत्र समाने विषये भिन्ने वा सामान्यप्रवृत्त्युत्तरं विशेष-विहितस्य प्रवृत्तियोग्यता तथा भूतोऽस्य विषयः। लोके तथैव दर्शनात्। प्रकृते तु कृते नुट्यचिरादेशस्य प्रवृत्तियोग्यताया दौर्लभ्यादेतन्न्यायविषयत्वायोगेन निरवकाशत्वप्रयुक्तस्यैव बाधकत्वस्य विषयभेदेऽपि प्रवृत्ताविदं भाष्यं गमकमिति वदन्ती" ति चन्द्रिकाकृदुक्तं मिश्रोक्तं चापास्तम्। ननु विषयभेदेऽप्येतन्न्यायप्रवृत्तौ इदमो म इति मकारादेशविधानं व्यर्थम्। तद्धि त्यदाद्यत्वबाधनार्थम्। विषयभेदेऽप्येतन्न्यायप्रवृत्तौ तु इदोऽय् पुंसि यस्साविस्यनयोरनेन न्यायेन त्यदाद्यत्वबाधकतया तदुत्तरं त्यदाद्यत्वाप्राप्तेरिति चे त्सत्यम्। एतन्न्यायानित्यत्वज्ञापनेन तच्चारितार्थ्यात्। अतएवानाप्यक इत्यनेन त्यदाद्यत्वबाधः। स्यतासिभ्यां च न तिबादिबाध इति बोध्यम्। एतद्भाष्यस्य वार्तिकमतानुसारेण केन चिदुक्तमन्यादृशमाशयमनूद्य खण्डयति। [तेनेति।] न तस्मिति ज्ञापकेनेत्यर्थः। [टिलोपमात्रस्येति।] अतिशयेन स्रग्वी स्रजिष्ठ इत्यादौ लुक् प्रवृत्तिकाले प्रत्ययावयवस्य टेः प्राप्तस्य, लुगुत्तरं प्रकृत्यवयवस्य टेः प्राप्तस्य च टिलोपस्येत्यर्थः। [बाधाना-पत्तेरिति।] तथा च लुगुत्तरं टिलोपापत्तिरिति भावः। न च प्रकृत्येकाजिति प्रकृतिभावेन न पुनष्टिलोप इति वाच्यम्। विन्मतोर्लुकोऽनपेक्षित विषयभेदं स्रजिष्ठ इत्यस्मिन्नङ्गे प्राप्तस्येष्ठादि-निमित्तकस्य टिलोपमात्रस्य येन नेति न्यायेन बाधकत्वमङ्गीकृत्य प्रकृत्येकाजित्यस्य भाष्ये प्रत्याख्यानात्। न च तद्भाष्यस्य प्रेष्ठादीनां तदुदाहरणानामन्यथा सिद्धिप्रदर्शन एव तात्पर्यम्। न तु

यत्तु दयतेर्दिगीति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं तत् प्रौढ्या। ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन॥ असम्भव एव बाधकत्वं विरोधस्य तद्बीजत्वादिति वार्तिकमतं तु

---

तत्प्रत्याख्याने इति वाच्यम्। सर्वेषां तदुदाहरणानामन्यथासिद्धिं प्रदर्श्य उदाहरणान्तरानुक्त्या तत्प्रत्याख्यान एव भाष्यतात्पर्यमिति सुब्धातुप्रकरणे ग्रन्थकृता सिद्धान्तितत्वादिति बोध्यम्। यत्तु टिलोपमात्रस्येत्यस्य नस्तद्धित इत्यस्य टे रित्यस्य चेत्यर्थ इति तन्न। प्रकृत्येकाजिति सूत्रे भाष्ये विन्मतोर्लुको येन नेति न्यायेन टेरित्येतद्बाधतकताया एवोक्तत्वात्। किञ्च नस्तद्धित इत्यस्याप्यनेन न्यायेन बाधकत्वाङ्गीकारे अतिशयेन ब्रह्मवान्, ब्रह्मिष्ठ इत्यादौ मतुपो लुकि टिलोपानापत्त्या तद्बाधकताया निराकृतत्वाच्च। किञ्च तथा व्याख्याने विषयभेदाभावेन प्रकृतानुपयोगाच्च। चारितार्थ्यविषयेऽपि बाधकत्वाङ्गीकारे कैयटविरोधमाशङ्क्य, परिहरति। [यत्त्विति।] [कैयटेनोक्तमिति।] तत्र हि "इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते। यदि तर्ह्यनवकाशा विधयो बाधका भवन्ति। बभूय, भूभावो द्विर्वचनं बाधेत।" इति भाष्यव्याख्यावसरे यदि तर्हीति भाष्यप्रतीकमुपादाय "नन्ववश्यमनवकाशेन बाधकेन भाव्यम्। नैवायमनवकाशः। कृतेऽपि द्विर्वचने प्रवृत्त्यविघाता" दिति तेनोक्तम्। अनेन च द्वित्वोत्तरं चरितार्थस्य दिग्यादेशस्य द्वित्वबाधकत्वं नोपपद्यत इति तदाशयो गम्यते। कृते चारितार्थ्येऽपि बाधकत्वाङ्गीकारे तद्विरोध इति भावः। [तत्प्रौढ्येति।] सत्यपि सम्भवे तदप्राप्तिविषये चारितार्थ्याभावमात्रेण बाधकताया भाष्यकृता तत्र तत्रोक्तत्वादिति भावः। वस्तुतः कृते चारितार्थ्ये बाधकत्वाभावस्तस्यापि न संमत इत्याह। [ध्वनितमिति।] [तस्येति।] द्विर्वचने कृते दिग्यादेशस्य चारितार्थ्यप्रतिपादनपरपूर्वग्रन्थस्येत्यर्थः। [तथात्वमिति।] प्रौढिवादत्वमित्यर्थः। [तदुत्तरग्रन्थेनेति।] "अथ पुनरेवमप्यनवकाशं मन्यसे। तदा लक्ष्यदोषप्रसङ्गः। बभूवेती" ति तदुत्तरग्रन्थेनेत्यर्थः। तत्राथ पुनरित्याद्युक्तग्रन्थेन चारितार्थ्य-

भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि। तक्रकौण्डिन्य-

---

प्रतिपादनपरस्य पूर्वग्रन्थस्य प्रौढिवादत्वं ध्वनितमिति भावः। नन्वसति खल्वपि संभवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यादिति तद्धितेष्वचामादेरित्यादिसूत्रोक्त वार्तिकमते निरुक्तस्थलेषु बाधकत्वासंभवाल्लक्ष्यदोष प्रसंग इत्यत आह। [वार्तिकमतं त्विति।] अत्रेत्थं वार्तिकमतप्रपञ्चः। तक्रकौण्डिन्यन्यायो नात्र शास्त्रे आश्रयितुं शक्यते। तक्रदानोत्तरं तस्यामेव व्यक्तौ दधिदानस्य प्रवृत्तियोग्यतायामपि विशेषविहितेन तक्रदानेन दधिदानस्य बाधो दृश्यते। शास्त्रे तु दिग्यादेशादौ प्रवृत्ते द्विर्वचने व्यक्त्यन्तरे प्रवृत्तियोग्येन विशेषविहितेनोत्सर्ग बाधनमिति न्यायाननुगुणत्वात्। किञ्च फलाभावोऽपि न्यायाश्रयणे। तथा हि सामान्यशास्त्र प्रवृत्त्युत्तरकालिकं चारितार्थ्यमादाय विशेषविहितस्य लब्धावकाशतया प्रकृतविषये विप्रतिषेध-शास्त्रेणैवोत्सर्गनिवृत्तिसिद्धौ किमनेन न्यायेन? विप्रतिषेधशास्त्रे च न केवलमेकस्य द्विकार्ययोगात्मक एव विरोधो बाधकताबीजम्। अपि तु भिन्नविषययोरपि कार्ययो र्यौगपद्येन प्रवृत्त्यसंभवरूपोऽपीति स्पष्टमन्यत्र। अत एव शिष्टादित्यादौ परेण तातङादिना शाभावादिर्बाध्यते। अथ यत्र परत्वाभावो बाधकस्य यथा परमस्त्रजिष्ठ इत्यादौ विन्मतो र्लुका टिलोपबाधने तत्र पूर्वविप्रतिषेधा-श्रयणेन निर्वाहः। न च अहः, अहोभ्यामित्यादौ रत्वरुत्वयोरसिद्धत्वात्प्राप्तस्य नलोपस्य बाधनमेतन्न्यायप्रयोजनमिति वाच्यम्। अहन्निति सूत्रस्यावृत्त्या नलोपाभावनिपातनेन तदुपपत्तेः। न च पयांसि यशांसीत्यादौ झलन्तलक्षणस्य नुमो मिदचोन्त्यात्परत्वेन स्थाने योगत्वस्य बाधनमेतन्न्यायस्यानन्यथासिद्धं प्रयोजनम्। न हि तत्र विप्रतिषेधशास्त्रेण निर्वाहः। विरोधाभावादिति वाच्यम्। गुणानां च परार्थत्वादिति न्यायेन परस्परमनन्विताभ्या-मेव ताभ्यां पृथक् प्रधानोपकारेण लक्ष्यसंस्कारे चरमव्यञ्जनविशिष्टस्यैकया साधुत्वमपरया च तद्विरहितस्येति विरोधस्य सुवचत्वात्। तस्मादत्र शास्त्रे तादृशन्यायस्यानाश्रयणमेवेति। [भाष्यकृता दूषितत्वादिति।] "नैवेश्वर आज्ञापयति। नापि धर्मसूत्रकाराः पठन्ति। अपवादै-रुत्सर्गा बाध्यन्तामिति। लौकिकोऽयं दृष्टान्तः। लोके तावत् सत्यपि संभवे बाधनं भवति। तद्यथा दधि ब्राह्मणेभ्यो दीयताम्। तक्रं कौण्डिन्याये" त्यादिना मिदचोऽन्त्यादिषु बहुषु सूत्रेषु

न्यायो ऽपि तदप्राप्तियोग्ये ऽचारितार्थ्यविषयो विधेयविषय एव चेति तद्धितेष्वचामादेर्धातोरेकाच इत्यादि सूत्रेषु भाष्ये स्पष्टम् ॥

---

दूषितत्वादिति भावः। अत्रायं भाष्यकाराणामाशयः। दिग्य इत्यादौ द्वित्वनिष्पन्नस्यापि सादृश्यमूलकाभेदाध्यवसायेन तद्व्यक्तित्वस्य सुवचत्वात् न लोकन्यायवैगुण्यसंपादको व्यक्तिभेदः। अन्यथा द्विःप्रयोगात्मके द्विर्वचने उत्तरखण्डस्य धातुत्वादिकमपि दुर्वचं स्यात्। किञ्च परमस्त्रजिष्ठ इत्यादौ टिलोपवारणाय पूर्वविप्रतिषेधाश्रयणे क्लेशः। किञ्च टिलोपविन्मतुब्लोपयोर्यौगपद्येन प्रवृत्तौ विरोधाभावादेतादृशे विषये विप्रतिषेधशास्त्रप्रवृत्तेरनुपपत्तिरेव। न च विरोधाभावाट्टिलोपविन्मतोर्लुको यौगपद्येन प्रवृत्तौ लक्ष्ये लक्षणस्येति न्यायेन पुनष्टिलोपाप्रवृत्त्या निर्वाहान्नैतन्न्यायोपयोग इति वाच्यम्। विन्मतोर्लुका टिभागादधिकस्यापि लुप्ततया टिलोपमात्रकृतविकाराभावेन तल्लक्ष्यत्वस्य दुर्वचतया पुनः प्राप्तटिलोपस्य तेन न्यायेन वारयितुमशक्यतया तद्वारणस्य प्रकृतन्यायैकशरणत्वात्। अपि च गुणानाञ्च परार्थत्वादिति न्यायेन प्रदेशेषु परस्परमनन्वयेऽपि विध्येकवाक्यतया लक्ष्यसंस्कारकमहावाक्यार्थबोधकाले परस्परसंबन्धे बाधकाभावः। अन्यथा तथाविधबोधकालिकस्थाने योगत्वस्येको गुणवृद्धीत्यादिभिरप्यनन्वयप्रसङ्गः। तस्मादुक्तन्यायेनैव यशांसीत्यादौ मिदचोऽन्त्यात्परत्वं स्थानेयोगत्वस्य निवर्तकम्। एवं द्व्यन्तरुपसर्गेभ्योऽप ईदित्यादिभि र्द्वीपमित्यादावादेःपरस्यालोऽन्त्यस्येत्याभ्यामाद्यन्तयोरादेशद्वय प्रसङ्गोऽप्यनेनैव न्यायेन वारणीय इत्यवश्याश्रयणीयोऽयं न्यायः। अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय इति। येन नाप्राप्तिन्यायतक्रन्याययोः प्रागुक्तमेवैक्यं किञ्चिद्विशेषकथनेन द्रढयितु मुपसंहरति। [तक्रकौण्डिन्यन्यायोऽपीति।] अपिना येन नेति न्यायसमुच्चयः। [विधेयविषयश्चेति।] अत एव विशेषविहितेन समान्यविहितं बाध्यत इत्युद्घोष इति भावः। [भाष्ये स्पष्टमिति।] तत्रानवकाशविषयत्वमाद्ये तच्च विधेयविषयत्वञ्च यङ्विधायके च भाष्ये प्रतिपादितमित्यर्थः। धातोरेकाच इत्यादीत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा नित्यं कौटिल्य इत्यादिसङ्ग्रहः। धातोरेकाच इत्यादि यङ्विधायकोपलक्षणं वा। तत्राद्ये क्रौष्टो जागत

इत्यादावादिवृद्धावन्त्योपधालक्षणवृध्द्योः प्रतिषेधो वक्तव्य इत्युक्त्वा, ननु चादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते इत्यादिना सत्यपि संभवे तक्रन्यायेनादिवृद्धेरन्त्योपधावृद्धिबाधकत्वं प्रदर्श्य, विषम उपन्यासः। नाप्राप्ते दधिदाने तक्रदानमारभ्यते। तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति। इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावादिवृद्धिरारभ्यते। सुश्रुतोऽपत्यं सौश्रुत इत्युक्त्वा अनुशतिकादिषु पुष्करसच्छब्दपाठादादिवृद्धेरन्त्योपधावृद्धिबाधकत्वमुक्तम्। तेन चानवकाशविषयत्वमनयोः स्पष्टमेव लभ्यत इति भावः। द्वितीये तु "उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम्। न वा कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते। अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम्। क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्। भृशं जपति ब्राह्मणः। भृशं समिधो दहतीत्येव" इत्युक्तम्। तस्यायमाशयः। उत्तरयोः, नित्यं कौटिल्ये, लुपसदेत्यनयोः विग्रहेण, कुटिलं गच्छति, गर्हितं जपतीत्यनेन, विशेषासंप्रत्ययात्=विशेषस्य=जङ्गम्यते जंगम्यते, इत्यादि यङन्तप्रतिपाद्यार्थविशेषस्य कौटिल्यभावगर्हारूपस्य, असंप्रत्ययात्=शब्दशक्तिस्वभावेनाप्रतीतेस्तादृशवाक्यव्यावृत्तये न यङ् विशेषणार्थं नित्यग्रहणमावश्यकम्। तादृशवाक्येन कुटिलं पन्थानं गच्छति गर्हितं मन्त्रं जपतीत्येव संप्रत्यात्। क्रियासमभिहारे चेत्येतद् लुपसदेत्येतद्विषयं तद्विषयस्यैव भाष्ये उदाहरणात्। गत्यर्थेभ्यः क्रियासमभिहारे यङ इष्टत्वाच्च। अत एव स्थावरप्रतिद्वन्द्वि जङ्गम इति सिद्धम्। स्थितिशीलो हि स्थावरः। तत्प्रतिद्वन्द्वी भृशं गन्ता हि जङ्गमः। अत एव गत्यर्थकादटेरर्तेश्च कियासमभिहारे यङुदाहृतो भाष्ये। एकाज्हलादिग्रहणं च प्रत्याख्यातम्। क्रियासमभिहारे चेत्यत्र चेन विशेषासंप्रत्ययादित्यनुकृष्यते। तथाचैतेभ्यः=लुबादिभ्यः कियासमभिहारे यङा न भवितव्यम्। यङन्तेन क्रियासमभिहाररूपार्थविशेषस्याप्रतीतेस्तादृशेऽर्थे भृशं जपति ब्राह्मणः। भृशं समिधो दहतीति वाक्यमेव। एवञ्च तेभ्यः क्रियासमभिहारे यङ् व्यावृत्तये लुबादिभ्यो भावगर्हायामेव यङित्येवमवधारणपरतया अर्थविशेषणार्थमपि न नित्यग्रहणमावश्यकमिति। सावकाशविषयेऽप्यनयोः प्रवृत्तौ तु क्रियासमभिहाराविवक्षायां सावकाशेनापि लुपसदेत्यनेन धातोरेकाच इत्यादिना विहितस्य यङ आभ्यां बाधसिद्धौ तदर्थं विशेषासंप्रत्यादित्यनुकर्षकचकारवैयर्थ्यापत्तिः। एवमनुवादविषयेऽप्यनयोः प्रवृत्तौ कौटिल्यभावगर्हयोर्विशेषविहितेन यङा क्रियासमभिहारार्थयङस्तक्रन्यायेन बाधसिद्धौ तद्वैयर्थ्यापत्तिः। क्रियासमभिहारादेर्यङ्द्योत्यतया तद्वृत्ताद्धातोरित्यर्थेन तेषा-

क्वचित्तु सर्वथाऽनवकाशत्वादेव बाधकत्वं यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव यथा तत्रैव याडादयः। अप्राप्तौ तु न, यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः॥ ५८॥

---

मर्थानामविधेयत्वं स्पष्टमेवेति बोध्यम्। स्पष्टंचेदं यङ्विधायकसूत्रे शेखरोद्योतयोः। नन्वनयोरैक्ये तक्रन्यायेन बाधकत्वस्थलेऽपवादप्रवृत्त्युत्तरमुत्सर्गाप्रवृत्ते र्लोकन्यायसिद्धतया क्वचिदप्यपवाद प्रवृत्त्युत्तर मुत्सर्गाप्रवृत्तौ "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत" इत्यस्य का गतिरत आह। [क्वचित्त्विति।] [निर्दिश्यमानस्येति।] ङेरित्यर्थः। [व्यवधानादिति।] याडादिनेति शेषः। ननु याटि कृते आमः प्राप्त्यभावेऽपि तत्समकालं तत्प्रवृत्तौ बाधकाभावान्न सर्वथा निरवकाशत्वमाम इति वाच्यम्। द्वयो र्युगपत्प्रवृत्तौ वृक्षेभ्य इत्यादौ दीर्घैत्वयोरिव स्वस्वनिमित्ता-नन्तर्यासंभवरूपविरोधस्य सत्त्वेन तत्समकालं तत्प्रवृत्तेर्वक्तुमशक्यत्वात्। [तत्रेति।] सर्वथा निरवकाशत्वेन बाधकस्थल इत्यर्थः। [स्वस्येति।] बाधकस्येत्यर्थः। [भवत्येव स इति।] उत्सर्गो भवत्येवेत्यर्थः। तत्र सर्वथा निरवकाशविषयेण माठरकौण्डिन्यन्यायेनामादेर्याडादे-बाधकतया तत्र बाधकीभूतपरिवेषणोत्तरं भोजनस्य दृष्टतया तदनुरोधेनात्रापि बाधकप्रवृत्त्युत्तरं यद्युत्सर्गस्य प्राप्तिरस्ति तदा भवत्येव स इति भावः। [अप्राप्तौ तु नेति।] लोकेऽपि परिवेषणोत्तरं भोजनेच्छाया अभावे भोजनस्यादृष्टत्वादिति भावः। ५८

तदेतत्पठ्यते ॥

क्वचिदपवादविषये ऽप्युत्सर्गो ऽभिनिविशत इति॥५९॥

अपवादशब्दो ऽत्र बाधकपरः॥ तदुक्तं गुणोयङ्-लुकोरित्यत्र भाष्ये। अभ्यासविकारेष्वपवादा उत्सर्गान्न

---

[तदेतदिति।] तदुत्तरप्राप्तिमदुत्सर्गकर्तृकं भवनमित्येतदित्यर्थः। [पठ्यत इति।] आधुनिकैरिति शेषः। अपवादप्रवृत्त्युत्तरमुत्सर्गाप्राप्तौ तदभावादाह। [क्वचिदिति।] ननु वक्ष्यमाणगुणो यङ्लुकोरिति सूत्रस्थभाष्येण येन नेति न्यायेन बाधकविषय एवापवादपदशक्यतायाः स्फुटं प्रतीत्या तद्विषये अपवादप्रवृत्त्युत्तरमुत्सर्गाप्रवृत्तेर्न्यायसिद्धतया कथमस्य सङ्गतिरत आह। [बाधकपर इति।] सर्वथा निरवकाशत्वेन बाधकपर इत्यर्थः। लक्षणयेति भावः। यद्यपि बाधकत्वं परनित्यादिसाधारणं तथापि सर्वथा निरवकाशत्वेन बाधके बाधकशब्दस्य योगरूढिरिति भावः। [तदुक्तमिति।] क्वचिदपवादशब्दस्य लक्षणया बाधकपरत्वं तत्रन्यायविषय एवापवाद-पदशक्यत्वमित्येतदित्यर्थः। अस्येतिग्रन्थेनेति वक्ष्यमाणेनान्वयः। तत्रहि डोढौक्यत इत्यादावन्यत्र सावकाशयो रभ्यासह्रस्वदीर्घयोः प्राप्तौ परत्वाद्ध्रस्वं बाधित्वा दीर्घो ऽकित इत्यनेनौकारस्यौकार एव दीर्घस्यात्तथा च डोढौक्यत इति रूपासिद्धिरित्याशङ्क्य "अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त" इति परिभाषया समाधाय, तस्याः अचीकरत, मीमांसते, अजीगणदिति प्रयोजनत्रयमुक्तम्। तत्राद्ये सन्वद्भावं परत्वाद्बाधित्वा प्राप्तं दीर्घत्वं, द्वितीयेऽन्तरङ्गत्वादित्वं बाधित्वा प्राप्तं दीर्घत्वं तृतीयेऽनवकाशत्वाद्धलादिश्शेषं बाधित्वा प्राप्तमीत्वं चानया परिभाषया न भवतीति तदाशयः। अनेन च क्वचिदपवादशब्दस्य बाधकमात्रपरत्वं लभ्यत इत्याशयः। अभ्यासविकारेष्वित्यस्याः परिभाषाया उपदर्शितभाष्योक्तप्रयोजनत्रये आद्यं प्रयोजनद्वयं विहाय

बाधन्ते। अजीगणत्। अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं न बाधते। न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते। किं तर्हि। अनवकाशत्वादिति ग्रन्थेन। गण्रूपाभ्यासान्त्यस्य णस्येत्वमित्यर्थे हलादिःशेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलो

---

प्रकृतोपयुक्तत्वादन्त्यं प्रयोजनं दर्शयति। [अजीगणदिति।] तदुपपादयति। [अत्रेत्यादि न बाधत इत्यन्तेन।] अभ्यासविकार इत्यस्याभावेन हलादिश्शेषं बाधित्वा णस्येत्वेऽजीगणदिति न स्यात्। परिभाषया बाधकत्वाभावे बोधिते तु हलादिश्शेषोत्तरमभ्यासाकारस्येत्वे तत्सिद्धिरिति भावः। तदुत्तरं भाष्यकार आशङ्कते। [न गणेरीत्वमिति।] कृते चारितार्थ्ये यो बाधकस्तस्यैवापवादपदार्थत्वादीत्वस्य च सर्वथा निरवकाशत्वेन हलादिश्शेषबाधकत्वेऽप्यपवादत्वाभावान्नोक्तपरिभाषयात्र सिद्धिरिति तदाशयः। अनेन च सर्वथा निरवकाशत्वेन बाधकेऽपवादपदशक्यत्वाभावःस्पष्टमेव लभ्यत इति बोध्यम्। अनवकाशत्वमेवेत्वस्य दर्शयति। [गण्रूपेति।] ईच गण इत्यत्राभ्यासस्येति स्थानषष्ठी। तथा च अलोऽन्त्यपरिभाषासहकारेण लाघवात्सामानाधिकरण्येनान्वये ईदृशार्थलाभ इति भावः। [इत्यर्थ इति।] सतिसप्तमीयम्। तस्य चानवकाशत्वेनिमित्तत्वेनान्वयः। [तन्निवृत्ताविति।] णकारनिवृत्तावित्यर्थः। [तदनवकाशमिति।] ईत्वमनवकाशमित्यर्थः। गण्रूपाभ्यासाभावादिति भावः। न च स्थानिवद्भावेन तत्त्वं सुलभमिति वाच्यम्। अभ्यासस्यानर्थकत्वेन अर्थवत्येव स्थान्यादेशभावप्रवृत्त्या तदप्रवृत्तेः। एकदेशविकृतन्यायेनापि न तल्लाभः। अक्तपरिमाणधर्मत्वादित्याशयः। नन्वेवमपि तस्य स्थानिवत्त्वेन हलादिश्शेषे लक्ष्यभेदेनाकारस्य पुनरीत्वे रूपसिद्ध्या उक्तपरिभाषाया अप्रवृत्तावपि न दोष इत्यत आह। [ईत्वे त्विति।] [तस्येति।] हलादिश्शेषस्येत्यर्थ। तत्र हेतुमाह। [अन्त्येति।] अल्विधित्वेन स्थानिवत्त्वाभावाण्णकाराभावेन न तत्प्राप्तिरिति भावः। तथाच रूपासिद्धिरित्याशयः। नन्वेवमजीगणदित्यस्य डोढौक्यत

ऽभावात् अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः। न च येन नाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचं, तस्य चरितार्थविषयताया उक्तत्वात्॥ इको झलित्यत्र भाष्ये ऽपि ध्वनितमेतत्। तत्र हि अज्झनेतिदीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः

---

इत्यादेश्च कथं सिद्धिरत आह। [अभ्यासविकारेष्विति।] अपवादपदाघटितेन परिभाषान्तरेणेत्यर्थः। चशब्दः पूर्वोक्तसमुच्चायकः। साधितमित्यनन्तरं योज्यः। यद्यनवकाशत्वेन बाधकेप्यपवादपदशक्यत्वं तर्हि उक्तपरिभाषयैव सिद्धे परिभाषान्तरस्वीकारेण तत्साधनाद्यसङ्गतिरेवेति बोध्यम्। [तस्मिं श्च सतीति।] परिभाषान्तरे सतीत्यर्थः। [सामर्थ्यादिति।] ई च गण इति सूत्रारम्भसामर्थ्यात्सामानाधिकरण्येनान्वयं विहाय गण्धातुसंबन्ध्यभ्यासान्त्यस्येत्वमित्यर्थाङ्गीकारादिति भावः। [शिष्टस्येति।] अभ्यासविकारेषु बाध्यबाधकभावाभावादुपस्थितक्रमानुरोधेन पूर्वं हलादिश्शेषे तदुत्तरमवशिष्टस्य गशब्दस्येत्यर्थः। [इत्वमिति।] अलोऽन्त्यपरिभाषया तदन्त्याकारस्येत्वमित्यर्थः। यदा तु येन नाप्राप्तिन्यायस्तदा अस्त्येवोत्सर्गापवादभाव इति तत्रत्यकैयटोक्तिं खण्डयति। [नचेति।] [अस्येति।] इत्वस्येत्यर्थः। तस्य=येन नेति न्यायस्य। [एतदिति।] येन नेति न्यायस्य चरितार्थविषयत्वमित्यर्थः। [तत्र हीति।] अस्येत्युक्तमित्युत्तरेणान्वयः। एतदुत्तरं सूत्राभावे चिचीषतीत्यादाविति शेषः। [दीर्घेणेति।] अस्य गुणे बाधिते इत्यनेनान्वयः। तत्र हेतुरनवकाशत्वादिति। ननु कथमनवकाशत्वं गुणोत्तरं तस्य चारितार्थ्यादत आह। [गुणोत्तरमिति।]

स्याद्दीर्घविधानं तु मिनोतेर्दीर्घे कृते सनि मीमेत्यत्र मीग्रहणेन ग्रहणे ऽर्थवत्तत्र पश्चात् प्राप्तगुणबाधनार्थमिको झलिति कित्त्वमित्युक्तम्। अन्यथाऽपवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासंगतिरिति स्पष्टमेव॥ यत्तु काञ्चनीत्यादावपवादमयड्विषये ऽप्यण् भवति क्वचिदपवादविषये ऽपीति न्यायादिति, तन्न। अण् कर्मणि चेति सूत्रस्थभाष्यविरोधात्। तत्र ह्यणः पुनर्वचनमपवादविषये ऽनिवृत्त्यर्थं गोदायो

---

नन्वेवं दीर्घविधानमनर्थकं स्यादत आह। [दीर्घविधानं त्विति।] [अर्थवदिति।] सार्थकमित्यर्थः। अतस्तत्सामर्थ्याद्दीर्घोत्तरं गुणो न भवतीति न वक्तुं युक्तमिति भावः। तथा च दीर्घोत्तरं प्राप्तगुणबाधनार्थं सूत्रमित्याशयः। तदाह। [तत्रेति।] चिचीषतीत्यादावित्यर्थः। [पश्चादिति।] दीर्घोत्तरमित्यर्थः। [गुणबाधनार्थमिति।] गुणनिषेधार्थमित्यर्थः। [अन्यथेति।] सर्वथा निरवकाशविषयेऽपि येन नेति न्ययेन बाधाङ्गीकारे इत्यर्थः। [तद्विषय इति।] अपवादत्वेन बाधविषय इत्यर्थः। [उत्सर्गाप्रवृत्तेरिति।] प्रकृते उत्सर्गस्य गुणस्याप्रवृत्तेरित्यर्थः। [भाष्यस्येति।] कित्त्वविधानस्योक्तफलप्रदर्शनपरभाष्यस्येत्यर्थः। सूत्रस्य=इको झलिति सूत्रस्य। सीरदेवाद्युक्तं क्वचिदपवादविषयेऽपीति न्यायविषयं खण्डयति। [यत्त्विति।] [इत्यादाविति।] आदिना "प्रदीयतां दाशरथाय मैथिली" त्यादावपवादस्यात इञित्यस्य परिग्रहः। [मयडिति।] नित्यं वृद्धशरावादिभ्य इत्यनेन वृद्धत्वात्प्राप्तमयड्विषय इत्यर्थः। [पुनर्वचनमिति।] कर्मण्याणित्येव सिद्धे पुनर्वचनमित्यर्थः। [अपवादविषय इति।] आतोऽनुपसर्गे इति कविषय इत्यर्थः। [अनिवृत्त्यर्थमिति।] अणोऽनिवृत्त्यर्थमित्यर्थः। अन्यथा अपूर्वविधितः प्रतिप्रसवविधौ लाघवादुत्सर्गविषय एव ण्वुलं बाधित्वा अण् स्यात् काण्डलावो व्रजतीत्यादौ। अपवादविषये गोदायो व्रजतीत्यादौ तु स न स्यादतः

व्रजतीत्याद्युक्तम्। काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिको ऽण् बोध्यः॥ अत्रेदं बोध्यम्। येन नाप्राप्तेत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद् बाध्यं विध्यन्तराप्राप्तविषयाभावात्। इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधे ऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात्॥ यदि तु येनेत्यस्य लक्षणे-

---

पुनर्वचनमिति भावः। यद्यस्य न्यायस्य तदुक्त एव विषयस्स्या त्तदा अनेनैव न्यायेन कविषये-ऽणस्सिद्धौ तदसङ्गतिरित्याशयः। नन्वेवं कथं काञ्चनीत्यादि सिद्धिरत आह। [शैषिकोऽणिति।] शेष इति विधिसूत्रविहितोऽणित्यर्थः। वृद्धाच्छ इति त्वधिकारविषयो न विधिविषय इति न तेन बाधशङ्केति भावः। एवं दाशरथायेत्यत्रापि दशरथेन पुनःपुनः स्मृतायेत्यर्थे शैषिकोऽण् बोध्यः। दशरथापत्यायेत्यर्थविवक्षायांत्वार्षत्वात्साधुत्वमवगन्तव्यम्। परनित्यान्तरङ्गेभ्यः प्रकृते विशेष इत्याह। [अत्रेदं बोध्यमिति।] [स्वेतरेणेति।] अपवादेतरत्वावच्छेदकावच्छिन्नेनेत्यर्थः। सर्वत्र स्वशब्देनापवादो ग्राह्यः। तथा चापवादेतरत्वावच्छेदकावच्छिन्नकर्तृकप्राप्तिलाभः। [तद्बाध्यमिति।] वीप्सितस्य तच्छब्देन परामर्शा त्तच्छब्दे न वीप्सा [विध्यन्तराप्राप्तविषयाभावादिति।] विध्यन्तरेणाव्याप्तस्य स्वविषयस्याभावादित्यर्थः। [इयमेवेति।] स्वेतरसकलशास्त्रबाधकतैवेत्यर्थः। [एषेति।] बाध्यसामान्यचिन्तेत्यर्थः। [यद्युदाहरणमस्तीति।] शास्त्राणि चेत्प्रमाणानीति वदिदमसंदिग्धे सन्दिग्धवचनम्। उदाहरणन्तु गुणदीर्घोत्वानामचिरादेशेन बाधोऽस्याः प्रसिद्ध एव। [लक्षणेनेति।] शास्त्रेणेत्यर्थः। शास्त्रस्य लक्ष्यप्राप्तेःकार्यद्वारैव वाच्यतया

नेत्यर्थः कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता संभवति यद्युदाहरणमस्ति ॥ ५९ ॥

तत्र येन कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्यआरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह ॥

पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥६०॥

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६० ॥

---

लाघवादाह। [कार्येणेति।] [यद्युदाहरणमिति।] अत्रापि प्राग्वदेव। उदाहरणस्य प्रसिद्धत्वात्। यथा अतो गुण इत्यनेनाकस्सवर्णे दीर्घ इत्यस्यैव बाधो न तु प्रथमयोरित्यस्यापीति। एवमेत्येधतीतिवृद्धिरेङि पररूपमित्यस्यैव बाधिका नत्वोमाङोश्चेत्यस्यापीतीत्यादि बोध्यम्। लक्ष्यानुरोध एवानयोर्बीजम्। एवं सामान्यविशेषचिन्ते निरूप्य विशेषचिन्तायां विशेषान् निरूपयति। ५९

[तत्रेत्यादिना।] सूत्रपाठक्रमे पूर्वं पठितानि विशेषशास्त्राणि स्वाव्यवहितान्येव सामान्यशास्त्राणि बाधन्ते न तु ततो व्यवहितानीति परिभषार्थः। [आकाङ्क्षाया निवृत्तेरिति।] किंशास्त्रविहितस्येदं बाधकमित्याकाङ्क्षायाः प्रथमोपस्थितसामन्यशास्त्रबाधनेन निवृत्तत्वादित्यर्थः। [मानाभावादिति।] अनन्तरबाधनेन सूत्रस्य चरितार्थत्वादिति भावः। ६०

नासिकोदरौष्ठजङ्घादन्तेत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह ॥

मध्ये ऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान् ॥ ६१ ॥

तेनैष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सहनञ्विद्यमानलक्षण इति नासिकोदरेत्यत्र भाष्ये स्पष्टम् ॥ पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥

ननु वा छन्दसीत्यनेन सेर्ह्यपिच्चेत्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात्। तथा नेटीति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचि वृद्धिमृजिवृद्ध्योरपि स्यात्, अत उक्तन्यायमूलकमेवाह ॥

---

[मध्ये ऽपवादा इति।] सूत्रपाठे सामान्यशास्त्रमध्ये पठितानि विशेषशास्त्राणि स्वापेक्षया पूर्वाण्येव तानि बाधन्ते न तु पराणीत्यर्थः। ६१

[विकल्पःस्यादिति।] वाच्छन्दसीत्यनेन पक्षेऽभावस्य बोधितत्वादभावज्ञाने च प्रतियोगिज्ञानस्य कारणत्वात्सम्पूर्णसूत्रस्योपस्थितावुभयोरपि विकल्पः स्यादिति भावः। विधिमुक्त्वा निषेधमाह। [नेटीति।] [उक्तन्यायमूलकमेवेति।] प्रथमोपस्थितबाधनेन चारितार्थ्ये

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥

अत एव संख्याव्ययादेरिति ङीब्ग्रहणं चरितार्थम्। तद्ध्यनन्तरस्य ङीषो विध्यभावाय। न क्तिचीति सूत्रे दीर्घग्रहणञ्च चरितार्थम्। तद्ध्यनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय॥ मध्येऽपवादन्यायापेक्षया ऽनन्तरस्येतिन्यायः प्रबल इत्यष्टाभ्य इति सूत्रे कैयटः॥

---

पश्चादुपस्थितव्यवहितबाधे मानाभाव इत्येतत्प्रत्यासत्तिन्यायमूलकमेवेत्यर्थः। एवेन ज्ञापकमूलकत्वनिरासः। न्यायमूलक एवात्रार्थे मानमप्याह। [अत एवेति।] उक्तन्यायाङ्गीकारादेवेत्यर्थः। विध्यंशे मानं प्रदर्श्य निषेधांशे तदाह। [दीर्घग्रहणमिति।] अन्यथा यन्तिः रन्तिरित्यदावनन्तरस्यानुनासिक लोपस्येव व्यवहितस्यानुनासिकस्य क्झलोरिति दीर्घस्यापि निषेधे सिद्धे तदनर्थकं स्यादिति भावः। ननु नेटीति निषेधविषये मध्येऽपवादन्यायेन सिचि वृद्धिहलन्तलक्षणवृध्योर्द्वयोरपि निषेधः कुतो नेत्यत आह। [न्यायापेक्षयेति।] [सूत्रे कैयट इति।] तत्रह्यष्टपुत्र इत्यादावुत्तरपदपरत्वावस्थायां सामासिक लुग्बाधकतया प्रसक्तस्यौशादेशस्य वारणाय प्रवृत्तस्य "औशधावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते। अपवादो यस्य विषये यो वा तस्मादनन्तरः।" इति श्लोक वार्तिकस्य व्याख्यावसरे यो वा तस्मादनन्तर इति प्रतीकमुपादाय कैयटेन "औशः षड्भ्यो लुगित्ययमनन्तरः। द्वितीयाध्यायविहितस्तु व्यवहितः। ननु मध्येऽपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाधः प्राप्नोति। नैष दोषः। यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः। इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुङ्महता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यत" इत्युक्तम्। अत्र कैयटेन न्यायद्वयमध्येऽनन्तरस्येति न्यायस्य प्रवृत्तौ युक्तिः प्रदर्शिता। तेन च तस्य प्राबल्यं तेनोक्तमित्याशयः। तत्रैवाथवेत्यादिना "सत्यामसत्यां चोप-

प्रत्यासत्तिमूलकोऽयम्। लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञासामर्थ्येन वा बाध्यते ऽयं न्यायः। यथा टिड्ढेति सूत्रेण डापा व्यवहितस्यापि ङीपो विाधः। न षाडित्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इयञ्च शि सर्वनामस्थानमित्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः॥ ६२॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशो ऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह॥

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः॥ ६३॥

---

लब्धावनन्तरस्यैव बाधेन भाव्यमिति च पक्षान्तरमुक्तम्। तदाह। [प्रत्यासत्तीति।] नन्वेवमुभयोरपि न्याययोः प्रत्यासत्तिमूलकत्वेन समत्वात्कथं व्यवस्थेत्यत आह। [पक्षान्तरमिति।] एतदुत्तरं कैयट आहेति शेषः। वदव्रजहलन्तस्याच इति सूत्रेऽपि भाष्ये स्पष्टमेतत्। [अयं न्याय इति।] अनन्तरस्येति न्याय इत्यर्थः। [भाष्ये स्पष्टेति।] तत्रह्यनपुंसकस्येति प्रसज्यप्रतिषेध इति शिसर्वनामस्थानमित्यस्यापि प्रतिषेधस्स्यादित्याशङ्क्यानेन समाहितमिति द्रष्टव्यम्। ६२

[अन्तरङ्गत्वादिति।] द्वित्वादितः प्रागेवान्तादेशस्य प्राप्त्या पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वादित्यर्थः। [अदादेशो न स्यादिति।] अदभ्यस्तादित्यनेन विहितोऽदादेशो झस्याभावान्न स्यादित्यर्थः। [तद्वैयर्थ्येति।] अदभ्यस्तादिति सूत्रवैयर्थ्यापत्तिरित्यर्थः। इदं

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति। अन्यथा विकल्पापत्तिरित्यर्थः। अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। अपवादो यद्यन्यत्र चरितार्थ इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात्॥ ६३ ॥

---

लक्षणैकचक्षुष्काभिप्रायकमित्याह। [लक्षणैकचक्षुष्क इति।] लक्षणेनैव यस्य लक्ष्यपरिज्ञानं सोऽसावस्मदादिर्लक्षणैकचक्षुष्कः। [अपवादविषयं पर्यालोच्येति।] अपवादशास्त्रस्य विषयविशेषं पर्यालोच्येत्यर्थः। अयं भावः। प्रथममुत्सर्गशास्त्रीयस्सामान्यवाक्यार्थबोधः। पदपदार्थोपस्थितौ वाक्यार्थबोधस्यापरिहार्यत्वात्। पश्चाद्बाधकसंभावनायां तदाकाङ्क्षया बुध्यारूढस्यापवादशास्त्रस्य विषयविशेषपरिज्ञानोपयोगी विशेषवाक्यार्थबोधः। ततस्तद्विषयपरिहारेणोत्सर्गशास्त्रीयो लक्ष्यसंस्कारको महावाक्यार्थबोधः। एवञ्चेको यणचीत्यादेरसवर्णाजव्यवहितपूर्वत्वविशिष्टस्येको यणित्यादिरर्थ इति सवर्णाज्घटिते श्रीश इत्यादावुत्सर्ग शास्त्रीयलक्षणोपप्लवाभावादपवादभूतेन सवर्णदीर्घादिना न विकल्प इति बोध्यम्। [तद्विषयत्वाभावनिश्चये इति।] उत्सर्गस्यापवादशास्त्रविषयत्वाभावे निश्चिते इत्यर्थः। [तत्तल्लक्ष्यमिति।] अपवादाविषयं तत्तल्लक्ष्यमित्यर्थः। ननु जक्षतीत्यादौ समकालप्राप्तान्तादेशबाधनेन चरितार्थस्यादादेशस्य दधतीत्यादौ पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गेणान्तादेशेनापवादो यद्यन्यत्रेति न्यायात्कुतो न बाध इत्यत आह। [न्यायस्य त्विति।] [चारितार्थ्याभावादिति।] जक्षतीत्यादावप्यभ्यस्तसंज्ञाप्रवृत्त्युत्तरमेवादादेशस्य प्राप्त्या अन्तादेशस्य चायन्नादिषूपदेशिवद्वचनेनाभ्यस्तसंज्ञाप्रवृत्तेः प्रागेव प्रवृत्त्या च न तयोस्समकालप्राप्तिरिति सर्वथा अचरितार्थ एवादादेश इति न चरितार्थविषयस्य तन्न्यायस्यात्र प्रवृत्तिरिति भावः। ६३

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः तदाह ॥

प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते॥६४॥

तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः। प्रकल्प्येत्यस्य परित्यज्येत्यर्थः॥ अत एव प्रातिपदिकार्थसूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो

---

[लक्ष्यैकचक्षुष्क इति।] पाणिन्यादिवद्योगबलेन लक्षणानधीनलक्ष्यपरिज्ञानवानित्यर्थः। ननु तादृशस्य योगिनः कुतः शास्त्रापेक्षेत्यत आह। [तस्यापीति।] लक्ष्यैकचक्षुष्कस्यापीत्यर्थः। [धर्मोत्पत्तेरिति।] एकश्शब्दस्सम्यग्ज्ञातः शास्त्रान्वितस्सुप्रयुक्त स्स्वर्गे लोके कामधुग्भवतीति श्रुतिरत्र मानम्। अवयवार्थज्ञानपूर्वकं ज्ञातोऽर्थःशास्त्रेण संस्कृतः शिक्षोक्तविधिना प्रयुक्त एकोऽपि शब्दः स्वर्गे कामितफलप्रदो भवतीति तदर्थः। कार्यमात्रस्य योगिभिर्धर्मबुध्यैवाचरणाच्छब्दप्रयोगानुष्ठानस्यापि धर्मार्थत्वान्यथानुपपत्त्या तेषामपि शास्त्रप्रक्रियास्मरणमावश्यकमित्याशयः। प्रकल्प्येति वचने ल्यपैवानन्तर्यस्य लाभे तत इत्यस्य वैयर्थ्यमत आह। [तत इत्यस्येति।] तच्छब्दस्य प्रक्रान्तार्थपरामर्शकत्वादीदृशार्थलाभः। अभिनिविशत इत्यस्य प्रवर्तत इत्यर्थः। एतावानत्र विशेषः। लक्षणैकचक्षुष्कः सर्वत्र प्राप्तस्योत्सर्गस्य बुध्यारूढेनापवादेन विषयविशेषान्निवृत्तिं संपाद्यापवादाविषये तेन लक्ष्यं संस्करोति। लक्ष्यैकचक्षुष्कस्त्वपवादशास्त्रपर्यालोचनमन्तराप्यपवादविषयं परित्यज्य तदविषयं तत्तल्लक्ष्यमुत्सर्गेण संस्करोतीति। [अतएवेति।] न्यायद्वयस्य फलत ऐक्यादेवेत्यर्थः। [इदं द्वयमिति।] पूर्वंहीति प्रकल्प्येति च न्यायद्वयमित्यर्थः।

# भवत्यपवादं तावत्प्रतीक्षत इत्यर्थकमुक्तम् ॥ ६४ ॥

---

[तावदिति।] आदावित्यर्थः। [प्रतीक्षत इति।] अपवादविषयत्वं कथं चिद्ज्ञात्वा तत्र स्वबुद्धिं निवर्त्य ततो ऽन्यत्र स भवतीति तात्पर्यम्। [इत्यर्थकमिति।] वाक्यान्तरमिति शेषः। तत्र हि "न तावदत्र कदाचित्तिङादेशो भवति। अपवादौ तावच्छतृशानचौ प्रतीक्षत" इत्युक्तम्। यदि द्वयोर्न्याययोर्भिन्नार्थत्वं स्यात्तदा उपसंहारद्वयं कुर्यात्। तस्माद्द्वयोः फलत ऐक्यमेवेति भावः। यत्तु हरिशास्त्रिणः "लक्ष्यैकचक्षुष्कपरतया शास्त्रव्यवस्थापनमयुक्तम्। तेषां शास्त्रानुपयोगात्। नहि लक्ष्यैकचक्षुष्कानधिकृत्य शास्त्रस्य प्रवृत्तिः। शब्दतत्त्वविदां तेषां जिज्ञासानुपपत्तेः। शास्त्रप्रक्रियास्मरणपूर्वके साधुशब्दप्रयोगे धर्माभ्युच्चय इत्यप्ययुक्तम्। साधुशब्दप्रयोगे प्रयोक्तॄणामभ्युदयः साधुत्वज्ञानपूर्वके तत्प्रयोगे महानभ्युदय इत्येव पस्पशाह्निकान्तस्थभाष्यमर्यादया लाभात्। एतद्भाष्यबलादेकश्शब्द इत्यादिश्रुतौ शास्त्रान्वित इत्यस्यापि साधुत्वज्ञानविषय इत्येवार्थो न्याय्य इत्यादि" वदन्ति। तदयुक्तम्। शब्दतत्त्वविदां लक्ष्यैकचक्षुष्काणां साधुत्वज्ञानाय शास्त्रस्यानावश्यकत्वेऽप्यभ्युदयसंपादनाय तदावश्यकत्वात्। साधुशब्दप्रयोगेऽभ्युदयः। साधुत्वज्ञानपूर्वके तत्प्रयोगे महानभ्युदय इति विशेषस्य पस्पशाह्निकान्तस्थभाष्यतः कथं चिदप्यलाभेन तादृशविशेषकल्पनाया नागेशग्रन्थखण्डनाग्रहमूलकत्वात्। तत्रापि भाष्ये किं साधुशब्दज्ञाने धर्मः, उत तत्प्रयोग इति विकल्प्याद्य पक्षे यथा साधुशब्दज्ञानाद्धर्मस्तथा अपशब्दज्ञानादधर्मोपि प्राप्नोतीति दूषणं द्वितीयपक्षेऽनधीतशब्दशास्त्रैरपि सम्यक्साधुशब्दप्रयोगस्य कृतत्वेन शास्त्रस्य वैयर्थ्यापत्तिरिति च, दूषणमभिधाय "एवं तर्हि नापि ज्ञान एव धर्मो नापि प्रयोग एव। किं तर्हि शास्त्रपूर्वकं यश्शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते। तत्तुल्यं वेदशब्देने" त्युक्तम्। वेदप्रतिपाद्यानामग्निष्टोमादिकर्मणां यथा ज्ञात्वाऽनुष्ठानमभ्युदयहेतुस्तथा शब्दानामपि प्रकृत्यादिज्ञानपूर्वकः प्रयोगोऽभ्युदयहेतुरिति, तदर्थं कैयट आह। उद्योतकारोऽपि शास्त्रपूर्वक इत्यस्य व्याकरणाध्ययनपूर्वक इत्यर्थमभिधाय "तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोग एव धर्म इति प्रामाणिका" इत्याह। उपदर्शितभाष्यादिग्रंथैस्तदुक्तार्थविशेषः कथंचिदप्यस्पृष्ट इति स्पष्टमेव तद्विदाम्। यदि तु तत्तुल्यं वेदशब्देनेति दृष्टान्तेन यथा

एतन्मूलकमेव नवीनाः पठन्ति॥

उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्त-मप्युत्सर्गं बाधत इति॥ ६५॥

यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीक-मुपादाय यथा न संप्रसारण इति परस्य यणः पूर्वं संप्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तं तत्तु तत इत्याद्यक्षरार्थाननुगुणम्। यत्त्वपवाद-वाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति

---

अधुनातनैरविद्वद्भिरनुष्ठीयमानानामग्निष्टोमादिकर्मणां यत्किंचिन्निदभ्युदयहेतुत्वं तथाऽज्ञानतः कृतस्य साधुशब्दप्रयोगस्यापि यत्किञ्चिदभ्युदयहेतुत्वमित्युच्यते तदा फलाभिक्यसम्पादनायापि वा लक्ष्यैकचक्षुष्काणां शास्त्रमावश्यकमित्यवधेयम्। ६४

[एतन्मूलकमेवेति।] उक्तन्यायद्वयफलितमूलकमेवेत्यर्थः। एवेन मूलान्तरनिरासः। नवीनाः=दीक्षितादयः। दधतीत्यस्य साधनायेति शेषः। द्वितीयवचनस्यान्यकल्पितमर्थं निरस्यति। [यत्त्विति।] एतन्मते प्रकल्प्येति वचनस्यापवादशास्त्रस्य विषयकल्पनां कृत्वा तथा उत्सर्गः प्रवर्तते, यथा तत्प्रवृत्त्युत्तरमपवादस्य प्रवृत्तिस्स्यादित्यर्थः। [तत्त्विति।] कैयटोक्तमित्यर्थः। [अक्षरार्थाननुगुणमिति।] पञ्चम्यन्ताद्विहितस्य तसिलः प्रकारार्थकत्वकथनमुत्सर्गशब्दस्य विधिरित्यर्थकथनं चाक्षरस्वारस्याननुगुणमित्यर्थः। किंच न संप्रसारण इति ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणमित्यर्थस्य भगवता प्रतिपादितत्वेनास्येदृशार्थकत्वमयुक्तम्। तथासति न्यायेनैव सिद्धे ज्ञापकत्वकथनस्यानावश्यकत्वात्। अस्यान्योक्तमप्यर्थान्तरं निरस्यति। [यत्त्विति।] [नोत्सर्गवाक्यार्थ इति।] सामान्योऽपीत्यर्थः। [तदर्थ इति।] प्रकल्प्येतस्यार्थ इत्यर्थः।

तन्न। अभिनिविशते ऽपवादविषयमित्यादिपदस्वारस्य-भङ्गापत्तेः। पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च। यत्र त्वपवादो निषिद्धस्तत्रापवादविषये ऽप्युत्सर्गः प्रवर्त्तत एव। यथा वृक्षावित्यत्र नादिचीति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभा-वाद् वृद्धिः प्रवर्त्तते। अत एव तौ सादित्यादि संगच्छते। अत एव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रे ऽनाश्रयणम्। ध्वनितं चेदमिको गुणेति सूत्रे

---

न केवलमत्रार्येऽक्षरस्वारस्यभङ्ग एव। किन्त्वीदृशार्थस्य संभव एव नेत्याह। [पदजन्येति।] नन्वेवं वृक्षावित्यादावपवादभूतपूर्वसवर्णदीर्घविषयतायास्सत्त्वेन तद्विषये वृद्धिरेचीत्यस्याः प्रवृत्तिस्स्यादत आह [यत्र त्विति।] [अप्रवर्तमानस्येति।] पूर्वसवर्णदीर्घस्येति शेषः। [वृद्धिःप्रवर्तत इति।] अत्रापवाद-विषयता फलोपधानात्मिका विवक्षिता नतु स्वरूपसतीति भावः। अत्र मानमाह। [अत एवेति।] अपवादविषयतायाः फलोपहिताया एव विवक्षणादेवेत्यर्थः। [इत्यादीति।] इत्यादिनिर्देश इत्यर्थः। ननूक्तरीत्यैतन्यायाविषयत्वेऽपि भ्रष्टावसर इति न्यायस्य जागरूकतया कथं तत्र वृद्धिप्रवृत्तिरत आह। [अत एव निर्देशादिति।] तौ सदिति निर्देशादित्यर्थः। [न्यायस्येति।] भ्रष्टावसरो न प्रवर्तत इति न्यायस्येत्यर्थः। उक्तार्थे सूत्रसंमतिं प्रदर्श्य भाष्यसंमतिमपि दर्शयति। [ध्वनितं चेदमिति।] उक्तन्यायस्यात्रानाश्रयणमित्यर्थः। इको गुणेति सूत्रे इत्यस्य भाष्यप्रदीपोद्योत इत्यनेनान्वयः। भाष्ये इत्यस्य, नान्तःपादमिति सूत्रे इत्यादिः। तथा च नान्तःपादमिति सूत्रे भाष्ये इदं ध्वनितमितीको गुणेति सूत्रे भाष्यप्रदीपोद्योते निरूपितमिति वाक्यार्थः। तत्र हि भाष्ये, सुजाते, अश्वसूनृत इत्यादौ पररूपनिषेधोत्तरमुत्सर्गस्यायादेशस्य प्रसक्तिमुद्भाव्यैङो यद्यत्प्राप्तं तत्सर्वं न भवतीति बाध्यसामान्य

भाष्य इति भाष्यप्रदीपोद्योते निरूपितम्॥ अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति। हते देवदत्त उन्मज्जनं न देवदत्तहननोद्यतस्य हनने तु भवत्येवोन्मज्जनम्। प्रकृते ऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किन्तु हननोद्यमसज्जातीयं प्रसक्तिमात्रं प्रसक्तस्यैव निषेधात्। प्रतिपदविधित्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम्। स्पष्टं चेदं शेषाद्विभाषेति सूत्रे भाष्ये। तत्र हि शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्या-

---

चिन्तामूलकेन व्याख्यानेन समाहितम्। प्रकृतन्यायस्यात्राश्रयणे त्वनेनैव न्यायेन सिद्धौ, किं तथाविधेन व्याख्यानेनेति तेनेदं ध्वनितमिति भावः। नन्वेवमपि देवदत्तहन्तृहतन्यायेन वृक्षावित्यत्र वृद्धिर्न स्यादत आह। [देवदत्तस्येति।] "परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपात" इत्यादिप्रत्ययोत्तरपदयोश्चेति सूत्रस्थकैयटेन, प्रतिपदविधित्वमपि परत्वादिवत्पृथग्भूतं बाधबीजमिति भ्रमनिरासायाह। [प्रतिपदविधित्वमपीति।] [निरवकाशत्वे सत्येवेति।] तदप्राप्तियोग्येऽचारितार्थ्यरूपनिरवकाशत्वे सत्येवेत्यर्थः। एवेन स्वातन्त्र्येण तस्य बाधप्रयोजकत्वनिरासः। तथाच प्रतिपदविधेःकृते चारितार्थ्ये तक्रन्यायमूलकेन येन नेति न्यायेन, सर्वथा अनवकाशत्वे माठरकौण्डिन्यन्यायेन च बाधकत्वमित्युक्तेष्वेव बाधबीजेषु तस्यान्तर्भावो न तु पृथग्भूतं बाधप्रयोजकत्वं, कैयटे प्रतिपदविधिशब्दश्चान्ततः परनित्यान्तरङ्गेत्यादिपरिभाषापठितापवादपदसमानार्थक एवेत्याशयः। अत्र मानमाह। [स्पष्टं चेदमिति।] ननु शेषग्रहणाभावे उक्तसमासान्तेभ्योऽपि कबापत्तिरत आह। [ये प्रतिपदमिति।] [बाधका भविष्यन्तीति।] तथा च तदन्यविषय एव शेषग्रहणाभावेऽपि कपः

नवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कन्नभावे सावकाशा इत्युक्तम्। क्वचिदनवकाशत्वाभावे ऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि, परनित्यान्तरङ्गप्रतिपदविधियो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति प्रत्ययोत्तरपदयोश्चेति सूत्रे कैयटेन पाठात्। अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषाद्धुल्ङ्याादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वादिति लोपेन समाहितम्॥ ६५॥

---

प्रवृत्त्या तदनर्थकमिति भावः। [इत्युक्तमिति।] इति समाहितमित्यर्थः। प्रतिपदविधित्वस्य स्वातन्त्र्येण बाधप्रयोजकत्वे तदसङ्गतिरिति भावः। [क्वचित्त्विति।] स्वाम्पीत्यादावित्यर्थः। तत्रह्यप्तृन्निति दीर्घस्य नुमागमाप्रातियोग्ये आप इत्यादौ चारितार्थ्ये सत्यपि प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ ततो झलन्तलक्षणे नुमि तत्सिद्धिरित्याशयः। [विरोधिसन्निपात इति।] विरुद्धयोर्द्वयोर्द्वयो श्शास्त्रयोस्सन्निपाते एकलक्ष्ये प्रसक्तौ यत्पराद्यन्यतमं तद्भवति। तेषां=परनित्यादीनां मध्ये, मिथःप्रसङ्गे=परनित्ययो युगपत्प्रसङ्गे उपात्तक्रमेण यत्परं तद्बलवदिति तदर्थः। अत्रापि प्रतिपदविधित्वेन शीघ्रोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वमेव तस्य बलवत्त्वे बीजमिति तत्रापि तन्मात्रस्य न स्वातन्त्र्येण बाधप्रयोजकत्वमिति बोध्यम्। [अत एवेति।] प्रतिपदोक्तस्य कथंचिदपि पूर्वं प्रवृत्तेरेवेत्यर्थः। [समाहितमिति।] नव्यैरिति शेषः। ६५

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह ॥

अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात्। एवं च प्रकृते ऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादो ऽपि बाध्यते। पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वविषय इदम् ॥ यत्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदानबाध इति च्छ्वोरिति सूत्रे कैयट,

---

सर्वथा अन्तरङ्गादपवादस्य बलीयस्त्वे प्रसक्तस्यानिष्टस्य वारकत्वेनास्याः पूर्वापवादत्वात्तदेवात्रास्यास्संदर्भः। [अन्तरङ्गस्यापीति।] पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गस्यापीत्यर्थः। [अपवादेनेति।] सर्वथा निरवकाशत्वाद्बाधकेनेत्यर्थः। उत्सर्गापवादसम्बन्धिस्थानिनिमित्तयोरेकत्वे उत्सर्गबाधनेन चरितार्थ अपवादोऽपि तयोर्भिन्नस्थानि निमित्तस्थलेऽन्तरङ्गेणोत्सर्गेण बाध्यते इति परिभाषार्थः। तत्र हेतुमाह। [बाधकत्वबीजस्याभावादिति।] अन्तरङ्गादिबाधकत्वप्रयोजकस्य निरवकाशत्वस्याभावादित्यर्थः। एकनिमित्तप्राप्तविध्यन्तरबाधनेन सावकाशोऽपवादोऽन्तरङ्गं बाधितुं न शक्नोतीति भावः। [समानाश्रये इति।] श्रीशः, दण्डाग्रमित्यादावित्यर्थः। ६६

स्तन्न। अपवादो नुम्दीर्घत्वस्येति दीर्घो ऽकित इति सूत्रभाष्यविरोधात् ॥ ६६ ॥

नन्वजीगणदित्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिःशेषं बाधेत तत्राह ॥

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥

दीर्घो ऽकित इत्यकिद्ग्रहणमस्या ज्ञापकम्। अन्यथा यंयम्यत इत्यत्र नुकि कृते ऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥

---

अपवादप्रसंगेन पूर्वपरिभाषया विपरीतं बाध्यबाधकभावं प्रदर्श्यानेन क्वचित्तस्यैवाभावः प्रतिपाद्यत इत्यत्रास्याः सङ्गतिर्बोध्या। [निरवकाशत्वादिति।] अस्य सर्वथेत्यादिः। नाप्राप्ते हलादिश्शेषे ईत्वस्यारम्भात्। अलोन्त्यपरिभाषैकवाक्यतयेच गण इत्यस्य गण्रूपाभ्यासान्त्यस्येत्वमित्यर्थाद्धलादिश्शेषोत्तरं गण्रूपाभ्यासस्याभावेन तदप्राप्त्या च सर्वथा निरवकाशत्वादीत्वं हलादिश्शेषं बाधेतेति भावः। एवञ्च णकारस्येत्वे, आद्गुणे, तस्याभ्यासह्रस्वे, ऽग्लोपित्वादीर्घो लघोरित्यस्याप्राप्तावजिगणदिति स्यादिति बोध्यम्। एतत्परिभाषाङ्गीकारे तु क्रमेण तेषां प्रवृत्त्या पूर्वं हलादिश्शेषे ततोऽकारस्येत्वे तत्सिद्धिरिति भावः। अत्र मानमाह। [अकिद्ग्रहणमिति।] ज्ञापकत्वमस्योपपादयति। [अन्यथेति।] एतत्परिभाषाया अभावे इत्यर्थः। [नुकि कृते इति।] हलादिश्शेषोत्तरं नुग्दीर्घयोः प्राप्तौ तक्रन्यायेनापवादत्वाद्दीर्घं बाधित्वा नुकि कृते इत्यर्थः। [अनजन्तत्वाद्दीर्घाप्राप्ताविति।] दीर्घोऽकित इत्यत्र दीर्घपदश्रुत्या उपस्थितस्याच इत्यस्याधिकृतेनाभ्यासस्येत्यनेन सामानाधिकरण्येनान्वयस्य न्याय्यतयाऽजन्ताभ्यासस्य दीर्घ इत्यर्थान्नुकि कृतेऽजन्तत्वाभावाद्दीर्घस्याप्राप्तिरिति भावः। [तद्वैयर्थ्यमिति।] अकिद्ग्रहणवैयर्थ्यमित्यर्थः।

न च नुको दीर्घप्राप्तियोग्येऽचारितार्थ्येऽप्यत इति तपरकरणाद्दीर्घोत्तरं चारितार्थ्याभावेन कथं तन्न्यायेन नुको दीर्घबाधकत्वमिति वाच्यम्। दीर्घोत्तरं चारितार्थ्याभावेऽपि तत्प्रवृत्तिसमकालं तत्प्रवृत्तौ बाधकाभावेन तस्य सर्वथा निरवकाशत्वाभावेन तेनैव न्यायेन तस्य दीर्घबाधकताया वक्तव्यत्वात्। किञ्च, अभ्यासे सर्वत्र ह्रस्वस्यैव सत्त्वेन दीर्घव्यावृत्त्यर्थं कृतस्य तपरकरणस्य व्यर्थतया सामर्थ्यात्तस्य बाभाम्यत इत्यादावौपदेशिकदीर्घव्यावृत्तेरेव फलत्वेन वक्तव्यतया प्रकृते दीर्घोत्तरमपि तत्प्रवृत्तेस्सुवचतया तदपवादत्वं सुवचमिति बोध्यम्। यद्यपि तक्रन्यायेन बाधकत्वस्थलेऽपवादप्रवृत्त्युत्तरमुत्सर्गाप्रवृत्तिर्न्यायसिद्धेति तथैव वक्तुं युक्तम्। तथापि सामानाधिकरण्येनान्वयस्य न्याय्यतया नुगुत्तरं दीर्घस्य प्राप्तिरेव नेति वक्तुमनजन्तत्वादित्युक्तिरिति बोध्यम्। ज्ञापितायां त्वस्यां परिभाषायामभ्यासविकाराणामसति बाधके परस्परविरोधपरिहारपूर्वकसमावेशस्यैव लाभात्सति संभवे तेषां क्वचिद्युगपदेव प्रवृत्तिः, क्वचित्क्रमेण प्रवृत्तिः, क्वचिद्बाध्यस्य पूर्वं प्रवृत्तिः, क्वचिद्बाधकत्वेनाभिमतस्यैव प्रथमं प्रवृत्तिरिति व्यवस्थाया लक्ष्यानुरोधेन स्वीकर्तव्यतया प्रकृतेऽकिद्ग्रहणसार्थक्यान्यथानुपपत्त्या प्रथमं बाधकस्य नुक एव प्रवृत्त्या तदुत्तरं प्राप्तदीर्घवारणायाकिद्ग्रहणं चरितार्थमित्याशयः। नचैवमपि नुगुत्तरमनजन्तत्वाद्दीर्घाप्राप्त्या न तस्य स्वांशे चारितार्थ्यमिति वाच्यम्। यावता विनेति न्यायेनाभ्यासविकारविधौ वैयधिकरण्यान्वयस्यापि ज्ञापनेनाकितोऽभ्यासस्यावयवो योऽच् तस्य दीर्घ इत्यर्थान्नुगुत्तरं दीर्घस्य प्राप्ततया तद्वारणाय तदावश्यकत्वात्। अतएव चच्छदतुः चच्छृदतुः, चिच्छादयिषति चेच्छिद्यत इत्यादौ तुगुत्तरमभ्यासह्रस्वत्वात्वेत्वगुणानां प्रवृत्तिः। नचैवमावश्यकेन वैयधिकरण्यान्वयज्ञापनेनैवाकिद्ग्रहणस्य सार्थक्यसंभवात्कथं परिभाषाज्ञापनमिति वाच्यम्। तज्ज्ञापनेऽप्येतत्परिभाषाया अभावे तक्रन्यायेन नुको दीर्घबाधकतया नुगुत्तरं दीर्घाप्रवृत्तेर्न्यायसिद्धत्वेन तदर्थमकिद्ग्रहणस्यानावश्यकत्वेन तद्वैयर्थ्यस्य तदवस्थतया तेन तज्ज्ञापनासंभवात्। यद्वा ज्ञापनोत्तरमभ्यासविकाराणां सति सम्भवे युगपत्प्रवृत्तेरन्यथाश्रुतक्रमानुरोधेन प्रवृत्तेर्वा वक्तव्यतया नुक्प्रवृत्तिकाले तत्पूर्वं वा प्राप्तदीर्घवारणायाकिद्ग्रहणं चरितार्थमित्याशयः। न च तस्यामवस्थायामभ्यासस्याकित एव सत्त्वात्कृतेऽप्यकिद्ग्रहणे कथं दीर्घव्यावृत्तिरिति न तस्य स्वांशे चारितार्थ्यमिति वाच्यम्। अकित इत्यस्य सामर्थ्यात्किदुद्देश्यघटितभिन्नस्येत्यर्थेन नुगादेः पूर्वमनन्तरं वा अभ्यासस्य नुगुद्देश्यभूतानुनासिकान्ताङ्गावयवाभ्याससंबन्ध्यकारघटितत्वेन तद्भिन्नत्वाभावान्नुकः पूर्वं तत्समकालं वा प्राप्तदीर्घव्यावृत्तेस्तस्य सुवचतया स्वांशे चारितार्थ्यस्याव्याहतत्वात्। एवं चोक्तरीत्या आवश्यकेन परिभाषाज्ञापनेनैवाकिद्ग्रहणस्य सार्थकतया न तेनाभ्यासविकारविधौ

वैयधिकरण्यान्वयज्ञापनसंभवः। नचैवं चच्छदतुः, चिच्छादयिषतीत्यादि प्रागुक्तस्थलेषु तुगुत्तरं ह्रस्वादीनामसिध्द्यापत्तिरिति वाच्यम्। परत्वाध्द्रस्वादीनामेव तत्र प्रथमं प्रवृत्त्या अदोषात्। न च तुगन्तरङ्ग इति वाच्यम्। एवमपि वार्णादाङ्गं बलीय इति न्यायेन तेषामेव प्रथमं प्रवृत्तेर्न्याय्यत्वात्। न चाङ्गवार्णयो स्समानस्थानिकत्व एव तत्प्रवृत्त्या आगमविषये तदप्रवृत्तिरिति-वाच्यम्। तयो स्समानकार्यित्व एव प्रवृत्तिरिति ग्रन्थकृता प्रागुपदर्शितत्वेनागमविषयेऽपि तत्प्रवृत्तेस्सुवचत्वात्। निरूपितं चैतद्वार्णपरिभाषानिरूपणावसरे। नचानया परिभाषया अभ्यासविकारेषु बाध्यबाधकभावाभावबोधने श्रुतक्रमानुरोधेन पूर्वं तुकि ह्रस्वाद्यनापत्तिरिति वाच्यम्। द्वयोरभ्यासत्वावच्छिन्नोद्देश्यताकत्व एवैतत्प्रवृत्त्या प्रकृते एतदप्रवृत्तेः। अत एवोख्वतुरित्यादावभ्यासह्रस्वात्पूर्वं न सवर्णदीर्घः। अन्यथा पूर्वं दीर्घे ततो ह्रस्वे तदसिद्धिः स्पष्टैव। यद्यपि यङन्तशेखरेऽकिद्ग्रहणस्योभयज्ञापकत्वमुक्तम्। तथापि तत्र वैयधिकरण्यान्वयज्ञापन "मकिद्वचनमन्यत्र विदन्तस्यालोन्त्यनिवृत्यर्थ" मित्यकिद्ग्रहणस्य प्रागुक्तलक्ष्यसिद्धयेऽभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापकत्वप्रतिपादनपरदीर्घोऽकित इति सूत्रस्थवार्तिकानुरोधेन। अत एव तत्र सूत्रेऽकिद्ग्रहणस्य प्रागुक्तचच्छदतुरित्यादिलक्ष्यसिद्धये वैयधिकरण्यान्वयज्ञापकत्वमुक्त्वा तेषु तुकः पूर्वं परत्वाध्द्रस्वादीनामेव प्रवृत्त्या इष्टसिद्धे नैतानि ज्ञापनफलानीत्याशयेन "विप्रतिषेधात्सिद्ध" मिति प्रतिपाद्य, पुनस्तुकोऽन्तरङ्गत्वाद्विप्रतिषेधो न युक्त इत्याशयेन "तदन्ताग्रहणाद्वा" इति वार्तिककृतोक्तम्। तद्व्याख्यानावसरे च भगवता विशेषणविशेष्यभावे कामचारादभ्यासस्येत्यजादीनां विशेषणमित्याशयेन "अथवा नैवं विज्ञायते अभ्यासस्याजन्तस्य, ऋकारान्तस्याकारान्तस्येगन्तस्येति। कथं तर्हि, अभ्यासे योऽच् अभ्यासे यो ऋकारः अभ्यासे योऽकारः, अभ्यासे य इगिति। एवंच कृत्वा यंयम्यत इत्यादौ दीर्घत्वं प्राप्नोतीति दीर्घनिषेधायाकिद्ग्रहणं न ज्ञापनायेत्युक्त्वा "एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति, अपवादो नुक्दीर्घत्वस्ये" ति, एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति। तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा अभ्यासविकारेषु बाधका न बाधन्त, इत्युक्तम्। एवं चैतद्भाष्यग्रन्थसन्दर्भेण ज्ञापकाद्विशेषणविशेष्यभावे कामचाराद्वा अभ्यासविकारविधौ वैयधिकरण्यान्वयाङ्गीकारेऽपि तक्रन्यायेन नुको दीर्घबाधकतया यंयम्यत इत्यादौ नुगुत्तरं दीर्घाप्राप्त्या अकिद्ग्रहणस्य व्यर्थतया तेन परिभाषाज्ञापनमावश्यकमिति, परिभाषाज्ञापनेतूक्तरीत्याऽकिद्ग्रहणस्य सार्थकतया न वैयधिकरण्यान्वयज्ञापनसंभवः। चच्छदतुरित्यादौ तूक्तरीत्या वार्णपरिभाषया सिध्यतीति ध्वनितमिति

इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका। तेनाचीकरत् मीमांसत इत्यादि सिद्धम्। आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति। अन्त्ये मान्बधेति दीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः॥ यत्तु यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यत एकेति सूत्रे

---

बोध्यम्। न चौहाक्त्याग इत्यस्माद्धातो यङ्लुगन्ताल्लुटि जाहेतीत्यादौ दीर्घवारणायाकित इत्यस्य सार्थकतया कथं तस्य परिभाषाज्ञापकत्वमिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येन हाधातोर्यङ्लुकोऽनभिधानात्। अन्यथा द्विःप्रयोगत्वाद्द्विर्वचनस्याभ्यासस्य कित्त्वमेवेत्यकिद्ग्रहणस्य सार्थकतया तदसङ्गतिः। यद्वा न विद्यते किद्यस्मिन्निति बहुव्रीह्याश्रयणात्तत्र चानन्तरस्येति न्यायेन प्रतिपदोक्तपरिभाषया चाभ्यासनिमित्तककित एव ग्रहणादभिधानेऽपि न तत्सार्थकमिति न ज्ञापकत्वानुपपत्तिः। अत एव चाच्छायत इत्यादौ माधवाद्युदाहृतो दीर्घस्संगच्छत इति बोध्यम्। स्पष्टं चेदमुद्योते। अभ्यासत्वावच्छिन्नोद्देश्यताककार्येषु परस्परं न बाध्यबाधकभावः। किन्तु तेषां परस्परविरोधपरिहारपूर्वकस्समावेश इति परिभाषार्थः। अस्यां परिभाषायां बाध्यबाधकभावपदं न प्रक्रान्तापवादत्वप्रयुक्तबाध्यबाधकभावपरमेव किन्त्वन्यपरमपीत्याशयेनाह। [इयं चेति।] [परान्तरङ्गादीति।] आदिना नित्यपरिग्रहः। अत एवाभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इति नोक्तमिति बोध्यम्। [इत्यादीति।] आदिना अजीगणदित्यादिसङ्ग्रहः। आद्ये=अचीकरदित्यत्र। [सन्वद्भावस्येति।] तत्र सन्वद्भावस्यावकाशः। अचिक्षणदिति। दीर्घस्य त्वचीखिददिति। अन्त्ये=मीमांसत इत्यत्र। [अन्तरङ्गत्वादिति।] सन्प्रत्ययसन्नियोगेन दीर्घस्य विधानात्प्रत्ययानपेक्षत्वेन तदपेक्षेत्वापेक्षया दीर्घस्य तत्त्वमिति भावः। ननु सन्प्रत्ययकालेऽभ्यासाभावेन कथं दीर्घस्यान्तरङ्गत्वमिति चेन्न। अभ्यासस्यावश्यकत्वेन तावत्पर्यन्तं दीर्घस्यावस्थानेऽपीत्वपर्यन्तमवस्थितौ कारणाभावेन तदपेक्षयाऽन्तरङ्गत्वमिति भावः। [बाधःप्राप्त इति।] तथा च दीर्घोत्तरमत इति तपरकरणादित्वानापत्तिरिति भावः। [एकैकेति।] उत्सर्गस्यापवादस्य चेत्यर्थः। [सर्वेषामिति।] अभ्यास-

कैयटस्तन्न। नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मानबधादीनां दीर्घे कृते इत्वाप्राप्त्या गुणो यङ्लुकोरिति सूत्रस्थभाष्योक्ततदुदाहरणासंगतेश्चेत्यन्यत्र विस्तरः ॥ ६७ ॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात्। न च तृन्नपवादोऽसरूपापवादस्य विकल्पेन बाधकत्वादत आह ॥

ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

ण्वुला सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधान-

---

विकाराणामित्यर्थः। यथा वर्वर्तीत्यादावुरदत्वे रुगादीनां तेषु च तस्येति भावः। [नुकि कृते दीर्घाप्राप्त्येति।] अनजन्तत्वान्न्याय्यत्वाद्वेति भावः। भाष्यान्तरविरोधमाह। [मानबधेति।] [तदुदाहरणेति।] अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इत्येतदुदाहरणेत्यर्थः। ६७

अपवादप्रसङ्गादाह। [नन्विति।] ण्वुलपि स्यादिति। कर्तृसामान्ये विहितस्य ण्वुलस्तच्छीलादिविशेषविशिष्टे कर्तरि प्रवृत्तौ बाधकाभावादिति भावः। [तृन्नपवाद इति।] आकेस्तच्छीलेत्यादिना अर्थविशेषे तस्य विधानादिति भावः। [विकल्पेन बाधकत्वादिति।] तथाच पक्षे ण्वुलपि स्यादिति भावः। अत्र मानमाह। [ण्वुला सिद्धे इति।] अनेकाचः कण्ड्वादियगन्तासूयेत्यञो ण्वुलि लित्स्वरेण पूर्वस्योदात्तत्वं वुञि ञ्नित्यादिरित्यादेरुदात्तत्वमिति विशेषस्य सत्त्वात्तत्र ण्वुला असिद्ध्या आह। [एकाज्भ्य इति।] कण्ड्वादियगन्तोक्तधातुभिन्नेभ्यो निन्दादिभ्य इत्यर्थः। [अस्या ज्ञापकमिति।] तद्धि तच्छीलादिषु कर्तृषु ण्वुलं

मत्र ज्ञापकं, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात्॥ ताच्छीलिकेष्विति विषयसप्तमी।

---

बाधित्वा प्राप्ततृन्बाधनार्थं कृतम्। एतदभावे तु वासरूपन्यायेन तृनो विकल्पेन ण्वुल्बाधकतया पक्षे निन्दक इत्यादि रूपसिद्धौ तदर्थं सदुक्तपरिभाषा ज्ञापकम्। ज्ञापिते त्वस्मिन् नित्यं ण्वुल् बाधकतया प्राप्ततृन्बाधनार्थं तेभ्यो वुञ्विधानं सार्थकमिति भावः। ननु ण्वुल्वुञो र्लित्त्वञित्त्व-प्रयुक्तस्वरविशेषस्य सत्त्वात्कथं ण्वुला सिद्धिरत आह। [तत्रेति।] एकाक्षु निन्दादिष्वित्यर्थः। [स्वरे विशेषाभावादिति।] निन्दक इत्यादौ ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे, लितीति प्रत्ययात्पूर्वस्योदात्तत्वे वा विशेषाभावादित्यर्थः। ननु यदि ताच्छीलिकेष्वित्यस्याधिकरणसप्तमीत्वं निर्धारणसप्तमीत्वं वाऽङ्गीकृत्योत्सर्गापवादयोरुभयोरपि ताच्छीलिकत्व एवास्याःप्रवृत्तिरित्युच्यते तदा ण्वुलोऽताच्छीलिकत्वेन ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावादुक्तज्ञापकत्वासङ्गतिः। तथा च निन्देत्यादिसूत्रे निन्दादीनां ग्रहणस्यानर्थक्यापत्तिश्च। यदित्वनुदात्तेतश्च हलादेरित्यनेन विहित युचैव पदन इत्यादिरूपसिद्धौ पुनर्युज्विधायके जुचंक्रम्येति सूत्रे कृतं पदिग्रहणमत्रार्थे ज्ञापकम्। तद्धि लषपदेत्युकञा युचो बाधे प्राप्ते तद्बाधनार्थं कृतम्। एतदभावे तु वाऽसरूपन्यायेन विकल्पेनोकञो युज्बाधकतया पक्षे पदन इत्यस्य सिद्धौ तद्वैयर्थ्यं स्पष्टमेवेत्युच्यते। तदोक्तार्थे ज्ञापनसंभवादलंकृञित्यादिसूत्रविहितेन ताच्छीलिकेनेष्णुचा ताच्छीलिकस्य तृनो नित्यं बाधादलं-कर्तेत्यादि तृन्नन्तप्रयोगवारणेऽप्यलंकरिष्णुरितिवदलङ्कारक इत्यपि स्यात्। ण्वुलोऽताच्छीलि-कत्वेनेष्णुचा विकल्पेन तद्बाधात्। एवं स्थेशभासेत्यादिसूत्रविहितेन ताच्छीलिकेन वरचा ताच्छीलिकस्य अनुदात्तेतश्चेति सूत्रविहितस्य युचो नित्यं बाधाद्भास्वर इतिवद्भासन इत्यस्याभावेऽपि ण्वुलि भासक इत्यप्युक्तरीत्या स्यात्। अथ यद्यपवादस्यैव ताच्छीलिकत्वेऽस्य प्रवृत्तिरित्युच्यते। तदा मूलोक्तज्ञापनसम्भवेऽपि जुचंक्रम्येति सूत्रे पदिग्रहणस्यानर्थक्यापत्तिः। किञ्च भास्वर इतिवद्भासन इत्यस्य अलङ्करिष्णुरितिवदलङ्कर्तेत्यादेश्चापत्तिरत्रोत्सर्गस्यापि ताच्छीलित्वादत आह। [विषयसप्तमीति।] विषयता चोत्सर्गापवादयोरुभयोरपि तत्त्वेनापवादस्यैव वा तत्त्वेन। उत्सर्गस्यैव तत्त्वेन तु न। असम्भवात्। तथाचापवादस्य ताच्छीलिकत्वं सर्वथा अपेक्षितमिति भावः।

तेन ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम्। नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमिकम्पीति रेणानुदात्तेतश्च हलादेरिति युचो बाधादिति चेत्। न। सूददीपदीक्षश्चेत्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात्॥ ६८॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ् इच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह॥

---

विषयसप्तमीत्वस्वीकारेण लब्धमाह। [तेनेति।] [ताच्छीलिकैरताच्छीलिकैश्चेति।] एतदुक्तं ताच्छीलिकानामपवादानामित्यर्थः। एवञ्च निन्दादिग्रहणस्यैव सामान्यापेक्षज्ञापकत्वाङ्गीकारेणोभयलाभःपदिग्रहणमपि सफलमिति बोध्यम्। [एवमिति।] द्वयोस्तत्त्वेऽपि परिभाषाप्रवृत्त्यङ्गीकारे इत्यर्थः। [कम्रेति।] कम्रेतिवत्कमनेत्याद्यसिद्धिरित्यर्थः। वैधर्म्ये दृष्टान्तः। आदिना, गन्ता, गामुकः, विकत्थी, विकत्थन, इत्यादिपरिग्रहः। आद्ये तृन्नुकञौ, अन्त्ये घिनुण्युचौ। [रेणेति।] विशेषविहितेनेत्यर्थः। [बाधादिति।] नित्यं बाधादित्यर्थः। [उक्तार्थस्येति।] उक्तपरिभाषार्थस्येत्यर्थः। [अनित्यत्वादिति।] अनित्यत्वज्ञापनादित्यर्थः। अन्यथा नमिकम्पीति सूत्रविहितेन ताच्छीलिकेन रेण युचो नित्यं बाधे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः। ६८

[एवमिति।] ताच्छीलिकेष्वेव वासरूपविधिनिषेधाङ्गीकारे इत्यर्थः। [घञिति।] भावसामान्ये विहितस्य घञो नपुंसकत्वविशिष्ट भावरूपार्थे विहितयोः क्तल्युटोर्विकल्पेन बाधात्पक्षे घञपि स्यादित्यर्थः। [लिङ्लोटाविति।] इच्छार्थेषु समानकर्तृकेषूपपदेषु, समानकर्तृकेषु तुमुनित्यनेन विहिततुमुना इच्छार्थेषु लिङ्लोटावित्यनेन विहितयोर्लिङ्लोटोर्विकल्पेन बाधात्पक्षे तावपि स्यातामित्यर्थः। [खल् प्राप्नोतीति।] आतो युजित्यनेन विहितस्य युचो विकल्पेन-

क्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६९ ॥

इदं च वासरूपविधेरनित्यत्वात्सिद्धम्। तदनित्यत्वे ज्ञापकं चार्हे कृत्यतृचश्चेति। तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः॥ वासरूपसूत्रे भाष्ये स्पष्टा॥ ६९ ॥

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति कृते आदेशे वैरूप्यादत आह॥

लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥

---

खल्बाधकत्वादिति भावः। अत्र मानं दर्शयति। [इदमिति।] उक्तपरिभाषावचनमित्यर्थः। [ज्ञापकं चेति।] चस्त्वर्थे। तत्रत्यं कृत्यतृचोर्ग्रहणमनित्यत्वे ज्ञापकम् न संपूर्णं सूत्रमित्याह। [तत्रहीति।] यदि तस्यानित्यत्वं न स्यात्तदा वासरूपविधिनैव पक्षे तयो स्सिद्धौ तदानर्थक्यं स्पष्टमेवेति भावः। यदि तु शकि लिङ्चेति सूत्रे कृत्यानुकर्षकेन चशब्देनैव लाघवात्तदनित्यत्वं ज्ञाप्यत इत्युच्यते, तदा, कृत्यतृचोर्ग्रहणं प्रैषातिसर्गेति सूत्रे कृत्याश्चेति च सुत्यजमिति स्पष्टं कौमुद्याम्। ६९

[नन्विति।] एवमिति शेषः। उभयत्रैव वासरूपविधिनिषेधाङ्गीकारे इत्यर्थः। [लृडपि प्राप्नोतीति।] भविष्यत्सामान्ये विहितस्य लृटोऽनद्यतनभविष्यति विहितेन लुटा विकल्पेन बाधादिति भावः। ननु कविषयेऽणाद्यापत्तिवारणायावश्यकेन नानुबन्धकृतमसारूप्यमिति न्यायेनानुबन्धेतरवर्णकृतासारूप्यस्यैव वासरूपन्यायप्रवृत्तिप्रयोजकत्वादनयोश्च तादृशासारूप्याभावात्कथं तन्न्यायविषयतेत्यत आह। [कृते आदेशे इति।] प्रयोगेऽसरूपो यो बाधकः प्राप्नोति स

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः॥ अत्र च हशश्वतोर्लङ् चेति लङ्विधानं ज्ञापकम्। अन्यथा परोक्षे लिडिति लिटा लङः समावेशो ऽसारूप्यात्सिद्ध इति किं लङ्विधानेन। शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिर्लिटः कानज्वेति वाग्रहणं च कृतम्। तज्ज्ञापयति वासरूपसूत्रे

---

बाधको वा स्यादिति वासरूप इत्यस्यार्थादनयोश्चोपदेशावस्थायामसारूप्याभावेऽपि प्रयोगे तत्त्वात्तत्प्राप्तिरिति भावः। परिभाषार्थमाह। [आदेशकृतेति।] परिभाषायामादेशपदं स्वप्रवृत्त्युत्तरकालिकवैरूप्यवति लाक्षणिकम् तस्य च ल इत्यनेन कर्मधारयः। कडारादित्वाल्लस्य पूर्वनिपातः। तथाचादेशप्रवृत्त्युत्तरकालिकवैरूप्यवत्सु लकारेषु वासरूपविधिर्नेति परिभाषार्थ इत्याशयः। लादेशेष्वित्यस्य षष्ठीतत्पुरुषाश्रयणेन यथाश्रुतार्थपरत्वन्तु न युक्तम्। प्रयोगेऽसरूपाणां वा विधिरिति पक्षे प्रसक्तदोषवारणाय वाऽसरूप इति सूत्रभाष्योक्तस्य वक्ष्यमाणलङ्विधानज्ञापकत्वस्यानुपपत्तेः। नहि तत्र लङ्लिटोः स्थाने तिबादिसूत्रेण विधीयमानानां तिङामुत्सर्गापवादभावोऽस्ति। येन तन्न्यायविषयता स्यादिति बोध्यम्। अत्र ज्ञापकमाह। [अत्र चेति।] चस्त्वर्थे, वाक्यालङ्कारे वा। [अन्यथेति।] एतद्वचनाभावे इत्यर्थः। लिटीति। अनद्यतनपरोक्षभूतकाले विहितेनापवादभूतेन लिटीत्यर्थः। [लङ इति।] अनद्यतने लङित्यनेनाद्यतनभूते विहितस्येत्यर्थः। [असारूप्यादिति।] प्रयोगेऽसारूप्याद्वासरूपन्यायेन समावेशस्सिद्ध इति भावः। प्रसङ्गाद्वासरूप इति सूत्रेऽसरूपपदबोध्यप्रत्यये विशेषान्तरमाह। [शतृविधायके इति।] लटश्शतृशानचाविति विभक्तसूत्रे इत्यर्थः। [विभाषाग्रहणानुवृत्तिरिति।] भगवता कृतेति शेषः। सदादिभ्यो बहुलम्। इङ्धार्योर्वेति वार्तिकप्रत्याख्यानाय भगवता कृतेत्यर्थः। [वाग्रहणं च कृतमिति।] सूत्रकृतेति शेषः। [तज्ज्ञापयतीति।] एतदुभयं ज्ञापयतीत्यर्थः। ज्ञाप्यांशमाह। [अपवाद इति।]

ऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम्। तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न तु पक्षे तिङ् इति बोध्यम्॥ ७०॥

---

असरूपपदबोध्योऽपवादप्रत्यय इत्यर्थः। [प्रत्यय एवेति।] एवकारो भिन्नक्रमः। आदेशत्वानाक्रान्त एव प्रत्यय इत्यर्थः। [कैयटादौ ध्वनितमिति।] तथाचास्य यथाश्रुतार्थपरत्वे लादेशेषु वासरूपविधेः प्राप्तेरेवाभावेन निषेधो विफल एव स्यादित्यतोऽपि हेतोरस्य यथाश्रुतार्थपरत्वं न युक्तमिति सूचितम्। [तत्फलन्त्विति।] उक्तज्ञापनफलन्त्वित्यर्थः। [न तु पक्षे तिङिति।] तिङ्क्वसोरादेशत्वाक्रान्तत्वेन प्रकृतन्यायाप्रवृत्तौ नित्यं क्वसुरेव। न तु तयोस्समावेश इति भावः। अत्रेदं बोध्यम्। वाऽसरूप इति सूत्रे भाष्ये, तत्रासरूपपदेन प्रायोगिकासारूप्यस्य ग्रहणे क्विबादीनां प्रयोगे रूपाभावात्तद्विषये उक्तन्यायाप्रवृत्तावणादिभिस्तेषां समावेशानापत्तिः। तथाच ग्रामणीः, ग्रामनाय इत्याद्यसिद्धि-रित्याशङ्क्य तदर्थं तत्रौपदेशिकमसारूप्यं ग्राह्यमित्युक्त्वा तत्पक्षे काणोरौपदेशिकासारूप्यस्य सत्त्वात्तद्विषये एतन्न्यायप्रवृत्तौ कविषयेऽणोऽप्यापत्तिरिति दोषमुद्भाव्य, सिद्धमनुबन्धस्यानेकान्त-त्वादित्यादिना अनेकान्तत्वपक्षाश्रयणेन समाधाय सिद्धान्तभूते एकान्तत्वपक्षे ऽपि "ददाति-दधात्योर्विभाषे" ति णबाधकशस्य विकल्पविधानेन "नानुबन्धकृतमसारूप्यमिति" परिभाषां ज्ञापयित्वा स दोषः परिहृतः। ततः "प्रयोगेऽसरूपाणां वा विधिर्न्याय्य" इत्यादिना प्रायोगिकमेवासारूप्यं ग्राह्यमित्युक्त्वा तत्पक्षे श्वःपक्तेत्यदौ लुड्विषये लडपि प्राप्नोति। तयोः प्रयोगेऽसारूप्यादित्याशङ्क्य हशश्वतोर्लङ्चेति लङ्विधानाल्लादेशेषु वासरूपविध्यभावज्ञापनेन समाहितम्। क्विपो रूपाभावादेव स प्रयोगेऽसरूपः। असरूपपदेन च समानरूपाभाववानुच्यत इति तदाशयः। तथाच तद्भाष्याद्वासरूप इत्यत्र प्रायोगिकासारूप्यस्य ग्रहणे लादेशेषु वासरूपविधिर्नि-त्यस्य, औपदेशिकासारूप्यस्य ग्रहणे नानुबन्धकृतमसारूप्यमित्यस्य चावश्यकत्वमित्यर्थोऽवगम्यते। वस्तुतस्तत्रौपदेशिकमेवासारूप्यं ग्राह्यम्। प्रत्यासत्तिन्यायात्। अत एव भाष्ये प्रथमतः क्विबादिष्वतिप्रसङ्गवारणायौपदेशिकमसारूप्यं ग्राह्यमित्युक्त्वा, तत्पक्षे काणोर्विषये प्रसक्तमतिप्रसङ्गं सिद्धमनुबन्धस्यानेकान्तत्वादित्याद्यस्थितपक्षेण परिहृत्य ततोऽथवेत्यादिना प्रयोगेऽसरूपाणां

ननु ङमो ह्रस्वादित्यादौ ङमः परस्याचो ऽचि परतो ङम इति वेति सन्देहः स्यादत आह॥

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्॥ ७१॥

अचीति सप्तमीनिर्देशस्य मय उञ इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशो ऽनवकाश इति तस्मादित्युत्तरस्येत्यस्यैव प्रवृत्तिः। यत्र तु ङ सि धुडित्यादावुभयोरप्य-

---

वा विधिर्न्याय्य इत्यादिना प्रायोगिकमसारूप्यं ग्राह्यमित्युक्त्वा तत्पक्षे लुडादिषु प्रसक्तमतिप्रसङ्गं लादेशेषु वासरूपविध्यभावज्ञापनेन परिहृत्य, पुनः "अथवा प्रयोगेऽसरूपाणां वाविधौ न सर्वमिष्टं संगृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते। को सावुपदेशो नामेत्युक्त्वा, तत्पक्षे प्रसक्तः प्रागुक्तोऽतिप्रसङ्गः सिद्धान्तभूते एकान्तत्वपक्षे नानुबन्धकृतमसारूप्यमिति परिभाषाज्ञापनेन परिहृतः। एतेनात्रैव भाष्यतात्पर्यमित्यवगम्यते। अत एव वाऽसरूप इति सूत्रे शेखरे औपदेशिकमेवासारूप्यं तत्र ग्राह्यम। तदप्यनुबन्धेतरवर्णकृतमेवेत्युक्तम्। तथाच तत्पक्षे लुङ्विषये लृटः प्रसक्तेरेवाभावेन नेयमावश्यकी परिभाषा। हशश्वतोर्लङ्चेति लङ्विधानं च सार्थकमिति। ७०

एवं सपरिकरां पूर्वपरनित्यान्तरङ्गापवादनामुत्तरोत्तरं बलीय इति परिभाषां निरूप्य बलवत्त्वप्रसङ्गादत्रास्य निरूपणमुचितमित्याशयेनाह। [नन्विति।] [सन्देहःस्यादिति।] तथाच वाक्यभेदेन द्वयोरपि कार्यप्रसङ्ग इति भावः। अत्र पञ्चमीनिर्देशस्य बलवत्त्वे बीजमाह। [अनवकाश इति।] [इत्यस्यैव प्रवृत्तिरिति।] अन्यथा ङमो ङमुटि कुर्वन्नास्त इत्यादौ णत्वापत्तिरिति भावः। क्वचित्परत्वमपि पञ्चमीनिर्देशस्य बलवत्त्वबीजमित्याह। [यत्रत्विति।] [उभयोरप्यचारितार्थ्यमिति।]

चारितार्थ्यं तत्र तस्मिन्निति सूत्रापेक्षया तस्मादित्युत्तर-स्येत्यस्य परत्वात्तेनैव व्यवस्था। एवमुभयोश्चारितार्थ्येऽपि, यथाऽमि सर्वनाम्न इत्यादौ। तत्रामीति सप्तमी त्रेस्त्रय इत्यत्र चरितार्था। आदिति पञ्चम्याङ्सेर-सुगित्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च॥ ७१॥

---

पञ्चमीसप्तमीनिर्देशयो र्द्वयोरप्यन्यत्राचारितार्थ्यमित्यर्थः। [तेनैवेति।] पाठकृतपरत्वेनैवेत्यर्थः। [एवमिति।] यथा उभयोरचारितार्थ्ये परत्वाद्व्यवस्था एवमुभयोश्चारितार्थ्येऽपि। उभयथापि द्वयोस्तुल्यबलत्वेन विप्रतिषेधशास्त्रप्रवृत्तेरव्याघातादिति भावः। [तत्रेति।] सूत्रे इत्यर्थः। नन्वनुवृत्तादितिपञ्चम्याः पूर्वत्र कृतार्थत्वेऽपि श्रौतसर्वनाम्न इति पञ्चम्या निरवकाशत्वेन ङमो ह्रस्वादचीत्यत्रेवात्रापि अनवकाशत्वस्यैव बलवत्त्वप्रयोजकत्वं न्याय्यमिति चेन्न। तस्य विहित-विशेषणत्वेन तस्मादित्यस्य तत्राप्रवृत्तेः। सर्वनाम्नः परस्यामः आमि परे सर्वनाम्नो वेति सन्दिह्य पञ्चम्यनवकाशेति भाष्यन्त्वेकदेशिन इति बोध्यम्। [स्पष्टमिति।] उक्तरीत्या पञ्चमीनिर्देशस्य प्राबल्यबोधकमिदं वचनं स्पष्टमित्यर्थः। एवञ्चोभयनिर्देशेषु पञ्चमीनिर्देशस्य प्राबल्ये परत्वा-नवकाशत्वयोरेव बीजत्वाद्यत्र क्वचित्सप्तमीनिर्देश एवानवकाशस्तत्र तस्यैव प्राबल्यं युक्तम्। यथा आने मुगित्यादौ, तत्र ह्याने इति सप्तम्यनवकाशा। अत इत्यनुवृत्ता पञ्चमीत्वतो येय इति पूर्वत्र चरितार्था। एवं पूर्वत्र कृतार्थाया अपि छे चेति सप्तम्या दीर्घात्पदान्ताद्वेत्यादौ सेनासुराच्छायेति ज्ञापकेन प्राबल्यं नत्वनवकाशाया अपि दीर्घादित्यादि पञ्चम्याः। एवञ्चास्याः परत्वानव-काशत्वादिरूपन्यायमूलकतया तत एवास्याः क्वचिदप्रवृत्तिरित्यपि बोध्यम्। ७१

नन्वतः कुम्भमीति सत्वमयस्कुम्भीत्यत्र न स्यात्कुम्भशब्दस्यैवोपादानादत आह ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥

सामान्यरूपेण विशेषरूपेण वा प्रतिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् ॥ अपिना केवलस्यापीत्यर्थः ॥ अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे कुमारश्रमणादिभिरिति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् ।

---

उभयनिर्देशप्रसङ्गादाह । [नन्वत इत्यादिना ।] [इत्यत्रेति ।] इत्यादावित्यर्थः । [कुम्भादिशब्दस्यैवेत्यर्थः ।] परिभाषार्थमाह । [सामान्यरूपेणेति ।] प्रातिपदिकत्वरूपेणेत्यर्थः । अत्र च प्रातिपदिकग्रहणेन ङ्याप्ग्रहणस्यानया परिभाषया वैयर्थ्यशङ्कापरं ङ्याप्सूत्रस्थं भाष्यं मानम् । [विशेषरूपेण वेति ।] कुम्भादिरूपेणेत्यर्थः । अत्र च तद्विषयेऽयस्कुम्भीत्यादिबहुतरोदाहरणदानं ज्ञापकस्थलानुरोधश्च प्रमाणं बोध्यम् । [लिङ्गबोधकेति ।] तत्प्रकृतिकलिङ्गबोधकेत्यर्थः । [विशिष्टस्यापीति ।] अपिना केवलस्य सङ्ग्रहः । [अस्याश्चेति ।] चस्त्वर्थे ज्ञापकपदोत्तरं योज्यः । [पाठ इति ।] पाठोऽपीत्यर्थः । अपिना युवाखलतीति सूत्रे जरतीग्रहणसङ्ग्रहः । तस्यापि ज्ञापकत्वसंभवाद्युवाखलतीति सूत्रे भाष्ये तस्यैव ज्ञापकत्वप्रतिपादनाच्च । अत एव समासशेखरे "एतदेव लिङ्गविशिष्टपरिभाषाज्ञापक" मिति कौमुदीग्रन्थव्याख्यावसरे एतदेवेति प्रतीकमुपादाय; एतदपीत्यर्थः । युवा खलतीति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वादित्युक्तम् । ज्ञापकत्वमस्योपपादयति । [स्त्रीप्रत्ययविशिष्टेति ।] एतदाश्रयणे प्रसक्तमतिप्रसङ्गं निराचष्टे ।

इयं च द्विषत्परयोरित्याद्युपपदविधौ समासान्तविधौ महदात्त्वे ञ्नित्स्वरे राजस्वरे ब्राह्मणकुमारयोर्बहोर्नञ्व-दुत्तरपदभूम्नि इत्यादौ समाससंघातग्रहणेषु च न

---

[इयंचेत्यादिस्पष्टमित्यन्तेन।] तत्र उपपदविधावेतदप्रवृत्त्या द्विषन्तं तापयति द्विषन्तप इत्यत्रैव द्विषतीं तापयति द्विषतीताप इत्यत्र द्विषत्परयोरिति खच् न भवति। समासान्तविधावेतदप्रवृत्ते-र्मद्राणां राजा मद्रराज इत्यत्रेव, मद्राणां राज्ञी मद्रराज्ञीत्यत्र राजाहस्सखिभ्य इति टच्न। महदात्वे एतदप्रवृत्त्या महान् प्रियो यस्य महाप्रिय इति वत्पुंवत्त्वाविषये महती प्रिया यस्य महतीप्रिय इत्यत्रान्महत इत्यात्वं न भवति। पुंवद्भावविषये महती जङ्घा यस्येति समासे स्त्रिया इत्यनेन पुंवत्त्वे तत आत्वं भवत्येव। ञ्नित्स्वरविधावेतदप्रवृत्तेर्दाक्षीत्यादाविञन्तादितो मनुष्यजातेरिति ङीषि सौवरीणां सप्तमीनां तदन्तसप्तमीत्वाद्विशिष्टस्य ञिदन्तत्वात्प्राप्तमाद्युदात्तत्वं न भवति। राजस्वरे ब्राह्मणकुमारयोरित्येकम्। राजा चेति सूत्रे, अर्यो ब्राह्मणकुमारयोरित्यतो ब्राह्मणकुमारयोरित्य-स्यानुवृत्त्या तयोरुत्तरपदयो राजन्शब्दस्य पूर्वपदप्रकृतिस्वरविधानात्। तथाच तत्रैतदप्रवृत्त्या, स स्वरो ब्राह्मणी कुमारीशब्दयोरुत्तरपदयोर्न प्रवर्तते। [इत्यादाविति।] अस्य समासेत्यनेना-भेदेनान्वयः। इत्यादिरूपसमाससङ्घातग्रहणेष्वित्यर्थः। अत्रैतदप्रवृत्त्या उत्तरपदार्थबहुत्वे वर्तमानाद्बहुशब्दात्परं यत्तदन्तस्य समासस्यानेन सूत्रेणातिदिष्टं नञ्सुभ्यां चेत्यनेन नञ्पूर्वपदक-समासस्य विधीयमानमन्तोदात्तत्वं बहवो गोमन्तोऽस्य बहुगोमान्, इत्यत्रेव बहवो गोमन्तोऽस्या इति विग्रहे बहुशब्दस्य गोमच्छब्देन समासे तत उगितश्चेति ङीपि बहुगोमतीत्यत्रेकारस्य न भवति। अत्र समाससङ्घातस्य कार्यित्वेनैतदप्रवृत्त्या ईकारान्ते समासत्वाभावात्। तत्रत्वीकारः पित्त्वादनुदात्तः। मकाराकारस्तूदात्त एव। अवयवीभूतपूर्वोत्तरपदग्रहणे तु राजस्वरव्यति-रिक्ते प्रवर्तत एव परिभाषा। तेन कुसूलकूपकुम्भशालं बिले इत्यादिना कुसूलादीनां बिलशब्दे परतो विधीयमानः पूर्वपदप्रकृतिस्वरः कुसूलीबिलमित्यादावपि भवत्येवेति स्पष्टं भाष्ये। विभक्तौ लिङ्गविशिष्टाग्रहणमिति परिभाषाप्येतदनित्यत्वमूलिकैव नापूर्वेति वक्ष्यमाणमतान्तररीत्या

प्रवर्तत इति ङ्याप्सूत्रे भाष्ये स्पष्टम्। विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव। तत्र समासान्तविधाववयवग्रहण एव न समाससङ्घातग्रहणे तु प्रवर्तत एव स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः। बहुव्रीहेरूधस इति सूत्रस्थभाष्याच्च। एतावत्स्वेवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः॥ नन्वेवं बहुव्रीहेरूधसो ङीषिति सूत्रस्थभाष्यासङ्गतिः। तत्र हि कुण्डोघ्नीत्यत्र नद्युतश्चेति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात्तदसंगतिः।

---

आह। [विभक्तिनिमित्तकेति।] एतत्फलन्त्वनुपदमेव स्फुटीभविष्यति। [तत्रेति।] तेषां मध्ये इत्यर्थः। अवयवग्रहण एव नेत्येव व्यावर्त्यमाह। [सङ्घातग्रहणे त्विति।] तत्रेदृशविशेषस्वीकारे बीजमाह। [स्वरविधावेवेति।] [तत्रेति।] ङ्याप्सूत्रे भाष्ये इत्यर्थः। [दोषोक्तेरिति।] इदमुपलक्षणमवयवग्रहण एव समासान्तविधौ दोषोक्तेरपि। तावन्मात्रेणोक्तविशेषस्य दुर्वचत्वादाह। [बहुव्रीहेरिति।] इदं चानुपदमेव स्फुटी भविष्यति। [अनित्यत्वादिति।] शक्तिलाङ्गलाङ्कुशेति वार्तिके घटशब्दात् पृथग्घटीग्रहणेन ज्ञापितादित्यर्थः। अत्र परमसिद्धान्तं प्रतिपिपादयिषुरस्या निरुक्तार्थे भाष्यविरोधमाशङ्कते। [नन्वेवमिति।] परिभाषाया उक्तार्थाङ्गीकारे इत्यर्थः। असङ्गतिमेव दर्शयति। [तत्र हीत्यादिना।] ननु समासस्य नद्यन्तप्रकृतिकसुबन्तानुत्तरपदकत्वात्कथं तदापादनमत आह। [इत्यर्थादिति।] इत्यर्थमभिप्रेत्येत्यर्थः। ल्यब्लोपे पञ्चमी। [बहुव्रीहित्वाभावात्तद संगतिरिति।] अयं भावः। सामान्यरूपेण विशेषरूपेण वा यत्र प्रातिपदिकस्य ग्रहणं तत्र तस्य तत्प्रकृतिकलिङ्गबोधकप्रत्ययविशिष्टस्य च ग्रहणमिति परिभाषार्थे विशेषणेन तदन्ततत्स्वरूपयोरिव, प्रत्ययेन यस्मात्सविहितस्तदादि तदन्तस्यैव च

नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्। नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत्। न। अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे ऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात्॥ ७२॥

---

कार्यप्रदेशेषु प्रातिपदिकेन तस्य तत्प्रकृतिक लिङ्गबोधक प्रत्ययविशिष्टस्य च ग्रहणमित्येव लभ्यते। न तु लिङ्गबोधकप्रत्ययविशिष्टे प्रातिपदिकत्वादिकं कुंभत्वादिकं वा लभ्यते। तथाच नद्यृतश्चेति कब्विधायके प्रातिपदिकत्वव्याप्यस्य बहुव्रीहित्वस्योपादानेऽपि नद्यन्ते बहुव्रीहित्वस्यानया परिभाषया अलाभाद्वस्तुतस्तत्र नद्यन्तबहुव्रीहेरेवोपादानेन तस्य प्रातिपदिकत्वाव्याप्यतया प्रकृतपरिभाषाऽविषयत्वाच्च तत्र कबापादनं सुतरामसङ्गतमिति। नन्वस्याः परिभाषायाः निरुक्तार्थापरिज्ञानात्पूर्वपक्षिणस्तथोक्तिरिति न तद्भाष्यासङ्गतिरत आह। [नद्यन्तानामिति।] [इत्यर्थेन चेति।] चो भिन्नक्रमः। परिहृतमित्यनन्तरं योज्यः। परिहृतं चेत्यर्थः। तथाच यद्यज्ञानात्पूर्वपक्षिणस्तथोक्तिस्तदा निरुक्तार्थज्ञापनेन नद्यन्ते बहुव्रीहित्वाभावान्न कबापत्तिरित्येव परिहरेत्। तथा अनुक्त्वा प्रकारान्तरेण तदापत्तिपरिहारेण नद्यन्ते बहुव्रीहित्वं भाष्याभिमतमिति लभ्यते। अस्या निरुक्तार्थकत्वे तदसङ्गतिः स्पष्टैवेति भावः। समाधत्ते। [अनयेति।] [तद्रहिते इति।] स्त्रीप्रत्ययरहितायां तत्प्रकृतौ तदेकदेशे वेत्यर्थः। [विशिष्टेऽ पीति।] स्त्रीप्रत्ययविशिष्टेऽपीत्यर्थः। अत एव दर्शनीयमानिनीत्यादौ क्यङ्मानिनोश्चेति पुंवद्भावः प्रकृतपरिभाषायाः प्रयोजनमित्युक्तम् भाष्ये। प्रकृत्येकदेशगतधर्माणामनतिदेशो हि गतिकारकोपपदानामिति सुबुत्पत्तेः प्राक् समासे विशिष्टादेव नान्तलक्षणो ङीबिति मानिनीशब्दस्योत्तरपदत्वाभावात्तदसङ्गतिरेव स्यात्। अत एव चायस्कर्णीत्यत्र पाककर्णेत्यादिना समुदायात् ङीषि तत्प्रकृत्येकदेशभूतकर्णशब्दनिष्ठमुत्तरपदत्वमनया परिभाषया कर्णीशब्दे आदायातः कृकमीति सत्वसिद्धिरपीति बोध्यम्। स्पष्टं चेदं स्वाङ्गाच्चेत इति सूत्रे शेखरे। [इत्याशयादिति।] एवंच कुण्डोध्नीत्यत्र नान्ते विद्यमानस्य

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि श्वयुवेति संप्रसारणं स्यादत आह॥

## विभक्तौ लिङ्गविशिष्टाग्रहणम्॥ ७३ ॥

स्पष्टा चेयं युवोरनाकावित्यत्र भाष्ये। घटघटीग्रहणेन

---

प्रातिपदिकत्वव्याप्यबहुव्रीहित्वस्यानया परिभाषया स्त्रीप्रत्ययान्तेऽतिदेशान्न तद्भाष्यासङ्गतिरिति भावः। एवं चेयमातिदेशिकी परिभाषा नतु सङ्केतग्राहिकेत्यवधेयम्। ७२

पूर्वपरिभाषानिषेधसङ्गत्या आह। [नन्वेवमिति।] उक्तलक्षणविशेषेष्वेवानित्यत्वादप्रवृत्तिकलिङ्गविशिष्टपरिभाषाश्रयणे इत्यर्थः। विभक्तिनिमित्तके कार्ये प्रातिपदिकेन लिङ्गबोधक प्रत्ययविशिष्टस्य ग्रहणं नेति परिभाषार्थः। अत्र विभक्तेर्निमित्तत्वं यथाकथंचित्। नतु विभक्तित्वव्याप्यधर्मपुरस्कारेणैवेत्याग्रहः। मानाभावात्। अतएवावतरणग्रन्थसङ्गतिः। अन्यथा संप्रसारणविधौ तद्धितभिन्नत्वेन वस्तुतो विभक्तेर्निमित्तत्वेनाश्रयणेऽपि विभक्तित्वव्याप्यधर्मपुरस्कारेणानाश्रयणात्तदसङ्गतिस्स्पष्टैव। नचैवमपि श्वयुवेतिसूत्रे भाष्ये "श्वदीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ" मिति वार्तिकप्रत्याख्यानप्रसङ्गे ऽल्लोपोऽन इत्यतोऽन्ग्रहणमपकृष्य श्वादीनामन्नन्तानामिति व्याख्यानेन युवतीःपश्य, मघवतः पश्येत्यादौ संप्रसारणं वारितमिति प्रकृतपरिभाषाया अनुपयोगादयुक्तमेवेदमवतरणमिति वाच्यम्। सुपथी, सखीत्यादि ङ्यन्तेष्वात्त्वणिद्वद्भावाद्यनिष्टवारणायावश्यक्या अनयैव निर्वाहेऽन्ग्रहणापकर्षक्लेशो व्यर्थ इत्याशयात्। नच मघवतेत्यादौ त्रादेशविशिष्टे संप्रसारणाभावाय तथाविधव्याख्यानक्लेश आवश्यक एवेति वाच्यम्। छान्दसत्वादेव तादृशेषु संप्रसारणाभावस्य समर्थितत्वात्। नन्वस्याः किं ज्ञापकमत आह। [स्पष्टा चेयमिति।] तथाच सूत्रानारूढत्वेऽपि भाष्ये वचनरूपेण पाठाद्वाचनिक्येषा परिभाषेति भावः। नेयमपूर्वा किन्तूक्तपरिभाषानित्यत्वमूलिकेति केषांचिन्मतेनाह। [घटघटीग्रहणेनेति।] "शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानमि" ति वार्तिके घटग्रहणेनैव सिद्धे

लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैषेत्यन्ये॥७३॥

ननु तस्यापत्यमित्येकवचननपुंसकाभ्यां निर्देशाद् गार्ग्यो गार्ग्यावित्याद्ययुक्तमत आह॥

सूत्रे लिङ्गवचनमतन्त्रम्॥७४॥

अर्द्धन्नपुंसकम् इति नपुंसकग्रहणमस्या ज्ञापकम्।

---

घटग्रहणेनेत्यर्थः। [अन्ये इति।] अनेनारुचिस्सूचिता। तद्बीजन्तु युवोरनाकावित्यादिषु भाष्येऽस्याः परिभाषात्वेन व्यवहारः। अवश्यमेषा परिभाषा अनेकफलसिद्ध्यर्थं कर्तव्येत्युक्ते श्चास्याः पृथक्परिभाषात्वं प्रतीयते। नचैवं ङ्याप्सूत्रे भाष्ये लिङ्गविशिष्टपरिभाषादोषनिरूपणावसरे एतदुक्तिरनर्थिकेति वाच्यम्। तस्यैतल्लब्धार्थानुवादकत्वेनादोषात्। अत एव विभक्तौचोक्तम्। किमुक्तम्। विभक्तौ लिङ्गविशिष्टाग्रहणादित्येव तत्रोक्तम्। अन्यथा "उपपदविधौ च यञिञोः फगित्यादिवद्विभक्तिविधौ चेत्येव वदेदिति बोध्यम्। ७३

लिङ्गपदवत्त्वेन पूर्वपरिभाषासाधर्म्यादाह। [नन्विति।] [तस्यापत्यमितीति।] इतिसूत्रेऽपत्यमित्येकवचननपुंसकाभ्यां निर्देशादित्यर्थः। वचनस्य शास्त्रीयत्वेनाभ्यर्हितत्वात्तस्य पूर्वनिपातः। सौत्रनिर्देशेष्वनुवाद्यविशेषणतया गृहीतं लिङ्गवचनं प्रकृत्यर्थापरिच्छेदकमिति परिभाषार्थः धर्मिग्राहकसाजात्याद्भाव इत्यादि सूत्रस्थभाष्येण च तथैव लाभात्। विधेयविशेषणन्तु तद्विवक्षितमेव। तत्र तदविवक्षायां मानाभावादिति बोध्यम्। अत्र ज्ञापकमाह। [नपुंसकग्रहणमिति।] अर्धमिति नपुंसकलिङ्गनिर्देशेनैव तदर्थलाभे पुनर्नपुंसकग्रहणमित्यर्थः। ननु समांशवाचिनित्य-

नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ॥ धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् ॥ अत एवाकडारसूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥

---

नपुंसकार्धशब्दलाभार्थं तस्यावश्यकत्वात्कथं तस्योक्तार्थज्ञापकतेत्यत आह । [नित्यनपुंसकेति ।] [न तदिति ।] एओङ्, एच इगितिसूत्रयोर्भाष्ये एचो ह्रस्वादेशासनेष्वैकारौकारयोर्विधानं स्यादित्याशङ्क्य, "न वेदे नैव लोकेऽर्ध एकारोऽर्ध ओकारो वा अस्ती" त्युक्तम् । तत्र समांशवाचिनोऽप्यर्धशब्दस्य पुंलिङ्गेन निर्देशात्तस्यापि नित्यनपुंसकताया अप्रामाणिकत्वान्न तदर्थमपि नपुंसकग्रहणमतो ज्ञापकं भवत्येवेति भावः । [अन्यत्रेति ।] शेखरादावित्यर्थः । भाष्ये तु न्यायसिद्धत्वमेवास्या उपदर्शितमित्याह । [धान्यपलालन्यायेनेति ।] एवंहि तत्र भाष्यम् । "यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति । नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषकलापान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान् सशल्यान् सकण्टकानाहरति । नान्तरीयकत्वात् । स यावदादेयं तावदादाय शल्यकण्टकानुत्सृजति । एवमिहापि नान्तरीयकत्वात्पंलिङ्गेन निर्देशः क्रियते । एकवचनान्तेन च । नह्यत्र निर्देशस्तन्त्र" मिति । अयं भावः । लिङ्गसंख्यासंबन्धमन्तरेण केवलस्य धर्मिणःसुबन्तेन निर्देशासंभवादपदस्य च प्रयोगानर्हत्वाद्यावल्लिङ्गवचनसंबन्धेन निर्देष्टुमशक्यत्वाच्च तत्र तत्र शास्त्रे निर्देशोपपत्तये नान्तरीयकतयोपात्तयोरप्यनुवाद्यविशेषणयोस्तयो र्लोकदृष्टान्तेनैव परित्यागस्सिद्ध इति नात्रापूर्ववचनापेक्षा । नह्यत्रेतिभाष्यस्यानुवादे इत्यर्थ इति । अत्रेदं बोध्यम् । सूत्रे अनुवाद्यविशेषणतया गृहीतं लिङ्गमसति यत्ने प्रकृत्यर्थापरिच्छेदकम् । यथा भावे, तस्यापत्यमित्यादौ, सति तु यत्ने तत्परिच्छेदकमेव । यथा पदाऽस्वैरिबाह्यापक्ष्येषु चेति सूत्रे लिङ्गसर्वनाम नपुंसकलिङ्गेनैव लाघवान्निर्देशे कार्ये बाह्येति स्त्रीलिङ्गेन निर्देशात्तद्विशिष्ट एवार्थे ग्रामगृह्या सेनेत्यादौ क्यप् नतु पुन्नपुंसकयोरर्थयोः । विधेयविशेषणतयोपात्ता संख्या तु विवक्षितैव । "नह्यत्र निर्देशस्तन्त्र" मिति भाव इति सूत्रस्थभाष्यस्य "अत्र = अनुवादे इत्यर्थः" इत्युद्योतग्रन्थेन तत्रैव सूत्रे प्रयोगमूल-

# ननु भृशादिभ्यो भुव्यच्वेरित्यादौ विधीयमानः क्यङ्

---

कत्वादिति कैयटग्रन्थव्याख्यावसरेऽनुवाद्यगतत्वादविवक्षेतितत्त्व, मित्युद्योतग्रन्थेन चानुवाद्य गताया एव संख्याया अविवक्षेति नागेशाशयस्य स्फुटं प्रतीतेः। सुबर्थसंख्याविचारे मंजूषायां चास्यार्थस्य स्पष्टत्वात्। अतएवादृगुण इत्यादौ गुणपदस्य विधेयसमर्पकत्वेन तत्रैकत्वस्य विवक्षितत्वादुभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूलयोःकटं कुर्वित्यादित इवोभयसंबन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थमित्युक्तं शेखरे। भाष्यकृता चैकग्रहणं प्रत्याख्यातम्। सुप्सुपेत्यादावनुवाद्यविशेषणतयोपात्तमेकत्वमविवक्षितमेव। सुबुत्पत्तिवाक्ये तेषां बहुत्वसंख्यावगमे न तद्विरोधाद्ग्रहैकत्ववदत्रैकत्वविवक्षाया अयुक्तत्वात्। नचैवमजाया महिष्याश्च क्षीरमित्यादौ सुबन्तसमुदायस्य क्षीरशब्देन समासापत्तिरिति वाच्यम्। सुबित्यादौ जातेर्विवक्षणेनादोषात्। एवंहि यथा स्वाङ्गत्वस्य प्रत्येकपरिसमाप्तत्वात्स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्याग्रहणमेवं सुबन्तत्वादेरपि प्रत्येकपरिसमाप्तत्वेन सुबन्तसमुदायस्य सुबन्तग्रहणेनाग्रहणान्न प्रागुक्तदोषः। स्पष्टं चेदमव्ययीभावशेखरे। मतुप्सूत्रसमर्थसूत्रयोश्च भाष्ये स्पष्टोऽयमर्थ इति। एतेन सुप्सुपेत्यत्रैकत्वसंख्याविवक्षिता। यत्नस्य सत्त्वात्। अत एवानेकैस्सुबन्तैरनेकेषां सुबन्तानां न समासः। यत्नश्चात्रानेकमन्यपदार्थ इति सूत्रेऽनेकग्रहणं स्वरितत्वं वेति वाक्यार्थचन्द्रिकाकृदुक्तमपास्तम्। अनुवाद्यगतत्वेन सुबुत्पत्तिवाक्यावगतबहुत्वसंख्याविरोधेन च यथा प्राजापत्या नवग्रहा इत्युत्पत्तिवाक्यावगतसंख्या विरोधेन ग्रहं संमार्ष्टीत्याद्यनुवाद्यगतसंख्याया अविवक्षा तथा अस्या अप्यविवक्षाया एव न्याय्यत्वादित्यन्यत्र विस्तरः। एवं तदधीते तद्वेदेत्यादौ क्रियाविशेषविशिष्टे कर्तरि निर्दिष्टव्ये नान्तरीयकतया प्रसक्तस्य कालस्य तत्करोति तदाचष्ट इत्यादौ क्रियाविशेषस्यैवासत्वभूतस्य निर्देशे प्रसक्तयोः कालकारकयोश्च परित्यागो न्याय्यः। नान्तरीयकत्वं चाविनाभावः। विनार्थकादन्तराशब्दाद्गहादित्वाच्छप्रत्यये नञ्तत्पुरुषे भाष्यप्रयोगान्नलोपाभावे स्वार्थिके कन् प्रत्यये च नान्तरीयकशब्दस्य कैयटेन व्युत्पादनादिति बोध्यम्। ७४

सूत्रनिर्देशेषु विशेष्यभूतद्रव्यविषये विशेषप्रतिपादकपरिभाषानिरूपणोत्तरं तत्रैव विशेषप्रतिपादकपरिभाषान्तरस्योपस्थितत्वादाह। [ननु भृशादिभ्यो भुव्यच्व्येरिति।] एतदुक्तं

क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह ॥

नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः ॥७५॥

नञ्युक्तमिवयुक्तं च यत्किंचिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते हि यतस्तथाऽर्थावगतिरस्ति। न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति। अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्तदोषः ॥ ओषधेश्च विभक्तावप्रथमायामित्यादौ विभक्तिग्रहणन्त्वेतन्न्यायसिद्धार्थानुवाद एव। एतेन विभक्तावित्याद्यस्यानित्यत्वे

---

"इत्यादिना अभृशो भृशो भवति भृशायत" इति शेषः। भुव्यच्व्येरिति विधीयमान इति पाठे तु इत्यादिसूत्रेण भृशायत इत्यादौ विधीयमान इत्यर्थः। [क्व दिवा भृशा भवन्तीति।] रात्रौ भृशा ये नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। परिभाषार्थमाह। [नञ्युक्तमित्यादिना।] [तथा अर्थावगतिरस्तीति।] लोके इति शेषः। अब्राह्मण इत्यादौ ब्राह्मणप्रतियोगिकसादृश्यसामानाधिकरण्येन भेदप्रतीतेश्चन्द्र इव मुखमित्यादौ चन्द्रप्रतियोगिकभेदसामानाधिकरण्येन सादृश्यप्रतीतेश्च लोके दृष्टत्वादिति भावः। तदेतदाह। [न ह्यब्राह्मण इति।] [लोष्टमिति।] मृत्पिण्डमित्यर्थः। [कृती भवतीति।] परन्तु ब्राह्मणभिन्नं पुरुषमेवानयतीति भावः। अनेनास्य लोकन्यायसिद्धत्वं दर्शितम्। एतत्परिभाषाश्रयणे प्रागुक्तदोषवारणोपायं दर्शयति। [अत इति।] उक्तपरिभाषाश्रयणादित्यर्थः। नन्वेवमोषधेश्च विभक्तावप्रथमायामिति सूत्रे विभक्तिग्रहणस्यानर्थक्यापत्तिः। तत्राप्रथमायामित्युक्त्या अनेनैव विभक्तावित्यर्थलाभादत आह। [विभक्तिग्रहणन्त्विति।] ओषधेश्चेति सूत्रे विभक्तिग्रहणादियमनित्या। तेनासूर्यं पश्या इत्यादौ प्रसज्यप्रतिषेधसिद्धिरन्यथा सूर्यभिन्नं तत्सदृशं पश्यतीत्यर्थापत्तेरिति सीरदेवाद्युक्तिं खण्डयति। [एतेनेति।]

ज्ञापकमिति वदन्तः परास्ताः। अनित्यत्वे भाष्यसंमतफलाभावात्। अत एवाकर्त्तरि च इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम्॥ स्पष्टा चेयं भृशादिभ्य इति सूत्रे भाष्ये॥ अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जूषायाम्॥७५॥

---

तस्य न्यायसिद्धार्थानुवादकत्वेनेत्यर्थः। ननूक्तदोषवारणाय तेनानित्यत्वज्ञापकतया आवश्यकत्वादनुवादकत्वकथनमयुक्तमत आह। [अनित्यत्वेति।] सीरदेवाद्युक्तफलस्य सत्त्वादाह। [भाष्यसंमतेति।] यथा अब्राह्मणमानयेत्यादावभिधानस्वाभाव्याद्ब्राह्मणभिन्नं तत्सदृशं पुरुष मानयेत्यर्थप्रतीतिरेवमभिधानस्वाभाव्यादेवासूर्यं पश्या इत्यादौ सूर्यं न पश्यन्तीत्यर्थप्रतीत्या न तदर्थमस्यानित्यत्वमावश्यकम्। तादृशार्थे तस्य साधुत्वन्त्वसूर्यललाटयोरिति ज्ञापकादेव भगवता साधितमिति न तदनित्यत्वे फलमिति भावः। न च परिभाषानित्यत्वे द्वित्वविधावनचीत्यादौ सादृश्यवैकल्येन भेदमात्रप्रत्यायकत्वसंभवादवसानस्यापि ततो बोधे पर्युदासेनैवावसानेऽपि द्वित्वसिद्धौ तदर्थमसमर्थसमासाश्रयणेन गुरुभूतः प्रसज्यप्रतिषेधो नाश्रयणीय इति फलमस्त्येवेति वाच्यम्। अवसाने द्वित्वसिद्धये तत्र प्रसज्यप्रतिषेधस्यैव भगवता आश्रयणात्तस्यापि फलस्य तदसंमतत्वादिति बोध्यम्। न केवलमस्यानित्यत्वे भाष्यसंमतफलाभावोऽपि तु तद्विरोधोऽपीत्याह। [अत एवेति।] अनित्यत्वस्य भाष्यासंमतत्वादेवेत्यर्थः। [प्रत्याख्यातमिति।] अन्यथा अनित्यत्वज्ञापनाय तस्यावश्यकतया प्रत्याख्यानासङ्गतिरिति भावः। अस्या भाष्यरूढतां दर्शयति। [स्पष्टा चेयमिति।] ननु परिभाषायामन्येत्यनर्थकं सदृशाधिकरण इत्युक्तावपि सादृश्यस्य भेदघटितत्वेन निरुक्तार्थसिद्धेरत आह। [अत्रेति।] परिभाषायामित्यर्थः। [इत्युक्त्येति।] इतिपदद्वयोक्त्येत्यर्थः। [भेदाघटितत्वं सूचयतीति।] तथा च सादृश्यं न तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वरूपम्। किन्तु साधारणधर्मसंबन्धप्रयोज्यं सदृशादिपदशक्यतावच्छेदकतया सिद्धं सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसंमतत्वेन तत्कारणतावच्छेदकतया च सिद्धमखण्डमतिरिक्तः पदार्थः। अतएवानेनायं सदृश

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट् टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह ॥

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । ७६ ।

---

इत्युक्ते केन धर्मेणानयोस्सादृश्यमित्येव जिज्ञासा जायते। न तु को धर्मोऽनयो स्सादृश्यमिति। साधारणधर्मरूपत्वेत्वेवमेव जिज्ञासा स्यात्। भेदाघटितत्वादेव चोकाल इत्यादिना, उकारस्य ह्रस्वसंज्ञासिद्धिरित्यादिमञ्जूषायां विस्तरेण निरूपितमित्यवध्येयम्। ७५

नञ्घटितसमासप्रसङ्गेनोपस्थितां परिभाषामवतारयति। [नन्विति। व्याघ्रीति।] विपूर्वादाङ्पूर्वाच्च घ्राधातोरातश्चोपसर्ग इत्यनेन कप्रत्यये आङो घ्रशब्देन वेराघ्रशब्देन च गतिसमासे जातिलक्षणे ङीषि रूपम्। एवं कच्छपीत्यत्रापि कच्छे पिबतीत्यर्थे सुपि स्थ इति सूत्रे सुपीति योगविभागात्कप्रत्यये उपपदसमासे प्राग्वन्ङीषि रूपम्। आदिना अश्वक्रीतीत्यस्य सङ्ग्रहः। [सुबन्तेन समासादिति।] कुगतीतिसूत्रे उपपदमतिङिति सूत्रे च सुप्सुपेत्यस्यानुवृत्त्येति भावः। [ततोऽपीति।] सुपोऽपीत्यर्थः। [अन्तरङ्गत्वादिति।] स्वार्थादीनां क्रमेणोपस्थित्या सुबुत्पत्तिप्रयोजकसंख्याकारकोपस्थितेः प्रागेव टाबुत्पत्तिप्रयोजकस्य स्त्रीत्वस्योपस्थितत्वेन पूर्वोपस्थित-निमित्तकत्वरूपमन्तरङ्गत्वं टाप इति भावः। एतेन समासापेक्षया टापोऽन्तरङ्गत्वमनेन प्रतिपाद्यत इत्याशयेन, "ननु व्याघ्रीत्यादावन्तरङ्गभूतटापा समासबाधनं नोपपद्यते। लुक्प्रयोजक-समासादीनामप्यन्तरङ्गानपीति न्यायेन प्राबल्यबोधनादि" त्यादिना आशङ्क्य तद्वारणाय बहुना कोलाहलेन क्लिश्यन्त श्चन्द्रिकाकृतः परास्ताः। सुबुत्पत्तिमन्तरा समासस्य तत्प्रयोज्यलुको वा। अप्राप्त्या ततः प्रागेवोक्तरीत्या टापः प्राप्त्या तदानीमन्तरङ्गानपीति न्यायविषयताया एवा-भावादिति बोध्यम्। [कृद्भिस्सहेति।] तैरेव सहेत्यर्थः। एव व्यावर्त्यमाह। [प्राक्सुबुत्पत्तेरिति।]

उपपदमिति सूत्रेऽतिङ्ग्रहणेन कुगतीत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुप्सुपे-

---

उत्तरपदे सुबुत्पत्तेः प्रागित्यर्थः। इदमुपलक्षणं टाबुत्पत्तेरपि। कृद्भिरेवेत्यवधारणपरतया व्याख्यानेन वा एतदर्थलाभः। अत्र बीजमाह। [उपपदमिति सूत्रे इति।] [इत्यत्रेति।] गतिश्चेति-विभक्तसूत्रे इत्यर्थः। [तदपकर्षणेनेति।] अतिङ्ग्रहणापकर्षणेनेत्यर्थः। [अतिङन्तश्चेति।] कथमपि तिङन्ताघटित इत्यर्थः। [समास इति।] तत्संज्ञकस्समुदाय इत्यर्थः। [तयोस्सूत्रयोरिति।] गतिरिति विभक्तसूत्रे उपपदमतिङिति सूत्रे चेत्यर्थः। [सुप्सुपेत्यस्य निवृत्त्येति।] सुप्सुपेतिपदद्वयस्यापि निवृत्त्येत्यर्थः। यदि तयोरनुवृत्तिस्स्यात्तदा उपपदं गतिसंज्ञकं च सुबन्तं सुबन्तेन समर्थेन समस्यत इत्यर्थातिङन्तस्य, तिङन्तेन वा समासस्य प्रसक्तेरेवाभावेन तिङन्ताघटितस्समास इत्यर्थकमतिङ्ग्रहणमनर्थकमेव स्यादतस्तेनानयो स्सूत्रयोस्तयोरननुवृत्तिर्ज्ञाप्यत इति भावः। न च तयोरनुवृत्तावपि प्रपचतितरामित्यादावामन्तेन गतेस्समासवारणायातिङ्ग्रहणस्य सार्थकतया कथमतिङ्ग्रहणं तन्निवृत्तौ ज्ञापकमिति वाच्यम्। सहेतियोगविभागेन तत्र नित्यसमासस्येष्टतया तदर्थं तस्यानावश्यकत्वात्। न चैवमपि कारको गत इत्यत्र गत इति सुबन्तोपपदस्य कारक इत्यनेन समासवारणाय तिङन्तार्थक्रियाबोधकपदाघटितस्समास इत्यर्थकं तदिति कथं तद्वैयर्थ्यमिति वाच्यम्। तस्य द्रव्यवाचितया तिङन्तार्थत्वाभावेन तेन तद्वारणस्याशक्यत्वात्, किञ्च क्रियावाचक-शब्दग्रहणे क्रियायाः साध्यमात्रावस्थाया एव ग्रहणस्य गतिकारकोपपदादिति सूत्रे प्रकृतसूत्रे च भाष्ये ध्वनिततया, कृदभिहितो भावो द्रव्यवत्प्रकाशत इत्युक्त्या गत इत्यस्य द्रव्यवाचितया क्रियावाचकोपपदत्वाभावेन ण्वुल एव तत्राप्राप्तेः। नचैवमपि कारको व्रजतितरामित्यादौ समासवारणाय निरुक्तार्थकमतिङ्ग्रहणमावश्यकमिति वाच्यम्। अतिङ्ग्रहणज्ञापकत्वप्रतिपादनपरभाष्यप्रामाण्येन तेषामनभिधानात्। नचातिङित्यस्य प्रथमान्ततयोपपदविशेषणत्वं कुतो न। अतएव कारको-व्रजतीत्यादौ व्रजतीति तिङन्तोपपदस्य न समास इति वाच्यम्। पूर्वसूत्रे गतेरतिङन्तत्वस्या-व्यभिचरिततया तत्र तस्य गतिविशेषणत्वे फलाभावेन समासविशेषणताया एव वक्तव्यतयाऽत्राप्य-र्थाधिकारानुरोधेन तद्विशेषणताया एव न्याय्यत्वात्। समासविशेषणत्वेऽपि कारको व्रजतीत्यादौ समासस्य सुवारत्वात्। नचैवमप्यतिङित्यस्य लुप्ततृतीयान्ततया उपपदमतिङन्तेन समस्यत इत्यर्थः

त्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयं तेनाश्वक्रीती सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात्

---

कुतो नेति वाच्यम्। अतिङिति ज्ञापयति। अनयोर्योगयो र्निवृत्तं सुप्सुपेति। केनेदानीं समासः। समर्थेनेति भाष्यासङ्गतेः। अतिङित्यस्य लुप्ततृतीयान्तत्वकल्पने मानाभावाच्च। भाष्यरीत्या प्रत्युदाहरणाभावाच्च। तथा च तस्य समासविशेषणत्वमेव। न च तस्य समासविशेषणत्वेऽपि कैयटोक्तदिशा "अतिङन्तस्समासो भवति" त्यर्थात्तेन सुपेत्यस्यैव निवृत्तिर्ज्ञापयितुं शक्या। न तु प्रथमान्तस्यापि। अत एव राजयुध्वेत्यादौ पूर्वपदे नलोपादिपदकार्यसिद्धिः। पदविधित्वेन समर्थपरिभाषोपस्थितिश्च सिद्धेति वाच्यम्। पूर्वसूत्रे गतेस्सुबन्तत्वाव्यभिचारात्तत्र तदनुवृत्तेः फलाभावेनात्र सूत्रे उपपदमित्यन्वर्थसंज्ञया सुबन्तस्यैव पदत्वेनोपपदत्वात्पूर्वपदे नलोपादेः पदकार्यस्य समर्थपरिभाषोपस्थितेश्च सिद्धतया, अतिङित्यस्य समासविशेषणत्वेन तिङन्ताघटितस्समास इत्यर्थेऽपि कारको व्रजतीत्यादौ समासव्यावृत्तिसिद्धेश्च तदनुवृत्तेःफलाभावादिति बोध्यम्। एतेन कैयटानुसारेण तृतीयान्तस्यैव निवृत्तिर्नतु प्रथमान्तस्येति वदन्तः चन्द्रिकाकृतोऽन्ये च परास्ताः। स्पष्टं चेदमुपपदमतिङिति सूत्रे शेखरोद्योतयोः। ननूक्तरीत्या परिभाषाघटकस्यांशद्वयस्य सिद्धावपि कारकांशासिद्धिः। न च कर्तृकरणे कृता बहुळमिति सूत्रे कृद्ग्रहणेन तस्यापि सिद्धिः। तिङन्तेन समासस्य सुपेत्यनुवृत्त्यैव वारणसंभवे कृद्ग्रहणस्य तत्र कृदन्तावस्थायामेवानुत्पन्ने सुपि समास इत्यर्थकत्वादिति वाच्यम्। काष्ठैःपचतितरामित्यादावामन्तप्रकृतिकसुबन्तेन समासवारणाय तदावश्यकत्वात्। न च बहुलग्रहणेन शानजन्तादिभिरिवात्रापि समासस्य वारयितुं शक्यतया न तदर्थं कृद्ग्रहणमावश्यकमिति प्रागुक्तदिशा तेन तत्सिद्धिरिति वाच्यम्। अथापि कर्तृकरणतृतीयान्तयोः कृदन्तेनैवानुत्पन्ने सुपि समास इत्यर्थस्य तेन लाभेऽपि कारकमात्रस्य कृदन्तेन समास इत्यर्थस्य ततोऽलाभादत आह। [एकदेशानुमत्येति।] एकदेशानुमतिद्वाराविशिष्टपरिभाषाबोधनेन कारकांशे च सिद्धेत्याशयः। कारकांशे चेति चेनाऽन्यांशद्वयस्य समुच्चयः। गत्युपपदयोः फलस्योक्तत्वादाह। [तेनाश्वक्रीतीति।] [अन्यथेति।] कारकांशे एतदनङ्गीकार इत्यर्थः। [पूर्वं टापीति।] क्रीतेतिक्तान्तात्सबुत्पत्तेः पूर्वमुक्तरीत्याऽन्तरङ्गत्वाट्टापीत्यर्थः। [अदन्तत्वाभावादिति।]

क्रीतात्करणपूर्वादिति ङीष् न स्यात्। अस्या अनित्यत्वात् क्वचित्सुबुत्पत्त्यनन्तरमपि समासो यथा सा हि तस्य धनक्रीतेति। अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाट्टाबित्याहुः। अत एव कुम्भकार इत्यादौ

---

करणवाचिपूर्वावयवकस्य क्तान्तस्यादन्तत्वाभावादिति भावः। [ङीष् न स्यादिति।] तत्रात-इत्यस्यानुवृत्तेरिति भावः। नन्वेवं सा हि तस्य धनक्रीतेति टाबन्तप्रयोगस्य कथं सिद्धिरत आह। [अनित्यत्वादिति।] अत्र च अम्बाम्बेतिसूत्रे गवादिग्रहणं मानम्। तद्धि गोष्ठ इत्यादौ गवादिभ्यःपरस्य कप्रत्ययान्तस्थाधात्ववयवसकारस्य षत्वविधानार्थम्। अन्यथाऽनया परिभाषया तत्र कृदन्तेन समासे कप्रत्ययान्ते पदत्वाभावात्सात्पदाद्योरिति निषेधाप्राप्तावादेशप्रत्ययोरित्यनेनैव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः। [अन्येत्विति।] सिद्धान्तिन इत्यर्थः। [न मानमिति।] पदस्यादिःपदादिरिति पक्षे तत्र कृदन्तेन समासे निषेधाप्राप्तावपि पदादादिःपदादिरिति सिद्धान्तपक्षे तत्प्राप्त्या षत्वविधानस्य सार्थकतया न तदनित्यत्वे मानमिति भावः। [तत्रेति।] धनक्रीतेत्यत्रेत्यर्थः। कैयटस्तु उपपदमतिङ् गतिश्चेति सूत्रयोस्सुप्सुपेत्यस्य निवृत्त्या सुपैवेति नियमाभावात् लक्ष्यानु-सारेण यथेष्टं कार्यसिद्धये क्वचिदुत्पन्ने सुपि समासः। क्वचित् प्राक्सुबुत्पत्तेः। एवं कारकस्य समासोऽपि बहुलग्रहणात्क्वचित्सुबुत्पत्त्यन्तरं भवतीत्याह। लक्ष्यानुसरणस्य लक्षणैकचक्षुष्कदुर्ज्ञे-यत्वाद्बहुलग्रहणस्यान्यार्थताया भगवतोक्तत्वाद्धनक्रीतेति प्रयोगस्योक्तरीत्या सुसाधत्वाच्च न तद्युक्तमिति ग्रन्थकृदाशयः। नचास्या अनित्यत्वानङ्गीकारे धनक्रीतेत्यस्योक्तरीत्या सिद्धावपि गोञ्चेत्यादेरसिद्धिः। गामञ्चतीतिविग्रहे गोशब्दस्य क्विन्नन्तेन समासेऽजित्यस्य पदत्वाभावात् न पदान्तेत्यत्र पदे अन्तःपदान्त इति सप्तमीसमासेऽत्र स्थानिवत्त्वनिषेधाप्राप्त्याऽल्लोपस्याचः परस्मिन्निति स्थानिवत्त्वे-नावादेशप्रसङ्गादिति वाच्यम्। तत्र पदशब्दस्य पदत्वयोग्योपलक्षकताया ग्रन्थकृतोक्तत्वादिति बोध्यम्। [अत एवेति।] एकदेशानुमत्या सामान्यतः कारकांशेऽप्यस्या अङ्गीकारादेवेत्यर्थः।

51

षष्ठीसमासो ऽपि सुबुत्पत्तेः पूर्वमेव। षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम्। तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्तिकम्, अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानं च। यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादुपपदसमास इति वार्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यं परि-

---

[सुबुत्पत्तेःपूर्वमेवेति।] कृद्योगलक्षणायास्तस्या अपि षष्ठ्याःकारकत्वादिति भावः। ननु तत्र षष्ठीसमासाश्रयणे तस्य वैकल्पिकत्वात्पक्षे कुम्भस्य कार इति वाक्यमपि स्यादत आह। [षष्ठीसमासाभावे चेति।] तथा च न तत्र षष्ठीसमासोपपदसमासयोर्विशेष इत्यर्थः। तदेव भाष्यमुपपादयति। [तत्रहीत्यादिना।] [विप्रतिषेधेनेति।] राज्ञः पुरुष इत्यादौ षष्ठीसमासस्य स्तम्बेरम इत्यादावुपपदसमासस्य च चारितार्थ्यात्कुम्भकार इत्यत्र षष्ठीसमासं बधित्वा परत्वादुपपदसमासस्यादिति भावः। यदि षष्ठीसमासस्य सुबुत्पत्त्यनन्तरमेव प्रवृत्तिस्स्यात्तदा तयोर्विप्रतिषेधविचारासङ्गतिः स्पष्टैवेति तेन कारकविभक्त्यन्तेन कृद्भिस्समासमात्रस्य सुबुत्पत्तेः पूर्वमेवेत्यर्थो लभ्यत इति बोध्यम्। ननु षष्ठीसमासापेक्षयोपपदसमासस्यान्तरङ्गत्वाभिप्रायकेण "नवा षष्ठीसमासाभावादुपपदसमास" इति तदुत्तरभाष्येण षष्ठीसमासस्य सुबुत्पत्त्यनन्तरमेव प्रवृत्तिरित्यर्थो लभ्यते। अन्यथा षष्ठीसमासापेक्षयोपपदसमासस्यान्तरङ्गताया दुर्वचत्वात्। तथा च कथमिदं त्वदुक्तार्थसाधकमत आह। [यद्यपीति।] [तदुभयप्रत्याख्यानपरमिति।] पूर्वपक्षसिद्धान्तरूपोक्तवार्तिकद्वयप्रत्याख्यानपरमित्यर्थः। [भाष्यमिति।] न वार्तिकमिति भावः। षष्ठीसमासस्य सुबन्तेनैव प्रवृत्तौ सुबुत्पत्तेःपूर्वं प्रवर्तमानस्योपपदसमासस्य दौर्लभ्यात्तद्भाष्यासङ्गतिरिति भावः। ननु परिभाषायां कारकपदोपादानात्सामान्यरूपेण विशेषरूपेण वा यत्र तदुपादानं तत्रैव तत्परिभाषाप्रवृत्तेरौचित्यात्कथमत्र षष्ठीसमासस्य

भाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्। एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्। अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च॥ ७६॥

ननूगिदचामित्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह।

---

सुबुत्पत्तेःपूर्वं प्रवृत्तिरित्यत आह। [परिभाषायामिति।] [कारकोपादानेनेति।] वस्तुतः कारकपदोपादानेनेत्यर्थः। गुणानाञ्च परार्थत्वदिति न्यायादत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। अत्र चेदमपि भाष्यं मानमित्याशयः। [एतेनेति।] षष्ठीसमासविषयकत्वेनाप्यस्य न्या यस्य भाष्यकारैरभ्युपगतत्वेनेत्यर्थः। [कारकतद्विशेषयोरुपादान एवेति।] कारकविशेषोपादान एवास्याः प्रवृत्तिः सामान्यतः कारकोपादानेन समासविधानस्याप्रसिद्धेः। एवञ्च कर्तृकरणे कृता बहुलमिति समासस्य सुबुत्पत्तेःपूर्वं प्रवृत्तिः कारकांशे प्रकृतपरिभाषायाःप्रयोजनमिति तदाशयः। वस्तुत उपादान-एवेति तदुक्तार्थस्य कथंचिदप्यलाभ इत्याह। [अस्या इति।] [अलाभाच्चेति।] चेन निरुक्तभाष्यसमुच्चयः। तथा च यथाकथञ्चित्कारकग्रहणेऽपि कथञ्चित्कारकत्वमाश्रित्यास्याः प्रवृत्तिरत्रत्यभाष्यात्। अत एव गाःपालयतीति गोपालःस एव गोपालकस्तस्य स्त्रीत्यर्थे ण्वुलन्तस्य तृजकाभ्यां कर्तरीत्यनेन कारकषष्ठ्या समासनिषेधात् शेषषष्ठ्यन्तेन समासेऽपीत्वसिद्धिः। शेषषष्ठ्या अप्यत्र वस्तुतः कारकत्वेन प्रकृतपरिभाषया सुबुत्पत्तेःपूर्वमेव समासप्रवृत्तेः। अन्यथा आपःसुपःपरत्वादित्वानापत्तिः। स्पष्टं चेदं पालकान्तान्नेति सूत्रे शेखरे इत्यवधेयम्। ७६

पूर्वपरिभाषासाधकातिङ्पदघटकतिङा धातोरुपस्थितत्वादाह। [नन्विति।] [अधातुग्रहणमिति।] तत्सूत्रेऽधातुग्रहणमित्यर्थः। सांप्रतिकस्येदानींतनस्य विशेषणस्याभावे भूतपूर्वस्योप-

## सांप्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम्। तत्सामर्थ्याद्धातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः। नामीत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

अपिनाऽतद्गुणसंविज्ञानम्॥ तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयिनाऽन्वयित्वमिति तदर्थः। यत्र समवायसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र

---

लक्षणस्य तस्य गतिर्ज्ञानमिति परिभाषार्थः। [तत्तद्वचनसामर्थ्येति।] तत्तद्वचनसामर्थ्यरूपो यो न्यायस्तत्सिद्धेयमित्यर्थः। तदेतद्दर्शयति। [तत्सामर्थ्यादिति।] अधातुग्रहणसामर्थ्यादित्यर्थः। कार्यप्रवृत्तिवेलायां शास्त्रगृहीतनिमित्तभूतस्य धर्मस्याभावे तत्तद्वचनसामर्थ्याद्भूतपूर्वं तथाविधं धर्ममादायकार्यप्रवृत्तिरिति भावः। प्रकृते च गोमत्यतेः क्विपि गोमानित्यादौ नुम्विधानकाले धातुत्वेऽपि पूर्वं विद्यमानमधातुत्वमादाय नुम् प्रवृत्तिरधातुग्रहणसामर्थ्यादिति भावः। ७७

उगिदित्यत्र बहुव्रीहित्वाद्गोमानित्यत्रापि मत्वर्थे बहुव्रीहिरिति सिद्धान्तेन बहुव्रीहिप्रसङ्गाच्चाह। [बहुव्रीहाविति।] तद्गुणेत्यत्र षष्ठीसमासात्कर्मधारये लाघवमित्याशयेनाह। [तेषामिति।] ते च ते गुणाश्च तद्गुणास्तेषां, अवयवार्थानां संविज्ञानं सम्यक्त्वेन ज्ञानमित्यर्थः। ज्ञाने सम्यक्त्वं विशदयति। [विशेष्यान्वयिनेति।] अवयवार्थानां धर्मिपारतन्त्र्येण प्रधानक्रियान्वयित्वमित्यर्थः। एवमवयवार्थमुक्त्वाऽनयोर्बाहुल्येन विविक्तविषयतां दर्शयति। [यत्रेति।] यद्यपि कैयटे संयोगोऽप्युक्तः तथाऽपि तस्यासम्बन्धताया अन्यत्र निरूपितत्वाल्लाघवाच्चाह। [समवाय सम्बन्धेनेति।] लम्बकर्णं भोजयेत्यादावयवार्थानां

प्रायस्तद्गुणसंविज्ञानम्। अन्यत्र प्रायो ऽन्यत्। लम्बकर्णचित्रगू उदाहरणे। सर्वादीनि जक्षित्यादय इति चोदाहरणे। सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा॥ ७८॥

ननु वदः सुपि क्यप् च इति चेनानुकृष्टस्य यतो भुवो भावे इत्यत्राप्यनुवृत्तिः स्यादत आह॥

चानुकृष्टं नोत्तरत्र॥ ७९॥

णमुल्यनुवर्तमाने ऽव्यये ऽयथाभिप्रेतेति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम्। अन्यथा क्त्वा चेति वदेत्।

---

भुजिक्रियानन्वयित्वेन व्यभिचारादाह। [प्राय इति।] [अन्यत्रेति।] समवायान्यसंबन्धेन सम्बन्धिन्यन्यपदार्थ इयर्थः। अस्यापि चित्रवाससं पश्येत्यादौ व्यभिचारादाह। [प्राय इति।] [अन्यदिति।] अतद्गुणसंविज्ञानमित्यर्थः। क्रमेण तयोर्लौकिकोदाहरणे दर्शयति। [लम्बकर्णेति।] चित्रगुशब्दस्याल्पाच्तरत्वेऽपि क्रमस्य बोध्यत्वाल्लम्बकर्णशब्दस्य पूर्वनिपातः। लम्बकर्णमानाय, चित्रगुमानयेतिवाक्यघटकाविमौ। आद्ये धर्मिपारतन्त्र्येणावयवार्थस्यानयनक्रियाकर्मतया अन्वयो, द्वितीयेऽनन्वयश्चेति द्वयोरेतावुदाहरणे। लौकिकोदाहरणे उक्त्वा क्रमेण शास्त्रीयोदाहरणे दर्शयति। [सर्वादीनीति।] अत्रादिशब्दस्यावयववाचित्वेन समवाय सम्बन्धेन सम्बन्धिनस्समूहस्यान्यपदार्थतया तद्गुणसंविज्ञानत्वं नानुपपन्नमिति बोध्यम्। ७८

समुच्चयार्थकापिप्रसङ्गादाह। [नन्वित्यादिना।] [अनुकृष्टस्येति।] अचो यदित्यतोऽनुवर्तमानस्येत्यर्थः। [अनुवृत्तिस्स्यादिति।] तथा च ब्रह्मणो भावः ब्रह्मभूयमितिवत् ब्रह्मभव्यमित्यपि स्यादिति भावः। चकारेणानुवर्तमानस्य परत्र सम्बन्धो नेति परिभाषार्थः। अत्र मानमाह। [णमुल्यनुवर्तमान इति। स्वादुमि णमुलित्यत इत्यर्थः। [अन्यथेति।]

तद्धि उत्तरत्रोभयोः सम्बन्धार्थम्। उदाहरणानि स्फुटानि॥ इदमनित्यम्। अत एव तृतीया च होरित्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तराऽन्तरेण इत्यत्र सम्बन्धः। लुटि च क्लृप इति सूत्रस्थेनानुवृत्त्यर्थक-सकलचकारप्रत्याख्यानेन विरुद्धेयम्। व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः॥ कुलिजाल्लुक्खौ च इति सूत्रस्थभाष्यविरुद्धा च। तत्र हि द्विगोः ष्ठंश्च इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खो ऽन्यतरस्या-मित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये

---

एतत्परिभाषाऽभावे इत्यर्थः। ज्ञापिते चारितार्थ्यमाह। [तद्धीति।] णमुल्ग्रहणमित्यर्थः। [उत्तरत्रेति।] तिर्यच्यपवर्गे इत्यादौ क्त्वाणमुलोरित्यर्थः। तथा च तिर्यक्कृत्वा तिर्यक्कृत्येति वत्तिर्यक्कारं गत इत्यत्र तिर्यक्शब्दे उपपदे कृञो णमुल्सिद्धिः। नन्वेवं षष्ठी चानादर इत्यत्र चकारेणानुकृष्टायास्सप्तम्याः स्वामीश्वरेत्यत्र सम्बन्धो न स्यादत आह। [इदमनित्यमिति।] अनित्यत्वफलं दर्शयति। [अत एवेति।] [सम्बन्ध इति।] अन्यथा तत्र विधेयाश्रवणादा-काङ्क्षावशात्तृतीयाया एव सम्बन्धः स्यात्। तथा च तदुत्तरसूत्रे कालाध्वनोरित्यत्रापि तस्या एव सम्बन्धेऽपवर्गेऽपि तेनैव तृतीयासिद्धावपवर्गे तृतीयेति व्यर्थं स्यादिति तदेव सूत्रमस्या अनित्यत्वे मानं बोध्यम्। [अनुवृत्त्यर्थेति।] अनुवृत्तिफलकेत्यर्थः। एतेनान्यफलकानां चानां न प्रत्याख्यानामिति सूचितम्। [विरुद्धेयमिति।] भगवता निरर्थकत्वेन प्रत्याख्यातानां तेषा मीदृश-फलकल्पनायां तद्विरोधस्स्पष्ट एवेति भावः। प्रत्याख्यानपरभाष्याशयमाह। [व्याख्यानादेवेति।] स्वरितेनाधिकार इत्येतन्मूलकाद्भाष्यीयादित्यर्थः। उक्तमेवार्थं द्रढयति। [कुलिजादिति।]

प्रत्याख्यातम् ॥ ७९ ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह ॥

स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

स्वरोद्देश्यके विधावित्यर्थः ॥ नोत्तरपदे ऽनुदात्तादावपृथिवीरुद्रपूषमन्थिष्विति सूत्रे पृथिव्यादिपर्युदासो ऽस्या ज्ञापकः। अन्यथा पृथिव्यादीनामनुदात्तादित्वा-

---

[प्रत्याख्यातमिति।] ठन्खयोरनेन विकल्पेन विधाने तदभावपक्षे प्राप्तस्यौत्सर्गिकस्य ठञोऽध्यर्धेति लुक्यभीष्टस्य रूपत्रयस्य सिद्धतया तदनर्थकमिति वार्तिककृता प्रत्याख्यातम्। एतत्सत्त्वे तु द्विगोष्ठंश्चेत्यत्र चकारेणानुकृष्टस्य खप्रत्ययस्योत्तरत्र सम्बन्धायोगात्तदसङ्गतिरिति भावः। ७९

बहुव्रीहिप्रसङ्गाच्चकारप्रसङ्गाच्चाह। [नन्विति।] [अनुदात्तादेरिति।] " नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिष्वि " त्यनेन पृथिव्यादिभिन्नानुदात्ताद्युत्तरपदे विधीयमानःस्वरनिषेधः इन्द्राग्निभ्यामित्यादावेव स्यात्। नतु व्यञ्जनादावुत्तरपदे। एव " मन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमास " इत्यनेनानित्यसमासेऽन्तोदात्तादेकाच- उत्तरपदात्परतृतीयादिविभक्तेर्विकल्पेन विधीयमानमुदात्तत्वं परमवाचेत्यादौ व्यञ्जनान्तोत्तरपदात्पराया विभक्तेर्न स्यादिति भावः। स्वरविधावित्यस्य स्वरकर्मकविधावित्यर्थ इति सीरदेवाद्युक्तमयुक्तम्। धर्मिग्राहकमानविरोधादित्याशयेनाह। [स्वरोद्देश्यकेति।] अत्र ज्ञापकमाह। [नोत्तरपद इति।] [अन्यथेति।] अस्या अभावे इत्यर्थः। [अनुदात्तादित्वाभावादिति।] व्यञ्जनादित्वात्तत्वाभाव इति भावः।

भावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम्। अत एव शतुरनुमो नद्य-जादी अचः कर्तृयकीत्यादावजादी अच इत्यादेश्चारिता-

---

[अप्राप्ताविति।] निषेधाप्राप्तावित्यर्थः। तथाच देवताद्वन्द्वे चेति पूर्वसूत्रेण पूर्वोत्तरपदयोरिष्टः प्रकृतिस्वरःसिद्ध इति भावः। [धर्मिग्राहकमानादिति। उक्तपर्युदासरूपादित्यर्थः। नोत्तरपद इत्यस्य स्वरनिषेधविधित्वेन स्वरकर्मकविधित्वाभावादिति भावः। [अत एवेति।] अस्येदृशार्थकत्वादेवेत्यर्थः। [चारितार्थ्यमिति।] तत्राद्यस्य, अनुम् यश्शतृ प्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिविभक्तिरुदात्ता स्यादित्यर्थः। "अच्छारवं प्रथमा जानती कृण्वते" इत्युदाहरणम्। द्वितीयस्य तूपदेशेऽजन्तानां धातूनां कर्तृयकि परे आदिरुदात्तो वेत्यर्थः। लूयते केदारःस्वयमेवेत्युदाहरणम्। यद्यस्य स्वरे विधेये व्यञ्जनमविद्यमानवदित्यर्थस्स्यात्तदाऽद्येन विभक्तेःस्वरस्य विधेयत्वात् व्यञ्जनस्या-विद्यमानवद्भावे, सर्वथा विभक्तेरजादित्वस्यैव सत्त्वेन व्यावर्त्याभावात्तत्र हलादिविभक्तिव्यावृत्त्यर्थं क्रियमाणमजादिग्रहणमनर्थकं स्यात्। तथा द्वितीयेऽपि हलन्तधातुव्यावृत्तये क्रियमाणमच इति च व्यर्थं स्यादिति भावः। नन्वेवमपि दधती दधतेत्यादौ नद्यजादिविभक्त्योरुदात्तत्वव्यावृत्तये अद्ये अन्तोदात्तादित्यनुवृत्तेराकरसम्मततया स्वरोद्देश्यक एवायं विधिरिति त्वदुक्तार्थेऽप्यजादि-ग्रहणस्याव्यावर्तकतया तदानर्थक्यस्य दुष्परिहरत्वेन कथं तत्त्वदुक्तार्थसाधकम्। कथं वा तुदद्भ्या-मित्यादौ विभक्त्युदात्तत्वव्यावृत्तिः। यदि तु स्वरोद्देश्यक एव यो विधिर्नतु स्वरप्रापकस्तथा भूतोऽस्य विषय इत्युच्यते तदा प्रकृतसूत्रविषये सर्वथैव प्रकृतन्यायाप्रवृत्त्या तुदती, तुदतेत्यादि शत्रन्तेऽन्तोदात्तत्वस्य दुर्वचत्वेन विधेर्निर्विषयत्वप्रसङ्ग इति चेन्न। अत्रार्थे उद्देश्यकोटि-प्रविष्टस्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयतायाः व्यञ्जनं न प्रतिबन्धकमित्यर्थस्यैवानेन लभा-त्तुदद्भ्यामित्यादौ व्यञ्जनस्य दान्तेऽन्तोदात्तत्वबुद्धिप्रतिबन्धकत्वाभावेऽपि भ्यामादौ विभक्ते-रजादित्वबुद्ध्यप्रतिबन्धकत्वे मानाभावात्। स्वरकर्मके विधावित्युक्तौ तु तत्रापि तस्य तदप्रति-बन्धकत्वादजादीत्यस्य व्यवर्त्यालाभ इति भावः। एवमुक्तार्थस्य सूत्रारूढत्वमुक्त्वा भाष्यारूढत्वमपि

र्थ्यम्। अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तो ऽवत्या इति स्वरो न उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः। स्पष्टं चेदं समासस्येति सूत्रे भाष्ये। उच्चैरुदात्त इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृताजुपरागेण हलो ऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह। तत्र भाष्ये ऽपि ध्वनितमेतत्॥ ८०॥

---

दर्शयति। [अत एवेति।] उक्तोऽर्थः। अस्याकर इत्यनेनान्वयः। [असिद्धत्वादिति।] स्वरविधावित्यर्थः। [स्वरो नेति।] अवतीशब्दस्यान्त उदात्त इति तदर्थात्प्रकृते च नलोपासिद्धत्वेनान्वतीशब्दत्वात्स नेति भावः। स्वरकर्मके विधावित्यर्थे तु नलोपस्यासिद्धत्वेऽपि नकारस्यानेनाविद्यमानतया तत्र स्वरापत्तिरिति भावः। [मतुबुदात्तत्वं च नेति।] यद्यप्यत्रान्तोदात्तादित्यनुवृत्त्या ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्त इत्यर्थादस्य स्वरोद्देश्यकत्वमस्ति तथाप्युक्तरीत्याऽनेन न्यायेनोदश्वित्वानित्यत्र व्यञ्जनस्य तान्तेऽन्तोदात्तत्वबुद्ध्यप्रतिबन्धकत्वेऽपि ह्रस्वान्तत्वबुद्धेरप्रतिबन्धकत्वे मानाभावात्तान्ते ह्रस्वान्तत्वाभावान्न तत्प्रवृत्तिरिति बोध्यम्। [कैयटस्त्विति।] अस्याहेत्यनेनान्वयः। नन्वनुदात्तत्वादीनामज्धर्मत्वादजुपरागेण व्यञ्जनेषु तद्धर्मावभासेऽप्यवास्तविकत्वादनुदात्तादिशब्दैस्तेषां ग्रहणे मानाभाव इत्ययुक्त एवायं कैयट इत्यत आह। [भाष्येऽपीति।] [ध्वनितमिति।] तत्रह्यनुदात्तत्वादीनामज्धर्मत्वं व्यञ्जनेषु तु सार्मीप्यमूलकमवभासमात्रमिति व्यवस्थाप्य स्वरोद्देश्यकानामनुदात्तादेरजित्यादीनां व्यञ्जनादौ व्यञ्जनान्ते च प्रवृत्तौ न कश्चिदुपायःप्रदर्शितः। तेन च प्रातिभासिकानुदात्तत्वादिधर्मवतामपि व्यञ्जनानामनुदात्तादिशब्दैर्ग्रहणमिति भाष्यकारस्सूचयतीत्याशयः। ८०

नन्वेवमपि राजदृषादित्यादौ समासस्येत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह।

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्॥ ८१॥

अस्याश्च यतोऽनाव इति सूत्रे नौप्रतिषेधो ज्ञापकः। नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः॥ न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्।

---

[एवमपीति।] उक्तपरिभाषयाऽनुदात्तादेरित्यादौ निर्वाहेऽपीत्यर्थः। [न स्यादिति।] समासस्यान्त उदात्त इति तदर्थात् षकाराकारस्य चान्तत्वाभावात्तस्य स्वरो न स्यात्। तथा च वक्ष्यमाणरीत्या तकारस्य ऌकार उदात्तःस्यादिति भावः। हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषार्थः। यद्यपि स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति हल्स्वरप्राप्तावविद्यमानवदिति वोक्तावपि श्रुतसम्बन्धेनोपपत्तावश्रुतकल्पनाया अन्याय्यत्वाद्धल इत्यर्थो व्यञ्जनमित्यर्थो वा लभ्यते। तथाप्युभयोरुपादानं स्पष्टार्थमिति बोध्यम्। ननूच्चैरुदात्त इत्यादिषु त्रिष्वच इत्यस्याजित्यस्य चानुवृत्त्या उच्चैरुपलभ्यमानोऽजुदात्तस्स चाचःस्थाने भवतीत्यर्थाद्धलस्स्वरप्राप्तेरेवाभावादियमसङ्गतेति चेन्न। तत्र षष्ठ्यन्तस्याच इत्यस्याननुवृत्त्योदात्तादिपदानामक्षु सङ्केतादाद्यदिरुदात्त इत्यर्थे हलादौ तत्तद्धलन्तरतमः कश्चिदच् स्यादिति हलस्स्वरप्राप्तिसम्भवात्। [अस्याश्चेति।] त्वर्थकोऽत्र च शब्दः। ज्ञापकत्वमुपपादयति। [नाव्यमिति।] अस्यान्यथेत्यादिः। एतदभावे इति तदर्थः। [न स्वरयोग्य इति।] उदात्तत्वादीनां स्वतोऽज्धर्मत्वेन व्यञ्जनस्य न स्वरयोग्यतेति भावः। [अन्तरतमाज्रूप इति।] नकारस्य स्थाने दन्त्यत्वादिसाम्यादुदात्तऌकारो विधीयतामित्यर्थः। तथा च तद्वारणाय प्रतिषेधस्यावश्यकत्वेन ज्ञापकत्वासम्भव इति भावः।

तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः॥ स्पष्टा चेयं समासस्येति सूत्रे भाष्ये॥ ८१॥

ननु पूरणगुणेति निषेधस्तव्यत्यपि स्यात्। दिव औदित्यौत्वं दिवेः क्विप्यपि स्यात्। तथा यतोऽनाव इति स्वरो ण्यत्यपि स्यात्। ऋदृशोऽङि गुण इति चङ्यपि स्यात्, अत आह॥

निरनुबन्धकग्रहणे न सानुबन्धकस्य॥ ८२॥

---

[निमित्तभूत द्व्यच्कत्वस्येति।] उदात्तस्वरनिमित्तभूतद्व्यच्कत्वस्येत्यर्थः। न च सन्निपातपरिभाषायाः स्वप्रवृत्तेःप्राक् स्वनिमित्तभूतो यस्सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थस्य वक्ष्यमाणतया स्वस्य तद्विघातकत्वेऽपि नोक्तपरिभाषाविरोध इति वाच्यम्। तत्र स्वातिरिक्तेति विशेषणस्य स्ववैयर्थ्यमूलकत्वेन प्रकृते चाव्यमित्यत्र यतो नाव इत्यस्य चारितार्थ्येन स्ववैयर्थ्यमूलकस्य तादृशार्थस्यात्रानाश्रयणेन सन्निपातपरिभाषाप्रवृत्तेस्सूपपादत्वादिति बोध्यम्। [अन्यत्रेति।] भाष्यादावित्यर्थः। [स्पष्टा चेयमिति।] इयमपीत्यर्थः। अपिना पूर्वपरिभाषासमुच्चयः उभयोरपि तत्र स्पष्टत्वात्। ८१

स्वरप्रसङ्गादाह। [तव्यत्यपि स्यादिति।] सर्वत्रापिस्तव्यप्रातिपदिकादिसमुच्चायकः। पूरणगुणेति निषेधः ब्राह्मणस्य कर्तव्यमित्यादाविव स्वकर्तव्यमित्यादावपि स्यादित्यर्थः। [दिवेः क्विप्यपीति।] अक्षद्यूरित्यादावित्यर्थः। तत्रान्तरङ्गत्वादूठि कृते एकदेशविकृतस्यानन्यत्वादौत्वापत्तिरिति भावः। द्वितीयपरिभाषाविषये आह। [चङ्यपीति।] तथा सति ऋदृशोऽङीत्यतोऽङीत्यनुवर्तमाने श्वयतेर इत्यनेन विधीयमानोऽकारः अशिश्वियदित्यत्रापि स्यादिति

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

वामदेवाड्ड्यड्ड्यौ इति सूत्रे ड्यड्ड्यतोर्डित्वमनयोर्ज्ञापकम्। तद्धि ययतोश्चातदर्थे इत्यत्र तयोरग्रहणार्थम्॥ नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः। एवं चावामदेव्ये ऽव्ययपूर्वपदप्रकृतिस्वर एव भवति॥ तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः॥ एते च प्रत्ययाप्रत्ययसाधारणे, दिव

---

भावः। क्रमेणानयोर्ज्ञापकमाह। [ड्य ड्यतोर्डित्त्वमिति।] आद्ये डित्त्वं प्रथमपरिभाषाया द्वितीये तद्द्वितीयपरिभाषायाश्च ज्ञापकमिति भावः। तदेतदुपपादयति। [तद्धीति।] उभयत्र डित्त्वमित्यर्थः। [तयोरिति।] ड्य ड्यतोरित्यर्थः। आद्येनाद्यस्य द्वितीयेन द्वितीयस्य च क्रमेण ग्रहणार्थमिति भावः। अन्यथा क्रमादुभयेनोभयग्रहणेऽवामदेव्यमित्यत्र ययतोरिति स्वरापत्तिरिति भावः। ज्ञापनोत्तरं तदापत्तिं वारयति। [एवञ्चेति।] निरनुबन्धकेन येन सानुबन्धकस्य ड्यस्य तदनुबन्धकेन यता ड्यनुबन्धकस्य ड्यतश्चाभ्यामग्रहणे चेत्यर्थः। [स्वर एवेति।] तत्पुरुषे तुल्यार्थेति सूत्रेणेति भावः। एवेन ययतोरित्यादिविहितस्वरव्यावृत्तिः। स्पष्टत्वाद्राद्यस्यार्थमुपेक्ष्य द्वितीयस्यार्थमाह। [तन्मात्रेति।] तदनुबन्धकेत्यत्र सप्तपर्णादौ वीप्सावदवधारणान्तर्भावेण वृत्तिस्वीकारादीदृशार्थलाभ इति भावः। स एवानुबन्धो यस्येति विग्रहः। अतदनुबन्धकस्येत्यत्रापि पूर्ववदेव वृत्तिः। न स एवानुबन्धो यस्येति विग्रहः। तन्मात्रानुबन्धकभिन्नस्येत्यर्थः। तत्फलितमाह। [सचान्यश्चेति।] धर्मिग्राहकमानादनयोः प्रत्ययमात्रविषयकतेति न्यासकाराद्युक्तिनिरासायाह। [प्रत्ययाप्रत्ययग्रहण इति।] अत्र मानमाह। [दिव औदित्यादाविति।] भाष्ये इति शेषः। तत्र हि "दिव औत्वे धातुप्रतिषेध" इति वार्तिकम् निरनुबन्धक परिभाषया प्रत्याख्यातम्। क्विबन्तो दिव्धातुरुदित्त्वात्सानुबन्धकः। प्रातिपदिकं त्वव्युत्पन्नत्वान्निरनुबन्धकमिति

औत् इत्यादौ संचारितत्वात्। वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टमौङ आप इत्यत्र भाष्ये। येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात्, तेन जश्शसोरित्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्।

---

तदाशयः। दिव्शब्दस्य "दिवेर्डिवि" रित्यौणादिकेन व्युत्पन्नत्वाङ्गीकारे द्वितीयपरिभाषया धातोरेव ग्रहणं स्यादिति तु न शङ्क्यम्। अनुबन्धविशिष्टोच्चारण एव तत्परिभाषाप्रवृत्तेर्वक्ष्यमाणत्वात्। न च व्युत्पत्तिपक्षे उत्सृष्टानुबन्धग्रहणे वनो र चेत्यादाविव सामान्यग्रहणाद्धातुग्रहणं दुर्वारमिति वाच्यम्। अव्युत्पत्तिपक्षस्यैव भगवतस्सिद्धान्तत्वेनादोषात्। अत्र च निरनुबन्धकपरिभाषया धातुग्रहणप्रत्याख्यानपरं निरुक्तं भाष्यमपि मानं बोध्यम्। अतिप्रसङ्गनिरासायाह। [वर्णग्रहण इति।] [औङ आप इति।] तत्र हि ङकारस्तूच्चारणार्थो वर्णग्रहणमिति श्लोकवार्तिक व्याख्यावसरे तथासति निरनुबन्धकपरिभाषया प्रथमाद्विवचनस्यैव ग्रहणं स्यादिति दोषमुद्भाव्य नैषा वर्णग्रहणेषु प्रवर्तत इत्युक्तम्। धर्मिग्राहकमानादिति तदाशयः। नन्वेवं जश्शसोरित्यादौ शस्पदेन निरनुबन्धकस्य तद्धितशस एव ग्रहणं स्यादत आह। [येनेति।] द्वितीयपरिभाषाविषये आह। [द्व्यनुबन्धकत्वेति।] एषेत्यत्र जातावेकवचनम्। [धर्मिग्राहकमानादिति।] द्व्य ङ्यतोर्डित्करणरूपादित्यर्थः। परिभाषाद्वये ग्रहण इत्यस्योच्चारणे सतीत्यर्थादपीदृशविशेषलाभ इति बोध्यम्। अस्ति च प्रागुक्तेषु पूरणगुणेत्यादिषु तकाररूपानुबन्धेन सानुबन्धके तव्यति तकारस्यानुच्चारणमेवमुकाररूपानुबन्धेन सानुबन्धके दिवि तस्यानुच्चारणं तथा ऋदृशोऽङीत्यादौ चकाररूपानुबन्धेन द्व्यनुबन्धके च्डि चकारस्यानुच्चारणमिति तत्रानयोः प्रवृत्तिः। जश्शसोरित्यादौ तु शकाररूपानुबन्धेन सानुबन्धके शसि तस्यानुच्चारणाभावान्न निरनुबन्धक परिभाषाप्रवृत्तिरिति भावः। [तेनेति।] उक्तार्थाङ्गीकारेणेत्यर्थः। द्वितीयपरिभाषाविषये विशेषान्तरमाह।

एवमन्त्या अन्यतरानुबन्धोच्चारण एव। तेन वनोर चेत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः। एकानुबन्धकग्रहणे संभवतीति त्वर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः॥ ८२॥ ॥ ८३॥

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिरप्क्लपमित्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह॥

**क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यातिवर्तन्ते॥ ८४॥**

---

[एवमिति।] [अन्त्येति।] तदनुबन्धक परिभाषेत्यर्थः। [उच्चारण एवेति।] धर्मिग्राहकमानात्तदनुबन्धकग्रहणे सतीति तदर्थाचेति भावः। [ङ्वनिप्क्वनिपोरिति।] तयोरपीत्यर्थः। अपिना वनिप्सङ्ग्रहः। नन्वर्थवद्ग्रहण इतिवत् तदनुबन्धग्रहण इत्यस्यैकानुबन्धकग्रहणे सम्भवतीत्यर्थे कथमीदृशविशेष लाभः। कथं वा वनो रचेत्यत्र ङ्वनिप् क्वनिपोर्ग्रहणमित्यत आह। [एकानुबन्धेति।] [न भाष्यादिसम्मत इति।] तथाहि। मतुवसोरुसम्बद्धौच्छन्दसीति सूत्रे वन उपसङ्ख्यानमिति वार्तिकस्य प्रातरित्व इति क्वनिबन्तमुदाहृतम्। अस्येदृशार्थकत्वेऽनेन तत्र वनिप एव ग्रहणात्तदुदाहरणासङ्गतिरिति बोध्यम्। ८२ ८३

निषेधप्रसङ्गादाह। [नन्विति।] [स्वार्थिकत्वादिति।] "कुटीशमीशुण्डाभ्योर" इत्यनेन कुटीशब्दाद्विहितस्य रस्येति शेषः। [न्यायप्राप्तत्वादिति।] यो यत्र स तद्धर्मभागिति न्यायेत्यर्थः। [पुंस्त्वानुपपत्तिरिति।] कुटीशब्दस्य स्त्रीलिङ्गत्वेन तत्प्रकृतिक स्वार्थिकप्रत्ययान्ते पुंस्त्वानुपपत्तिरिति भावः। [नपुंसकत्वैकवचनयोरिति।] अप्शब्दस्य स्त्रीलिङ्गत्वान्नित्यबहुवचना-

णचः स्त्रियामितिसूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका। अन्यथा कर्मव्यतिहारे णच् स्त्रियामिति स्त्रियामेव विधानात्किं तेन॥ स्पष्टा चेयं बहुव्विधायके भाष्ये॥ ८४॥

ननु सुपथी नगरीति युवोरनाकाविति सूत्रभाष्योदाहृते इनः स्त्रियाम् इति कप्स्यादत आह॥

समासान्तविधिरनित्यः॥ ८५॥

प्रतेरंश्वादयस्तत्पुरुषे इत्यन्तोदात्तत्वायांश्वादिषु राजञ्शब्दपाठो ऽस्या ज्ञापकः। अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन॥ द्वित्रिभ्यां पाद्दन्मूर्द्धसु इति

---

न्तत्वाच्च तत्प्रकृतिककल्पबन्तेऽनयोरनुपपत्तिरिति भावः। परिभाषायां क्वचिदित्यनेन बहुषु तदनुवृत्तिस्सूचिता। प्रकृतित इत्यात्राद्यादित्वात्षष्ठ्यन्तात्तसिः। प्रकृतिसम्बन्धिलिङ्गवचनान्यतिवर्तन्ते। अतिक्रामन्तीत्यर्थः। अत्र मानमाह [अन्यथेति।] एतदभावे इत्यर्थः। [किं तेनेति।] तत्र स्त्रियामित्यस्याभावेऽपि णचस्त्रियामेव विधानात्तत्प्रकृतिकस्वार्थिकाञन्तस्यापि स्त्रियां वृत्तिसम्भवात्किं तत्र स्त्रियामित्यनेनेत्यर्थः। ज्ञापकस्य सामान्यापेक्षत्वाद्वचनांशेऽपि सिद्धिर्बोध्या। ८४

तद्धितप्रसङ्गादाह। [नन्विति।] [सुपथीति।] शोभनःपन्था यस्येति विग्रहः। [अन्तोदात्तत्वायेति।] प्रतिकूलो राजा प्रतिराजेत्यादावन्तोदात्तत्वायेत्यर्थः। [अन्यथेति।] एतदभाव इत्यर्थः। [टचैवेति।] राजाहस्सखिभ्यष्टजिति टचि चित्स्वरेणैवान्तोदात्तत्वे सिद्धे इत्यर्थः। [किं तेनेति।] अंश्वादिषु राजञ्शब्दपाठेनेत्यर्थः। ८५

स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८५ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्तथोपादास्तेत्यत्रात्त्वे कृते स्थाध्वोरिच्च इतीत्त्वं प्राप्नोत्यत आह ॥

संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥

संनिपातो द्वयोः संबन्धस्तन्निमित्तो विधिस्तं संनि-

---

इनस्त्रियामिति कप इन्नन्तसन्निपातविघातकत्वात्तत्प्रसङ्गेनाह। [नन्विति।] [नुमि कृते इति।] विभक्तिनिमित्तके नुमि कृते इत्यर्थः। नन्वनैमित्तिकत्वेनान्तरङ्गषट्संज्ञादृष्ट्या बहिर्भूतसर्वनामस्थाननिमित्तकत्वेन बहिरङ्गस्य नुमोऽसिद्धत्वात्कथं षट्संज्ञाप्राप्तिरिति चेन्न। संज्ञानां विधिनिमित्तनिमित्तकत्वेन लुगर्थायास्संज्ञाया अपि सर्वनामस्थाननिमित्तकत्वान्नुमपेक्षया तस्या अन्तरङ्गताया वक्तुमशक्यत्वात्। [आत्वे कृते इति।] उपाङ्पूर्वाद्दीङ् धातोर्लुङि च्लौ सिचि, मीनातिमिनोतीत्यादिना आत्वे कृते इत्यर्थः। एतदुत्तरं घुत्वादिति शेषः। [इत्वं प्राप्नोतीति।] कित्त्वसहितमित्वं प्राप्नोतीत्यर्थः। परिभाषाश्रयणे तु एज्विषये आत्वविधानादेज्विषयतायाश्चाकित्त्व एव सत्त्वादकित्त्व सन्निपातेन जायमानमात्वं कित्त्वस्य तत्सन्नियुक्तेत्वस्य च निमित्तं न भवतीति न दोष इति भावः। परिभाषार्थमाह। [सन्निपात इत्यादिना।] पौर्वापर्यलक्षण एव सम्बन्धोऽत्र सन्निपातशब्देन गृह्यत इति प्राचीनोक्ते रयुक्ततां ध्वनयन्नाह। [द्वयोस्सम्बन्ध इति।] पूर्वपरयोर्विशेषणविशेष्ययोश्चेत्यर्थः। परिभाषायां लक्षणशब्दो निमित्तवाचीत्याशयेनाह। [तन्निमित्त इति।] सः=द्वयोस्सम्बन्धो निमित्तं यस्येति बहुव्रीहिः। विधिशब्दे कर्मणि किः। विधेयं कार्यमित्यर्थः। परिभाषायां तद्विघातस्येत्यत्र तं विहन्तीति तद्विघात इति कर्मण्यण्। तदाह। [तं सन्निपातमिति।] तथा च पूर्वपरयोर्विशेषणविशेष्ययोर्वा द्वयोस्सम्बन्धं निमित्तीकृत्य जायमानं कार्यं तद्विघातकस्य कार्यान्तरस्य निमित्तं न भवतीति परिभाषार्थः। यत्तु वाचि ह्रस्वश्चेत्येव सिद्धे ङिति ह्रस्वश्च वामीति सूत्रद्वयकरणमत्र ज्ञापकम्।

पातं यो विहन्ति तस्यानिमित्तम्॥ उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा। अत एवात्र संनिपातशब्देन न पूर्वपरयोः संबन्ध एव किंतु विशेष्यविशेषणसंनिपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे ऽपि पिति कृति इति तुन्न। प्रातिपदिकाजन्तत्वसंनिपातेन जातस्य ह्रस्वस्य तदविघातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव॥

---

तद्धि श्रीणाम् भ्रूणमित्यत्र नुडर्थम्। तच्चैकेनापि योगेन सिध्यति। ओसि तु नदीकार्याभावान्न दोषः। तथा च योगद्वयकरणमनर्थकं सदेनां ज्ञापयति। ज्ञापितायां त्वस्यामजादिप्रत्ययसन्निपातं निमित्तीकृत्य जायमानाया नदीसंज्ञाया स्तत्सन्निपातविघातकनुट्प्रवृतिं प्रत्यनिमित्ततया नुडागमो न स्यादिति। तदयुक्तम्। न्यायसिद्धेऽर्थे ज्ञापकान्तरानुसरणस्यायुक्तत्वाद्वक्ष्यमाणदोषगणापत्तेश्चेत्याशयेनाह। [उपजीव्येति।] उपजीवयतीत्युपजीव्यमिति णिजन्ताद्दहलोरिति ण्यत्। [अत एवेति।] अस्य न्यायमूलकत्वादेवेत्यर्थः। [सन्निपातोऽपीति।] अन्यथा धर्मिग्राहकसाजात्यात्पौर्वापर्यलक्षणस्यैव तस्य ग्रहणं स्यादिति भावः। [अत एवेति।] विशेषणविशेष्यभावरूपसम्बन्धस्याप्यत्र सन्निपातशब्देन ग्रहणादेवेत्यर्थः। [ग्रामणिकुलमित्यादाविति।] व्यस्ते समस्ते चेत्यर्थः। व्यस्ते आह। [नपुंसकह्रस्वत्वेऽपीति।] अपिना षष्ठीसमासे इको ह्रस्व इति ह्रस्वसमुच्चयः। तत्रेगन्तपूर्वपदसन्निपातनिमित्तकस्य ह्रस्वस्यानया परिभाषया तद्विघातकतुगनिमित्तकत्वमिति भावः। [प्रातिपदिकाजन्तत्वसन्निपातेनेति।] प्रातिपदिकस्याजन्तत्वविशेषणेन य स्सम्बन्धस्तेनेत्यर्थः। [तदविघातकत्वादिति।] तादृशसन्निपातविघातक तुगनिमित्तकत्वादित्यर्थः। तुकस्तद्विघातकत्वं दर्शयति। [तुकीति।] [अजन्तत्वविघात इति।] अजन्तत्वरूपविशेषणसन्निपातस्य विघात इत्यर्थः। न च ह्रस्वस्य तुक्यपि यदागमन्यायेन

न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतया ऽसिद्धत्वम्। अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्। किंच षत्वतुकोरसिद्ध इत्येतद्बलात्कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः। सर्वविधसंनिपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम्। न हि प्रत्ययः पूर्वपरसंनिपातनिमित्तकः। स एव च संनिपात-

---

तुग्विशिष्टस्याज्ग्रहणेन ग्रहणान्न तद्विघात इति वाच्यम्। आने मुगिति मुग्विधानसामर्थ्येन तन्न्यायस्यानित्यत्वादिहाप्रवृत्तेः। अस्यान्यथा सिद्ध्या नात्र विशेषणविशेष्यभावसन्निपातग्रहणमिति कैयटाद्युक्तिं खण्डयति। [न चेति।] [अर्थकृतेति।] नपुंसकत्वरूपार्थकृतेत्यर्थः। तदाश्रयणमतेऽप्याह। [किञ्चेति।] [अप्रवृत्तेरिति।] नाजानन्तर्य इति निषेधेन तदसत्त्वेऽन्तरङ्गपरिभाषाया अनित्यत्वेन वा तद्विषये तदप्रवृत्तेरिति भावः। अन्यथा अधीत्य वृत्रहभिरित्यादौ तथैव पदान्तपदाद्योरेकादेशस्य नलोपस्य चासिद्धत्वे सिद्धे आद्ये तुग्ग्रहणमन्त्ये कृति तुग्ग्रहणञ्चानर्थकं स्यादिति भावः। एवमत्र फलं प्रदर्श्य, प्रमाणमाह। [सर्वविधेति।] उभयविधेत्यर्थः। [वर्णाश्रय इति।] प्रातिपदिकस्यादन्तत्वरूपसम्बन्धनिमित्तक इत्यर्थः। [वर्णविचालस्येति।] वर्णलोपस्येत्यर्थः। अत्र तद्ग्रहणे वार्तिकोक्तेरसाङ्गत्यं दर्शयति। [न हीति।] [प्रत्यय इति।] दाक्षिरित्यत्रात इञित्यनेन विहित इञ् प्रत्यय इत्यर्थः। [पूर्वपरसन्निपातनिमित्तक इति।] तथा च तस्यैवात्र सन्निपात शब्देन ग्रहणेऽत्र तादृशसन्निपातस्यासत्त्वात्परिभाषाप्रसक्तेरेवाभावेन परिभाषादोषगणनप्रस्तावे तदुक्तिरसङ्गता स्यादिति भावः। ननु वार्तिककृता तथोक्तावपि भाष्यकृता उपेक्षित एवायमर्थः। अत एवाग्रे न प्रत्ययस्सन्निपातनिमित्तक इत्याशङ्क्य, अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति समाहितम् भगवतेत्याशङ्क्य तस्यैकदेश्युक्तित्वान्न तद्भाष्यं

शब्देन गृह्यत इति मत्वा न प्रत्ययः संनिपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः। किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम्॥ ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे

---

प्रमाणमित्याह। स एव हीति। पूर्वपरलक्षणसन्निपात एवेत्यर्थः। एवकारेण विशेषणविशेष्यभावरूपसन्निपातनिरासः। [मत्वेति।] अनेनोक्ताशयमजानानस्यैकदेशिन इयं शङ्केति सूचितम्। [तदभ्युपेत्यैवेति।] स एवात्र सन्निपातशब्देन गृह्यत इत्यमुमर्थमङ्गीकृत्यैवेत्यर्थः। [एकदेशिनोक्तमिति।] तथा च शङ्कासमाधानयोरुभयोरप्येकदेश्युक्तित्वेन न तद्भाष्यमुक्तार्थानाश्रयणे मानमिति भावः। ननूक्तशङ्कासमाधानपरभाष्यस्य तद्वार्तिकाशयवर्णनपरतया वार्तिकोक्तार्थे अरुचिप्रदर्शनपरतया वा योजनेनैत्रोपपत्तावेकदेश्युक्तित्वकल्पनमयुक्तमत आह। [किञ्चैवमिति।] वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तमिति वार्तिकस्य प्रत्ययसन्निपातप्रयुक्ता अङ्गसंज्ञा प्रकृतिसम्बन्धिवर्णविनाशकयस्येति लोपं प्रति निमित्तं न स्यादित्याशयकत्वे समुदायाश्रयप्रत्ययस्थलेऽप्यङ्गसंज्ञाया लोपनिमित्तकत्वानापत्त्या प्रत्ययांशे वर्णाश्रयत्वविशेषणमनर्थकमिति तदज्ञानेन तस्य तादृशाशयवर्णनपरं भाष्यमेकदेशिन एवेति भावः। तदेतदाह। [शैवो, गार्ग्य इति।] शिवादिभ्योऽण् गर्गादिभ्यो यञ् स्त्रीभ्यो ढगित्यादिभिर्विहित प्रत्ययस्थलेऽपीत्यर्थः। [वैयर्थ्यमिति।] सामान्यतः प्रत्ययो वर्णविचालस्यानिमित्तमित्येव वाच्ये वर्णाश्रय इति विशेषणं व्यर्थमित्याशयः। ननूक्तरीत्या तुग्विषये सर्वथा बहिरङ्गपरिभाषाया अप्रवृत्तावत्र च विशेषणविशेष्यभावरूपसन्निपातस्यापि ग्रहणे ग्रामणि कुलमित्यादौ तुग्वारणस्यैतत्परिभाषामात्रसाध्यतया कृन्मेजन्त इति सूत्रे ह्रस्वस्येति सूत्रे च प्रकारान्तरेण तद्वारणं भगवतोऽसङ्गतं स्यादत आह। [ग्रामणि कुलमित्यादिना।] [उत्तरपद निमित्तके ह्रस्वत्व इति।] ग्रामण्यः कुलं, ग्रामण्यः पुत्र

यथाकथंचिद् बहिरङ्गपरिभाषयापि वारणं संभवतीति कृन्मेजन्त इत्यत्र ह्रस्वस्य पितीति सूत्रे चैकदेशिना तया परिभाषया तुग्वारितो भाष्ये। अत एव परिभाषाफलत्वेनेदमुक्तं कृन्मेजन्त इति सूत्रे वार्तिककृतेति केचित्॥ संनिपातलक्षणविधित्वमस्या लिङ्गम्। स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः संनिपातस्तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति॥

---

इति षष्ठी समासे इको ह्रस्वोऽङ्य इति ह्रस्वत्वे इत्यर्थः। नाजानन्तर्य इति निषेधस्य जागरूकत्वादाह। [यथा कथंचिदिति।] सर्वथा निषेधार्थानाश्रयणेन यत्र बहिरङ्गेऽन्तरङ्गे वा अचोरानन्तर्यं तत्रैव तत्प्रवृत्तिरिति नात्र तत्प्रवृत्तिरित्याशयेन वेत्यर्थः। [परिभाषयापीति।] अपिरेतत्परिभाषासमुच्चायकः। [संभवतीति।] न तु वास्तवं वारणमिति भावः। अनेन समस्ते घटितघटकनिमित्तकत्वरूपबहिरङ्गान्तरङ्गभावस्य सत्त्वाद्यथाकथंचित्तया वारणसंभवेऽप्यसमस्ते ह्रस्वत्वे सर्वथा तया वारणासम्भवात्तत्र तद्वारणायात्र निरुक्तसन्निपातस्यापि ग्रहणमावश्यकमिति सूचितम्। [एकदेशिनेति।] नाजानन्तर्य इति निषेधापरिज्ञानाद्व्यस्ते कथंचिदपि तद्विषयत्वाभावाच्च तया तुग्वारणपरस्य तद्भाष्यस्यैकदेश्युक्तित्वमिति भावः। [अत एवेति।] समस्ते ग्रामणिपुत्र इत्यादौ कथंचिद्बहिरङ्गपरिभाषया वारणसंभवेऽप्यसमस्ते तया सर्वथा वारणासम्भव इत्याशयेनैवेत्यर्थः। [परिभाषाफलत्वेनेति।] सन्निपातपरिभाषाफलत्वेनेत्यर्थः। [इदमिति।] समासव्याससाधारणं ग्रामणिकुलमित्येतदेवोक्तम्। न तु ग्रामणिपुत्र इत्यादीत्यर्थः। [केचिदिति।] भाष्यतत्त्वविद इत्यर्थः। एवं परिभाषाफलं प्रदर्श्य, परिभाषाया लिङ्गकत्वनियमात्तदुपस्थापकं लिङ्गमाह। [सन्निपातलक्षणविधित्वमिति।] तस्य लिङ्गत्वकथनेन फलितमर्थमाह। [स्वप्रवृत्तेःप्रागिति।] सन्निपातलक्षणविधिप्रवृत्तेःप्रागित्यर्थः। [स्वनिमित्तभूत इति।] अत्र उत्तरत्र च स्वशब्देन सन्निपातलक्षणविधेरेव ग्रहणम्। सर्वत्र स्वेन लेशतस्तद्विघातस्यानिवार्यत्वादाह। [स्वातिरिक्तशास्त्रस्येति।]

नन्वेवं रामायेत्यादौ सुपि च इति दीर्घानापत्तिः। अदन्ताङ्गङेसंनिपातेन जातस्य यादेशस्य तदविघातकत्वात्॥ न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र संनिपातविघात इति वाच्यम्। आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः। किं चान्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वे

---

स्वेन लेशतस्तद्विघातेऽपि स्वप्रवृत्त्युत्तरं लेशतोऽनुवर्तमानसन्निपातसर्वांशविधातकशास्त्रान्तरस्य स्वयमनिमित्तमित्यर्थः। लोकेऽप्युपजीव्योपजीवकभावस्थले उपजीवकेनोपजीव्यस्य लेशतो विघातस्य नान्तरीयकतया तदभ्युपगमेऽपि स्वातिरिक्तसर्वांशतद्विरोधिन एव स्वस्य निमित्ततायां अन्याय्यत्वलाभादस्येदृशार्थकत्वमुचितमिति भावः। परिभाषाङ्गीकारे दोषमाशङ्कते। [नन्वेवमिति।] [तदविघातकत्वादिति।] तादृशादन्ताङ्गङे सन्निपातविघातकदीर्घविध्यनिमित्तत्वादित्यर्थः। जातिपक्षेऽपि तपरनिर्देशेषु सर्वत्र व्याप्यजातेरेव निर्देशाद्दीर्घे सति ह्रस्वत्वसमानाधिकरणात्वजातेर्विनाशाददन्तत्वरूपविशेषणसन्निपातस्य विनाशः स्पष्ट इति भावः। [यञादित्वसापेक्षेति।] एतेन परनिमित्तकत्वेन दीर्घस्य बहिरङ्गत्वमिति सूचितम्। तथैव वाच्ये एवमुक्तिस्तु बह्वपेक्षत्वेन बहिरङ्गत्वमितिमतसाधारण्येन तत्त्वसूचनायेति बोध्यम्। [असिद्धत्वादिति।] अत्र दीर्घस्यासिद्धत्वं यादेशदृष्ट्या, न तु परिभाषादृष्ट्या। तस्या अन्तरङ्गतायां दुर्वचत्वात्। परिभाषादृष्ट्या असिद्धत्वेऽपि यादेशदृष्ट्या सिद्धत्वेन परिभाषाप्रवृत्तेर्दुर्वारत्वाच्च। नन्वारोपशास्त्रसार्थक्यान्यथानुपपत्त्या शास्त्रबोधितस्यारोपस्यापि कार्यप्रवृत्तिनिवृत्त्यन्यतरनियामकत्वस्यावश्यमभ्युपेयतया इदमयुक्तमत आह। [किञ्चान्तरङ्ग इति।] ननु सन्निपातलक्षणविधित्वमेव ह्यस्या लिङ्गम्। ततश्च लक्ष्यप्रवृत्तेः पूर्वं वाक्यार्थबोधकाल एवैषा परिभाषा ङेर्य इत्येतच्छास्त्रेणैकवाक्यतापन्ना सती यादेशस्य तदीयसन्निपातविघातकविधिं प्रति निमित्तत्वाभावं बोधयतीति तदानीमन्तरङ्गभूतयादेशदृष्ट्या तदेकवाक्यतापन्नपरिभाषादृष्ट्या च बहिरङ्गत्वेनासिद्धतया यत्र सन्निपातविघाताभावबुद्धिस्तत्र

ऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः। किं चातिदेशिकसंनिपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपे ऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसंनिपातविघाताभावात्तत्रैतस्यातिव्याप्तिपरकृन्मेजन्त इति सूत्रस्थभाष्यासंगतिः। संनिपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेतर्ह्यत्रासिद्धत्वमपि कथमिति विभावय।

---

तथाबोधयितुमशक्यतया दीर्घविधावप्रवृत्तयाऽनया परिभाषया पश्चादसिद्धत्वाभाववतोऽपि तस्य निवृत्त्ययोगादिदमयुक्तमेवेत्यत आह। [किञ्चातिदेशिकेति।] तत्तच्छास्त्रसार्थक्यान्यथाऽनुपपत्त्या, आहर्यारोपस्याप्यन्यत्र कार्यप्रवृत्तिनियामकत्वेऽप्यत्र प्रमाणान्तरविरोधात्तदभाव इति भावः। तदेतद्दर्शयति। [भाष्यासङ्गतिरिति।] [एतदप्रवृत्ताविति।] सन्निपातपरिभाषाया अप्रवृत्तावित्यर्थः। [स्थानिवत्त्वेनेति।] आनुमानिकस्थानिवद्भावेन सन्निपातलाभ इति भावः। श्रौतस्थानिवद्भावेन संबुद्धित्वं तु न भवति। आद्यार्थकानल्विधावित्यनेन निषेधात्। प्रत्ययलक्षणेनापि न संबुद्धित्वम्। एङ्ह्रस्वादिति सूत्रे हल एव प्राधान्येन वर्णाश्रये नास्ति प्रत्ययलक्षणमित्यनेन तन्निषेधादिति बोध्यम्। [भाष्यासङ्गतिरिति।] अस्य कृन्मेजन्त इति सूत्रस्थेत्यादिः। यदि तु स्थानिवद्भावेन सन्निपातविघाताभावबुद्धिरादेशस्य लुक्प्रवृत्त्यनन्तरमेवेति प्रवृत्तिकालिकं तद्विघातमादाय तद्विषये परिभाषाप्रवृत्तिर्दुर्वारा। बहिरङ्गविषये तु लक्ष्ये प्रवृत्तिमन्तरैव बहिरङ्गत्वेन ज्ञातस्याविद्यमानताबुद्धौ कथमपि तद्विघाताभावादप्रवृत्तिरेवैतस्या इति वैजात्येनैतद्भाष्योपपत्तेरातिदेशिकसन्निपातविघाताभावेऽपि वास्तविकसन्निपातविघातेन परिभाषाप्रवृत्तिरित्यर्थे नेदं भाष्यं मानमित्युच्यते। तदा "यादेश स्सुपिचेति दीर्घत्वस्ये" तिप्रकृतविषये परिभाषाया अतिव्याप्तिप्रदर्शनपरमेव तत्सूत्रस्थं भाष्यं मानमिति बोध्यम्। [अशास्त्रीयत्वादिति।] तासौ नित्यानित्यत्ववत्सन्निपातस्याप्यशास्त्रीयत्वान्न तस्य स्थानिवत्त्वेनानयनं शक्यमिति भावः। [अत्रेति।] अशास्त्रीये सन्निपातविघाताभावे इत्यर्थः। [असिद्धत्वमपीति।] बहिरङ्गासिद्धत्वमपीत्यर्थः। [कथमिति।]

अशास्त्रीये ऽसिद्धत्वाप्रवृत्तेरीदूदेत् इति सूत्रे कैयटेन स्पष्टमुक्तत्वात्। एवं च पूर्वत्रासिद्धीये ऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्। न। कष्टाय इति निर्देशेनैतस्या अनित्यत्वात्॥

ययोः संनिपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपादानमपेक्षितामिति तु नाग्रहः।

---

अत एव सन्निपातपरिभाषादोषनिरूपणावसरे भगवता पुग्घ्रस्वत्वस्य, अदीदपदित्युक्तम्। अन्यथा अन्तर्भूतणिनिमित्तकत्वेनान्तरङ्गपुगागमदृष्ट्या बहिर्भूतचङ्निमित्तकत्वेन बहिरङ्गस्य ह्रस्वस्यासिद्धत्वात्तत्र सन्निपातविघातकत्वज्ञानाभावेन परिभाषाया अप्रवृत्त्या तदसङ्गतिःस्पष्टैव। भाष्येऽस्यार्थस्य कण्ठतोऽनुक्तत्वादाह। [कैयटेनेति।] [एवं चेति।] आरोपितसन्निपातविघाताभावेऽपि वास्तविकसन्निपातविघातमादायैतत्परिभाषाप्रवृत्तेरुक्तप्रमाणसिद्धत्वे चेत्यर्थः। [भवत्येवेति।] अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीयः। गवाक्ष इति भाष्यप्रयोगेण, एचोऽ यवायाव इत्यादि सौत्रप्रयोगेण च परिगणितातिरिक्तविषयेऽपि परिभाषाया अप्रवृत्तेर्ध्वननादिति तदाशयः। अन्यथा तत्राद्ये अवङ्गादेशोत्तरं सवर्णदीर्घस्य द्वितीये उत्वोत्तरं गुणस्य पूर्वरूपस्य चानया परिभाषया अप्रवृत्तौ तदसङ्गतिरिति बोध्यम्। पूर्वत्रासिद्धीयेऽपि कार्ये परिभाषाप्रवृत्तौ फलं तु दधिमध्वित्यादौ नब्विषयस्यानिसन्तस्येत्यनेन प्रवृत्तमाद्युदात्तत्वामाश्रित्य प्रवृत्तस्योदात्तादनुदात्तस्य स्वरित इत्यस्य शेषनिघातप्रयोजकत्वाभावः। स्पष्टं चेद "मनुदात्तं पदमेकवर्ज्य" मिति सूत्रे शेखरे। ननु ययोसन्निपातः कार्यस्य निमित्तं तयो स्सन्निपातलक्षणविधावुपादान एवैषा परिभाषा प्रवर्तते। यथा घेर्ङितीतिसूत्रे घिङितोरुपादानादेषा परिभाषा गुणस्याव्ययसंज्ञाद्वारा लुकं प्रत्यनिमित्ततां बोधयति। प्रकृतेत्वत इत्यस्य ङेर्य इति सूत्रेऽनुपादानान्नायमेतत्परिभाषाविषय इत्यनया परिभाषया रामायेत्यत्र सुपि चेति दीर्घानापत्तिशङ्का अनित्यत्वेन तत्समाधानं चायुक्तमत आह। [ययोस्सन्निपातस्येति।] [उपादानमिति।]

अत एव दाक्षिरित्यत्राकारान्तप्रकृतिसंनिपातनिमित्ताङ्ग-संज्ञा अनया परिभाषयाल्लोपस्य निमित्तं न स्यादित्या-शङ्क्यानित्यत्वेन समाहितं कृन्मेजन्त इति सूत्रे भाष्ये, न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति ॥ न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासंगतिः। अनया परिभाषया लुङ्मा भूत्। अव्ययत्वं तु स्यादेव। लुका हि तदीय-संनिपातस्य विघातो नाव्यसंज्ञया। संज्ञाफलं त्वकच् स्यादिति वाच्यम्। एतदुदाहरणपरभाष्यप्रामाण्येन

---

अस्य विशिष्येत्यादिः। उक्तमर्थं द्रढयति। [अत एवेति।] तदनाग्रहादेवेत्यर्थः। [समाहितमिति।] अन्यथा शङ्काग्रन्थस्यात्रैतदंशार्थापरिज्ञानेन प्रवृत्ततया एकदेश्युक्तित्वेन योजनेऽपि तथैव समाधेर्वक्त-व्यतया अनित्यत्वेन समाधानमसङ्गतं स्यादिति भावः। सन्निपातलक्षणविधौ विशिष्यतदनाश्रयणमेव दर्शयति। [नहीति।] अत्र विशेषं वक्तुं भाष्यविरोधमाशङ्कते। [न चेति।] [इत्यादाविति।] आदिना चिकीर्षवे इत्यस्य सङ्ग्रहः। [अव्ययसंज्ञाया इति।] कृन्मेजन्त इत्यनेन प्राप्ताया इत्यर्थः। कुम्भकारेत्यणन्तम्। आधिरित्यत्राङ्पूर्वाद्धाञ उपसर्गे घोःकिरिति किप्रत्ययः। चिकीर्षवे इत्यत्र सन्नन्तादुप्रत्ययः। एष्वेत्वाद्युत्तरं स्थानिवत्त्वेन कृत्त्वाद्व्यपदेशिवद्भावेनैजन्तत्वाच्चाव्ययसंज्ञा-प्राप्तिरिति भावः। [तदीयसन्निपातस्येति।] एत्वगुणनिमित्तभूतसन्निपातस्येत्यर्थः। ननु तत्सन्निपातस्य लुका विनाशादनया परिभाषया लुकोऽप्रवृत्तौ फलाभावादव्ययसंज्ञापि नेत्यव्ययत्वं तु स्यादेवेत्ययुक्तमत आह। [तत्फलंत्विति।] अव्ययसंज्ञाफलमित्यर्थः। [अकजिति।] अव्यय-सर्वनाम्नामकजित्यादिनेति भावः। [एतदुदाहरणेति।] अस्या अकज्रहितोक्तोदाहरणेत्यर्थः।

साक्षात्परंपरया वा स्वनिमित्तसंनिपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात्। एतेनात्राकच् स्यादित्यपास्तम्॥ न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्। अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्, लुगेकवाक्यतापन्ना तु न गुणादितो ऽन्तरङ्गा। उभयोरपि शब्दतः सुबाद्याश्रयत्वात्॥

न यासयोरिति निर्देशाच्चैषा ऽनित्या। तेन नाति-

---

[परम्परया वेति।] अत एव अस्या मूर्धाभिषिक्तोदाहरणभूते शतानीत्यादौ लुक्प्रवृत्तिद्वारा नुमागमनिमित्तभूतसन्निपातविघातकायाष्ट्संज्ञाया अनया परिभाषया निवृत्तिरिति भावः। [एतेनेति।] उक्तार्थेनाव्ययत्वस्यापि वारणेनेत्यर्थः। मुख्यं कार्यकालत्वमाश्रित्य पुनरश्शङ्कते। [नचेति।] [संज्ञाबाधेऽपीति।] तत्पक्षे संज्ञाशास्त्राणां तत्तद्विधिभिरेकवाक्यतया संज्ञाविधानाल्लुगेकवाक्यतापन्नायास्तस्याःपरम्परया सन्निपातविघातकत्वेनानया तदप्रवृत्तावपीत्यर्थः। [स्यादिति।] तस्याः कथञ्चिदपि तदविघातकत्वादिति भावः। [अन्तरङ्गेति।] अनैमित्तिकत्वेनापरनिमित्तकत्वेन वेति भावः। [तदेकवाक्यतेति।] अकज्विधायकशास्त्रैकवाक्यतेत्यर्थः। [बहिरङ्गेति।] सनिमित्तकत्वेन परनिमित्तकत्वेन वेति भावः। [गुणादेरिति।] आदिना एत्वसङ्ग्रहः। [असिद्धत्वादिति।] तथाचैजन्तत्वाभावादव्ययसंज्ञाया अप्राप्तिरिति भावः। नन्वेवं लुगेकवाक्यतापन्नाया अप्येवं रीत्या वारणसम्भवेऽनया तत्र तद्वारणपरं भाष्यमसङ्गतमेवेत्यत आह। [लुगेकवाक्यतेति।] [उभयोरपीति।] लुगेकवाक्यतापन्नाव्ययसंज्ञाया गुणादीनां चेत्यर्थः। [सुबाद्याश्रयत्वादिति।] तदेकवाक्यतापन्नाया अपि तस्यास्तन्निमित्तनिमित्तकत्वादुभयोरपि सुबाद्याश्रयत्वमिति भावः। आदिना प्रकृतिसंग्रहः। कष्टायेति निर्देशेन दीर्घविषय एवास्या अप्रवृत्तिस्स्यान्नान्यत्रेति भ्रमवारणायाह। [निर्देशाच्चेति।] [अनित्येति।] अन्यथा विभक्त्यानन्तर्यं निमित्तीकृत्य जायमानस्य त्यदाद्यत्वस्य परम्परया

प्रसङ्गः। स्पष्टाचेयं कृन्मेजन्त इति सूत्रे भाष्ये॥ अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि, वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्। दाक्षिः॥ आत्वं पुग्विधेः। क्रापयति॥ पुग्ह्रस्वत्वस्य। अदीदपत्॥

---

तद्विघातकटापं प्रति निमित्तत्वाभावे तन्निर्देशासङ्गतिरिति भावः। [नातिप्रसङ्ग इति।] न वक्ष्यमाणातिप्रसङ्ग इत्यर्थः। [भाष्ये इति।] तत्र हि आधये कुम्भकारेभ्य इत्यादावव्ययत्ववारणायारब्धं कृन्मेजन्तश्चानिकारोकारप्रकृतिः अनन्यप्रकृतिरिति वेति वार्तिकप्रत्याख्यानायेयमुक्ता। अवर्णाश्रय इति पाठे आत्रेयादीनामसङ्ग्रहादाह। [वर्णाश्रय इति।] तेनात्रेयादाविवर्णाश्रयस्येतश्चानिञ इति ढकोऽपि सङ्ग्रहः। [वर्णविचालस्येति।] वर्णलोपस्येत्यर्थः। [अनिमित्तं स्यादिति।] अनया परिभाषयेति भावः। [आत्वं पुग्विधेरिति।] क्रीञ्धातोर्णिचि वृद्धौ कृतायां" क्रीङ्जीनां णावित्यनेन धातोर्णिजानन्तर्यं निमित्तीकृत्य विधीयमानमात्वं तदानन्तर्यविघातकस्य पुको निमित्तं न स्यादिति भावः। अर्तिह्रीत्यस्याङ्गस्य य आकारस्तस्य पुगित्यर्थादवयवभक्तं पुकं मत्वाऽयं दोषोपन्यासः। अङ्गभक्तत्वे तु यदागमन्यायेन विधानकाल एव तस्य प्रकृत्यवयवत्वनिश्चयात्स्वाङ्गस्य चाव्यवधायकत्वान्न सन्निपातविघात इति नात्र दोष इति कैयटः। उद्योतकृतस्त्वङ्गभक्तत्वेऽप्ययं दोषः। यादृशयोस्सन्निपातःपुङ्निमित्तं तस्य विघातसत्त्वात्। यदागमा इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याभावात्। अत्र चेदमेव भाष्यं मानम्। परिभाषाप्रयोजनप्रतिपादनपरं ह्रस्वत्वं तुग्विधेरित्यादि च। अतःपरिभाषानित्यत्वेनैवायं दोषो वारणीय इति वदन्ति। एतेनात्र कैयटोद्योतयोरेकाशयकत्वं वदन्तःचन्द्रिकाकृतःपरास्ताः। [पुग्ह्रस्वत्वस्येति।] ण्याकारसन्निपातनिमित्तःपुक्तद्विघातकस्योपधाह्रस्वस्यानिमित्तमित्यर्थः। न च ह्रस्वस्य चङ्परणिनिमित्तकस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिरिति वाच्यम्। एतद्भाष्यप्रामाण्येनानया असिद्धस्यापि निवृत्तिस्वीकारात्। किञ्च तया शास्त्रीयकार्येऽसिद्धत्वेऽपि लौकिके

त्यदाद्यकारष्टाब्विधेः। या सेति। इड्विधिराकारलोपस्य। पपिवान्। ह्रस्वनुड्भ्यां मतुप्, अन्तोदात्तादुत्तरपदादिति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य। अग्निमान्। परमवाचा। नदीह्रस्वत्वं संबुद्धिलोपस्य। नदीकुमारीत्यादि। याडेशो दीर्घत्वस्य। कष्टाय। इतो ऽन्यत्र प्रवृत्तेरेव, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः॥ ८६ ॥

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ

---

सन्निपातेऽसिद्धत्वाभावाच्च। [त्यदाद्यकारष्टाब्विधेरिति।] विभिक्त्यानन्तर्यं निमित्तीकृत्य जायमानमत्वं तदानन्तर्यविघातकटापं प्रत्यनिमित्तं स्यादित्यर्थः। [इड्विधिरिति।] वस्वेकाजाद्धसामित्याकारान्तलक्षण इड्विधिराकारलोपस्य निमित्तं न स्यादित्यर्थः। [ह्रस्वनुड्भ्यामिति।] अनेन सूत्रेण ह्रस्वान्तादन्तोदात्तात्परस्य मतुपो विधीयमानमुदात्तत्वं अन्तोदात्तादुत्तरपदादित्यनेन विधीयमानं विभक्त्युदात्तत्वं च शेषनिघातस्य निमित्तं न स्यादित्यर्थः। [नदीह्रस्वत्वमिति।] सम्बुद्धिनिमित्तकमम्बार्थनद्योरिति ह्रस्वत्वमेङ्ह्रस्वादिति सम्बुद्धिलोपस्य निमित्तं न स्यादित्यर्थः। [याडेशस्सुपि चेति दीर्घत्वस्येति।] श्रीपायेत्यादावातो लोपे परिभाषा प्रवर्तत एव। तत्र हि याडेशनिमित्तभूत ह्रस्वत्वस्य अकारगतस्य दीर्घेण निवृत्तावप्यकारत्वरूपसामान्यमादेशेऽप्यनुवर्तत एवेति लोपे सन्निपातविघातस्पष्ट एवेति वदन्ति। ८६

अस्या न्यायसिद्धताया अपि वक्ष्यमाणत्वात्तत्प्रसङ्गेनाह। [नन्विति।] [इत्यादाविति।] आदिना पञ्चधीवेत्यादौ रेफसङ्ग्रहः। तत्र हि पञ्चभिर्धीवरीभिःक्रीत इत्यर्थे आर्हीयस्य ठकोऽध्यर्धेति लुक्। सन्नियोगशिष्टानामित्यत्र निर्धारणे षष्ठी। समुच्चयेन विहितानां मध्ये

द्विगोर्लुगित्यणो लुकि लुक्तद्धित इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह ॥

संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ८७ ॥

अत्र च बिल्वकादिभ्यश्छस्य लुक् इति सूत्रस्थं छग्रहणं ज्ञापकम्। तद्धि छमात्रस्य लुग्बोधनद्वारा कुको ऽनिवृत्तिर्यथा स्यादित्यर्थम्।

---

द्वयोरन्यतरस्य शास्त्रतो निवृत्तौ संभावितायामुभयोरपि निवृत्तिरप्रवृत्तिरिति परिभाषार्थः। संभावनानिवेशाच्च पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्रेन्द्रशब्दान्तस्याकारस्य न निवृत्तिः। अन्यथा तत्रान्तरङ्गत्वात्सवर्णदीर्घोत्तरमानुको निवृत्तावकारस्यापि निवृत्तिःप्रसज्येत। न च सर्वविधिभ्यो लुग्विधिर्बलीयानिति न्यायेन लुग्विधेस्सर्वतो बलवत्त्वात्तत्प्रवृत्तिसम्भावनायामन्तरङ्गस्यापि सवर्णदीर्घस्य पूर्वमप्रवृत्तौ प्रथमतो लुकि तत्सन्नियुक्तस्याप्यानुकस्सवर्णदीर्घात्पूर्वमेव निवृत्तौ नोक्तदोष इति संभावनानिवेशो निष्फल एवेति वाच्यम्। पञ्चभिरेनीभिःक्रीतःपञ्चैत इत्यत्र तकारश्रवणस्य तत्फलत्वात्। अन्यथाऽनेन न्यायेन नकारनिवृतावपि देवदत्तहन्तृहतन्यायेन तकारस्य श्रवणं न स्यात्। सम्भावनानिवेशे तु प्रसक्तस्यैव नकारस्य निवृत्त्या न दोष इति बोध्यम्। अपायस्त्वत्रात्यन्तिकी निवृत्तिः। तेन एन्या अपत्यं ऐनेयः, श्यैनेय इत्यादौ ढकि यस्येति चेत्यनेनेकारस्य लोपेऽपि स्थानिवद्भावेन स्त्रीप्रत्ययबुद्धेस्सत्त्वादात्यन्तिकनिवृत्तेरभावात्प्रकृतपरिभाषाविषयत्वाभावेन नकारनिवृत्त्यभावः। अन्यथा लोपेनेकारस्य निवृत्तौ तत्सन्नियुक्तस्य नकारस्यापि निवृत्तिः स्यात्। नचात्र स्थानिभूतादचःपूर्वत्वेन दृष्टस्य कस्य चित्कार्यस्याभावान्न स्थानिवत्त्वप्रसक्तिरिति वाच्यम्। तत्र पूर्वविधिशब्दे तन्त्रेण निर्देशादेकत्र विधिशब्दस्य भावसाधनत्वाच्च पूर्वस्य स्थितिं प्रत्यपि स्थानिवद्भावस्याकरसम्मतत्वात्। तदेतद्वक्ष्यति। स्थानिवत्त्वेन सिद्धमिति। छग्रहणस्य ज्ञापकत्वमुपपादयति। [तद्धीति।] छ ग्रहणमित्यर्थः। [छ मात्रस्येति।] छस्यैवेत्यर्थः। [इत्येतदर्थमिति।]

कृतकुगागमा नडाद्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन। न चैवमपि छग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः। अन्यथा बिल्वादिभ्य इत्येव वदेत्। लक्षणप्रतिपदोक्तपरिभाषया

---

अयं भावः। बिल्वकादिभ्यो लुगित्युक्तावपि लुक्शब्देन कृतस्य प्रत्ययादर्शनस्यैव लुक्संज्ञत्वाल्लुगित्यनेन प्रत्ययस्याक्षेपे सति बिल्वकादिभ्यः परस्यान्यस्य प्रत्ययस्यासम्भवाच्छस्यैव लुक्सिद्धावतिरिच्यमानं छग्रहणं छमात्रस्यैव लुगर्थम्। तत्फलञ्च तत्सन्नियुक्तस्य कुकोऽनिवृत्तिः। यद्येषा परिभाषा न स्यात्तदा छग्रहणाभावेऽपि छमात्रस्यैव लुक्सिद्धौ तदनर्थकं सदेनां परिभाषां ज्ञापयति। ज्ञापितेत्वस्मिन्ननेन न्यायेन कुकोऽपि निवृत्तिप्रसक्तौ छमात्रस्यैव लुगर्थं तच्चरितार्थमिति। ननु बिल्वकादिभ्य इत्यत्राकारोच्चारणेन स्वार्थकप्रत्ययान्तग्रहणात्तत्प्रकृतिकान्यप्रत्ययस्य लुग्व्यावृत्त्या छग्रहणस्य सार्थक्यात् कथं ज्ञापकतेत्यत आह। [कृतकुगागमा इति।] कुगागमकरणे हेतुगर्भं विशेषणमाह। [नडाद्यन्तर्गता इति।] [बिल्वादय एवेति।] एवशब्देन बिल्वशब्दप्रकृतिककान्तव्यावृत्तिः। [तत्रेति।] बिल्वकादिभ्य इति सूत्रे इत्यर्थः। [निर्दिष्टा इति।] आगन्तुना अकारेणेति शेषः। प्रभृत्यर्थकादिशब्देन तेषामेव शीघ्रोपस्थितत्वात्कान्तानां क्वचिदपि गणे पाठाभावाच्चेति भावः। आदिशब्दस्य प्रकारवाचित्वं स्वीकृत्य कप्रत्ययान्तग्रहणन्तु न युक्तम्। सौत्रनिर्देशेष्वादिशब्दस्य प्रभृत्यर्थकताया एव प्रायशो दृष्टत्वात्। किञ्च तथा सति कान्ताच्छस्यासंभवेन छग्रहणे कृतेऽपि सूत्रस्य व्यर्थत्वाच्चेति बोध्यम्। ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावान्न ज्ञापकत्वसम्भव इति शङ्कते। [न चैवमपीति।] ज्ञापितायामपि परिभाषायामित्यर्थः। [तदनिवृत्तीति।] कुकोऽनिवृत्तीत्यर्थः। [अन्यथेति।] तदनुवादस्य तदनिवर्तकत्वाभावे इत्यर्थः। [इत्येव वदेदिति।] बिल्वकादिभ्य इत्युक्तावपि यद्यनेन न्यायेन कुकोनिवृत्तिस्स्यात्तदा नडादिष्वागमरहितानामेव बिल्वादीनां पाठाल्लाघवाच्च बिल्वादिभ्यो लुगित्येव वदेत्। तथा अनुक्त्वा कृतकुगागमानुवादात्कुकोऽनिवृत्तिस्सिध्यतीति तदर्थं छग्रहणमनावश्यकमिति भावः।

बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नाति-प्रसङ्ग इति वाच्यम्। ततो ऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्यो ऽण् इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात्। समुच्चायार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वानियमान्न्यायसिद्धापीयम्। यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञाप-

---

ननु तथा निर्देशे बिल्वादिभ्यः परेषां भवाद्यर्थकाणादीनामपि लुगापत्तिरतस्तद्वारणाय तदनुवादस्य सार्थकतया कथं तस्य सामर्थ्यमत आह। [लक्षणेति।] प्रतिपदोक्तत्वस्वरूपमाह। [बिल्वादीति।] [विहितप्रत्ययस्यैवेति।] नडादीनां कुक्चेत्यनेन विहितछप्रत्ययस्यैवेत्यर्थः। [नातिप्रसङ्ग इति।] न भवाद्यर्थकाणादीनां लुक्प्रसङ्ग इत्यर्थः। एवञ्च तत एवेष्टसिद्धया कृतकुगागमानुवादोऽनर्थक एव। अतस्तत्सामर्थ्यात्तदनिवृत्तेस्सिद्धतया ज्ञापनोत्तरमपि छग्रहणस्य चारितार्थ्याभावाज्ज्ञापकत्वा-नुपपत्तिरिति भावः। [ततोऽपीति।] नडादिच्छादपीत्यर्थः। [प्रतिपदोक्तत्वेनेति।] विशिष्यो-च्चारितत्वेनेत्यर्थः। नडादिषु बिल्वादीनां पाठेऽपि सूत्रे न तेषां विशिष्योपादानमिति ततोऽप्यस्य प्रतिपदोक्तत्वमिति भावः। [इतीति।] इत्यनेनेत्यर्थः। एतदुत्तरं विहितस्येति शेषः। [विकाराद्यर्थस्येति।] आदिनाऽवयवपरिग्रहः। अण इति शेषः। [चारितार्थ्यादिति।] एवञ्च तत्सामर्थ्यात्तदनिवृत्तेर्वक्तुमशक्यतयाऽनेन न्यायेन प्राप्तकुग्निवृत्त्यभावाय छग्रहणस्य चारितार्थ्या-ज्ज्ञापकत्वं सुस्थमेवेति भावः। क्वचिदस्या न्यायसिद्धत्वमपि सम्भवतीत्याह। [चशब्दयोगेत्विति।] नडादीनां कुक्च, वनो रचेत्यादावित्यर्थः। तुना तदयोगे इन्द्रवरुणेत्यादौ विधेययोस्तादृश-विशेषालाभेन तद्विषये पञ्चेन्द्र इत्यादावानुको निवृत्तये ज्ञापकसिद्धत्वमप्यस्या आवश्यकमिति सूचितम्। तथा चान्यार्थमस्यार्थस्य ज्ञापकेनावश्यं साधनीयतया तादृशचशब्दयोगेऽनुवादकत्व-मेवास्या इति बोध्यम्। [न्यायसिद्धापीति।] अपिना ज्ञापकसिद्धत्वसमुच्चयः। एनेयः, श्यैनेय, इत्यादावेतदप्रवृत्तये कैयटोक्तमनित्यत्वरूपं प्रतिविधानमयुक्तमित्याह। यत्त्विति। [अन्यथेति।]

नार्थमन्यथैतयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति टेरिति सूत्रे कैयट, स्तन्न। इडविडमाचष्टे ऐडविडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात्। एनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८७॥

ननु चुरा शीलमस्याः सा चौरीत्यादौ शीलम् छत्रादिभ्यो ण इति णे ङीप् न प्राप्नोतीत्यत आह ॥

---

अस्या अनित्यत्वाभावे इत्यर्थः। [टिलोपेनैवेति।] एवकारेण पुंवत्त्वव्यवच्छेदः। [टेरिति सूत्रे इति।] इष्ठेमेयस्सु टेर्लोपविधायके टेरिति सूत्रे इत्यर्थः। [ऐडविडयतीत्यादाविति।] आदिना दरदमाचष्टे दारदयतीत्यादि सङ्ग्रहः। न ह्यत्र पुंवद्भावमन्तरा टिलोपेन सिद्धिरिति भावः। तथाचैतदर्थं पुंवत्त्वविधानस्यावश्यकत्वा न्न तदुक्तार्थज्ञापकमित्याशयः। नन्वेवं कथमैनेयसिद्धिरत आह। [स्थानिवत्त्वेनेति।] अचःपरस्मिन्निति स्थानिवत्त्वेनेत्यर्थः। एतच्चाधस्तान्निरूपितम्। ज्ञापकसिद्धत्वेन तु क्वचिदप्रवृत्तिरस्त्येव। अत एव श्रोत्रियस्य भावःश्रौत्रमित्यत्र युवादित्वादणि श्रोत्रियस्य घलोपश्चेति वार्तिकेन घस्य निवृत्तावपि श्रोत्रभावस्य न निवृत्तिः। तत्रहि श्रोत्रियश्छंदोऽधीते इति सूत्रेण छन्दश्शब्दात्तदधीत इत्यर्थे घन्प्रत्ययश्छन्दश्शब्दस्य श्रोत्रादेशश्च निपात्यते। अत एव छन्दोऽधीत इति वाक्यार्थेऽविद्यमानप्रकृतिप्रत्ययविभागःश्रोत्रियन्निति निपात्यत इति पक्षेण सह न फलभेदः। तत्पक्षे तत उक्तार्थे घस्य यस्य वा लोपे श्रौत्रमिति रूपम्। ८७

तद्धितप्रसङ्गादाह। [नन्विति।] [शीलंछत्रादिभ्य इति।] शीलमित्यधिकारे छत्रादिभ्यो ण इति णे इत्यर्थः [ङीब्न प्राप्नोतीति।] विधायकाभावादिति भावः। तच्छीलार्थे विहितणप्रत्ययान्ते-

## ताच्छीलिके णे ऽण्कृतानि भवन्ति ॥ ८८ ॥

अन् इत्यणि विहितप्रकृतिभावबाधनार्थं कार्मस्ताच्छील्ये इति निपातनमस्या ज्ञापकम्। ताच्छीलिकाणन्तादणो द्व्यच इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः। ताच्छीलिक इत्युक्तेस्तदस्यां प्रहरणम् इति णे दाण्डेत्येव॥ कार्म इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत

---

ऽप्यण् कार्याणि भवन्तीति परिभाषार्थः। तथाचाणन्तत्वप्रयुक्तो ङीप् णान्तादपि भवतीति चौरीतिरूपसिद्धिः। ननु छत्रादिभ्य इत्यनेन विहितस्य णस्य शीलमित्यर्थे विहितत्वेनाके स्तच्छीलेत्यादिवत्तच्छीलार्थेऽविहितत्वेन कथं तत्रास्याःप्रवृत्तिरिति चेन्न। प्रथमान्तार्थसम्बन्धिशीलरूपार्थभवत्वेन तस्यापि ताच्छीलिकत्वमित्याशयात्। यद्वा यस्य तच्चौर्यादिकं शीलं तस्य तच्छीलत्वात्तत्र भवस्य णस्य ताच्छीलिकत्वमित्यार्थिकं तमादायास्य ताच्छीलिकत्वोक्तिरिति बोध्यम्। [ज्ञापकमिति।] कार्म इत्यत्र छत्रादित्वाण्णः। एतदभावे तत्र प्रकृतिभावाप्राप्त्या नस्तद्धित इति टिलोपेन रूपसिद्धौ निपातनमनर्थकमिति भावः। ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात्क्वचिदस्या अप्रवृत्तिरतश्छात्रेत्येव भवति। न तु तत्र ङीप्। अत एव छत्रादिभ्योऽणिति न सूत्रितम्। [नव्या इति।] दीक्षितादयइत्यर्थः। अत एव परिभाषायामुपक्रमभाष्ये चाण्कृतानीति बहुवचनसङ्गतिरिति तदाशयः। अत्रारुचिबीजं तु तत्र सूत्रेऽपत्यार्थकस्यैवाणो ग्रहणात्सामान्यातिदेशे विशेषानतिदेश इति न्यायेन न तस्यानयाऽतिदेशः। अत एवोपसंहारभाष्येऽणन्तादीकारस्सिद्धो भवतीत्येवोक्तं न तु ततः फिञोऽपि सिद्धिरिति। ८८

प्रत्ययप्रसङ्गादेवाह। [नन्विति।] [दुर्वारेति।] क्विबन्तत्वेन धातुत्वान्मृजूपत्वात्प्रत्ययपरकत्वाच्चेति भावः। इदमुपलक्षणं रज्जुसृड्भ्याम् देवदृग्भ्यामित्यादौ सृजिदृशोरित्यम,

आह ॥

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृड्भिरित्यादावनुदात्तस्य चर्दुपधस्येत्यमापादनेन भाष्ये दूषितः। यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका।

---

इदितो नुमित्यादिना नुमादेशश्च। सामान्यरूपेण विशेषरूपेण वा धातूद्देश्यकं कार्यं तादृशधातुसंशब्दनेन विहिते धात्वधिकारीये प्रत्यये भवति नान्यस्मिन्निति परिभाषार्थः। [तत्वनिपातनमिति।] दाण्डिनायनेति सूत्रे इति शेषः। तत्र हि भ्रूणघ्नो भाव इत्यर्थे ब्राह्मणादित्वाद्गुणवचनब्राह्मणादिभ्य इत्यादिना ष्यञि नकारस्य तत्वमनेन निपात्यते। एतदभावे नस्तद्धित इति टिलोपं बाधित्वा परत्वाद्धनस्तोऽचिण्णलोरित्यनेन तत्त्वेनेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। नचोपधावृद्ध्यभावार्थं निपातनस्यावश्यकत्वात्कथं ज्ञापकत्वमिति वाच्यम्। आदिवृद्ध्या तद्बाधेन तदर्थं तस्यानावश्यकत्वात्। नच ञित्स्वरबाधनार्थं तदिति वाच्यम्। तस्येष्यमाणत्वात्। नचैवमपि हो हन्तेरिति कुत्वबाधनार्थं तदिति वाच्यम्। एवमपि निपातनानामनेकप्रयोजनकत्वेन तत्वार्थं कृतस्य निपातनस्य ज्ञापकत्वाक्षतेः। यद्यपि दाण्डिनायनेति सूत्रे भाष्ये तद्धिते परे तत्वं न भवतीत्यर्थे इदं ज्ञापकमित्युक्तम्। तथाऽपि मृजेर्वृद्धिरिति सूत्रस्थभाष्यैकवाक्यतया अस्यैवार्थस्य ज्ञापकत्वम् तत्र शब्दान्तरेणोक्तमितिबोध्यम्। स्पष्टं चेदं तत्रैवोद्योते। प्राचामुक्तिं खण्डयति। [धातोःस्वरूपग्रहण इति।] विशेषरूपेण धातोरुपादान इत्यर्थः। [पाठस्त्विति।] वार्तिककृदुक्त इति भावः। [अमापादनेनेति।] तद्विधौ धातोःस्वरूपेणानुपादानादेवं पाठे तत्रास्या अप्रवृत्तौ सुप्यप्यमापत्तिरिति भावः। धर्मिग्राहकमानलब्धमर्थमाह। [यत्कार्यमिति।] [प्रत्ययनिमित्तकमिति।] सप्तम्यन्तपदेन यत्र प्रत्ययस्य निमित्तत्वं तत्रानियमप्रसक्तावियं नियामिका। अत एव नश्छव्यप्रशानिति निषेधस्सार्थकः। अन्यथा

तेन पदान्तत्वनिबन्धनं नशेर्वा इति कुत्वं प्रणङ्भ्यामित्यादौ भवत्येव। इयङादिविधौ तु नैषा। न भूसुधियोरिति निषेधेनानित्यत्वात्॥ मृजेर्वृद्धिरित्यत्र भाष्ये स्पष्टा॥ ८९॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह॥

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते॥ ९०॥

---

क्विबन्तप्रशान्शब्देऽनया परिभाषया मो नो धातोरिति नत्वस्याप्रवृत्त्या नस्यैवाभावेन स निषेधो व्यर्थस्स्यादिति भावः। एवञ्च प्रत्यये परतो यत्कार्यं धातोरुच्यते तत्कार्यं तादृशधातुसंशब्दनेन विहिते प्रत्यये भवतीति परिभाषार्थः फलित इति बोध्यम्। [भवत्येवेति।] पक्षे भवत्येवेत्यर्थः। अत एव भाष्ये क्वचित्कुत्वघटित एव पाठो दृश्यत इति बोध्यम्। [इयङादीति।] आदिना यण्परिग्रहः। [निषेधेनेति।] सुधीशब्दांशविषयकेणेति भावः। [अनित्यत्वादिति।] अन्यथा सुधीशब्दे सुपि परेऽनया परिभाषया एरनेकाच इति यणोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः। [भाष्ये इति।] तत्र हि कंसपरिमृड्भ्यामित्यादौ वृद्ध्यभावायारब्धं मृजेर्वृद्धिविधौ क्व्यन्तस्य प्रतिषेधो वक्तव्य" इति वार्तिकं रज्जुसृड्भ्यामित्याद्यर्थमावश्यक्याऽनया परिभाषया प्रत्याख्यतम्। ८९

पूर्वपरिभाषयां तद्धितप्रसङ्गेनोपस्थितत्वादाह। नन्विति। [न स्यातामिति।] विशिष्टस्य-सर्वादिषु स्वरादिषु चापाठात्तयोस्ते संज्ञे न स्याताम्। तथाचाद्ये शीभावस्यान्त्येऽव्ययत्वप्रयुक्तविभक्ति लुकश्चानापत्तिरिति भावः। यद्घटकपूर्वोत्तरावयवावधिकमध्यत्वोपहितदेशावच्छिन्नविधेयताश्रयो यस्तद्विशिष्टस्तद्ग्रहणेन तद्बोधकशब्देन गृह्यते बोध्यत इति परिभाषाऽर्थः। अत्र मानमाह।

नेदमदसोरकोरिति सूत्रे ऽकोरिति निषेधो ऽस्या ज्ञापकः॥ तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति येन विधिरिति सूत्रे भाष्ये पाठः॥ ९०॥

ननु गातिस्थाघुपाभूभ्य इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह॥

**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य॥ ९१॥**

अस्याश्च ज्ञापकः स्वरतिसूतीति सूत्रे सूङिति

---

[नेदमदसोरिति।] [ज्ञापक इति।] अन्यथाऽकच्विशिष्टस्य शब्दान्तरत्वात्केवलाभ्यां ताभ्यां परस्य भिसो विधीयमानस्यैसादेशस्याप्राप्त्या निषेधोऽनर्थकःस्यादिति भावः। गङ्गाप्रविष्टनदीदृष्टान्तेनास्य न्यायसिद्धत्वं न। परिच्छिन्नपरिमाणवस्तुविशेषधर्माणां द्रोणत्वादीनामिव तत्तदानुपूर्वीविशेषपरिच्छन्नशब्दधर्माणां सर्वनामाव्ययत्वादीनामपि न्यूनाधिकभावेनान्यथात्वे शास्त्रव्यापारमन्तरेण प्रवृत्त्यसम्भवात्। अतो ज्ञापकसाध्य एवायमर्थ इति येन विधिरिति सूत्रे भाष्ये स्पष्टम्। यदि तु नेदमदसोरिति सूत्रे भाष्ये इदमदसोःकादिति न्यासं कृत्वा अतो भिस इत्येव सिद्धेऽस्येदमदसोर्भिसो यथैस्स्यात्तदा ककारसहितादेव नान्यत्रेति नियामकत्वमाश्रित्याकोरिति प्रतिषेधःप्रत्याख्यात इत्युच्यते तदा एतत्तदोरिति सूत्रे ककारवत्पर्युदासोऽस्यां ज्ञापकः। विप्रतिषेधसूत्रे भाष्ये नेदमदसोरिति सूत्रस्थस्य तस्य ज्ञापकत्वप्रतिपादनन्तु सूत्ररीत्येति बोध्यम्। ९०

धातुप्रसङ्गादाह। [नन्विति।] [पातेरपीति।] ततः परस्यापि सिच इत्यर्थः। अपिरिष्टपिबतिपरतत्समुच्चायकः। [अलुग्विकरणस्येति।] सर्वं वाक्यं सावधारणमिति न्यायेनालुग्विकरणस्यैवेत्यर्थः। लुग्विकरणालुग्विकरणयोरुभयोरपि ग्रहणप्रसक्तावलुग्विकरणस्यैव ग्रहणं भवति न लुग्विकरणस्येति परिभाषार्थः। [सूङिति वक्तव्ये इति।] सू इति निरनुबन्धकस्योक्तौ तु निरनुबन्धकपरिभाषया षू

वक्तव्ये सूतिसूयत्योः पृथङ् निर्देश इति कैयटः। तन्न। साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात्। ध्वनिता चेयं परिभाषा यस्य विभाषेत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो विभाषा गमहनविदविशाम् इति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम्। तत्र चो हेतौ। यतो ऽयं लुग्विकरणो ऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति

---

प्रसव इति तौदादिकस्यैव ग्रहणं स्यान्न तु सानुबन्धकयोर्दैवादिकादादिकयोरिति भावः। [कैयट इति।] स्वरतिसूतीति सूत्रे इति शेषः। [साहचर्यादिति।] पूर्वोत्तरसाहचर्यादित्यर्थः। [पृथङ्निर्देशस्येति।] एतदुत्तरं चरितार्थतयेति शेषः। नन्वेवमस्याप्रामाण्यप्रसङ्गोऽत आह। [ध्वनिता चेयमिति।] [विदित इति प्रयोगे इति।] ज्ञानार्थकादादादिकाद्विदधातोर्निष्ठाप्रत्यये इत्यर्थः। [निषेधमिति।] यस्य विभाषेतीड्निषेधमित्यर्थः। विभाषा गमहनविदविशामित्यनेन ततःपरस्य क्वसोर्विकल्पेनेड्विधानादिति भावः। दिवादितुदादिरुधादिस्थानां त्वनुदात्तत्वादेव निषेधः। तौदादिकस्याप्यनिट्कारिकासु पाठस्याकरसम्मतत्वादिति तदाशयः। [यदुपाधेरिति।] यःउपाधिर्यस्येति बहुव्रीहिः। पञ्चम्यन्तं च। अत्रोपाधिशब्देन विशेषणमात्रमुच्यते। नत्वर्थविशेषो लक्षितः। [शविकरणस्य ग्रहणमिति।] परेण विशिना साहचर्यादिति भावः। ततश्च ततःपरस्या एव निष्ठाया इण्निषेधो न तु वेत्तेरिति भावः। [तत्रेति।] भाष्ये इत्यर्थः। [अयमिति।] ज्ञानार्थको विदधातुरित्यर्थः। [अस्यापीति।] लुग्विकरणस्यापीत्यर्थः। परसाहचर्येण शविकरणस्येव पूर्वसाहचर्येण वेत्तेरपि ग्रहणं नेति भावः। तद्ग्रहणे मानमाह। [एतत्परिभाषाविरोधादिति।] तथा च लुग्विकरणपरिभाषानुग्रहाय परसाहचर्य-

तदाशयः॥ अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम्॥ कण्ठतस्तु भाष्ये एषा क्वापि न पठिता॥ गातिस्था इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्तिककृता, सर्वत्रैव पाग्रहणे ऽलुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम्॥ स्वरतिसूतीति सूत्रे कैयटेन च स्पष्टमुक्ता॥ ९१॥

ननु प्रजिघाययिषतीत्यादौ हेरचङीति विधीयमानं कुत्वं न स्यादत आह॥

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्॥ ९२॥

---

स्यैवात्राश्रयणमिति भावः। अनेन भाष्यग्रन्थसन्दर्भेणेयं ध्वनितेति बोध्यम्। [अत एवेति।] अस्या उक्तभाष्येण ध्वननादेवेत्यर्थः। [इति नोक्तमिति।] इति विपरीतं नोक्तमित्यर्थः। अन्यथा तथा ज्ञापनेऽपि पृथङ्निर्देशस्य चरितार्थतया विनिगमनाविरहात्प्रथमोपस्थितत्वरूपान्तरङ्गत्वानुग्रहाय तथैवोक्तं स्यात्। उभयं तु न ज्ञाप्यम्। एकेनैव पृथङ्निर्देशस्य साफल्यादिति भावः। ध्वनिता चेत्युक्तिस्वारस्यमाह। [कण्ठतस्त्विति।] [एषेति।] एवमानुपूर्वीकेत्यर्थः। उक्तार्थदार्ढ्याय मानान्तरमप्यत्र दर्शयति। [गातिस्थेति।] [उक्तमिति।] अस्याश्च मानान्तरसिद्धत्वे एनामाश्रित्य तद्वार्तिकं प्रत्याख्यातं स्यादिति भावः। अत इयं ध्वनितवाचनिकीति बोध्यम्। ९१

धातुप्रसङ्गादेवाह। [नन्विति।] [प्रजिघाययिषतीति।] प्रपूर्वाद्धिगतौ वृद्धौ चेत्यस्माण्णिजन्तात्सनि लटि रूपम्। [न स्यादिति।] हिनोतेरङ्गावयवस्य योऽभ्यासस्ततः परस्य कुत्वमित्यर्थेऽङ्गाभ्यासयोरपि शास्त्रेण निमित्तत्वग्रहात्प्रत्यासत्त्याङ्गसंज्ञानिमित्तनिमित्तकाभ्यासस्यैव

अचङीति प्रतिषेध एवास्या ज्ञापकः॥ इयं च कुत्वविषयैव। हेरचङीति सूत्रे भाष्ये स्पष्टेयम् ॥९२॥

ननु युष्मभ्यमित्यादौ भ्यस इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यामि कृते ऽन्त्यलोपे एत्वं स्यादत आह॥

## अङ्गवृत्ते पुनर्वृत्तावविधिः ९३

अङ्गे ऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति

---

ग्रहणात्प्रकृते हिधातुनिष्ठाङ्गसंज्ञानिमित्तस्य णिचोऽभ्यासानिमित्तकत्वात्कुत्वानापत्तिरिति भावः। प्रकृतिबोधकशब्दग्रहणे सति तेन ण्यधिकस्यापि ग्रहणमिति परिभाषार्थः। अपिना केवलसंग्रहः। [ज्ञापक इति।] तद्धि हिधातोर्णिजन्ताल्लुङि चङि अजीहयदित्यत्र कुत्वाभावार्थम्। एतदभावेत्वङ्गस्य णिनिमित्तकत्वेनाभ्यासस्य चङ्निमित्तकत्वेन च द्वयोरेकनिमितकत्वाभावादुक्तरीत्या कुत्वस्याप्राप्त्या निषेधो व्यर्थः। ज्ञापितेत्वस्मिन् हिपदेन ण्यधिकस्यापि ग्रहणाण्णिजन्तनिष्ठाङ्गसंज्ञानिमित्तचङ्निमित्तकत्वस्याभ्यासेऽपि सत्त्वात्तत्र कुत्वप्राप्त्या निषेधस्सार्थक इति भावः। [कुत्वविषयैवेति।] "हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्" ज्ञापकंत्वन्यत्र ण्यधिकस्यापि कुत्वविज्ञानार्थमिति भाष्यवार्तिकोक्तेरिति भावः। ९२

अङ्गाधिकारीयकार्यविशेषनिर्णायकपूर्वपरिभाषानिरूपणे तादृशकार्यविषयकत्वेन प्रकृतपरिभाषाया उपस्थितत्वादाह। [नन्विति।] [लोप इति।] लोपे च कृत इत्यर्थः। [एत्वमिति।] बहुवचने झल्येदित्येत्वं स्यादित्यर्थः। नन्वङ्गवृत्तपदे कर्मधारये बहुव्रीहौ वा निष्ठान्तस्य पूर्वनिपातापत्तेराह। [अङ्गे इति।] अङ्गे वृत्तमिति सप्तमी तत्पुरुषः। अङ्गपदमङ्गाधिकारपरमिति भावः। [निष्पन्नमिति।] पठितमित्यर्थः। [कार्यमिति।] शास्त्रमित्यर्थः। अङ्गवृत्त इत्यस्य सत्सप्तमीत्वादाह। [तस्मिन् सतीति।] तस्मिन् प्रवृत्ते सतीत्यर्थः। पुनः=पश्चात्। पुनस्तस्यैव

पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः॥ एषा च ज्यादादीयस इत्यादिविधानेन ज्ञापिता। अन्यथेकारलोपेनाकृत्सार्व इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा॥ इयं चानित्या द्व्योरिति निर्देशात्। अनित्यत्वबललभ्यार्थमादायैव भ्यसोभ्यम् इति सूत्रे भाष्ये निष्ठितस्येति पठितम्॥ केचित्त्वनया परिभाषया न किञ्चि-

---

प्रवृत्तेरसंभवात्प्रत्यासत्तेराह। [अन्यस्याङ्गकार्यस्येति।] [प्रवृत्ताविति।] प्रत्यासत्त्या तत्रैव लक्ष्ये प्रवृत्तौ सत्यामित्यर्थः। अविधिरित्यस्यार्थोऽविधानमिति। अत्र मानमाह। [एषा चेति।] [विधानेनेति।] पूर्वचशब्दस्यात्र योजनया विधानेन चेत्यर्थः। चेन ज्ञाजनोर्जेति जादेशविधानसमुच्चयः। अन्यथा ह्रस्वान्तस्य जभावस्य विधानेऽप्यतो दीर्घो यञीति दीर्घेण जायते जानातीत्यादिरूपसिद्धौ दीर्घोच्चारणं व्यर्थं स्यादिति भावः। [लोपेनेति।] बहोर्लोप इत्यतो लोपग्रहणानुवृत्तेरिति भावः। [अत एवेति।] उक्तज्ञापकद्वयसिद्धत्वादेवेत्यर्थः। [विषयापीति।] अपिना समानस्थानिकाङ्गकार्यसमुच्चयः। अस्माज्ज्ञापकाद्भिन्नस्थानिकाङ्गकार्यविषयत्वं ज्ञाजनोरिति ज्ञापकात्समानस्थानिकाङ्गकार्यविषयत्वं च ज्ञापकसाजात्याल्लभ्यत इत्याशयः। समानस्थानिकत्वं चात्र पूर्वपरभिन्नस्थानिकत्वम्। ननु किमर्थमस्या अनित्यत्वं परिभाषायां निष्ठितस्येत्यंशस्य सीरदेवादिभिः पठितत्वेन तस्य च भ्यसोऽभ्यमिति सूत्रस्थभाष्यसंमतत्वाच्चानित्यत्वाभावेऽपि द्व्योरित्यत्रैत्वसिद्धेः। तद्विना तस्यापरिनिष्ठतत्वात्। अत एव द्वाभ्यामित्यत्र सुपि चेति दीर्घस्सिद्ध इत्यत आह। [अनित्यत्वेति।] [आदायैवेति।] एवेन तस्य ज्ञाप्यांशप्रविष्टत्वनिरासः। अत एव ज्ञापकपरोक्तसूत्रद्वयस्थभाष्यसङ्गतिः। अन्यथा तत्रोभयत्रापि दीर्घप्रवृत्तिं विना परिनिष्ठितत्वाभावेन दीर्घप्रवृत्त्या इष्टसिद्धेर्ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावाज्ज्ञापकत्वासंगतिरिति भावः। [केचित्त्विति।]

ल्लक्ष्यं साध्यते। अत एव ज्ञाजनोर्जा ज्यादादीयस इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबते-र्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येष प्रयोजनमुक्तम् न तु लक्ष्यसिद्धिरूपम् तदुक्तम्। भ्यसोभ्यमित्यत्रा-भ्यमिति च्छेदः शेषे लोपश्चान्त्यलोप एवातो गुणे इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम्। एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं भ्यसो भ्यमिति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः॥९३॥

---

भाष्यतत्त्वविद इत्यर्थः। [साध्यत इति।] एतत्साध्यलक्ष्याणामन्यथापि सिद्धेरनन्यथासिद्धं प्रयोजनमस्या नास्तीति भावः। [अत एवेति।] एतन्मात्रसाध्यफलाभावादेवेत्यर्थः। [लक्ष्येति।] युष्मभ्यं, दवयति, स्रजयतीत्यादिलक्ष्येत्यर्थः। तत्राद्यसिद्धिप्रकारमाह। [तदुक्तमिति।] अस्या-लक्ष्यासाधकत्वमभिप्रेत्योक्तमित्यर्थः। [छेद इति।] अत एव नचादेशो हलादिरस्तीति युष्मदस्म-दोर्विभक्त्यादेशस्य हलादित्वाभावकथनपरं युष्मदस्मदोरनादेश इति सूत्रस्थं भाष्यं संगच्छते। [अन्त्यलोप एवेति।] अत एव लिङ्गाभावाट्टिलोपवचनानर्थक्यमिति साम आकमित्यत्र भाष्ये उक्तम्। शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव। त्यदादीनाम इति सूत्रस्थं टिलोपष्टाबभावार्थ इति वार्तिकं तु वार्तिकैकदेशिन इति न तद्विरोधः। दवयति, स्रजयतीत्यादावुपधावृद्ध्यभावस्तु लक्ष्यानुरोधाद्भाष्यानुरोधाच्चेष्ठवदित्यत्राभावातिदेशस्याप्यङ्गीकारान्न भवति। अत एवचास्या असा-र्वत्रिकत्वात्प्रापयतीत्यादावुपधावृद्धिरिति भावः। [अन्यत्रेति।] उद्योतादावित्यर्थः। [एवं चेति।] अस्या लक्ष्यासाधकत्वे चेत्यर्थः। [एकदेश्युक्तिरिति।] पिबादेशस्यादन्तत्वस्वीकारादेव गुणप्रतिषेधवार्तिकस्य प्रत्याख्यानसंभवेऽस्य यत्नस्य गुरुत्वान्निष्फलत्वाच्चेति भावः। ९३

यत्त्वोरोदिति वाच्ये ओर्गुण इति गुणग्रहणात्

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९४ ॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव। तेन स्वायम्भुवमित्यादि सिद्धम् ॥ तथा निलोडित्येव सिद्ध- आनिग्रहणात्

आगमशास्त्रमनित्यम् ॥ ९५ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥ तथा तनादिपाठादेव सिद्धे तनादिकृञ्भ्य इति सूत्रे कृञ्ग्रहणात्

गणकार्यमनित्यम् ॥ ९६ ॥

---

अथ संज्ञाप्रसङ्गात्तद्धटितपरिभाषायाः खण्ड्यत्वेनोपस्थितावन्या अपि सीरदेवादिभिरनित्यत्वेनोक्ताः परिभाषास्तया सह क्रोडीकृत्य खण्डयति। [यत्त्वित्यादिविस्तर इत्यन्तेन।] नन्वेतत्परिभाषाभ्युपगमे प्रायशस्सर्वस्यापि शास्त्रस्य संज्ञापूर्वकत्वात्सर्वत्रानिष्टप्रसङ्ग इत्यत आह। [इयं चेति।] [संज्ञापूर्वकत्व एवेति।] ज्ञापकसाजात्यादिति भावः। साजात्यं च विधेयत्वेनेव लोकेऽर्थवत्त्वेन प्रसिद्धशब्दत्वेनापि। तेनाणुदिदिति स्वंरूपमित्यादिसंज्ञाविषये नास्याः प्रवृत्तिः। अत एव ओरोदित्युक्तौ न तत्त्वमिति बोध्यम्। [स्वायंभुवमिति।] स्वयं भूशब्दादिदमर्थे शैषिकेऽणि संज्ञापूर्वकत्वादनित्यतया गुणस्याप्रवृत्तावुवङि तत्सिद्धिरिति भावः। ९४

[आनिग्रहणादिति।] आकारविशिष्टनिग्रहणादित्यर्थः। [इत्यादिसिद्धमिति।] आर्धधातुकस्येतीटोऽप्रवृत्त्या तर्तुकामस्येति रूपं सिद्धमित्यर्थः। ९५

तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ॥

तथा चक्षिङो ङित्करणात्

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥

तेन स्फायन्निर्मोक इत्यादि सिद्धम् ॥

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्

नञ्घटितमनित्यम् ॥ ९८ ॥

तेन नेयङुवङ् इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति। तन्न। भाष्ये ऽदर्शनात्।

---

[इत्यादिसिद्धमिति।] आदिना "शयामि किमतः पर" मित्यादिसंग्रहः। अदिप्रभृतिभ्य श्शप इति लुकोऽप्रवृत्त्या विश्वसेदित्यादि सिद्धमित्यर्थः। ९६

[ङित्करणादिति।] सत्यपि ङित्करणे विचक्षणः प्रथयन्नित्यादावनुदात्तेत्त्वलक्षणस्यानुदात्तेतश्च हलादेरिति युचस्सिद्धये इकारस्यानुदात्तताया इत्त्वस्य चावश्यकत्वात्तेनैवात्मनेपदे सिद्धे ङित्करणं व्यर्थीभूयैनां ज्ञापयतीति भावः। नच धातोरन्त्येदित्त्वव्याघातकत्वेन नुमागमाप्रवृत्तये ङकारोच्चारणं चरितार्थमिति वाच्यम्। इकारस्य स्थानेऽकारपाठेनापि तदप्रवृत्तिसिद्धेः। [इत्यादिसिद्धमिति।] शत्रन्तं सिद्धमित्यर्थः। अन्यथा शानच् स्यादिति भावः। आदिना उदयतीत्यादिप्रयोगसंग्रहः। ९७

नञ्घटितशास्त्रबोधितः पर्युदासे फलितः प्रसज्यप्रतिषेधे वाच्यश्च यो निषेधस्सोऽनित्य इति परिभाषार्थः। उपदर्शितपरिभाषास्वादौ साधारणं दोषमाह। [भाष्येति।] नन्वासां भाष्ये-

भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात्॥ किञ्च ज्ञापितेप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः। आट्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम्। अत एव घोर्लोपो लेटि वा इति सूत्रे वेति प्रत्याख्यातम्। लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति दधादिति।

---

ऽदर्शनेऽपि प्रसिद्धप्रयोगसमर्थनाय तत्तत्सूत्राक्षरसार्थक्यान्यथानुपपत्त्या स्वीकारे को दोष इत्यत आह। [भाष्यानुक्तेति।] लक्ष्यैकचक्षुष्कस्य सकलशिष्टप्रयोगसमर्थनचतुरस्य भगवतः पतञ्जलेरज्ञानकल्पनापेक्षया तथाविधप्रयोगाणामनन्यथासिद्धानामसाधुत्वकथनमेव न्याय्यम्। अत एव "हापितःक्वासि हे सुभ्रु" इति भट्टिप्रयोगस्य प्रामादिकत्वमेव दीक्षितैरप्युक्तमिति भावः। नन्वेतासामनभ्युपगमे तत्तत्परिभाषाज्ञापकानामुक्तसूत्राक्षराणां सार्थक्यं दुर्वचमत आह। [भाष्याविचारितेति।] [अदृष्टमात्रार्थकत्वेति।] भाष्यकृत्प्रत्याख्यातेष्वपि सूत्राक्षरेष्वीदृशफलस्यैव सर्वैरङ्गीकृतत्वादिति भावः। इदं च सर्वासां ज्ञापकत्वमभ्युपगम्योक्तम्। वस्तुतस्तासु कासांचिज्ज्ञापकत्वमेव न संभवतीत्याह [आनीत्यस्येति।] आगमशास्त्रस्यानित्यत्वे ज्ञापकस्येति शेषः। [न सार्थक्यमिति।] ज्ञापितेऽपि न स्वांशे चारितार्थ्यमित्यर्थः। तत्र हेतुमाह। [आडागमशून्येति।] नन्वेवं तत्र सूत्रे आकारग्रहणं व्यर्थमत आह। [आड्ग्रहणंत्विति।] इत्संज्ञकटकारोपलक्षिताकारग्रहणं त्वित्यर्थः। यद्वा आटो ग्रहणं ग्राहक आकार इत्यर्थः। [लोट्ग्रहणवदिति।] यथा लोटोऽन्यत्रानेरभावात्तत्र सूत्रे लोड्ग्रहणं पारायणादावदृष्टमात्रफलकमेवमेव तत्रत्यमाकारग्रहणमपीति भावः। न केवलमेतासु भाष्याननुग्रह एव, अपि तु, तद्विरोधोऽपीत्याह। [अत एवेति।] आगमशास्त्रमनित्यमित्यस्याभावादेवेत्यर्थः। प्रत्याख्यानप्रकारमेवाह। [लोपेऽपीति।] नित्यं लोपेऽपीत्यर्थः। [आट्पक्षे इति।]

अटि दधदिति। आगमशास्त्रस्यानित्यत्वे त्वट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव। एतेन यत्कैयटेन केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता सापि चिन्त्या। प्रत्याख्यानपरभाष्यविरोधात्। तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च॥ चक्षिङो ङकारस्यान्तेदित्वाभावसम्पादनेन चारितार्थ्याच्च। एवमेव।

आतिदेशिकमनित्यम्॥ ९९॥

---

लेटोऽडाटावित्यनेन लेटोऽडाटोर्विधानादिति भावः। [अटि दधदिति।] तथा च विकल्पफलसिद्ध्या-वाग्रहणमनावश्यकमिति तदाशयः। [आट्च सतीति।] अनेन न्यायेनाटोऽप्रवृत्तावित्यर्थः। [असिद्धेति।] आकारस्य नित्यं लोपे तदसिद्धिरिति भावः। बाधे दृढे इति न्यायेन कैयटविरोधं परिहरति। [एतेनेति।] अस्यैवार्थमाह। [प्रत्याख्यानेति।] अत एव तेनाप्यरुचिसूचकं केचिदित्युक्तम्। तस्य च न्यासकारादय इत्यर्थः। तृतीयेऽपि भाष्यविरोधमाह। [प्रत्याख्यानाच्चेति।] चतुर्थेऽपि ज्ञापकत्वासंभवमाह। [अन्तेदित्त्वेति।] अन्यथा नुमापत्तिरिति भावः। तत्राकारपाठे त्वपाणिनीयत्वेनादृष्टहानिरिति भावः। एवंचानन्यथासिद्धैतत्साध्यप्रयोगाणां लोकेऽसाधुत्वमेव। अत एव स्वायंभुवमिति प्रयोगस्य लोकेऽसाधुत्वमोर्गुण इति सूत्रे शेखरे उक्तमिति बोध्यम्। ९८

तथा न्यासकारादिभिरुक्तास्तदग्रिमा अन्या अपि परिभाषाः खण्डयति। [एवमेवेति।] उक्तपरिभाषावदित्यर्थः। [अनित्यमिति।] स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलोप

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम् ॥

स्वायम्भुवमित्यादि लोके ऽसाध्वेवेत्यन्यत्र विस्तरः ॥

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह ॥

---

इति सूत्रमत्र ज्ञापकमिति तदाशयः। [लोपविधिरिति।] अत एव कानि सन्तीत्यादौ यणःपूर्वमल्लोप इति भावः। अत्रापि यावता विनेति न्यायेन प्रत्ययलोप इति सूत्रमेव ज्ञापकम्। अन्यथा सर्वत्र पूर्वं प्रत्ययनिमित्तके कार्ये पश्चाल्लोपेनेष्टसिद्धौ तदसंगतिरिति भावः। [इड्विधिश्चेति।] तेन श्वयित्वेत्यत्र संप्रसारणात्पूर्वमिटि ततो न क्त्वासेडिति कित्त्वनिषेधेन संप्रसारणाभावः। सनि ग्रहगुहोश्चेति सूत्रे उकोऽनुकर्षणार्थं कृतं चग्रहणमत्र ज्ञापकम्। अन्यथा बुभूषतीत्यादाविको झलिति कित्त्वे श्र्युकःकितीत्यनेनेण्निषेधे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। सत्यां त्वस्यामादाविड्झलादित्वादिको झलित्यस्याप्राप्त्या कित्त्वाभावाच्छ्र्युकःकितीत्यस्याप्रवृत्त्या तदावश्यकमिति भावः। [इत्यादीति।] आदिना क्रियाविशेषणानां कर्मत्वं क्लीबत्वमेकत्वं च, प्रतिपदविधानाद्योगविभागो गरीयानित्यादि संग्रहः। [अनुक्तमिति।] स्थानिवत्सूत्रेण सिद्धे प्रत्ययलक्षणसूत्रस्य नियामकताया भाष्ये उक्तत्वादनुवृत्त्यर्थकचकाराणां भगवता प्रत्याख्यानाच्चोक्तज्ञापनासंभवान्निर्मूलत्वं चानयोरिति बोध्यम्। नन्वेवं स्वायंभुवमित्यादिप्रयोगणां कागतिरत आह। [स्वायंभुवमिति।] [लोके इति।] अनेनार्षप्रयोगाणां साधुत्वं सूचितम्। [अन्यत्रेति।] उद्योतादावित्यर्थः। ९९

खण्डनीयत्वप्रसङ्गादाह। [यदपीति।] [वधादेशो न स्यादिति।] लुक्यपि प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वे तद्विशिष्टाया लिङ्प्रकृते र्हन्रूपत्वाभावादिति भावः। [यङ्लुगन्तस्यापीति।]

## प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥

षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्। अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति। तदपि न। भाष्ये ऽदर्शनात्। किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधने ऽपि समुदायस्य तत्त्वबोधने मानाभावः॥ अत एव दयतोर्दिगीति सूत्रे ऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषय-सप्तम्याश्रयणेन परिहृतं भाष्ये। अन्यथा त्वदुक्तरीत्यै-

---

अपिना केवलसमुच्चयः। परिभाषासिद्धिप्रकारमाह। [षाष्ठेति।] समुदाये प्रकृतिरूपत्वबोधने हेतुरयम्। [इदमिति।] परिभाषारूपं वचनमित्यर्थः। [अत एवेति।] षाष्ठद्वित्वे समुदाये प्रकृतिरूपत्वसत्त्वादेवेत्यर्थः। [धित्वसिद्धिरिति।] अन्यथा समुदाये हुबुद्धेरभावात्तद-सिद्धिरिति भावः। अत्रानुपदोक्तपरिभाषासाधारणं भाष्यादर्शनरूपं दोषमभिप्राय निर्मूलत्वमस्य दर्शयति। [किञ्चेति।] [तेन सिद्धान्तेनेति।] द्विष्प्रयोगत्वसिद्धान्तेनेत्यर्थः। [तत्त्वबोधने ऽपीति।] प्रकृतित्वबोधने ऽपीत्यर्थः। इदमभ्युपेत्योक्तम्। समुदाये कथंचिदपि प्रकृतित्वालाभ इत्यर्थबोधन-स्यैवात्राभिप्रेतत्वात्। वस्तुतष्षाष्ठद्वित्वेष्वाद्यस्यैव प्रत्ययप्रकृतित्वं नतूभयोरिति प्रत्ययग्रहण-परिभाषानिरूपणावसरे निरूपितमिति बोध्यम्। [मानाभाव इति।] आनुपूर्वीभेदादिति भावः। [अत एवेति।] षाष्ठद्वित्वेषु समुदाये प्रकृतित्वाभावादेवेत्यर्थः। [परत्वादिति।] भूभावात्परत्वा-दित्यर्थः। [विषयसप्तम्याश्रयणेनेति।] अधिकृतस्यार्धधातुक इत्यस्य विषयसप्तमीत्वस्वीकारेणेत्यर्थः। तथा च लिटःप्रागेव तद्विषये भूभावे ततो द्वित्वे न प्रागुक्तातिप्रसंग इति भावः। [अन्यथेति।] समुदायस्यैव प्रकृतित्वे इत्यर्थः। [त्वदुक्तरीत्येति।] हन्तेर्यङ्लुगन्ताल्लिङि त्वदुक्तरीत्येत्यर्थः।

काज्ह्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव। तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या॥ भूसुवोरित्यस्य तदन्ताङ्गस्येत्यार्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः॥

यदपि ननु वृद्धिर्यस्याचामादिरित्यत्रैकपरिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह॥

---

[तदसंगतिरिति।] उक्तशङ्कासमाधानयोरसङ्गतिरिति भावः। नन्वेवं जुहुधीति रूपसिद्धिः कथमत आह। [तस्मादिति।] उक्तभाष्यात्समुदाये प्रकृतित्वाभावादित्यर्थः। [आदायैवेति।] भूवादय इति धातुत्वस्यार्थवत्त्वस्य चोत्तरखण्ड एव सत्त्वादिति भावः। नन्वेवमप्यङ्गत्वस्य समुदाय एव सत्त्वात्तत्र च भूरूपत्वाभावात्प्रकृतपरिभाषाया अभावे यङ्लुगन्ते भूसुवोरिति गुणनिषेधस्याप्राप्तया अप्राप्तगुणनिषेधविधानाय बोभोत्वितिनिपातनस्य सार्थकतया तस्य भाष्योक्तं लोट्येवेति नियामकत्वं विरुध्येतेत्यत आह। [भूसूवोरिति।] [अर्थादपीति।] अपिना अङ्गावयवयोर्भूसुवोरित्यर्थपरिग्रहः। [तस्मादिति।] परिभाषाया अभावादित्यर्थः। [चिन्त्यमेवेति।] आर्धधातुक इत्यस्यात्र विषयसप्तम्यन्ततया अर्थाधिकारानुरोधात्प्रकृतेऽपि तथात्वस्य न्याय्यत्वात्तदनुरोधिनो लिङीत्यस्यापि विषयसप्तम्यन्तताया एवौचित्याल्लिङ्विषये द्वित्वात्प्रागेव वधादेशे ततो द्वित्वे दीर्घोऽकित इति दीर्घे सत्यभिधाने वावध्यादित्येव रूपमिति बोध्यम्। १०१

खण्डचत्वप्रसङ्गादेवाह। [यदपीति।] [असिद्धिरिति।] यस्याचामादिरिक्स्थानिका वृद्धिरिति तदानीं तदर्थादिति भावः। साक्षाद्विधेयविशेषण एव परिभाषोपतिष्ठते

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

अनूद्यमान विशेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः ॥ विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवे ऽपि व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यपस्थापकत्वे मानाभाव इति तर्कमूलेयम् ॥ किञ्चोदीचामातः स्थाने इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्। अन्यथा षष्ठी स्थाने इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति। तन्न। उदात्तस्वरितयोर्यण इत्यादौ ष्यङः संप्रसारणमिति सूत्रभाष्योक्तरीत्याल्लोपो ऽन इत्यादौ चैतस्या व्यभिचरितत्वात्।

---

नोद्देश्यविशेषणेष्विति परिभाषार्थः। परिभाषासिद्धिप्रकारं दर्शयति। [विध्यङ्गभूतानामिति।] विध्युपकारकाणामित्यर्थः। [असिद्धतयेति।] इदं च तासां विधेयेनासंबन्धे हेतुः। विधेयस्यापूर्वबोध्यत्वेन परिभाषाणां विध्युपकारकाले तस्यासिद्धतयेत्यर्थः। [तद्विशेषण इति।] विधेयविशेषण इत्यर्थः। [तद्विशेषणेति।] विशेषणविशेषणेत्यर्थः। न्यायसिद्ध एवात्रार्थे ज्ञापकत्वमप्याह। [किञ्चेति।] [तन्नेति।] तदपि नेत्यर्थः। [इत्यादाविति।] आदिना अचो रहाभ्यामित्यस्य परिग्रहः। [व्यभिचरितत्वादिति।] आद्येऽ नूद्यमानयण्विशेषणे उदात्तस्वरितयोरित्यत्र षष्ठीस्थान इति परिभाषाप्रवृत्त्या द्वितीयेऽनूद्यमानान्विशेषणतया भगवतोक्ते स्वादिष्वित्यत्र निर्दिष्टपरिभाषाप्रवृत्त्या तृतीयेऽ नूद्यमानयर्विशेषणे रहाभ्यामित्यत्र तस्मादिति परिभाषाप्रवृत्त्या चास्य व्यभिचार इति भावः। ननु संख्याव्ययादेरित्यत्रादिग्रहणादस्य अनित्यताया अन्यैरुक्तत्वान्नायं दोषोऽत

भाष्यानुक्तत्वाच्च। स्थानसंबन्धो न परिभाषालभ्य इत्यर्थस्य षष्ठी स्थाने इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च। तत्र स्थानेग्रहणं तु स्पष्टार्थमेव॥ किञ्च विधौ परिभाषेति प्रवाद इको गुणवृद्धी अचश्च इत्यनयोर्विधीयत इत्यध्याहारमूलको ऽन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः॥ १०२॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ नमः स्वस्तीति चतुर्थी दुर्वारेत्यत आह।

---

आह। [भाष्येति।] ननु भाष्यानुक्तत्वेऽपि न्यायसिद्धायास्सूत्राक्षरानुगृहीतायाश्चास्या आश्रयणे को दोषोऽत आह। [स्थानिसंबन्ध इति।] स्थाननिरूपितसंबन्ध इत्यर्थः। [परिभाषालभ्य इति।] षष्ठीस्थान इति परिभाषालभ्य इत्यर्थः। किन्त्वन्तरङ्गन्यायलब्ध इति भावः। नन्वेवं तत्र स्थानपदस्यानर्थक्यं स्यादत आह। [तत्रेति।] एवं सार्वत्रिकत्वेनास्या असत्त्वं प्रतिपाद्य त्वदुक्तान्यमूलिकाया अस्याः क्वचिदङ्गीकारेऽपि न दोष इत्याह। [किंचेति।] [अध्याहारमूलक इति।] तथा च तत्परिभाषाद्वयविषयक एवायं न्यायः। वृद्धिर्यस्येत्यादौ च वृद्धिपदस्य विधेयबोधकत्वाभावेन तत्रेक्परिभाषाया अनुपस्थित्या न शालीयाद्यसिद्धिरिति भावः। १०२

अङ्गवृत्तपरिभाषानिरूपणानन्तरं संज्ञाप्रसंगेनोपस्थितसंज्ञापूर्वक इति परिभाषां ततः खण्ड्यत्वेनोपस्थिता अन्या अपि परिभाषा व्याख्याय पुनरतीतविभक्तिप्रसंगानुसन्धानेनोपस्थितां परिभाषामवतारयति। [नन्विति।] अत्र प्राञ्चः। क्रियान्वयित्वं कारकत्वं तदर्थिका च विभक्तिः कारकविभक्तिः। तद्भिन्ना तूपपदविभक्तिः। सर्वस्यापि वाक्यस्य क्रियया परिसमाप्त्या क्रियायाःप्राधान्येन प्रधानकार्याणां बलवत्त्वाद्विशेष्यभूतायास्तस्याः प्रथममुपस्थितत्वेन तन्निमित्तक-

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति सहयुक्ते इत्यादिसूत्रेषु भाष्ये ध्वनितम् ॥ इयं च वाचनिक्येव। अत एव यस्य च भावेन इति सप्तम्यपेक्षया-अधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन तत्र च दीयते इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम्।

---

कार्याणामन्तरङ्गत्वाच्च कारकविभक्तेर्बलवत्त्वसिद्ध्या न्यायसिद्धेयमित्याहुः। वक्ष्यमाणदूषणैस्तत्रा-सांगत्यं मन्यमानोऽन्यथा व्याचष्टे। [कारकविभक्तित्वं चेति।] क्रियाजनकत्वं कारकत्वं न तु क्रियान्वयित्वम्। कारकाणां क्रियान्वयनियमस्तु जनकं प्रति जन्यस्य नियताकाङ्क्षत्वात्सिद्ध-मित्याशयः। [तच्चेति।] ईदृशं कारकविभक्तित्वमित्यर्थः। [भाष्ये ध्वनितमिति।] तत्र ह्यनया परिभाषया तृतीयातःप्रथमायाःप्राबल्यमास्थाय पुत्रेण सहागतःपितेत्यादौ प्राधानव्यावृत्तये कृतम-प्रधानग्रहणं प्रत्याख्यातम्। यदि तु क्रियान्वयित्वमेव कारकत्वमित्युच्यते तदा प्रथमान्तार्थस्य तिङर्थान्वयित्वेऽपि क्रियान्वयाभावात्कारकविभक्तित्वाभावेन तदसङ्गतिरेवेति तेनेदं ध्वनितमिति भावः। [वाचनिक्येवेति।] एवकारेण प्राचीनोक्तप्रधानान्तरङ्गन्यायमूलकत्वनिरासः। [अत एवेति।] वाचनिकत्वादेवेत्यर्थः। [ध्वनितमिति।] एतदुत्तरं, स्पष्टमुक्तमित्युत्तरं च संगच्छत इति शेषः। तत्रहि मासकार्यस्यापि मासभवत्वाच्छरदि कार्यं शारदमित्यत्रापि तत्र भव इत्यणैव सिद्धे तत्र सूत्रे कार्यग्रहणमनर्थकमित्याशयेन वार्तिककृता "कार्यग्रहणमनर्थकं भवेन कृतत्वा" दिति कार्यग्रहणे प्रत्याख्याते, भाष्यकृता "कार्यग्रहणमेव भवान् प्रत्याचष्टे न पुनर्दीयते ग्रहणमपि यथैव यन्मासे कार्यं तन्मासे भवं भवति, एवं यदपि यन्मासे दीयते तदपि मासे भवं भवति। अतस्तत्रापि तत्र भव इत्येव सिद्धम्" इत्याशङ्क्य ततो "न सिध्यति, नैतन्मासे दीयते किं

एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तं, यस्य च भावे-नेति सप्तम्या अपि क्रियान्वयित्वात्। ये तु प्रधानीभूत-क्रियासंबन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति तेषामुभयोरपि क्रियासंबन्धनिमित्तकत्वेन तद-

---

तर्हि मासे गते एवं तर्हि औपश्लेषिकमधिकरणं विज्ञास्यते " इति शङ्कासमाधानाभ्यां दीयतेग्रहणमपि प्रत्याख्यातम्। तद्भाष्यव्याख्यावसरे कैयटेन च " मासे दीयत इति नैषा अधिकरण सप्तमी किं तर्हि यस्य च भावेनेति। तत्र भव इत्यत्र चाधिकरणसप्तम्याश्रिता उपपदविभक्तेः कारकविभक्ति-र्बलीयसीति न्यायादिहत्वतिदेशसामर्थ्याद्भावलक्षणसप्तमीपरिग्रह " इत्यवान्तरशङ्कासमाधानग्रन्थस्या-शयमुपवर्ण्य " मासे अतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणं भवत्येव वटे गाव इति वत्तस्यापि मासेन सामीपिकसम्बन्धस्य सत्त्वात्तथा च तत्रापि तत्र भव इत्यनेनैव सिद्धम्। कारकप्रकरणे च गौणस्यापि संज्ञा भवती " ति चरमसिद्धान्तभाष्याशय उक्तः। अनेन च भाष्यकैयटग्रन्थसन्दर्भेणास्य वाचनिकत्वं ध्वनितमिति भावः। तदेतद्वक्ष्यति। [एतेनेति।] उक्तभाष्यकैयटग्रन्थविरोधेनेत्यर्थः। तमेवदर्शयति। [सप्तम्या अपीति।] तथा च तदुक्तदिशा तस्या अपि कारकविभक्तित्वेन तत्रैतन्न्यायसंचारासंगतिरिति भावः। प्रधानन्यायमूलिकेति सीरदेवाद्युक्तिं खण्डयति। [येत्विति।] सीरदेवादय इत्यर्थः। [उभयोरपीति।] अधिकरणभावलक्षणसप्तम्यो रुभयोरपीत्यर्थः। [क्रियासंबन्धेति।] प्रधानीभूतक्रियासंबन्धेत्यर्थः। [तदसंगतिरिति।] तत्र च दीयत इति भाष्यासंगतिरित्यर्थः। नन्वेवमपि दानक्रियासंबन्धस्योभयसाधारणत्वेऽप्यधिकरण-सप्तमीनिमित्तभूतक्रियाकारकभावसंबन्धस्य शीघ्रोपस्थितिकत्वादन्तरङ्गत्वम्। भावलक्षणसप्तमीनिमित्त-भूतज्ञाप्यज्ञापकभावस्य तु क्रियाकारकभावसंबन्धमूलकत्वाद्विलम्बोपस्थितिकत्वेन बहिरङ्गत्वम्। नहि ज्ञापनक्रियासंबन्धमन्तरेण संबन्धिनो ज्ञाप्यज्ञापकभावस्संभवति। ततश्चान्तरङ्गन्यायेनैवाधिकरण-सप्तम्या बलवत्त्वसिद्ध्या कैयटाद्युक्तदिशा अस्या अन्तरङ्गन्यायमूलकत्वाङ्गीकारे नोक्तभाष्यविरोध

सङ्गतिः स्पष्टैव। नमोवरिव इति सूत्रे नमस्यति देवा-नित्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासंगतेश्च॥ एतेन क्रियाकारकसंबन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा। उपदार्थेन तु यत्किञ्चित्क्रियाकारकभाव-मूलकः संबन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेत्यपास्तम्। नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव॥ सहयुक्ते इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः॥ १०३॥

---

इति वाचनिकत्वाश्रयणमनावश्यकमित्यत आह। [नमो वरिव इति।] [असंगतेश्चेति।] धात्वर्थोपपदार्थाभ्यां देवानां क्रियाकारकभावसंबन्धेनैवान्वयेनान्तरङ्गबहिरङ्गभावस्य वक्तुमशक्यतया तन्मूलकत्वेन कैयटाद्यभिमतस्यास्य न्यायस्याप्रवृत्त्या तेन चतुर्थीवारणस्य भाष्योक्तस्यासंगतिरिति भावः। अन्तरा ऽन्तरेणेति सूत्रस्थकैयटोक्तमनूद्य खण्डयति। [एतेनेति।] [अन्तरङ्ग इति।] तयोः परस्परमुत्थिताकाङ्क्षासत्त्वेन तत्संबन्धस्य शीघ्रोपस्थितिकत्वादन्तरङ्गत्वमित्याशयः। [यत्किंचिदिति।] सर्वत्र संबन्धस्य किंचित्क्रियाकारकभावमूलकत्वादिति भावः। एतेनेत्यस्यार्थमाह। [नमस्यतीति।] [अन्वयादिति।] देवानामिति शेषः। तथा च तद्भाष्यासंगतिरिति भावः। ननु नमःपदस्य नामत्वेन तदर्थस्याक्रियात्वात्कथं तत्र देवानां क्रियाकारकभावेनान्वयोऽत आह। [अत्र चेति।] नमस्यतीत्यत्रेत्यर्थः। [क्रियात्वमिति।] विशिष्टधातुतानियामकक्यजादिसमभिव्याहारादिति भावः। अस्य न्यायमूलकत्वे दोषान्तरं ध्वनयन्नाह। [सहयुक्त इति।] [प्रधाने प्रथमासाधनार्थमिति।] तत्राप्रधानग्रहणप्रत्याख्याने प्रधाने प्रथमासाधनार्थमित्यर्थः। अस्य अन्तरङ्गन्यायमूलकत्वेत्वप्रधानग्रहणाभावे विशेष्यतया प्रधानस्यापि सहार्थेन योगादेतद्विषये प्रथमाया नाप्राप्त्या तृतीयायाः

नन्वदमुयङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह॥

अनन्त्यविकारेऽन्त्यसदेशस्य॥ १०४॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्रासावन्त्यसदेशस्यैवेति तदर्थः। अन्यथा धात्वादेर्णत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमतिसिञ्चतीत्यादौ॥ अनन्त्यविकार इति च लिंगम्॥ अन्त्येन समानो देशो

---

प्रथमापवादत्वे सर्वत्र तृतीयापत्तिः। अन्यथा सर्वत्र प्रथमापत्तिः। ईदृशातिप्रसङ्गवारणायाप्रधानग्रहणस्यावश्यकत्वादेनामाश्रित्य तत्प्रत्याख्यानासंगतिरतोवाचनिकत्वमेवास्य लाघवाद्युक्तमित्याशयः। नचैवं नमश्चकार देवेभ्यः, रावणाय नमस्कुर्यादिति भट्टिप्रयोगासंगतिरिति वाच्यम्। अनुकूलयितुमित्यध्याहारेण कियार्थोपपदस्येत्यनेन चतुर्थ्या तदुपपत्तेः। नमः स्वस्तीत्यादिना चतुर्थीति जयमङ्गलोक्तिस्तु चिन्त्यैवेति बोध्यम्। १०३

वाचनिकत्वसाधर्म्येणोपस्थितत्वादाह। [नन्विति।] [अदमुयङिति।] अदश्शब्दे उपपदेऽञ्चतेःऋत्विगित्यादिना किनि विष्वग्देवयोरित्यनेनादसष्टेरद्र्यादेशे यणादिषु रूपम्। [पूर्वस्येति।] दस्येत्यर्थः। प्रत्यासत्तिन्यायेनाह। [अन्त्यसदेशेति।] [युगपदिति।] कार्यस्येति शेषः। सर्वं वाक्यं सावधारणमिति न्यायेनाह। [अन्त्यसदेशस्यैवेति।] [अन्यथेति।] प्रत्यासत्तिन्यायेनेदृशार्थाङ्गीकार इत्यर्थः। [धात्वादेरिति।] अस्य विधीयमान इति शेषः। [इत्यादाविति।] तत्रान्त्यवर्णतद्वर्णयोरचा व्यवधानेनान्त्यसदेशत्वाभावादिति भावः। आदिना तदोस्सस्साविति सत्वं स इत्यत्रैव स्यान्नतु स्य इत्यत्रेत्यस्य संग्रहः। परिभाषाया लिङ्गवत्त्वनियमादाह। [अनन्त्यविकार इति।] तथाच यत्रानन्त्यविकारोऽन्त्यस्य विकाराप्राप्तिः प्रत्यसत्त्या चान्त्यसदेशानन्त्यसदेशयोर्युगपत्कार्यप्राप्तिश्च तादृशलक्ष्यविषयकत्वेनोपप्लुते शास्त्रेऽन्त्यसदेशस्येत्युपतिष्ठत इति भावः। अन्त्यसदेशस्येत्यस्याक्षरार्थमाह। [अन्त्येनेति।] निपातनाद्बहुव्रीहिः सादेशश्च। नन्वेतत्परि-

यस्य सो ऽन्त्यसदेशः। तत्त्वं चान्त्यवर्णतद्वर्णयोरितरा-व्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थं न संप्रसारणे इति चरितार्थम्। अल्लोपोऽ न इत्यादेरनस्त-क्ष्णेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलं, यजादि-स्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्यय-स्योत्थिताकाङ्क्षतयौचित्यादङ्गावयवयजादिस्वादि परस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्या उचित-

---

भाषाश्रयणे चलीक्लृप्यत इत्यादावुभयत्र लत्वं न स्यादत आह। [तत्त्वं चेति।] अन्त्यसदेशत्वं-चेत्यर्थः। [इतरेति।] अत्रेतरपदेनान्त्यवर्णविजातीयवर्णस्यैव ग्रहणम्। तेनादमुयङ्ङित्यादावन्त्य-वर्णसजातीयेन रेफेण व्यवधानेऽप्यस्य प्रवृत्तिः। वर्णश्चात्राक्षरसमाम्नायिक एवेति न नियमः। तेन चलीक्लृप्यत इत्यत्रान्त्यवर्णविजातीयेनाज्भागेन व्यवधानेऽपि नास्याः प्रवृत्तिः। अत्रार्थे मानमाह। [अत एवेति।] अन्त्यवर्णतद्वर्णयोरितराव्यवधान एवैतत्प्रवृत्तेरित्यर्थः। [चरितार्थमिति।] अन्यथा तदुदाहरणभूते विद्ध इत्यादावनेनैव न्यायेन संप्रसारणवारणसंभवात्त-द्वैयर्थ्यं स्पष्टमेवेति भावः। परिभाषाफलं दर्शयति। [अल्लोपोऽन इत्यादेरिति।] अत्रादिना सान्त महत इत्यस्य संग्रहः उत्तरत्रादिशब्देन हंसशिरांसीत्यस्य सङ्ग्रहः। ननु ष्यङस्संप्रसारणमिति सूत्रस्थभाष्योक्तदिशाङ्गसंज्ञाक्षिप्तप्रत्ययस्याना विशेषणान्नाद्याकारे लोपप्रसक्तिरिति नेदमस्याः फलमत आह। [यजादिस्वादिपरेति।] [औचित्यादिति।] ननु तथा औचित्येऽपि परिभाषानाश्रयण-प्रयुक्तलाघवेनान् विशेषणत्वमेव कुतो नेत्यत आह। [अनेकत्रेति।] अल्लोपोऽनःविभाषाङिश्योः सान्तमहत इत्यादिष्वित्यर्थः। [अनेकक्लिष्टकल्पनेति।] अनस्तक्ष्ण इत्यादावाद्यानोऽकारस्य लोपवारणाय संज्ञासु सर्वथा दुरुपपादस्य पदैकवाक्यत्वस्य स्वीकारः तत्राप्युत्थिताकाङ्क्षानुरोधे-नाङ्गसंज्ञाक्षिप्तस्य प्रत्ययस्याङ्गविशेषणताया औचित्येऽप्यनादिविशेषणत्वेनान्वय इत्येवं रूपेत्यर्थः। [अस्या इति।] परिभाषाया इत्यर्थः। ननु ष्यङस्संप्रसारणमिति सूत्रे भाष्ये फलानामन्यथासिद्धि-

त्वात्॥ न चैषा ष्यङः संप्रसारणम् इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्। वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात्॥ मिमार्जिषतीत्यर्थं चैषा। तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्

---

प्रदर्शनेनास्या अनावश्यकत्वलाभात्कथमस्या औचित्यमत आह। [नचेति।] [वार्तिकोक्तफलानामिति।] "प्रयोजनं न संप्रसारणे संप्रसारणमिति वार्तिकोक्तैतत्परिभाषाफलानामित्यर्थः। [अनेकक्लिष्टेति।] प्रागुक्तानेकक्लिष्टेत्यर्थः। [प्रदर्श्यापीति।] अस्योपसंहारादित्यनेनान्वयः। [एषा कर्तव्येति।] अनेकक्लिष्टकल्पनाभिर्यथा कथंचित्तदुक्तफलानां केषां चिदन्यथासिद्धत्वेऽप्यनन्यथासिद्धफलसिद्धयेऽन्यथासिद्धेष्वप्यनेकक्लिष्टकल्पनाव्यावृत्तये च परिभाषा आवश्यकीति भावः। [दोषेष्विति।] आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्ग" इति वर्तिककृदुक्तदोषेष्वित्यर्थः। प्रतिविधानं दर्शयति। [उदात्तनिर्देशादिति।] यथा स्वरितेनाधिकारस्तथाप्रतिज्ञापापितेनोदात्तेनैतत्परिभाषाप्रवृत्तिः। तथाचा "नन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देशे" इति पाठ्यमिति तदाशयः। तथा च यत्रस्याःप्रवृत्तिरिष्टा तत्रोदात्तनिर्देशःकार्यः। यत्र तु नेष्यते यथा त्यदादीनामः, णोनः धात्वादेष्वस्स इत्यादिविषये तत्र न कार्य इति तदाशयः। वस्तुतस्सोऽपि न कार्यः। अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्कार्यप्राप्तावन्त्यसदेशस्यैवेति नियमाश्रयणेन तदुक्तदोषाणां सर्वेषामपि सुवारत्वादिति तत्रैव भाष्ये स्पष्टमिति बोध्यम्। अस्यास्सर्वथा आवश्यकत्वमेव ध्वनयन् "मृजेर्वृद्धिर्विधा" विति वार्तिकोक्तप्रयोजनविषय एव भाष्यकृदुक्तमनन्यथासिद्धं प्रयोजनमस्या दर्शयति। [मिमार्जिषतीत्यर्थं चेति।] तदेतदुपपादति। [तत्रेति।] मिमार्जिषतीत्यत्रेत्यर्थः। [अन्तरङ्गत्वाद्द्वित्वे इति।] सन्यङोरित्यस्य षष्ठ्यन्तत्वेनापरनिमित्तकत्वाद्वृद्ध्यपेक्षया द्वित्वस्यान्त-

द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः। लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः॥ यत्तु न संप्रसारण इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः। एतत्सूत्रप्रयोजनान्येतस्याः परिभाषाया न भवन्ति व्यधादावन्त्यसमानदेशयणोऽभावादिति। नैतान्येतस्याः प्रयोजनानीति पाठोऽपि क्व चिद् दृश्यते॥ वाचनिक्येवैषा। स्पष्टा च ष्यङ इति सूत्रे ऽदसोऽसेरिति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्य इत्यन्यत्र विस्तरः॥ १०४॥

नन्वव्यक्तानुकरणस्यात इति पररूपं पटत् इति पटितीत्यादावलोऽन्त्यस्य प्राप्नोतीत्यत आह॥

---

रङ्गत्वमिति भावः। [इति न्यायेनेति।] विकारकृतलक्ष्यभेदस्य तत्रानाश्रयणादिति भावः। एतत्परिभाषाश्रयणे आपाततःप्रतीयमानं न संप्रसारण इति सूत्रस्थभाष्यविरोधमुद्भाव्य तदाशयं दर्शयति। [यत्त्वित्यादिना।] [प्रयोजनानीति।] विद्ध इत्यादीनीत्यर्थः। [यणोऽभावादिति।] अन्त्यवर्णतद्वर्णयोरकारेण व्यवधानादिति भावः। अदमुयङित्येतत्सिद्ध्यर्थमप्यस्या आवश्यकत्वं भगवतोक्तमिति सूचयन्नाह। [अदसोऽसेरिति।] १०४

अनन्त्यविकार इत्यत्र प्रतियोगित्वेनोपस्थितालोऽन्त्यपरिभाषाप्रसङ्गादाह। [नन्विति।] [पटदितीति] पटितीत्यादिसिद्ध्यर्थके पटदितीत्यनुकरण इत्यर्थः। [प्राप्नोतीति।] तथाच

## नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् इत्याद्यन्त्यस्यैव। अभ्यासो ऽनर्थको ऽर्थावृत्त्यभावात् किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्। एषाऽलोऽन्त्यात्सूत्रे भाष्ये स्पष्टा। फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ १०५ ॥

---

पटेतीति स्यान्न तु पटितीति भावः। अभ्यासविकारविषयभिन्नेऽनर्थकेऽलोन्त्यविधिर्न प्रवर्तत इति परिभाषार्थः। [बिभर्तीत्यादाविति।] आदिना अजीगणदित्यादिसंग्रहः। उत्तरत्रादिशब्देनेच गण इत्यस्य संग्रहः। नन्वनभ्यासविकार इति व्यर्थम्। अभ्यासस्यार्थवत्त्वेन निषेधस्यैवाप्राप्तेरत आह। [अभ्यासोऽनर्थक इति।] तत्र हेतुमाह। [अर्थावृत्तीति।] शब्दद्वयश्रवणवत्ततोऽर्थद्वयाप्रतीतेरिति भावः। [अन्यत्रेति।] तनादिशेखरादावित्यर्थः। विवृत चैतदस्माभिः प्रत्ययग्रहणपरिभाषानिरूपणावसरे इति ततोऽवसेयम्। [अलोऽन्त्यादिति।] उपधासंज्ञासूत्रे इत्यर्थः। [अन्यथासिद्धेति।] नाम्रेडितस्यान्त्यस्य तु वेति ज्ञापकात्पटितीत्यादिसिद्धिः। अनाप्यक इत्यतोऽनित्यनुवर्त्य हलि लोप इत्यनेनानो नकारस्य लोपविधानादाभ्यामित्यादिसिद्धिः। द्विशकारकनिर्देशेन ध्वसोरिति लोपस्य सर्वादेशत्वसिद्धिः। अत्र ग्रहणादत्रलोपोऽभ्यासस्येति लोपस्सर्वादेशः। अत एव तस्य लोप इत्यत्र सर्वादेशत्वाय तस्य ग्रहणं चरितार्थमित्यादिरीत्येत्यर्थः। इयं वाचनिकीति केचित्। इदमो मः, इदश्च। यस्सौ, अयू पुंसीत्येव सिद्धे दग्रहणमाद्यांशे ज्ञापकम्। अर्तिपिपर्त्योरिति निर्देशोऽनभ्यासविकार इत्यंशज्ञापकमिति परे।

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह ॥

प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०६ ॥

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः। स्पष्टा चेयं पुमान् स्त्रिया नपुंसकमनपुंसकेनेत्यनयोर्भाष्ये ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च इत्यत्र भाष्यकैयटोः ॥ १०६ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्दे ऽपि स्यादत आह ॥

---

षाष्ठद्वित्वेषूत्तरखण्डस्यार्थवत्त्वबोधनेन स्मृतप्राधान्यप्रसङ्गादाह। [नन्विति।] प्रधान इत्यत्र निरूपितत्वं सप्तम्यर्थः। तन्मात्रनिरूपितकार्यसंप्रत्यय इत्यर्थः। [तेनेति।] उक्तपरिभाषाङ्गीकारेणेत्यर्थः। [प्रधानेति।] स्वाश्रयवत्सद्वारेत्यर्थः। [अप्रधानेति।] तद्विशेषणब्राह्मणनिष्ठेत्यर्थः। [न दोष इति।] नैकशेषापत्तिस्तत्रेत्यर्थः। [स्पष्टा चेयमिति।] तत्राद्येऽनयोक्तस्थले एकशेषो वारितः। द्वितीयेऽनिर्ज्ञातेऽर्थे गुणसंदेहे विदूरेऽव्यक्तरूपे च नपुंसकलिङ्गस्यैव प्रयोगदर्शनात्तस्य प्रधानत्वेनानया तत्सूत्रं प्रत्याख्यातम्। परिभाषाया विषयान्तरमप्याह। [अन्तरङ्गेति।] अपिना परादितोऽन्यस्मात्प्राबल्यं कैमुत्यन्यायसिद्धमिति सूचितम्।

प्राधान्येन प्राबल्यप्रसंगादाह। [नन्विति।] [मातृशब्देऽपीति।] व्याप्तिन्यायाद्धान्य मातृशब्दात्स्यादित्यर्थः। तस्य यौगिकत्वेन व्यक्त्यादिविशेष्यकत्वे स्त्रियामपि वृत्तेस्संभवान्ङीपः

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य ॥ योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धो ऽयमर्थः ॥ कश्चित्तु दीधीवेवीटाम् इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेञ्वीनामिति। तन्न। तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ १०७ ॥

---

प्राप्तिरिति भावः। [तेनेति।] समुदायप्रसिद्धेर्बलवत्त्वाङ्गीकारेणेत्यर्थः। अत्र न्याये बीजमाह। [योगजेति।] रूढ्यर्थतावच्छेदकानाक्रान्तमात्रविषयकयोगजबोध इत्यर्थः। [तदनालिङ्गितेति।] अवयवशक्त्यनालिङ्गितेत्यर्थः। तथा च यौगिकरूढस्थल एवायं प्रतिबध्यप्रतिबन्धकभावो न योगरूढिस्थल इति भावः। नन्वीदृशप्रतिबध्यप्रतिबन्धकभावकल्पन एव किं मानमत आह। [रथकारेति।] रथकारशब्दः। "माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्। शूद्रायां करणो वैश्याद्विन्नास्वेषविधिस्मृतः। माहिष्येण करण्यां तु रथकारःप्रजायत" इति मनुवचनाज्जातिविशेषे रूढः। रथकरणकर्तरि तु यौगिकः। तथा च तस्मिन्नधिकरणे योगेन रथकर्ता द्विजातिर्ग्राह्यो वा उतोक्तरूपजातिविशेषवान्वेति संशय्य विद्यादिमत्त्वाद्योगार्थ एव ग्राह्य इति पूर्वपक्षं कृत्वा योगाद्रूढेर्बलीयस्त्वात्स एव गृह्यते। तदन्यथानुपपत्त्या चाध्ययनादिकं कल्प्यत इति सिद्धान्तितम्। [अयमर्थ इति।] पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्तन्मूलकोऽयं न्यायश्चेत्यर्थः। अस्य केनचिदुक्तं फलमनूद्यखण्डयति। [कश्चिदिति।] [इतीति।] अस्याहेति शेषः। [इत्येव वदेदिति।] असंदेहायेति भावः। तथा अनुक्त्या च न तेषां ग्रहणमिति न तद्वारणमस्याःफलमिति निष्फलैवेयं परिभाषेति तदाशयः। [अन्ये इति।] न्यासकृदादय इत्यर्थः। अनेनारुचिस्सूचिता।

ननु वातायनार्थे गवाक्षे ऽवङो वैकल्पिकत्वाद् गोक्ष इत्याद्यपि स्यादत आह ॥

व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या ॥ शाच्छोरिति सूत्रे लटः शत्रित्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

---

तद्बीजं त्वेवमपि इङंशे संदेहस्यावारणात्तदर्थमुपायान्तराश्रयणस्यावश्यकत्वे तेनैवात्रापि निर्वाह इति नैवं प्रकाराश्रयणम्। किञ्चावतरणोक्तफलसत्त्वेन सफलत्वात्पाण्डुकम्बलादिनिरित्याद्यर्थमप्यस्या आवश्यकत्वान्निष्फलेयमिति।

यौगिकरूढप्रसङ्गेन योगरूढविषयामाह। [नन्विति।] [वातायनार्थ इति।] अभिधेयवाच्यर्थशब्देन बहुव्रीहिः। तथा च वातायनवाच्यके गवाक्षशब्दे इत्यर्थः। यद्वा वातायनरूपेऽर्थे गवाक्षे इत्यर्थः ।[इत्याद्यपीति।] आदिना गो अक्ष इत्यादिपरिग्रहः। [व्यवस्थितेति।] विशिष्टविषये अवस्थितया विभाषया विकल्पेनेत्यर्थः। तत्त्वं च विभाषाशास्त्रीयोद्देश्यतावच्छेदकीभूतं यद्भावाभावान्यतरत्तद्विधायकत्वमिति केचित्। अपिस्सार्वत्रिकाव्यवस्थितविभाषासमुच्चायकः। [क्रियन्त इति।] कचिदिति शेषः। तदेतदाह। [लक्ष्यानुसारादिति।] [व्यवस्थेति।] कचिद्व्यवस्थितविकल्पस्य कचिदव्यवस्थितविकल्पस्येत्येवं व्यवस्थेत्यर्थः। लक्ष्यानुसारमेव दर्शयन्नाह। [शाच्छोरिति।] तत्रहि। "देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षस्संशितव्रत" इति तासां परिगणनं कृतम्। वस्तुतस्तु नेदं परिगणनम्। किंतूदाहरणमात्रम्। अतोऽन्यत्रापि कचिद्भाष्यप्रामाण्यादाश्रीयत इत्यन्यत्र विस्तरः।

# विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥

नियमे ह्यश्रुताया अन्यानिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् ॥ यस्य हल इजादेः सनुम इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥

---

विकल्पप्रसङ्गेन विधेरुपस्थितत्वादाह। [विधिनियमेति।] अपूर्वविधित्वनियमत्वयोरपि संभवेऽपूर्वविधित्वमेवज्याय इत्यर्थः। संभवइत्यनेनासंभवे नियमस्यावकाशःप्रदर्शितः। यद्यपि "विधिरत्यन्तमप्राप्तौनियमःपाक्षिके सति। तत्रचान्यत्र च प्राप्तौ परिसङ्ख्येति गीयत" इति जैमिनीयोक्त्या यत्रेष्टस्य पाक्षिकप्राप्तिर्यथा व्रीहीनवहन्तीत्यादाविष्टस्यावहननस्य पाक्षिकप्राप्तिस्तादृशेष्वेव नियमत्वव्यवहारः। अत्र तु शास्त्रे इष्टानिष्टसाधारण्येन सामान्यशास्त्रप्राप्तौ समारभ्यमाणानां धातोस्तन्निमित्तस्येत्यादीनां पञ्च पञ्चनखाभक्ष्या इत्यादेरिव परिसंख्याविधित्वमेव नतु नियमविधित्वम्। तथाप्यन्यनिवृत्तिसाधर्म्येण परिसंख्यापि नियमपदेनात्र भाष्यकारादिभिर्व्यवह्रियत इति बोध्यम्। विधेर्ज्यायस्त्वे हेतुं सूचयन्नत्र बीजमाह। [नियमे हीति।] हि यतो नियमे अश्रुताया अन्यनिवृत्तेस्सामर्थ्यात्कल्पनमतो लाघवाद्विधित्वमेवेति भावः। नियमशास्त्राणां विधिमुखेनैव प्रवृत्तेस्सिद्धान्तितत्वादाह। [सामर्थ्यादिति।] विरुद्धलक्षणया निषेधमुखेन प्रवृत्तौ त्वितोऽपि गौरवमिति बोध्यम्। [दोषश्चेति।] चेन प्राप्तबाधसमुच्चयः। तथा च नियमत्वे दोषत्रयसत्त्वेन ततो लाघवाद्विधित्वमेवेतिलाघवमूलकोऽयं न्याय इति बोध्यम्। [भाष्ये स्पष्टेति।] तत्रहि यस्येति संघातग्रहणमिति पक्षेऽन्त्यलोपे पूर्वेणसिद्धेसामर्थ्यादप्राप्तस्सर्वलोपो विधेयः उत हल एव यस्य लोपो नान्यतो लोलूयितेत्यादाविति संशय्यानया अपूर्वविधित्वमेवेत्युक्तमिति बोध्यम्।

नन्वाशंसायां भूतवच्चेत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह ॥

सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम्। तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः। इयमनित्या न ल्यपीति लिङ्गात्। तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि ॥ स्पष्टं चैतत् सर्वं स्थानिवत्सूत्रे भाष्ये ॥ ११० ॥

---

विधिप्रसंगादातिदेशिकविधेरप्युपस्थितत्वादाह। [नन्वति।] [स्यादिति।] तयोरपि भूते विधानेन व्याप्तिन्यायादिति भावः। सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र विशेषस्याशब्दार्थत्वात्तदाश्रयस्य कार्यस्यानतिदेश इति परिभाषार्थः। यद्यपि क्त्वावादित्युक्ते अशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति। तथापि व्याप्येन व्यापकानुमानात्तदुपस्थितिवद्व्याप्योपस्थितौ मानाभाव इति भावः। सामान्यातिदेशासंभवे तु विशेषस्यैवातिदेश इति बोध्यम्। अत्र बीजमाह। सामान्योपस्थितिकाल इति। दुपस्थापकसामग्रीकाल इत्यर्थः। क्वचित्तत्सत्त्वेऽप्याह। [नियमेनेति]। व्याप्येन व्यापकोपस्थितिवद्व्यापकेन व्याप्योपस्थिर्न नियतेति भावः। [तेनेति।] परिभाषाङ्गीकारेणेत्यर्थः। [तयोरिति।] अनद्यतनभूते, अनद्यतनपरोक्षभूते च विधीयमानयोर्लङ्लिटोरित्यर्थः। [नल्यपीति लिङ्गादिति।] अन्यथा न क्त्वासेडिति निषेधेन सेटःक्त्वायाः किन्त्वाभावात्किन्त्वस्य क्त्वाविशेषधर्मत्वेन तदादेशे ल्यपि तस्यानेन न्यायेनातिदेष्टुमशक्यतया प्रदायेत्यादावीत्वस्याप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः। अनित्यत्वफलमाह। [तेनेति।] विशेषातिदेशोऽपीति। अत एवाग्रहीदित्यादौ दीर्घे स्थानिवत्त्वेनेट्त्वातिदेशादिट इटीति लोपसिद्धिः। प्रखाय प्रखन्येत्यादावात्वविकल्पदिसिद्धिश्च। [एतत्सर्वमिति।] न्यायबीजानित्यत्वरूपं त्रितयमित्यर्थः।

ननु तित्स्वरितमिति स्वरितत्वं चिकीर्षतीत्यादौ स्यादत आह ॥

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

इयं चाङ्गस्येति सूत्रे भाष्ये पठिता। वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम्। अत एव सनाशंसभिक्ष उः वले इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ॥ परे तु तित्स्वरितमिति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम्। अङ्गस्येति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता। अत एव तिति प्रत्ययग्रहणं कर्तव्यमिति वार्त्तिककृतोक्तम् ॥

---

प्रत्ययप्रसङ्गादाह। [नन्विति।] [स्यादिति।] विधेयविषये उच्चारणार्थानामपीत्संज्ञालोपाभ्यामेव निवृत्तेरन्यत्र सिद्धान्तितत्वेनेकारस्य तित्त्वादिति भावः। [पठितेति।] अनेनास्यावाचनिकत्वं सूचितम्। [वर्णग्रहणे चेति।] ग्रहणेत्वित्यर्थः। [तत्रैवेति।] अङ्गस्येतिसूत्र एवेत्यर्थः। अन्यथा इको यणचीत्यादि अस्यापत्यमिः। एरयनं ययनमित्यादावेव स्यान्नतु दध्यत्रेत्यादाविति भावः। अस्याः परिभाषायाः फलान्तरमाह। [अत एवेति।] वर्णग्रहणादन्यत्र परिभाषाङ्गीकारदेवेत्यर्थः। [प्रत्यययोरिति।] तयोरेवेत्यर्थः। लक्ष्यसंस्कारायेत्युक्तेः स्वारस्यमाह। [अङ्गस्येति।] [तत्प्रत्याख्यानायेति।] अङ्गाधिकारप्रत्याख्यानायेत्यर्थः। [एकदेशिनेति।] परिभाषापेक्षयाङ्गाधिकारे लाघवादस्यास्सर्वेष्टासाधकत्वाच्चानया तत्प्रत्याख्यानमेकदेश्युक्तिरिति भावः। [अतएवेति।] तत्र तदर्थमस्या उक्तत्वेऽपि लक्ष्यासंस्कारतकया वस्तुतोऽस्या अभावादेवेत्यर्थः। [उक्तमिति।] अन्यथा अनयैव किरति द्युभ्यामित्यादौ स्वरितत्ववारणसंभवे तद्वैयर्थ्यं स्पष्टमेवेति

उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥ १११ ॥

ननु विपराभ्यां जेरित्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह ॥

**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११२॥**

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहण-

— —

भावः। नन्वेवं सन्वलयोःप्रत्यययोरेव कथं ग्रहणमत आह। [उक्तसूत्रयोरिति।] सनाशंसेत्याद्युक्तसूत्रयोरित्यर्थः। [व्याख्यानादिति।] गर्गादिषु जिर्गाषु शब्दपाठरूपज्ञापकमूलकादाद्ये, द्वितीये मतौ बह्वच इति मतुप्साहचर्यमूलकादुपसर्गस्य धञीत्यतो, बहुलग्रहणानुवृत्तिमूलकाद्वा व्याख्यानादित्यर्थः। अन्यथा आद्ये धातुसाहचर्याद्धातोरेव, द्वितीये व्याप्तिन्यायादुभयोश्च ग्रहणं स्यादिति भावः।

साहचर्यप्रसङ्गात्साजात्याच्चाह। [नन्विति।] [परा सेनेति।] उत्कृष्टा सेनेत्यर्थः। [इत्यत्रापीति।] व्याप्तिन्यायादिति भावः। [तेनेति।] परिभाषाङ्गीकारेणेत्यर्थः। [विशब्दसाहचर्यादिति।] नच पक्षिवाचकविशब्दस्यानुपसर्गस्यापि सत्त्वात्कथं तत्साहचर्येणोक्तार्थलाभ इति वाच्यम्। तस्य नियतपुल्लिङ्गतया त्तप्रत्ययेन व्यवधानात्ततः परजिधातोरसंभवेनोपसर्गस्यैव तस्य तत्र ग्रहणात्। यदितु लक्षणप्रतिपदोक्तपरिभाषया टाबन्तस्य पराशब्दस्य लाक्षणिकत्वादुपसर्गस्यैव प्रतिपदोक्तस्य पराशब्दस्य ग्रहणमित्युच्यते, तदा नास्तीह प्रकृतपरिभाषायाः प्रयोजनमिति फलान्तरमन्वेष्टव्यम्। परंतु भाष्यानुसारादेवमुक्तमिति बोध्यम्। ननु साहचर्यस्याभिधानियामकत्वरूपादेव हि न्यायादस्य सिद्धिः। सहचरणरूपं च तत् प्रसिद्धमेव लोकेऽभिधानियामत्वेन दृश्यते। यथा रामलक्ष्मणावित्यादौ। विपराशब्दयोस्तूपसर्गयोर्न क्वचित्तादृशं साहचर्यं प्रसिद्धमिति कथमनया

मिति तत्रैव भाष्ये स्पष्टम् ॥ सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्। सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ॥ ध्वनितं चेदं कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रे भाष्ये। तत्र हि पञ्चम्यपाङ्परिभिरिति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य "यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने च। अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथास्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ" इत्युक्तम्। तेन हि सदृशानामेव

---

तत्र सिद्धिरत आह। [सहचरणमिति।] सहगमनसहप्रयोगादिरूपमित्यर्थः। [सहचरितशब्देनेति।] कर्तृक्तान्तेनेत्यर्थः। [सादृश्यवानिति।] तथाच समभिव्याहृतपदार्थनिरूपितं सादृश्यमेवानेकार्थकेष्वभिधानियामकं नतु सहचरणमिति भावः। संयोगो विप्रयोगश्चेत्यभियुक्तकारिकायामपि साहचर्यशब्देन सादृश्यमेव विवक्षितमिति बोध्यम्। [सादृश्यमेवेति।] एवेन सहचरणादिरूपसाहचर्यनिरासः। सादृश्यस्यैवाभिधानियामकत्वे हेत्वन्तरमाह। [सदृशयोरेवेति।] आद्यन्तावित्यादौ क्वचिद्व्यभिचारादाह। [उत्सर्गाच्चेति।] युक्तिसिद्धत्वेऽपि प्रमाणाभावादयुक्तोऽयमर्थ इत्यत आह। [ध्वनितं चेदमिति।] परिर्दृष्टापचार इति। अनियतार्थक इत्यर्थः। तदेवाह। [वर्जने चावर्जनेचेति।] अवर्जने लक्षणादावित्यर्थः। अस्य कर्मप्रवचनीय इत्यनेनान्वयः। [अपशब्द इति।]

प्रयोगे सहायभावो बोधितः ॥ द्विस्त्रिश्चतुरिति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या। तेन दीधीवेवीटामित्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥ ११२ ॥

नन्वस्थीत्याद्यनङ् प्रियसक्थ्या ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह ॥

श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ ११३ ॥

श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः। एवं च तत्र

---

अपेत्ययं शब्द इत्यर्थः। अदृष्टापचार इत्यस्यैव विवरणं वर्जनार्थ एवेति। [बोधित इति।] एवं च विशब्दसादृश्यात्पराशब्दोऽपि प्रकृतपरिभाषयाऽत्रोपसर्ग एव प्रत्याख्यत इति न काप्यनुपपत्तिरिति भावः। [साहचर्येणैवेति।] द्विस्त्रिश्शब्दसाहचर्येणैवेत्यर्थः। [कृत्वोऽर्थस्येति।] चतुश्शब्दस्येत्यर्थः। अनित्यत्वफलमाह। [तेनेति।] आदृगमहनेत्यादौ, ऋधातोर्ग्रहणाभावोऽपि फलं बोध्यम्। [अन्यत्रेति।] उद्योतादावित्यर्थः।

साहचर्यसंबन्धप्रसंगादाह। [नन्विति।] [नपुंसकत्वाभावादिति।] नपुंसकस्य झलच इत्यतोऽनुवृत्तस्य नपुंसकस्येत्यस्य प्राधान्यादङ्गेन विशेषणादिति भावः। परिभाषायां वाच्यवृत्त्यानियमस्याप्रतीतावपि फलतस्तस्य प्रतीयमानतया नियमकारिणीषु परिभाषास्वस्याः पाठो नानुचित इति ध्वनयन्नाह। [श्रुतेनैवेति।] श्रुतानुमितयोर्मध्ये श्रुतेनैव संबन्धो बलीयान्नानुमितेनेत्यर्थः। तन्त्रान्तरन्यायसिद्धत्वमस्या दर्शयति। [प्रकरणादित इति।] तदुक्तं जैमिनीयैः। "श्रुतिलिङ्गवाक्यप्रकरण-

लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्गस्य, शिशीलुग्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम्। अत एव वा नपुंसकस्येति सूत्रे वा शाविति न कृतम्। तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद् बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्, बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम्॥ स्पष्टं चेदं स्वमोर्नपुंसका-

---

स्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षा" दिति। अत्रहिश्रुतत्वं साक्षादुच्चारितत्वम्, अन्यतराकाङ्क्षारूपस्थानप्रमाणलब्धत्वं च अनुमितत्वं तूभयाकाङ्क्षारूपप्रकरणप्राप्तत्वम्। [अस्थ्यादीनामेवेति।] सूत्रे श्रुतत्वादिति भावः। तत्फलंत्वाद्दगमहनेत्यादिना क्विप्प्रत्ययान्तत्वेन व्युत्पादिते विशेष्यनिघ्ने दधिशब्दे स्त्रीपुंसयोरनङादेशाप्रवृत्तिः। यदि तु योगाद्रूढिर्बलीयसीति न्यायेन क्षीरविकारवाचिनो नित्यनपुंसकस्यैव तत्र ग्रहणमित्युच्यते तदा स्त्रीपुंसयोः क्वचित्संकेतितानामस्थ्यादीनामनङादेशाप्रवृत्तिस्तत्फलं बोध्यम्। इदं च श्रुतस्य संभवे। असंभवेत्वनुमितेनापि संबन्धो भवतीत्याह। [शिशीति।] जश्शसोरिशः, नपुंसकाच्च, नपुंसकस्य झलच इत्येतेष्वित्यर्थः। अन्यतराकाङ्क्षारूप स्थानप्रमाणलब्धस्याप्यत्र श्रुतत्वमिति ध्वनयन्न्यायसिद्धेऽप्यत्रार्थे ज्ञापकमाह। [अत एवेति।] एतद्वचन सत्त्वादेवेत्यर्थः। [न कृतमिति।] अन्यथा नपुंसकग्रहणस्याङ्गविशेषणत्वे न्यासद्वयेऽपि फलभेदाभावेन लाघवात्तथैव कुर्यादिति भावः। [नपुंसकग्रहणं हीति।] अस्य इत्येवमर्थमित्यनेनान्वयः। [गृह्यमाणस्येति।] श्रुतस्येत्यर्थः। तस्यश्रुतत्वंत्वन्यतराकाङ्क्षारूपस्थानप्रमाणप्रापितत्वेनेति बोध्यम्। [इत्यत्र माभूदिति।] अङ्गस्य नपुंसकत्वे माभूदित्यर्थः। [इत्यत्र यथा स्यादिति।] शत्रन्तस्य नपुंसकत्व इत्यर्थः। [स्पष्टं चेदमिति।] अस्थिदधीत्यादौ

दित्यत्र भाष्ये ॥ केचित्वचो रहाभ्यां द्वे इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न । तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ ११३ ॥

ननु तत्पुरुषे तुल्यार्थ इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा गातिस्थाघुपाभूभ्य इति लुक् पैओवैशोषणाइत्यतः कृतात्वात्परस्यापि स्यादत आह ॥

लक्षणप्रातिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

---

नपुंसकग्रहणस्य श्रौतास्थ्यादिविशेषणत्वं इयादिविधावङ्गविशेषणत्वं चेत्यर्थः । सीरदेवाद्युक्तं खण्डयति । [केचित्त्विति ।] [अन्यत्रेति ।] उद्योतादावित्यर्थः ।

श्रुतत्वप्रसङ्गादाह । [नन्विति ।] [इतिस्वर इति ।] इत्यादिसूत्रेण तत्पुरुषसमासे तृतीयान्तस्य पूर्वपदस्य विधीयमानः स्वर इत्यर्थः । [परमेण कारकेणेति ।] परिनिष्ठितविभक्त्यन्तेन विशेषणं विशेष्येण बहुलमिति समासः । [इत्यादाविति ।] आदिना परमे च तस्मिन् कारके च परमकारक इत्यादिपरिग्रहः । [स्यादिति ।] विशिष्टे समानाधिकरणतत्पुरुषत्वस्य तृतीयासप्तम्यन्तपूर्वपदयोश्च सत्त्वादिति भावः । ननु लोके स्वरस्यानियतत्वाच्छन्दसि च छान्दसत्वादेव दोषवारणसंभवान्नायं दोषोऽत आह । [तथेति ।] [परस्यापीति ।] सिच इति शेषः ।

लक्षणं लाक्षणिकमुपचारात् ॥ तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात्। द्वितीयो हि विलम्बोपस्थितिकः। पै इत्यस्य पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थातिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम्। इदमेव ह्येतत्परिभाषाबीजम् ॥ इयं च वर्णग्रहणे ऽप्योत्सूत्रे

---

परिभाषायां लक्षणशब्दस्यार्शआदित्वकल्पने लक्षणायां वा विशेषाभावादाह। [उपचारादिति।] लक्षणयेत्यर्थः। लक्षणशब्दो लक्षणया लाक्षणिकपर इति भावः। अत्र प्रतिपदोक्तत्वं स्वीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वीमत्पदघटितशास्त्रविधेयत्वरूपम्। ततोऽन्यत्वं च लाक्षणिकत्वम्। अस्ति च तत्पुरुषे तुल्यार्थेति शास्त्रीयोद्देश्यतावच्छेदकीभूततृतीयान्तत्वज्ञानायोपयुज्यमानतृतीया त्वरूपानुपूर्वीघटितत्वं, तृतीयातत्कृतार्थेनेत्यादिना विहिततत्पुरुषस्येति तस्य प्रतिपदोक्तत्वम्। विशेषणं विशेष्येणेत्यनेन विहिततृतीयासमासस्य तु न तादृशं प्रतिपदोक्तत्वमित्याशयः। एवं परंपरया गातिस्थेतिशास्त्रीयोद्देश्यतावच्छेदकत्वेन गृहीतपात्वरूपानुपूर्वीमत्पदघटितपापान इति शास्त्रविधेयत्वं पिबतेरेव नत्वादेच इत्यादिना कृतात्वस्य शोषणार्थकस्य पैधातोरिति बोध्यम्। तदेतदाह। [तत्तद्विभक्तिविशेषेति।] तृतीयादिरित्यर्थः। उक्तरूपप्रतिपदोक्तस्यैव ग्रहणे बीजमाह। [शीघ्रोपस्थितिकत्वादिति।] तत्पुरुषे तृतीयान्तं पूर्वपदं प्रकृत्येत्युक्ते तृतीयापदघटितस्यैव तत्पुरुषस्य पुरः स्फूर्तिकत्वादित्यर्थः। [द्वितीय इति।] विशेषणं विशेष्येणेत्यनेन विहितस्तृतीया समास इत्यर्थः। [विलम्बोपस्थितिक इति।] तृतीयापदाघटितत्वादिति भावः। [शीघ्रोपस्थितिकमिति।] लक्षणानुसन्धानरूपव्यवधानाभावादिति भावः। [इदमेवेति।] शीघ्रोपस्थितिकत्वविलम्बोपस्थितिकत्वरूपमेवेत्यर्थः। वर्णग्रहणेऽस्या अप्रवृत्तिरिति प्राचां मतं दूषयितु माह। [वर्णग्रहणेऽपीति।] [ओत्सूत्रे भाष्ये इति।] तत्रहि अदोऽभवत्पुरोऽभवदित्यादावोत्सूत्रेण प्राप्ता प्रगृह्यसंज्ञा अनया परिभाषया परिहृता। वर्णग्रहणेऽस्या अप्रवृत्तौ तु तदसंगतिरेव। दीक्षिताद्युक्तिं खण्डयति। यत्त्विति।

भाष्ये संचारितत्वात्। यत्तु वर्णग्रहणे नैषा। आदेच इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम्॥ अनित्या चेयं भुवश्च महाव्याहृतेरिति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः॥ ११४॥

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्वे प्रणिमातेत्यादौ नेर्गदनदेति णत्वं न स्यात्तथा गै इत्यस्यात्वे घुमास्थेतीत्वं स्यादत आह॥

---

अयमत्र प्राचीनानामाशयः। लिटि धातोरित्यतो धातुग्रहणमनुवर्त्य, एजन्तस्य धातोरित्यर्थेन गोभ्यां नौभ्यामित्यादावात्ववारणसंभवान्न तदर्थमुपदेशग्रहणम्। किन्त्ववैषीदस्तौषीदित्यादावात्ववारणार्थम्। वर्णग्रहणेऽप्येतत्प्रवृत्तौत्वनयैव तत्रात्ववारणसंभवादुपदेशग्रहणमनर्थकमेव स्यात्। अतस्तेनास्या वर्णग्रहणेऽप्रवृत्तिरिति। [दूषितमिति।] तत्र धातुग्रहणानुवृत्तेरणिञोरनार्षयोरिति सूत्रस्थभाष्यासंमतत्वात्तदनुवृत्तौ चानुबन्धविनिर्मुक्तस्यैव न धात्विितिसूत्रस्थभाष्याद्धातुत्वलाभेन दीचां माङ इति निर्देशानुपपत्तेश्च तत्र धातुग्रहणानुवृत्तेः कर्तुमशक्यतया गोभ्यामित्यादावात्ववारणायोपदेशग्रहणस्य सार्थकतया न तेनैतदर्थलाभ इति तत्र दूषितमिति भावः। नन्वेवं धेट आत्वस्य लाक्षणिकत्वाद्धापयतीत्यादौ पुगागमो न स्यात्। तथा चिकीर्षतीत्यादौ ऋकारस्य लाक्षणिकत्वादृत इद्धातोरितीत्वानापत्तिरत आह। [अनित्या चेयमिति।] [महाव्याहृतिग्रहणादिति।] तद्धि भूशब्दप्रकृतिकजसन्तस्य ङसन्तस्य वा तत्राग्रहणार्थम्। अन्यथा तस्य लाक्षणिकत्वेनानयैव वारणसंभवे तद्वैयर्थ्यं स्पष्टमेवेति भावः।

उक्तपरिभाषाया अपवादप्रसङ्गादाह। [नन्वेवमिति।] [न स्यादिति।] तथाचेत्वादि न स्यादिति भावः। गामादाग्रहणेषु सामान्यमेव गृह्यते नतु विशेषोपस्थापकपरिभाषाभिर्विशेष

## गामादाग्रहणेष्वविशेषः ॥ ११५ ॥

अत्र च ज्ञापकं दैपः पित्त्वम्। तद्ध्यदाबिति सामान्यग्रहणार्थम्। अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन, तेन चैकदेशानुमतिद्वारा संपूर्णा परिभाषा ज्ञाप्यते॥ इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषा-लुग्विकरणपरिभाषाणां बाधिका। दाधाध्विति सूत्रे भाष्ये स्पष्टा॥

---

इत्यर्थः। [अदाबिति।] अस्या निषेधे इति शेषः। [सामान्यग्रहणार्थमिति।] दाप्दैपो-स्सामान्यग्रहणार्थमित्यर्थः। [अन्यथेति।] एतत्परिभाषाया अभावे इत्यर्थः। [विधाविति।] विधेयांशे इत्यर्थः। [तदग्रहण इति।] दैपोऽग्रहणे सिद्धे इत्यर्थः। ननूक्तज्ञापकाद्दाग्रहणेऽविशेषस्य सिद्धत्वेपीतरांशे तदसिद्धिरत आह। [एकदेशानुमतिद्वारेति।] लक्षणप्रतिपदोक्तपरिभाषाया अनन्तरमस्योल्लेखेन तदपवादत्वमेवेति तदनित्यत्वादेव सिद्धेऽस्य नैष्फल्यमेवेति च भ्रमनिरासायाह। [इयं चेति।] [परिभाषाणां बाधिकेति।] तत्र घुसंज्ञायां दाग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया निरनुबन्धकपरिभाषायाश्च बाधनम्। तेन दीङ् देङ् दो दाम्नां चतुर्णांग्रहणम्। नेर्गदेत्यत्र-माग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया एव बाधनं मेङो ग्रहणाय। नतु लुग्विकरणपरिभाषायाः। लुग्विकरणस्थस्य मा मान इत्यस्य तत्र सूत्रे माङिति सानुबन्धकपाठेनैव व्यावर्तनीयत्वात्। घुमास्थेत्यत्र गाग्रहणे तिसृणामपि परिभाषाणां बाधनाल्लाक्षणिकस्य गैधातोरिङादेशस्य गाङस्सानु-बन्धकस्य लुग्विकरणस्य च ग्रहणमिति बोध्यम्। नन्वेवं गातिस्थेत्यत्र कृतात्वस्य गैधातोर्ग्रहणं

गातिस्थेति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११५ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह ॥

प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ ११६ ॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह ॥

क्वचित्समुदायेऽपि ॥ ११७ ॥

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भव-

---

दुर्वारमत आह। [गातिस्थेति ।] गापोर्ग्रहणे इण् पिबत्योर्ग्रहणमिति भाष्योक्तेरिति भावः। [अन्यत्रेति ।] उद्योतादावित्यर्थः।

लक्षणप्रतिपदोक्तयोरित्यस्य न्यायसिद्धत्वात्तत्साधर्म्येणाह। [नन्विति।] वृद्ध्यादीत्यादिपदेन गुणसंज्ञायास्संग्रहः। [समुदाये इति ।] आदैच् समुदाये, अदेङ्समुदाये चेत्यर्थः। तथा च मृजेर्वृद्धिरित्यादौ समुदाय आदेशस्स्यादिति भावः। [वाक्यपरिसमाप्तिरिति ।] वाक्यजन्यबोधीयोद्देश्यताविश्रान्तिरित्यर्थः। न्यायसिद्धत्वमस्य दर्शयति। [भुजिवदिति ।] भुजेरिव भुजिवदिति षष्ठ्यन्ताद्वतिः। भुजिक्रियावदित्यर्थः। यथा लोके देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते विधेयभूतभुजिक्रियानिरूपितोद्देश्यता देवदत्तादिषु प्रत्येकं परिसमाप्यते, एव मत्र शास्त्रे वृद्ध्यादिसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्यादैक्षु प्रत्येकं परिसमाप्यत इति न दोष इति भावः।

[नन्वेवमिति ।] उक्तन्यायेन प्रत्येकं वाक्यपरिसमाप्तेरेवाङ्गीकार इत्यर्थः। [समुदायेऽपीति ।] वाक्यपरिसमाप्तिरिति शेषः। अस्यापि न्यायसिद्धत्वमाह। [गर्गा इति ।]

न्तीत्यादौ दण्डनवत्॥ लक्ष्यानुरोधेन च व्यवस्था॥११७॥

ननु यू स्त्र्याख्याावित्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणे ऽन्यस्वरकस्य संज्ञा न स्यादत आह॥

अभेदका गुणाः॥ ११८॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको

---

[दण्डनवदिति।] शतदण्डनवदित्यर्थः। यथा तत्रार्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषेण शतस्य प्राधान्यावगमादप्रधानगर्गानुरोधेन प्रधानस्य शतस्यावृत्त्ययोगाद्गर्गसमुदाय एव विधेयभूतशतदण्डनरूपक्रियानिरूपितोद्देश्यताविश्रान्तिर्लोके तद्वदत्र शास्त्रे संयोगसमासादिरूपसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताविश्रान्तिस्समुदाय एवेति भावः। ननु न्यायद्वयस्यापि लोकसिद्धतया कथमनयोरत्र शास्त्रे व्यवस्थेत्यत आह। [लक्ष्यानुरोधेन चेति।] चेनान्वर्थत्वादिरूपगमकसमुच्चयः। तथा च क्वचिदित्यस्य तादृशगमकवतीत्यर्थः। एवं च यथा तत्र वाक्यशेषात्तत्त्वं तथा ऽत्रापि लक्ष्यानुरोधादन्वर्थत्वादिरूपगमकबलाच्च समुदाये वाक्यपरिसमाप्तिरिति भावः।

संज्ञाप्रसङ्गात्तद्विषयकविशेषनिर्णयार्थमाह। [नन्विति।] जातिपक्षेऽस्यानुपयोगस्य वक्ष्यमाणत्वादाह। [व्यक्तिपक्ष इति।] [अनण्त्वेनेति।] अणुदित्सूत्रे वर्णसमाम्नायस्थानामेव ग्रहणाद्दीर्घस्यानण्त्वमिति भावः। [संज्ञा न स्यादिति।] व्यक्तिपक्षे एकस्या एव व्यक्ते र्ग्रहणाद्यद्गुणकस्य सूत्रे उपादानं तस्यैव संज्ञा स्यान्नान्यगुणकस्येति भावः। [स्वरूपेणोच्चारित इति।] सर्वथा गुणराहित्येनोच्चारणासंभवाद्गुणोच्चारणस्य नान्तरीयकतया धान्यपलालन्यायेन स्वरूपेणोपात्तोऽपि गुणो भेदको विवक्षितो न भवतीत्यर्थः। अतो नान्तरीयकतया अशोकवनिकान्यायेन केन चिद्गुणेनोच्चारितायामपि वर्णव्यक्तौ तदन्यगुणकस्यापि ग्रहणं भवतीति भावः। स्वरूपेणोच्चारितत्वं च श्रावणज्ञानविषयवर्णवृत्तित्वम्। गुणा उदात्तानुदात्तस्वरितानुनासिक्यानीति केचित्।

न विवक्षित इत्यर्थः ॥ अत्र चास्थिदधीत्यादावनङादे-रुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम् ॥ स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव। उञ ऊँ इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या। पथिमथ्यृभुक्षामित्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा। एतदर्थमेवासति यत्न इत्युक्तम् ॥ न चैवमस्थ्यादीनां नब्विषयस्ये-

---

एकोऽयमात्मा उदकं नामेति दृष्टान्तपरभाष्याद्ध्रस्वत्वादयोऽपि गुणा इति परे। अत्र पक्षे जातिपक्षसमानफलकोऽयं गुणाभेदकत्वपक्ष इति निरूपितं तपरसूत्रे गुरुप्रसादे। नचैवमत्र पक्षे दीर्घनिर्देशे ह्रस्वादीनामपि ग्रहणं स्यादिति वाच्यम्। द्वित्रिमात्रिकोच्चारणरूपयत्नसत्त्वेन तत्र गुणभेदकत्वस्यैव स्वीकारात्। ह्रस्वनिर्देशे तु विधेयाविषये दीर्घादीनां ग्रहणमिष्टमेवेति बोध्यम्। [अत्र चेति।] परिभाषायामित्यर्थः। [इत्यादाविति।] आदिना चतुरनडुहोरामुदात्त इत्यस्य संग्रहः। [उदात्तस्यैवोच्चारणेनेति।] एवकारस्य भिन्नक्रमतया उदात्तस्योच्चारणेनैवेत्यर्थः। स्वरूपेणोच्चारित इति विशेषणस्य फलमाह। [अनुदात्तादेरिति।] व्युत्क्रमेणाह। [उदात्तादीति।] [शब्दोच्चारण इति।] शब्दैरुच्चारण इत्यर्थः। [विवक्षैवेति।] अतस्तत्कार्यमुदात्तादेरनुदात्तान्ताच्च न भवतीति भावः। यत्नविशेषेऽसतीत्यर्थकस्यासति यत्न इत्यस्य फले आह। उञ ऊँ इत्यादि। [यत्नाधिक्येनेति।] एकस्थानसाध्यवर्णोच्चारणादनेकस्थानसाध्यवर्णोच्चारणे क्लेशजनकं यत्नाधिक्यमनुभवसिद्धमिति भावः। एतद्विशेषणोपादाने ज्ञापनोत्तरमप्युदात्तग्रहणस्य स्वांशे चारितार्थ्याभावाज्ज्ञापकत्वानुपपत्तिरित्याशङ्कते। [नचैवमिति।] असति यत्न इति विशेषण इत्यर्थः। [नब्विषयस्येति।] अनिसन्तस्य नपुंसकस्यादिरुदात्त इत्यर्थकेन नब्विषयस्यानि-

त्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात्॥ "चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेश आद्युदात्तनिपातनं करिष्यते, पदादयोऽन्तोदात्ता निपात्यन्ते, सहस्य स उदात्तो निपात्यत" इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन। त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः॥ परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोग-

---

सन्तस्येति फिट्सूत्रेणेत्यर्थः। [उदात्तोच्चारणमिति।] तद्रूपो यत्न इत्यर्थः। [अन्तोदात्त इति।] समासस्वरेणेति भावः। नन्विषयस्येतित्वखण्डप्रातिपदिकविषयम् ज्ञापकपरभाष्यप्रामाण्यादित्याशयः। [गुणकस्यापीति।] अपिःकेवलेऽनुदात्तगुणकसमुच्चायकः। [स्थानित्वेनेति।] एददुत्तरं स्थान्यनुरूपोच्चारणस्यैव सत्त्वेन यत्नविशेषाभावादिति शेषः। [विवक्षायामिति।] स्वरूपेणोच्चारितस्योदात्तस्य विवक्षायामित्यर्थः। नन्वष्टाध्याय्यास्त्रैस्वर्येण पाठपक्ष एव हि ज्ञापकत्वोपपत्तिः। अन्यथा सर्वत्रैकश्रुत्या पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थं भविष्यतीति, उदात्तग्रहणस्य स्वांशे चारितार्थ्यायोगात्तदनुपपत्तिरेव। एवं च निपातनस्थलेऽपि यत्नविशेषाभावाच्चतसरीत्यादि भाष्यासङ्गतिरत आह। [चतसरीत्यादि।] नन्वेवं ज्ञापकपरभाष्यासंगतिः। तत्राप्युक्तरीत्या तदुच्चारणस्य विवक्षार्थत्वसंभवादत आह। [त्रैस्वर्येण पाठ इति।] अस्याष्टाध्याय्या इत्यादिः। एवं चोक्त भाष्यद्वयप्रामाण्यात्पक्षद्वयेऽपीदं भाष्यकाराभिमतमिति भावः। कैयटादय इत्यनेन सूचितामरुचिं प्रकटयन् स्वसिद्धान्तमाह। [परेत्विति।]

करणं तत्तद्रूपाद्यत्नात्तत्रतत्रोदात्तादिविवक्षा। तिसृच-तस्त्रित्यत्र द्वन्द्वप्रयुक्ते ऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्॥ संपूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठो यथा दाण्डिनायनादिसूत्र ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतो ऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः॥

---

[अन्यत्रेति।] वधादावित्यर्थः। [स्थान्यनुरूप इति।] स्थानिनो हनित्यस्य धातुस्वरेणान्तोदात्तत्व-रूपेण साधुत्वबोधनादनुनासिकलोपार्थमनुदात्तोपदेशत्वप्रतिज्ञानाच्च तदनुरूपेऽन्तोदात्ते सर्वानुदात्ते वोच्चारणीये आद्युदात्तोच्चरणं विवक्षार्थमिति भावः। [स्वरे इति।] अन्तोदात्ते सर्वानुदात्तेवेत्यर्थः। [तदुच्चारणमिति।] आद्युदात्तोद्युच्चारणमित्यर्थः।

कैयटादय इत्यनेन सूचिता मरुचिं ध्वनयन्नाह। [सम्पूर्णेति।] त्रैस्वर्येण सम्पूर्णा सा पठितेति ध्वनयन्पूर्वत्र सम्पूर्णेत्यस्य फलमाह। [क्वचिदिति।] [एकश्रुत्याऽपीति।] अपिर्भिन्नक्रमः। पाठोऽपीत्यर्थः। [ऐक्ष्वाकेति।] क्षत्रियवाचकादिक्ष्वाकु शब्दाज्जनपदशब्दात् क्षत्रियादञित्यञि, ञित्स्वरेणाद्युदात्तस्य देशवाचकाज्जातार्थे कोपधादणित्यनेनाणि प्रत्ययस्वरे-णान्तोदात्तस्य च स्वरभेदादेकोक्त्या तयोरुकारलोपार्थे निपातनासम्भवादुभयसङ्ग्रहार्थमेकश्रुत्या तत्पदस्य निपातनमाश्रितं भाष्यकारैरुपायान्तरत्वेन। प्रकृतपरिभाषयापि तत्र सिद्धेः। एवञ्च सर्वत्रैकश्रुत्या पाठे विशेषेण तत्र तदभिधानमसङ्गतं स्यादिति भावः। नन्वाचार्येणाष्टाध्याय्यास्त्रैस्वर्येण पाठे ऽप्यध्येतृभिर्ब्राह्मणादिवदेकश्रुत्यैव पाठदर्शना तदज्ञानेन निपातनेनापि कथं मुक्तस्थलेषू-च्चारितस्य तत्तत्स्वरस्य विवक्षार्थत्वसिद्धिरत आह। [यद्यपीति।] [ब्राह्मणवदिति।] मन्त्रे त्रैस्वर्यम्। ब्राह्मणएक श्रुतिर्बह्वृचानामित्युक्त्येति भावः। [ज्ञानमिति।] उक्तेषु चतसादिष्वित्यर्थः।

विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव तद्वानासामिति सूत्र-निर्देशः। अन्यथा प्रत्यये भाषायामिति नित्यमनुनासिकः स्यात्। जातिपक्षे तु नास्योपयोग इति बोध्यम्। यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षितिरित्यन्यत्र विस्तरः॥ ११८॥

ननु सर्वनामानीत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह॥

बाधकान्येव निपातनानि॥ ११९॥

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात्।

---

[सवर्णग्रहणमिति।] गुणाभेदकत्वपक्षप्राप्तसवर्णग्रहणस्यापि भाव्यमानेत्यनेन निषेधादिति भावः। [निर्देश इति।] संगच्छत इति शेषः। [अन्यथेति।] विधेयविषयेप्यनेन सवर्णग्रहण इत्यर्थः। [अनुनासिक स्यादिति।] तद्वानित्यत्र मतोर्मस्यान्तरतम्या दनुनासिके वकारे तस्मिन् परे दकारस्य प्रत्यय इत्यनेन नित्यमनुनासिकस्स्यात्। तथाच तन्निर्देशासङ्गतिरिति भावः। अवतरणे व्यक्तिपक्ष इत्युक्तेःफलमाह। [जातीति।] [नास्योपयोग इति।] तेनैव तज्जात्याक्रान्तानामुदात्तानुदात्तादीनां ग्रहणसंभवादिति भावः। नन्वेवं दीर्घनिर्देशेषु ह्रस्वस्यापि ग्रहणं स्यादत आह। [यू इत्यादाविति।] द्वित्रिमात्र ग्रहणरूपयत्नविशेषेण तन्मात्रपर्याप्तैव तत्तज्जातिराश्रीयत इति भावः।

संज्ञाप्रसङ्गात्तद्बोधकशब्दस्वरूपगतसाधुत्वनिर्णायिकां परिभाषामवतारयति। [नन्विति।] [नाप्राप्ते इति।] यथा कप्रत्यये नाप्राप्ते विशेषणाव्ययसर्वनाम्नामकजित्यकजारम्भादकच्

पुराणप्रोक्तेष्विति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तो ऽपि पृषोदरादित्वान्नेति बोध्यम्। पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये ॥ इयं सर्वादिसूत्रे भाष्ये स्पष्टा ॥ अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥ ॥ ११९ ॥

---

कप्रत्ययस्य नित्यं बाधकः। एवं पूर्वपदात्संज्ञायामग इत्यनेन णत्वे नाप्राप्ते तदभावस्य-निपातितत्वान्निपातनमभ्युत्सर्गस्य णत्वस्यानित्यं बाधकमिति भावः। नन्वेवं पुरातन शब्दस्य लोकेऽसाधुत्वापत्तिः। पुराण प्रोक्तेषु ब्राह्मणकल्पेष्विति सूत्रेण तत्र तलोपस्य निपातितत्वेन तस्य सर्वथा बाधकत्वादत आह। [पुराणेति।] [पृषोदरादित्वान्नेति।] पुरातनशब्दे निपातनान्नित्यं प्राप्तो ऽपि तलोपः पृषोदरादिपाठात्पक्षे न भवतीति भावः। [अन्ये इति।] सत्यपि निपातने एकस्य पृषोदरादिपाठस्यावश्यकतया, आवश्यकेन तेनैवोभयोरपि साधुत्वस्य सिद्धतया एकस्य निपातनेनान्यस्य पृषोदरादि पाठेन च साधुत्वकल्पने गौरवमिति तदाशयः। [भाष्यविरुद्धमिति।] सर्वादीनीतिसूत्रस्थभाष्यविरुद्धमित्यर्थः। तत्र हि येन नाप्राप्ति-न्यायेनाकजादीनामिव निपातनस्यापि बाधकत्वमुक्त्वा "यदि तर्हि निपातनान्यप्येवं जातीयकानि भवन्ति। समस्तते दोषो भवति। इहान्येवैयाकरणाः समस्तते विभाषालोपमारभन्ते। समो हिततत्तयोर्वा, सततं सन्ततम्। सहितं संहितम्। इहपुनर्भवान्निपातनाच्चलोपमिच्छति। अपरस्पराः क्रियासातत्य इति। यथाप्राप्तं चालोपमिति। एतन्न सिद्ध्यति। कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ती" त्युक्तम्। तस्यायमाशयः। यदिनिपातनानि बाधकान्येव तदा तन शब्दे परे समो मकारस्य अपरस्पराः क्रियासातत्य इति निपातनेनैवात्र शास्त्रे लोपस्य वक्तव्यतया तेन सततमित्यस्य सिद्धावपि संततमिति न सिद्ध्यति। अतो ऽबाधकत्वमपि स्वीकार्य मित्युक्त्वा बाधकान्येव निपातनानि। सततं संततमिति रूपद्वयं तु सात्य-इति निर्देशेनैकदेशानुमतिद्वारा व्याकरणान्तरप्रसिद्धस्य "लुंपेदवश्यमः कृत्ये तुं काममनसोरपि।

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वा-प्रवृत्तौ हलादिः शेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह ॥

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२० ॥

एवं च ह्रस्वस्यापि ह्रस्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः। तदुक्तमिको झलिति सूत्रे भाष्ये। "कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति।" सिद्धे ऽपि ह्रस्वादिकारीत्यर्थः॥ न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानामिति वाच्यम्। समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ समः सुटीति

---

समोवा हित ततयोर्मांसस्य पचियुङ् घञो" रिति श्लोकस्यान्यार्थमावश्यकस्यात्रापि शास्त्रे आश्रयणमित्यर्थस्य ज्ञापनात्तेन विकल्पेन मकारलोपे सिद्धम्। न तु निपातनात्तत्र लोप इति।

संज्ञाप्रसङ्गात्तदुद्देश्यक विधिप्रवृत्ति व्यवस्थापिकां परिभाषामवतारयति। [नन्विति।] असति बाधके लक्ष्यतावच्छेदकावच्छेदेन लक्षणप्रवृत्तेर्न्याय्यतया पर्जन्यो यथा निष्प्रयोजने ऊषरे सप्रयोजने अनूषरे च वर्षति तथा सत्यसति वा स्वरूपकृते विशेषे, सर्वत्रैव स्वविषये लक्षणं शब्दसंस्कारायप्रवर्तत इति परिभाषार्थः। नन्वपूर्वकार्यकारित्वस्यैव शास्त्रस्वरूपत्वाद्यत्र शास्त्रप्रवृत्त्यप्रवृत्त्योर्विशेषस्तत्रैव तत्प्रवृत्तिर्युक्ता। न त्वन्यत्र तदुक्तं भाष्ये "अकृतकारि खल्वपि शास्त्रमग्निवत्, तद्यथा अग्निर्यददग्धं दहति। यत्तु पुनर्दग्धं तन्न दहती" ति। तथा च कथमत्र पूर्वं ह्रस्वप्रवृत्तिरित्याशङ्क्योक्तार्थेऽपि मानं दर्शयति। [तदुक्तमिति।] भाष्ये कृतकारीत्यस्य अर्थमाह। [सिद्धेऽपीति।] स्वतस्सिद्धेऽपीत्यर्थः। प्रसङ्गाल्लक्ष्ये लक्षणस्येति न्याय निरूपणाय शङ्कते। [नचेति।

सूत्रस्यैव मानत्वात्। संप्रसारणाच्च सिचि वृद्धिरित्यादौ भष्ये स्पष्टमुक्तत्वाच्च ॥ अत्रविकारकृतो लक्ष्यभेदो नेति

---

[सूत्रस्यैव मानत्वादिति।] न च लोपस्य वार्तिककृतोक्तत्वेऽपि सूत्रकृताऽनुक्तत्वान्मकारनिवृत्त्या त्रिसकारकरूपसिद्धये सूत्रस्यावश्यकत्वात्कथमस्य मानत्वमिति वाच्यम्। "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके" इत्यभियुक्तोक्त्या वार्तिकोक्तार्थस्य सूत्रकृत्सम्मतत्वात्। ध्वनितं चेदं घिन्विकृण्व्यो रचेति सूत्रेभाष्ये। यत्तु "इरयोरे" इति सूत्रस्थं द्विवचनग्रहणमत्र ज्ञापकम्। तद्धि दध्रे इत्यत्र लिडादेशस्य झस्येरेचि तस्य रेभावे क्रादिनियमात्तस्येटि तद्विशिष्टस्य पुना रेभावार्थम्। एतत्परिभाषाभावेत्विडागमोत्तरमयत्नत एवास्य पुनः प्रवृत्तेस्सिद्धतया तदर्थं द्विवचननिर्देशो ऽनर्थक एव स्यात्। नच रेभावोत्तरमिडागमे रेभावविधानस्य व्यर्थतया इडागमाप्रवृत्त्या द्विवचननिर्देशस्य ज्ञापनोत्तरमपि चारितार्थ्यायोगात्कथमुक्तार्थे ज्ञापकत्वमिति वाच्यम्। इडागमाप्रवृत्ति विषये चक्र इत्यादौ रेभावविधानस्य चरितार्थत्वात्तत्सामर्थ्येन रेभावोत्तरमिडागमाप्रवृत्तेर्वक्तुमशक्यतया इड्विशिष्टस्य पुनारेभावविधानाय तच्चारितार्थ्यादिति वदन्ति। तन्न। स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवात्सामर्थ्यात्तत्प्राप्तये द्विवचननिर्देशस्य चरितार्थतया तस्य प्रकृतार्थज्ञापनासम्भवात्। किञ्चेडागम विशिष्टस्य रेभावस्य लाक्षणिकत्वेन तस्य लक्षणप्रतिपदोक्तपरिभाषया रेभावाप्राप्त्या उभयसङ्ग्रहाय द्विवचन निर्देशस्य सार्थकतया न तस्य ज्ञापकत्वसम्भव इति बोध्यम्। आनन्त्यापत्तिरेवैतन्न्यायबीजमिति मतान्तरमपि सिचि वृद्धिरिति सूत्रस्थभाष्यविरोधादयुक्तमिति स्वरसन्धिप्रकरणे शब्दरत्ने विस्तरेण निरूपितमिति तत एवावसेयम्। नन्वस्य सूत्रवार्तिक सम्मतत्वे ऽपि न भाष्यारूढत्वमिति भ्रमनिरासायाह। [संप्रसारणच्चेति।] तत्रहि शकह्वर्थमित्यादौ पूर्वरूप वारणाय वार्तिककृदारब्धं "संप्रसारण पूर्वत्वे समानाङ्ग ग्रहणं कर्तव्य" मिति वार्तिकमनेन न्यायेन प्रत्याख्यातम्। ननूद्वोढामित्यत्र, उदावह् स् तामित्यवस्थायांढत्वादीनामसिद्धत्वादकारस्य हलन्त लक्षणाया वृद्धौ ततो ढत्व धत्व, ष्टुत्व ढलोपेष्वाकारस्य सहिवहोरित्योत्वे तस्य ढत्वादीनामसिद्धत्वा-त्पुनर्हलन्तलक्षणा वृद्धिः कुतो न। लक्ष्यभेदेन प्रकृतन्यायाप्रवृत्तेरत आह। [विकारकृत इति।] [लक्ष्यभेदो नेति।] किंतु तल्लक्ष्यत्वमेवेत्यनेन न पुनर्वृद्धिरिति भावः। तल्लक्ष्यत्वं

# सिचि वृद्धिरिति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः॥१२०॥

---

च स्वप्रथमप्रवृत्तावुद्देश्यत्वेन गृहीतसमुदायघटकवर्ण विधीयमानैतदुभयातिरिक्ताघटितत्वे सति स्वप्रथमप्राप्तिकालिक प्राप्तियोग्यताभाववत्त्वम्। पथ इत्यादौ, स्वप्रथमप्राप्तावुद्देश्यत्वेन गृहीतसमुदायघटकवर्ण विधीयमानैतदुभयातिरिक्ताघटितत्वस्य स्वप्रथमप्राप्तिकालिकप्राप्ति योग्यत्वाभावस्य च सत्त्वात्तल्लक्ष्यत्वेन टिलोपोत्तरमनेन न्यायेन न पुनष्टिलोपः। एधेतेत्यादौ स्वप्रथमप्राप्तावुद्देश्यत्वेन गृहीतसार्वधातुक लिङ् प्रत्ययरूपसमुदायघटकवर्णातिरिक्ताघटि-तत्वेन द्वितीयसकारलोपे तल्लक्ष्यत्ववारणाय विशेष्यदलम्। परमराजपुरुष इत्यादाववान्तर-समासप्रयुक्तान्तोदात्तप्रवृत्तिवेलायां विशिष्टसमासप्रयुक्तस्यान्तोदात्तस्य प्रवृत्तियोग्यताया अभावेन तत्प्रवृत्तौ तल्लक्ष्यत्ववारणाय सत्यन्तम्। तथा सति स्वप्रथमप्रवृत्तावुद्देश्यत्वेन गृहीत-समुदायघटकवर्ण विधीयमानैतदुभयातिरिक्त पुरुषपदघटितत्वेन तल्लक्ष्यत्वाभावादस्य न्ययस्याप्रवृत्त्या पुनरन्तोदात्तत्वसिद्धिः। उदवोढामित्यादौ हलन्तलक्षणवृद्धिरूपादेशविशिष्टस्य तल्लक्ष्यत्वसिद्धये सत्यन्तघटक पर्युदस्यमानकोटौ विधीयमानत्वनिवेशः। नचैवं भूयादित्यत्र संयोगादिलोपोत्तरमनेन न्यायेन पुनस्संयोगादि लोपो न स्यादिति वाच्यम्। तत्र झल्पर संयोगादिलोपोत्तरं पदान्तसंयोगादिलोपे बाधकाभावात्। लक्षणभेदेन प्रकृतन्याप्रवृत्तेः। तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तत इत्यस्यार्थेन लक्ष्यभेदे लक्षणभेदे वा पुनः प्रवृत्तौ बाधकाभावात्। ननु सिचि वृद्धिरिति सूत्रस्थभाष्यप्रामाण्यात्तत्स्थानिकविकारविशिष्टस्य तल्लक्ष्यत्वेऽपि तस्य तदन्यस्य च स्थाने यो विकारस्तद्विशिष्टस्य तल्लक्ष्यत्वे मानाभाव इति चेन्न। शकह्वर्थमित्यादौ प्रकृतपरिभाषया पूर्वरूपवारणपरसंप्रसारणा चेति सूत्रस्थभाष्यप्रामाण्येन तथाभूतस्यापि तल्लक्ष्यताया आवश्यकत्वात्। न चैवं गाते इत्यत्र शपा सह सवर्णदीर्घोत्तरं पुन स्सवर्णदीर्घो न स्यात्। तथा चिकीर्षन्तीत्यत्र शबकारेण पररूपोत्तरमन्त्यकारेण तन्न स्यादिति वाच्यम्। ऊकालोऽजिति निर्देशेन परिभाषाया अनित्यत्वज्ञापनात्क्वचिदप्रवृत्त्यानिर्वादिति दिक्।

इत्थंश्रुतानुमितयोरिति परिभाषानिरूपणोत्तरं प्रसक्तानुप्रसक्त्या परिभाषान्तराण्यु-पन्यस्य पुनरिदानीं सिंहावलोकन न्यायेन बलवत्ताबोधक परिभाषाप्रस्तावमनुसन्धाय प्रकृत

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृद्भ्यश्चतुर्भ्य इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह ॥

निषेधाश्च बलीयांसः ॥ १२१ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ॥ चतुर्भ्य इति तु स्पष्टार्थमेव। अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते॥ अत एव सवर्णसंज्ञादेर्निषेधविषये न

---

परिभाषामवतारयति। [नन्विति।] [धातोरिति।] प्रकृतिविकृतिभावसम्बन्धे षष्ठी। स्यन्दूधातुप्रकृतिके स्यन्त्स्यतीत्यादावित्यर्थः। इत्यादावित्यस्य विकल्पापत्तिरित्यनेनान्वयः। सकराद्यार्धधातुकत्वरूपनिमित्तत्वस्योभयत्र तुल्यत्वादाह। [आत्मनेपद इति।] तथ चाधिकनिमित्तकत्वात्परस्थितनिमित्तकत्वाद्वा विकल्पापेक्षया निषेधस्य बहिरङ्गत्वमिति भावः। [निषेधाश्चेति।] चोह्यर्थे। स च हेतोः प्रसिद्धिं द्योतयति। बलवत्त्वस्य सापेक्षत्वेन कस्मादिति नियताकाङ्क्षायामाह। [अन्तरङ्गादिति।] तथा च तत्रानया ऽन्तरङ्गमपि विकल्पं बाधित्वा न वृद्भ्य श्चतुर्भ्य इति निषेध इति भावः। नन्वेवं न वृद्भ्य इत्यत्र चतुर्भ्य इति व्यर्थम्। तद्धि प्रत्येकं सर्वेषु निषेधव्यापारबोधनद्वारा स्यन्देरूदिल्लक्षणविकल्पान्निषेधस्य प्राबल्यबोधनाय, एतत्सत्त्वे तु तदानर्थक्यं स्पष्टमेव। नच कृपि व्यावृत्तये तदावश्यकमिति वाच्यम्। तासि च क्लृप इत्यत्र चकारेण ततः परस्य सकाराद्यार्धधातुकस्य तेन विशिष्येड्निषेधादत आह। [चतुर्भ्य इतीति।] ननु परिभाषाङ्गीकारेण सूत्रस्थस्य चतुर्ग्रहणस्य स्पष्टार्थत्वकथनं नोचितमत आह। [अत एवेति।] एवमन्तरङ्गतो निषेधस्य प्राबल्यमुक्त्वा, उपजीव्यादपि तस्य तत्त्वं दर्शयति। [अत एवेति।]

विकल्पः। अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः। अत एव द्वन्द्वे च विभाषा जसीति चरितार्थम्॥ विध्युन्मूलनाय प्रवृत्तिरस्या बीजम्॥ न लुमता कर्मोर्णिङित्यनयोर्भाष्ये स्पष्टैषा॥ १२१॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह॥

---

उपजीव्यादपि निषेधस्य बलवत्त्वादेवेत्यर्थः। [अन्यथेति।] उपजीव्यादपि निषेधस्य बलवत्त्वाबोधने इत्यर्थः। [दुर्वारस्स इति।] निषेधविषये शास्त्रद्वयप्रामाण्यात् षोडशिग्रहणस्येव विकल्पो दुर्वार इत्यर्थः। अत्रांशे ज्ञापकमपि ध्वनयन्नाह। [अत एवेति।] उपजीव्यादपि निषेधस्य प्राबल्यादेवेत्यर्थः। [द्वन्द्वे चेति।] अस्येतिकृतेऽपीति शेषः। [चरितार्थमिति।] अन्यथा विधिनिषेधाभ्यां द्वन्द्वे जसि विकल्पस्य सिद्धतया तद्व्यर्थं स्यादिति भावः। अस्या लोकन्यायसिद्धत्वं च दर्शयति। [विध्युन्मूलनायेति।] प्राप्तस्य विधेर्निवर्तनाय निषेधशास्त्रप्रवृत्तिरेवास्या बीजमित्यर्थः। यदुन्मूलनाय यस्य प्रवृत्तिस्तस्य तद्बाधकत्वं लोकसिद्धमित्यपवादन्यायेनैवास्या अन्तरङ्गादि बाधकत्वमिति भावः। अस्या भाष्यारूढत्वमाह। [न लुमतेत्यादिना।] तत्राद्ये उत्तरपदत्वे चापदादिविधाविति वार्तिकप्रत्याख्यानावसरे परमवागित्यत्र समुदायप्रकृतिकामन्तर्वर्तिनीं वा विभक्तिमाश्रित्य प्राप्ता पदसंज्ञा प्रतिषेधाश्च बलीयांस इत्यसर्वनामस्थान इत्यनेन प्रतिषिध्यते। तथा च कुत्वानापत्तिरित्युक्तम्। द्वितीये ऽप्ययमर्थः स्पष्टः। यद्यपीदं भाष्यद्वयमेकदेशिन एव, तथापि भाष्यानारूढत्वशङ्कानिरासायेदमुक्तमिति बोध्यम्। १२१

न्यायसिद्धत्वसाधर्म्यादाह। [नन्विति।[ [प्रत्ययत्वानुपपत्तिरिति।] अन्तर्भावितण्यर्थात् प्रतिपूर्वादिण् धातोःकर्तर्येरजित्यनेनाच् प्रत्यये प्रत्येत्यर्थं बोधयति यस्स प्रत्यय इत्यर्थलाभात्सर्वथा

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२२ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारादस्य प्रत्ययत्वमिति न दोषः। स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः॥ महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम्॥ सुपि स्थ इत्यादिसूत्रेषु भाष्ये स्पष्टैषा॥ १२२॥

## योगविभागादिष्टसिद्धिः ॥ १२३ ॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः। तत्त-

---

निरर्थकानामत्यन्तस्वार्थिकानां तदनुपपत्तिरिति भावः। [सोऽपीति।] प्रत्यय इत्यत्र कर्तृकर्मसाधनयोरन्तर्भावितण्यर्थयोःप्रत्ययशब्दयोस्तन्त्रेण निर्देशात्स्वमर्थं प्रत्येति बोधयति यस्स प्रत्ययः, प्रतीयते प्रकृत्या बोध्यते स्वार्थो यस्य स प्रत्यय इत्यर्थद्वयलाभेन स्वार्थप्रत्यायकानां, धातोरित्यादिना विहितसनादीनां सर्वथा निरर्थकानां समासान्तादीनां च प्रत्ययत्वं सिध्यतीति भावः। अत्यन्तस्वार्थिकानां सर्वथा निरर्थकत्वात्परिभाषायां स्वार्थ इत्यनुपपन्नमत आह। [स्वार्थ इत्यस्येति।] परिभाषायां स्वशब्द आत्मीयवाची नत्वात्मवाचीति भावः। अस्या न्यायसिद्धत्वं दर्शयति। [महासंज्ञेति।] प्रत्यय इति महासंज्ञेत्यर्थः। [भाष्ये इति।] तत्र हि अश्वत्थ इत्याद्यर्थं योगविभागेन विहितः प्रत्ययो भाव एव न कर्मादौ। अनिर्दिष्टार्था इति न्यायादित्युक्तम्। १२२

बौद्धयोगविभागप्रसङ्गादाह। [योगविभागादिति।] असति बाधके सर्वं वाक्यमितिन्यायेनाह। [इष्टसिद्धिरेवेति।] एव व्यवच्छेद्यमाह। [नत्विति।] अत्र बीजं दर्शयति। [तत्तदिति।] यदि विभक्तसूत्रस्य सर्वविषयत्वं तदा द्वितीयसूत्रस्यानर्थक्यं स्पष्टमेवेति तेनाद्यस्यानित्यत्वं ज्ञाप्यत इति भावः। १२३

त्समानविधिकाद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमे-तद्बीजम् ॥ १२३ ॥

पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते॥ १२४॥

तत्र तत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापित-मिदम् ॥ १२४ ॥

ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्ये ऽनुमानाद् बोधनमसार्वत्रिकत्वार्थ-मित्यर्थः। तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीय-मिति तात्पर्यम्। भाष्ये ऽपि ध्वनितमेतन् ङ्याप्सूत्रादौ॥ ज्ञापकेति न्यायस्याप्युपलक्षणम्॥

---

सजातीयवैयर्थ्यमूलकज्ञापनविषयत्वप्रसङ्गेनाह। [पर्यायेति।] [चर्चेति।] विचार इत्यर्थः। [निर्देशज्ञापितमिति।] अन्यथा लाघवात्सर्वत्र वेत्येव वदेदिति भावः। १२४

ज्ञापकप्रसङ्गादाह। [ज्ञापकसिद्धमिति।] अत्र बीजमाह। [स्पष्टमेवेति।] ज्ञापक शब्दार्थमाह। [अनुमानाद्बोधनमिति।] [तेनेति।] तस्यासार्वत्रिकत्वेनेत्यर्थः। अस्या भाष्याभि-मतत्वं दर्शयति। [भाष्येऽपीति।] तत्र तत्र प्रमाणमनपेक्ष्यापि परिभाषाणामनित्यत्वादनिष्टेष्व-प्रवृत्तिं वदता भगवता ऽयमर्थो ध्वनित इति भावः। नन्वेवमपि न्यायसिद्धानां सार्वत्रिकत्वापत्ता-वनिष्टापत्तिरत आह। [उपलक्षणमिति।] परिभाषायां ज्ञापकेति न्यायस्याप्युपलक्षणमित्यर्थः। ननूक्तरीत्या ज्ञापक सिद्धस्यासार्वत्रिकत्वलाभेऽपि न्यायसिद्धस्य तदलाभादुपलक्षणत्वोक्तिरयुक्तेत्यत-

न्यायज्ञापकसिद्धानामपि केषाञ्चित्कथनमन्येषामनित्यत्व-बोधनायेति भावः। यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं, ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ १२५ ॥

ननु द्रोग्धा द्रोग्धा द्रोढा द्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्वे एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह ॥

---

आह। [न्यायेति।] [केषाञ्चिदिति।] अर्थानामित्यर्थः। [कथनमिति।] सूत्राक्षरैःकथनमित्यर्थः। [अन्येषामिति।] सूत्रकारादिभिरकथितानां न्यायज्ञापकसिद्धानां परिभाषार्थानामित्यर्थः। [बोधनायेति।] एवं चेदमेव ज्ञापकपदस्योपलक्षणत्वे मानमिति भावः। अस्योदाहरणमाह। [यथेति।] [इति न्यायेति।] यथा गुरोःस्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते, तद्वत्स्थानिकार्यमादेशो लभत इति भावः। इदं च स्वं रूपमिति सूत्रप्रत्याख्याने तत्सत्त्वेऽपि तदविषये च बोध्यम्। [ज्ञापकसिद्धं चेति।] अदो जग्धीति सूत्रे ल्यब्ग्रहणमल्विधौ स्थानिवत्त्वाभावे ज्ञापकम्। अन्यथा ल्यप्यपि स्थानिवत्त्वेन तादिकित्त्वमादाय जग्ध्यदेशसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। एवं च ज्ञापकन्यायसिद्धानां केषांचित्पुनः पाठ एवान्येषां तथाविधानामनित्यत्व-बोधनद्वारेणोक्तार्थे निर्विचिकित्सं प्रमाणमिति, ज्ञापकसिद्धानामसिद्धं बहिरङ्ग इत्यादीनां न्यायसिद्धानां सन्निपातलक्षणो विधिरित्यादीनां नापूर्वमनित्यत्वज्ञापनमावश्यकमिति बोध्यम्। १२५

वाचनिकानांत्वसार्वत्रिकत्वं वचनैकसाध्यमिति सूचनायोपन्यस्यति। [नन्विति।] [इत्यादाविति।] एतदुत्तरं द्रोह्, ता द्रोह् ता इति स्थिते इति शेषः। [एकत्रेति।] द्विरुक्त समुदाय घटकयोरेकत्रेत्यर्थः। [इत्यस्यापीति।] अपिर्भिन्नक्रमः। इत्यस्यापत्तिरपीत्यर्थः। अपिरिष्ट समुच्चायकः। नचैकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यतीति न्यायेनै-

## पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः। पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम्॥ यत्र च

---

वेयमापत्तिर्वारयितुं शक्येति वाच्यम्। यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना यथा गवामश्वेषु च स्वामीत्युक्ते गवां स्वामी अश्वेषु तिष्ठतीत्यर्थस्य संभावना तद्विषय एव तन्न्यायप्रवृत्तेरनुपदं व्यवस्थापयिष्यमाणत्वात्प्रकृते च तदभावात्तदप्रवृत्तेः। पूर्वत्रासिद्धशब्दो ऽत्राधिकारपरः। ततो गहादेराकृतिगणत्वाद्भावे छप्रत्ययः। ततश्च पूर्वत्रासिद्धे भवं यच्छास्त्रं तत्राद्वित्व इत्युपतिष्ठत इत्यक्षरार्थः। तथाच वाढ्हेत्यादौ पूर्वत्रासिद्धमित्यस्य अद्वित्व इत्यस्य चोपस्थित्या द्रुहादीनां हस्य घो वा स्यात्। इदं च शास्त्रं पूर्वत्रासिद्धं द्वित्वरूपपूर्वशास्त्रविषये तु ना सिद्धमित्येवंरीत्या वाक्यभेदेन संबन्धः। अतो द्वित्वविषयेऽन्यस्यासिद्धत्वाभाव एव लभ्यते। नत्वन्यदृष्ट्याऽपि द्वित्वस्य तदभावः। अत एव णत्वं द्वित्वं चतुर्णामिति दीक्षितोक्तिस्संगच्छते। द्वित्वविषये ऽसिद्धत्वं नेत्युक्तौ त्वन्यदृष्ट्या ऽपि द्वित्वस्यासिद्धत्वाभावात्तदसंगतिः। वाक्, वाक्क् इति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽप्यस्य प्रवृत्तेरावश्यकत्वात्। अन्यथा चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वं गकारस्य श्रवणापत्तिः। नच पूर्वस्य खरि चेति चर्त्वेन न दोष इति वाच्यम्। अवसाने चर्त्वस्यासिद्धत्वेन खर्परत्वाभावात्तदप्रवृत्तेरित्यादि हलन्तप्रकरणे शेखरे स्पष्टम्। एवं च प्रकृते द्वित्वविषये घत्वादीनामसिद्धत्वाभावात्परत्वाद्धित्वादिषु कृतेषु द्वित्वे न दोष इति बोध्यम्। अत्र द्वित्वपदेन षाष्ठं धातुद्वित्वमाष्टमिकं पदद्वित्वं वर्णद्वित्वं च गृह्यते विनिगमनाविरहादिति स्पष्टं प्रदीपोद्योतयोरिति बोध्यम्। तदेतत्फलितमाह। [द्वित्वभिन्न इति।] द्वित्वरूपे पूर्वत्र कर्तव्ये तु परं नासिद्धमिति भावः। परिभाषाया लिङ्गवत्त्वनियमादाह। [पूर्वत्रेति।] ननु वर्णद्वित्वेऽपि प्रकृतपरिभाषाप्रवृत्तौ कृष्णर्द्धिरित्यादौ द्वित्वात्पूर्वं जश्त्वस्य प्रवर्तनीयतया तदुत्तरं दकारस्य द्वित्वे प्रक्रियादशायामपि द्विधत्व त्रिधत्वयोरनुपपत्त्या तत्र द्विधत्वादि प्रतिपादनपरस्य कौमुदी ग्रन्थस्यासङ्गतिरत आह। [यत्र चेत्यादि।] ननु द्वित्वात्पूर्वं जश्त्वप्रवृत्तौ

सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम्। कृष्णर्द्धि-रित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषा-भावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः॥ सर्वस्य द्वे इति सूत्रे भाष्ये स्पष्टेयम्॥ १२६॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद् गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्वरेति सूत्रेण षष्ठीसप्तम्यो-र्विधानादत आह॥

---

सकृदेव तस्य प्रवृत्तिः। द्वित्वोत्तरं तु द्विवारमित्यस्ति प्रक्रियायां विशेष इत्यत आह। [रूपे इति।] तदानीमपि रूपे विशेषाभावात्तत्रैतदप्रवृत्त्या द्वित्वोत्तरमेव जश्त्वप्रवृत्त्या न तदसङ्गतिरिति भावः। [नास्याः प्रवृत्तिरिति।] अनियमे नियमकारिण्या अस्या न प्रवृत्तिः। नियमानियमौ च प्राधान्यात्कार्यगतावेव ग्राह्याविति भावः। [अन्यत्रेति।] शेखरादावित्यर्थः। १२६

पूर्वपरिभाषाविषये द्रोग्धा द्रोग्धा, द्रोढा, द्रोढेत्यादावनया परिभाषया ढत्वघत्वयो-र्व्यवस्थापनं पूर्ववैयाकरणानामयुक्तमिति द्योतयितुमेनामवतारयति। [नन्विति।] [इत्यादिवदिति।] आदिना गवामश्वानां च स्वामीत्यस्य संग्रहः। [विधानादिति।] प्रयोगभेद इवैकप्रयोगेऽपि तयोर्दुवारत्वादिति भावः। यत्र समुच्चयादिना यादृशार्थलाभायैकस्याः शब्दाकृतेः प्रयोगः प्रक्रान्तस्तादृशार्थबोधिकायास्तदन्यस्या शब्दाकृतेः प्रयोगो न भविष्यति। किं तु तस्या एवाकृतेरिति परिभाषार्थः। यथा गवामश्वानां च पुरुष विशेषेण सह स्वस्वामिभावरूपं संबन्धं बोधयितुं गोशब्दात् षष्ठ्याकृतेरुपक्रमे तस्या एवाश्वशब्दादपि प्रयोग उचितो ननु तदर्थ बोधकत्वाविशेषेऽपि सप्तम्याकृतेः प्रयोगः। तथा सति यत्किंचित्क्रियानिरूपिताधिकरणताया अपि प्रतीत्या तद्वारणाय प्रकरणाद्यन्वेषणे गौरवात्। प्रक्रान्ताया एवाकृतेः प्रयोगे तु तद-नपेक्षणाल्लाघवमिति तदेवात्र परिभाषायां बीजम्। ननु पूर्वपरिभाषाविषयेऽप्यनया परिभाषया

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः ॥ कृञ्चानुप्रयुज्यते इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥

ननु विव्याधेत्यादौ परत्वाद्धलादिःशेषे वस्य संप्र-

---

घत्वढत्वयोर्व्यवस्थापयितुं शक्यतया तयोस्तदुदाहरणत्वमयुक्तमत आह। [यत्रेति।] [भिन्नार्थत्व संभावनेति।] अस्ति चात्र गोष्वश्वानां च स्वामीत्युक्ते अश्वानां स्वामी गोषु तिष्ठतीत्यर्थान्तरस्य संभावनेति प्रकृतपरिभाषाविषयता। पूर्वपरिभाषाविषये तु घत्वढत्वयोःरप्रवृत्तावपि प्रकृति-प्रत्यययोरभिन्नत्वेन भिन्नार्थत्वसंभावनाया अभावान्न तस्यानया सिद्धिरिति भावः। ननु जैमिनीय तन्त्रे यूपाधिकरणे खादिरे वा बध्नाति पालाशे वेत्यादिना श्रुतिविकल्पितेषु क्रतुसाधनेषु येनैव साधनेन क्रतोरुपक्रमस्तेनैवासौ निर्वाह्यो न तु तदन्येन। साधनभेदे कर्मवैगुण्यादपूर्वानुत्पत्ति-प्रसक्तेरित्येतन्न्यायमूलकस्सिद्धान्तो व्यवस्थापितः। तथा च यूपांशे प्रवर्तितस्यास्य न्यायस्य शब्द प्रयोगानपेक्षणात्कथं भिन्नार्थत्वसंभावनाविषयत्वमिति स्यादेव द्रोग्धा द्रोग्धेत्यादावनेन न्यायेन व्यवस्था। किञ्च खादिराभावे तत्साधर्म्याद्बर्बुरः प्रतिनिधित्वेन ग्राह्य इति च तत्रैवोक्तम्। तेन चावयव-संस्थानरूपाकारविशेष एवात्राकृतिपदेन ग्राह्य इति प्रतीयत इति गवोरश्वयोश्च स्वामीत्यादावाकृति साम्यात् षष्ठीद्विवचनसप्तमीद्विवचनयोरिह प्रयोगप्रसङ्ग इति चेन्न। तत्रापि पूर्वसंस्कृतस्य यूपस्य भेदेऽपूर्वोत्पत्तिरूपफलभेदसंभावनायास्सत्वेनास्यास्तद्विषयत्वे तद्विरोधाभावात्। एकत्र प्रयोगस्संस्कार रूपमनुष्ठानमन्यत्र शब्दप्रयोग इति। भिन्नार्थत्वं चैकत्र भिन्नफलकत्वमन्यत्र भिन्नाभिधेयत्वमित्येव भेद इतीदृशार्थ कल्पने न तद्विरोधः। किंचोक्तप्रयोगसमर्थनाय सर्वस्य द्वे इति सूत्रे पूर्वत्रासिद्धी-यमद्विर्वचन इति परिभाषावलम्बनमपि भगवतोऽस्या ईदृशविशेष विषयत्वे मानमिति बोध्यम्।

द्विर्वचनप्रसङ्गेन द्विरुक्तेषु विशेषप्रतिपादिकां परिभाषामवतारयति। [नन्विति।] [परत्वादिति।] व्यधो लिटीत्यनेन विहितात्संप्रसारणादित्यर्थः। संप्रसारणाश्रयस्यान्यस्यापि

सारणं स्यादत आह ॥

**संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥**

तदाश्रयं संप्रसारणाच्चेति पूर्वरूपम् ॥ वस्तुतो लिट्यभ्यासस्येति सूत्रे उभयेषां ग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम् । फलान्तरान्यथा-

---

संभवेनातिप्रसङ्गादाह । [पूर्वरूपमिति ।] संप्रसारणं तन्निमित्तकं पूर्वरूपं च परापेक्षया प्रबलमिति परिभाषार्थः । वाचनिकीयं परिभाषा । फलान्तरान्यथासिद्धिमूलकं भाष्योक्तं परिभाषा प्रत्याख्यानप्रकारं दर्शयति । [वस्तुत इति ।] [उभयेषां ग्रहणस्येति ।] अस्येत्यर्थकत्वेनेत्यनेनान्वयः । वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे तत्रत्यमुभयेषां ग्रहणं सामर्थ्यात्पुनस्संप्रसारण विधायकं तेन च विध्यन्तराणां बाधादुभयेषामभ्यासस्य संप्रसारणमेवेत्यर्थो लभ्यत इति भावः । [इदं सिद्धमिति ।] विव्याध, वव्रश्चेत्यादावुक्तरीत्या हलादिश्शेषात्पूर्वं संप्रसारणप्रवृत्त्या परिभाषा प्रयोजनं सिद्धमित्यर्थः । [व्यर्थेति ।] ननु विव्याधेत्यादीनामुक्तरीत्या सिद्धावपि, भृष्टो भृष्टवान्, जुहुवतुः, जुहुवुः, शुशुवतुः, शुशुवुः, इत्यादौ क्रमेण परत्वात्प्रागरभावातो लोपेयङ् यणो बाधित्वा संप्रसारणपूर्वरूपयोः प्रवृत्तये प्रकृत परिभाषाया आवश्यकत्वात्कथं वैयर्थ्यमत आह । [फलान्तरान्यथासिद्धिरपीति ।] भृष्ट इत्यादि फलान्तराणामन्यथासिद्धिरपीत्यर्थः । तथाहि भृष्टो भृष्टवानित्यादौ नित्यत्वात्संप्रसारणे इष्टसिद्धिः । न च कृतेऽपि संप्रसारणे वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति ऋकारैकदेशं रेफमादाय रमागम प्रसक्त्या नित्यत्वस्योभयसाधारणत्वात्कथं तेनेष्टसिद्धिरिति वाच्यम् । बरीभृज्यत इत्यादावागमसंबन्धिनं रेफमादायातिप्रसङ्गवारणाय भ्रस्जेरोपधयोरित्यत्रानुदात्तोपदेशेत्यत उपदेश ग्रहणानुवृत्त्या औपदेशिकरेफस्यैव तेन रमागमविधानात्संप्रसारणोत्तरं तदप्रसक्तेस्तस्य नित्यत्वाभावात् । एवं जुहुवतुः, शुशुवतुरित्यादावप्यातोलोपेयङादेशाभ्यां नित्यत्वात्संप्रसारणस्य तदुत्तरमातोलोपयणादेशाभ्यामन्तरङ्गत्वात्पूर्वरूपस्य च प्रवृत्त्या इष्टसिद्ध्या नैतानि प्रयोजनानीति स्पष्टं भाष्ये इति बोध्यम् । ननु प्रकृतपरिभाषाया अभावे णौ च संश्चङोरित्यनेन श्वयते श्चङ्परे णौ विधीयमानात्संप्रसारणा-

सिद्धिरपि तत्रैव भाष्ये स्पष्टा। णौ च संश्वङोरित्यादौ संश्वङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥

यत्तु

क्व चिद्विकृतिः प्रकृतिं गृह्णाति १२९

तेन निसमुपविभ्यो ह्व इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः॥ तथा

औपदेशिकप्रयोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥

तेन दादेर्धातोरित्यात्रोपदेशिकधातोरेव ग्रहणमिति, तन्न। तयोर्निर्मूलत्वाद् भाष्याव्यवहृतत्वाच्च। न

---

णिजंमात्र निमित्तकत्वेन विधीयमानयोर्वृद्ध्यायादेशयोरन्तरङ्गत्वात्पूर्वं प्रवृत्तावशूशवदित्यादि न सिध्येदत आह। [णौ च संश्वङोरित्यादाविति।] [विषय सप्तमीति।] तथा च तयोर्विवक्षायामेव संप्रसारणप्रवृत्त्या न वृद्ध्यायादेशयोरन्तरङ्गत्वमिति भावः। आदिना स्वपिस्यमिव्येञां यङीत्यस्य संग्रहः। अन्यथा वेवीयत इत्यत्र संप्रसारणात्पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वात्सन्यङोरित्यनेनद्वित्वे तदुत्तरमुत्तरखण्डे संप्रसारणप्रवृत्तावप्यभ्यासे न संप्रसारण इति निषेधेन तदप्रवृत्तौ रूपासिद्धिः। न संप्रसारण इत्यस्य तु यूनस्तिरिति निर्देशात् व्यवधानेऽपि प्रवृत्तिरित्यन्यत्र विस्तरः।

प्राचीनवैयाकरणतन्त्रे वाचनिकमपीदं परिभाषाद्वयं भाष्यवार्तिकयोरनुपनिबन्धात्तद्विरोधाच्च प्रत्याचष्टे। [यत्त्विति।] [निर्मूलत्वादिति।] तत्त्वं च तदुपष्टंभकज्ञापकन्यायायोर भावादिति भवः। ननु ज्ञापकन्यायायोर भावेऽपि फलानुरोधेन यस्मिन्विधिरित्यादिवत् वाचनिकतया स्वीकारे किं बाधकमत आह। [भाष्यकाराव्यवहृतत्वाच्चेति।] न केवलमव्यवहृतत्वमेव। किंत्वाचाया दूषितत्वात्तद्विरोधोऽपीत्याह।

च विकृतिः प्रकृतिं गृह्णातीति ग्रहिज्येति सूत्रस्थ-भाष्येणाद्यायास्तिरस्काराच्च। निसमुपविभ्यो ह्व इत्यादौ ह्वेञो ऽनुकरणे सौत्रः प्रयोगः। आत्त्वविषय एवात्मने-पदं प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये। अन्त्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासंमता। इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीतिकृत्वा द्वितीयः प्रयोग उपास्यते। क उपदेशो नामेति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता

---

[न च विकृतिरित्यादि।] [ग्रहिज्येति।] तत्राहे वयिग्रहणेन वेञो ऽग्रहणार्थमिदमुक्तं भाष्ये। नन्वेवं निसमुपविभ्योह्व इत्यत्र शिद्विषयस्यानात्वभूतस्य ह्वेञोऽग्रहणे निह्वयते, उपह्वयत इत्यादौ क्रियाफले परगामिन्यात्मनेपदस्याभीष्टस्यासिद्धिरत आह। [सौत्रः प्रयोग इति।] सौत्रत्वादेकारस्य लोप इति भावः। सिद्धान्तमाह। [आत्वविषय एवेति।] कृतात्वस्यैवानुकरणादिति भावः। अत्र हेतुमाह। [प्रयोगस्थानामेवेति।] न हि काप्येकारान्तस्य प्रयोग इति भावः। द्वितीयपरिभाषायामपि सूत्र वार्तिककृतोरस्संमतिं दर्शयति। [अन्त्यापीति।] औपदेशिकेति परिभाषापीत्यर्थः। एवमत्र सूत्रवार्तिककृतो रसंमतिं प्रदर्श्य भाष्यासंमतिमपि दर्शयति। [इह हीत्यादिना।] [भाष्यासंमता चेति।] यदीयं परिभाषा प्रामाणिकी स्यात् तदा औपदेशिकग्रहणस्यैव न्यायप्राप्ततया लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति हेतुना द्वितीयः प्रयोग आश्रीयते। कोऽसावुपदेशो नामेति

च॥ भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण। दादे-रिति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः॥ १३०॥

यदपि 'नन्वजर्घा बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादावेकाच इतीण्निषेधः स्यादत आह॥

शितपा शपानुबन्धेन निर्दिष्टं यद् गणेन च॥
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥ १३१॥

---

भाष्योक्तिरसंङ्गता स्यादिति तेनास्य तदसंमतत्वं स्फुटम् प्रतीयत इति भावः। नन्वेतद्भाष्यप्रामाण्यात्सानुबन्धक ग्रहणेषु तदनाश्रयणे ऽपि सर्वत्र तदनाश्रयणे न मानमित्यत आह। [प्रकृताभिप्रायेणेति।] अनुबन्धप्रस्तावेन तथोक्तावपि सर्वत्र रूपग्रहणे स्वंरूपमित्यनेन स्वरूपग्रहणस्य तुल्यतया न सानुबन्धकग्रहणविषयकमेव तद्भाष्यमिति तेनास्यासर्वथा असंमतिरेव सूचितेति बोध्यम्। नन्वस्या अनाश्रयणे दादेर्धातोर्घ इत्यत्रोपदेश इत्यर्थलाभः कथमत आह। [लक्षणेति।] इदं च शेखरादौ स्पष्टम्। [अन्यत्रेति।] उद्योतादावित्यर्थः।

भाष्यानुक्तत्वेन पूर्वपरिभाषाद्वयं खण्डयित्वा तत्प्रसङ्गेन तादृशीमन्यामपि कैयटदीक्षिताद्युक्तं खण्डयति [यदपीति।] [अजर्घा इति।] गृधु अभिकाङ्क्षायामित्यतो यङ्लुगन्ता लङि, सिपि यङो वेतीडभावपक्षे दश्चेति रुत्वे रूपम्। तथा भिदिर् विदारण इत्यस्माद्यङ् लुगन्ताल्लटि तिपीट्पक्षे बेभिदीति रूपम्। [विकरणा इति।] आद्ये श्यनः अन्त्ये श्नमश्च प्रवृत्तिस्स्यादित्यर्थः। [इण्णिषेध इति।] उपदेशे एकाच्त्वस्य सत्त्वादिति भावः। निर्दिष्टम् निर्देशेन विहितम्। ततश्च श्तिपादिकृत निर्देशप्रयोज्य विधिविषयमेकाच् पदघटितशास्त्रविहितं चेत्येतत्सर्वं यङ्लुकि

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च। हन्तियातिवाति, सनीवन्तेति सूत्रे भरेति, दीङो-युडचि, अनुदात्तङितः दिवादिभ्यः श्यन्, एकाच उपदेशे, इत्युदाहरणानि। द्वित्वं सनाद्यन्ता इति भूवादय इति धातुत्वं च भवत्येव गुणो यङ्लुकोरित्यादिभि-र्निषेधानित्यत्वकल्पनात्। तेन भष्भावो ऽप्यजर्घा इत्यदौ भवति। अत एव श्वीदित इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः॥ एकाच उपदेशे ऽनु-दात्तादिति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते। अन्यथोपदेशे ऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं

---

न प्रवर्तत इति परिभाषार्थः। [उदाहरणानीति।] क्रमेणेति भावः। नन्वेवमेकाचो द्वे इत्यधिकृत्य विहितस्य सन्यङोरिति द्वित्वस्यापि यङ्लुक्यप्रवृत्तिस्स्यादत आह। [द्वित्वमिति।] सनाद्यन्ता इत्यस्य प्रत्याख्यानादारम्भपक्षेऽपियङ्लुकि सनाद्यन्ता इत्यस्य, भूवादय इत्यस्य वा प्रवृत्तौ विनिगमना विरहाद्विरोधाभावेन परत्वादेरव्यवस्थापकत्वाच्चाह। [भूवादय इतीति।] [इत्यादिभिरिति।] आदिना दीर्घोऽकित इत्यादि सङ्ग्रहः। अन्यथाऽभ्यासाभावेन तद्वैयर्थ्यस्पष्टमेवेति भावः। [निषेधेति।] एतत्परिभाषाबोध्यनिषेधस्येत्यर्थः। अनित्यत्वस्य फलान्तरमाह। [तेनेति।] [भष् भावो ऽपीति।] अपिना द्वित्व धातुत्वयो स्सङ्ग्रहः। अस्या अनित्यत्वे वृद्धसंमतिं दर्शयति। [अत एवेति।] अस्या अनित्यत्वादेवेत्यर्थः। किंचिदित्यस्य सर्वत्र संबन्धः। तथा च केषां चिदेव तादृशानां तत्राप्रवृत्तिर्न सर्वेषामिति भावः। अत्र दीक्षिताद्युक्तं ज्ञापकमाह। [एकाज्ग्रहणेनेति।] तदर्थकैकाच इति पदेनेत्यर्थः। ज्ञापकत्वमस्या उपपादयति। [अन्यथेति।] एतत्परिभाषाभावे इत्यर्थः। [तद्वैयर्थ्यं स्पष्टमेवेति।] उपदेशे ऽनुदात्तादित्यनेनैवानेकाज् व्यावृत्ते-

स्पष्टमेवेति'। तदपि न। भाष्यानुक्तत्वात्। एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च। न च वधिस्स्थान्युपदेशएकाजेवेति वाच्यम्। साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च। किं चोत्तरार्थमेकाज्ग्रहणम्। अत एव जागरितवानित्यादावुपदेशउगन्तत्वमादाय श्र्युकः कितीतीण्निषेधो न। तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधाये-

---

स्सिद्धतया तदर्थं कृतस्यानेकाज्ग्रहणस्य वैयर्थ्यं स्पष्टमेवेति भावः। ननु तदनुक्तत्वे ऽपि निरुक्तफलानुरोधेनोक्तज्ञापकात्कुतो न तत्स्वीकार इत्यत आह। [एकाच् ग्रहणस्येति।] [वधिव्यावृत्त्यर्थमिति।] अवधीदित्यादावतो हलादेरिति वृद्धिवारणाय तस्यादन्तताया आवश्यकत्वेनानेकाच्त्वात् स्थान्युपदेशे ऽनुदात्तत्वेनोपदेशेऽनुदात्तादित्यनेना व्यावृत्तेश्चेति भावः। ननु कृतेऽपि तस्मिन् कथं तद्व्यावृत्तिरिति शङ्कते। [नचेति।] [एका जेवेति।] तथाचोपदेशे ऽनुदात्तत्वस्योपदेशे एकाच्त्वस्य च सत्त्वात् कृतेऽपि तस्मिम् न तद्व्यावृत्तिरिति भावः। [स्थन्युपदेशाग्रहणादिति।] उपदेशे ऽत्वत इति सूत्रस्थकैयटस्वारस्येन स्थान्युपदेशादादेशोपदेशस्य मुख्यत्वलाभान्मुख्ये संभवतिगौणाग्रहणादिति भावः। मास्तु तयोर्मुख्यामुख्यविचारः। तावतापि न दोष इत्याह। [उपदेशत्वावच्छेदेनेति।] अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वादित्याशयः। वधादावाद्युदात्त निपातने तत्सामर्थ्यादुपदेशमात्रावच्छेदेनानुदात्तादित्यर्थ स्वीकारेण तद्व्यावृत्तिस्वीकारे च गौरवमिति भावः। किंच तावतापि न ज्ञापकत्व संभव इत्याह। [किंचोत्तरार्थमिति।] श्र्युकः कितीत्यत्रानुवृत्त्यर्थमित्यर्थः। तत्र तदनुवृत्ति फलं दर्शयति। [अत एवेति।] [उपदेश इति।] तत्कालिकमित्यर्थः। ननु तत्रोपदेशग्रहणानुवृत्तौ मानाभावाद्गुणोत्तरमनुगन्तत्वेन तत्र तदप्राप्तेश्च नोत्तरार्थत्वमेकाज्ग्रहणस्य संभवतीत्यत आह। [तत्रोपदेश इति।] ननूत्तरार्थस्याप्येकाज्ग्रहणस्येह किंचित्प्रो इति न्यायेन प्रकृतपरिभाषाज्ञापकत्वमावश्यकम्।

त्याकरे स्पष्टम्। न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशे ऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः। यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्। किंच तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्।

---

अन्यथा यङ् लुकीष्टस्येडागमस्यासिद्ध्यापत्तेरिति शङ्कते। [न चेति।] [प्रवृत्त्यर्थमिति।] एतदुत्तरमङ्गीक्रियमाणे इति शेषः। [इत्यर्थे इति।] उपदेश इत्यस्यानुदात्त विशेषणत्वेनाङ्गीक्रियमाणेऽर्थे इत्यर्थः। [दोषोपन्यासवदिति।] उपदेश इत्यस्यैकाज्विशेषणत्वाभावेन द्वित्वोत्तरमङ्गस्यानेकाच्त्वादिण्निषेधाप्राप्त्या तत्रेट्प्रतिषेधो वक्तव्य इति दोषकथनवदित्यर्थः। [दोषानुपन्यासेनेति।] तत्रापि द्वित्वोत्तरमङ्गस्यानेकाच्त्वान्निषेधाप्राप्त्या तत्रेण्णिषेधाय यङ्लुकीट् प्रतिषेधो वक्तव्य इति दोषाकथनेनेत्यर्थः। [तत्रेति।] यङ्लुकीत्यर्थः। [इडिष्ट इति।] उपदेश इत्यस्योभयविशेषणत्वमिति सिद्धान्तार्थेऽपीडिष्टः। स च श्तिपा शपेति निषेधं-विना अनुपपन्नः। अत उक्तन्यायादुत्तरार्थस्याप्यैकाज्ग्रहणस्यैतत्परिभाषाज्ञापकत्वमावश्यकमिति भावः। ननु तद्भाष्यं यङ्लुग्विषयकमेव। तत्सिद्ध्यर्थमेव च भगवता तादृशोऽर्थ आश्रित इति तदर्थे तत्र दोषाभावेन तदनुपन्यास इति कथं तेन त्वदुक्तार्थ सिद्धिरत आह। [इत्यादिभाष्यं त्विति।] लोपपदेनोपक्रमादुपदेशपदस्योभयविशेषणत्वमिति सिद्धान्तार्थे ऽपि पञ्चमीसमासेनालोपस्य स्थानिवत्त्वेनाकारेण व्यवधाना देकाच इत्यस्याप्रवृत्तिरित्युपसंहारेणच न तन्मात्रविषयकं तद्भाष्यमिति भावः। ननु तद्भाष्यस्य तन्मात्राविषयकत्वे ऽपि लोपपदस्योभय साधारणतया तस्य लुकोऽप्युपलक्षकत्वेन वोभयविषयकत्वं कुतो नेत्यत आह। [किंचेति।] [तस्येति।] उपक्रमभाष्यस्येत्यर्थः। [तद्विषयकत्वे इति।] उक्तरीत्या तद्विषयकत्वेऽप्यङ्गीकृते इत्यर्थः। [न्यूनतापत्तिरिति।] तथाच तस्य कथंचिदपि तद्विषयकत्वं वक्तुमशक्यमिति

इड्विषये यङ्लुको लोके ऽनभिधानेन छन्दसि सर्व-विधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थ-मिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव उत्तरखण्डे ऽस्तित्ववत्। एतच्च दयतेरिति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यासङ्गतिरिति वाच्यम्। आक्षेपे आक्षिप्तस्यान्वये च मानाभावात्। अङ्गत्वं तु विशिष्ट

---

तेन प्रागुक्तार्थसिद्धिरिति भावः। नचेत्यादि शङ्काग्रन्थस्य समाधिमाह। [इड्विषय इत्यादि।] [तत्रेति।] यङ्लुकीत्यर्थः। [दोषानुपन्यासेनेति।] इण्निषेधानापत्तिरूपदोषानुपन्यासेनेत्यर्थः। [अदोषादिति।] तत्प्रयुक्तप्रकृतपरिभाषाङ्गीकारापत्तिरूपदोषाभावादित्यर्थः। अत्र बीजमाह। [अन्यथेति।] तत्र तस्यानभिधानानाश्रयणे इत्यर्थः। [निरालम्बनत्वापत्तेरिति।] उक्तरीत्या यङ्लुग्व्यावृत्त्यर्थत्वेन तस्य साफल्ये प्रश्नोत्तरयोर्निरालम्बनत्वापत्तिरिति भावः। न चेत्यादि शङ्काग्रन्थस्य दृष्टान्तासिद्धिं परिहरति। [नचेति।] [एवं चेति।] तत्रोत्तरखण्डस्य धातो-रेकाच्त्वमादायेण् निषेध सिद्धौ चेत्यर्थः। [भाष्यासङ्गतिरिति।] सनीट्प्रतिषेधो वक्तव्य इति भाष्यस्यासङ्गते रेकदेश्युक्तत्वेन तस्य नोक्तार्थसाधकत्वमिति भावः। [मानाभावादिति।] आर्धधातुकस्योत्पत्तौ धात्वपेक्षत्वे ऽपि ज्ञाने तदनपेक्षत्वादाक्षेपे मानाभावः। घटपदात्समवायेनो-पस्थितस्याकाशस्य शाब्दबोधवारणाय वृत्त्युपस्थापितस्यैव शाब्दबोधविषयत्वमित्यर्थस्यावश्यकतया ऽक्षिप्तस्य शाब्दान्वये च मानाभाव इति भावः। नन्वेवं धातुत्ववदङ्गत्वस्याप्युत्तरखण्ड एव सत्त्वेनैकाचोङ्गादित्युक्तेऽपि बिभित्सतीत्यादावदोषेण तत्र दोषकथनपरभाष्या-सङ्गतिरेवेत्यत आह। [अङ्गत्वंत्विति।] [विशिष्ट एवेति।] एवकारेणोत्तरखण्डव्यावृत्तिः।

एवेत्येकाचो द्वे इति सूत्रे भाष्ये स्पष्टम्। निरूपितं च तनादिशेषे शब्देन्दुशेखरे। धातुत्वं तूत्तरखण्ड एव। अत एवैकाचो बशो भषिति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रसिद्धमजर्घा इति। अजर्घा बेभिदीतीत्यादौ श्नम्श्यन्नादयस्तु चर्करीतं चेत्यस्यादादौ पाठेन यङ्-लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति॥

---

[भाष्ये स्पष्टमिति।] तत्र हि सिषेचेत्यादावुत्तरखण्डे पदत्वमादाय सात्पदाद्योरिति षत्वनिषेधःकुतो नेत्याशङ्क्य "तावेवसुप्तिङौ। यौ ततः परौ। सैव च प्रकृतिराद्या। समुदायपदत्वमेतेने" त्युक्तम्। उत्तरखण्डस्यागन्तुकत्वेनाभ्यासस्यैव प्रत्ययप्रकृतित्वाद्विशिष्ट एव सुबन्तत्वनिबन्धनं पदत्वमिति तदाशयः। तथा चाङ्गत्वमपि तदादेरेवेति बोध्यम्। निरूपितं चैतदस्माभिः प्रत्ययग्रहण-परिभाषानिरूपणावसरे इति तत एवावसेयम्। नन्वेवं धातुत्वमपि समुदाय एवेत्येव कुतो न समाहितं भगवतेत्यत आह। [धातुत्वं त्विति।] अभ्यासस्य निरर्थकत्वेन क्रियावाचकत्वनिबन्धनं धातुत्वमुत्तरखण्ड एव। अङ्गत्वं तु निरर्थकेऽपि। तत्रार्थवत्परिभाषाया अनुपस्थितेरिति भावः। इदमपि तत्रैव विस्तरेण निरूपितम्। अत्र भाष्यान्तरमपि प्रमाणयति। [अत एवेति।] धातुत्वस्योत्तरखड एव सत्त्वेनेत्यर्थः। [भाष्ये इति।] दादेरिति सूत्रे इति भावः। नन्वेतत्परि-भाषाया अभावे अजर्घा इत्यादौ विकरणानि कुतो नेत्यत आह। [अजर्घा इति।] [पाठेनेति।] यङ्लुगन्तस्य चर्करीतमिति संज्ञा प्राचाम्। तेन च यङ्लुगन्तत्वावच्छिन्नस्यादादौ पाठो बोध्यते। तच्च ततः परस्य शपो लुगर्थम्। यदि ततो विकरणान्तराणामपि प्रवृत्तिस्स्यात्तदा तदसंगतिरेवेति तेन तस्माच्छबेवेति बोध्यत इति भावः। नन्वेवमप्यत्रोक्तानां कार्यान्तराणां यङ्लुक्यप्रवृत्तिः कथं

छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः। भाषायां तु तादृशानामभाव एव शितप्शबादिनिर्देशास्तु भवतेर इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः॥ १३१ ॥

ननु जभोऽचि, रधेश्च, नेट्यलिटीत्येव सूत्र्यतां किं द्वी रधिग्रहणेनेत्यत आह।

पदगौरवाद्योगविभागो गरीयान्॥ १३२ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्ट-

---

सिध्यतीत्यत आह। [छान्दसत्वादेवेति।] नन्वेवमपि भाषायां स्युरत आह। [भाषायांत्विति।] [तादृशानामिति।] परिभाषाविषयाणामित्यर्थः। नन्वेवं श्तिबादिनिर्देशानर्थक्यमत आह। [श्तिबादीति।] [इति वदिति।] यथा लिङ्निमित्तस्य तस्य यङ्लुक्यप्राप्त्या तत्र तन्निर्देशः केवलं पारायणादावदृष्टमात्रफलक एवमन्ये ऽपि तथैव। भाष्याविचारितप्रयोजनानां सूत्राक्षराणामदृष्टार्थत्वस्यैवान्यत्र सिद्धान्तितत्वादिति भावः।

ग्रन्थान्ते व्याख्यातृ श्रोतॄणामानुषङ्गिकतया ऽभ्युदय संपत्तये लाघवप्रशंसनेनोत्सवप्रतिपादिकामुत्तरपरिभाषां निरूपयिष्यन् प्रसङ्गाद्गौरवं दूषयितुमिमां परिभाषां दर्शयति। [नन्विति।] [सूत्र्यतामिति।] इष्टस्य रधेरित्यस्यानुवृत्तये त्रिसूत्री क्रियतामित्यर्थः। अन्यथा-द्वन्द्वनिर्दिष्टत्वेन तन्मात्रस्योत्तरत्रानुवृत्तिर्न स्यादिति भावः। गरीयान्=अतिशयितगौरवविशिष्टः। तदेव गौरवं दर्शयति। [प्रतिवाक्यमिति।] गौरवस्य क्लेश जनकत्वाद्धेयत्वम्। लाघवस्य सुखजनकत्वेनोपादेयत्वं च सकललोक प्रसिद्धमिति नानयोःपरिभाषयोरपूर्वता। पदगौरवापेक्षया

मेव। परन्तु भाष्यासम्मतेयम्। टाङसीति सूत्रस्थ-भाष्यविरुद्धा च। तत्र च इनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १३२ ॥

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१३३॥

एओङ्ऐऔजितिसूत्रयोर्ध्वनितैषा भाष्ये। तत्रानेकपद-

---

योगविभागेन तत्प्रत्याख्याने ज्ञानगौरवम्। तच्च ततो गुरुतरमिति भावः। [कृतमिति।] एतत्सत्त्वे तु पदैकदेशस्यैकारमात्रस्य योगविभागेन प्रत्याख्यानमसंगतमेव स्यादिति भावः।

गौरवप्रसंगेन ग्रन्थान्ते व्याख्यातृश्रोतॄणामानुषङ्गिकमङ्गलाय चोत्सवपदघटितां परिभाषां व्याचष्टे। [अर्धमात्रेति।] [लाघवेनेति।] हेतावेषा तृतीया। अर्धमात्रानुच्चारण-प्रयुक्तलाघवजन्यमुत्सवं वैयाकरणाः पुत्रोत्सवत्वप्रकारकं जानन्तीत्यर्थः। कैमुत्यन्यायेन मात्रादिलाघवस्य ततोऽप्युत्कर्ष स्सिद्धः। सर्वथा लाघवमत्र श्रेयस्तदर्थमेव प्रतिपादपाठं विहायानुशासनस्य प्रवृत्तेः। [एओङिति।] तत्र हि सन्ध्यक्षराणि तपराणि वा अतपराणि वा उपदिश्येरन्नित्याशङ्क्य तपरोपदेशे तपरोच्चारणं कर्तव्यमित्याद्युक्त्वा, अतपरोपदेशे एच इग्घ्रस्वादेश-इति सूत्रे कार्यमन्यथा, वार्णसमाम्नायिकेन सावर्ण्याद्धूस्वस्यापि ग्रहणे तस्याप्यच्त्वादेचो ह्रस्वादेश शासनेषु मात्रिकयोरप्यैकारौकारयो र्विधानं स्यादित्याशङ्क्य "न तौ स्तः, यदि हि तौ स्यातां, लाघवार्त्तावेवोपदिशे" दित्युक्तम्। ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि प्रदेशेषु ग्रहणं सिद्ध्यति। नन्वेवं मात्रिकयोरेव तयोर्गुणसंज्ञा स्यात्तपरत्वादिति चेन्न। तत्र दीर्घयोरेव स्वरूपेण निर्देशादिति तदाशयं कैयट आह। एव मप्यत्र पक्षे वर्णसमाम्नाये ह्रस्वपाठे मात्राद्वयं, गुण संज्ञायां दीर्घयोः स्वरूपेणोच्चारणे मात्राचतुष्टयमिति षडेव मात्राः। सिद्धान्ते तु वर्णसमाम्नाये दीर्घपाठे चत्वारो मात्राः। गुणसंज्ञायामेजिति पाठे सार्धमात्राद्वयमित्याहत्य सार्धषण्मात्रा इत्यर्धमात्रालाघवं ह्रस्वपाठे ऽस्तीति तदाशयः। तथा च तेनैषा ध्वनितेति भावः। मात्रापदलाघवयोर्व्यवस्थामाह। [तत्रेति।]

घटितसूत्रे प्रायेण पदलाघवविचार एव न तु मात्रालाघवविचार इति ऊकालोच्, अपृक्त एकालित्यादिसूत्रेषु भाष्ये ध्वनितम्। तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणं ण्यक्षत्रियेतिसूत्रे अणिञोरिति वाच्यमिति त्रीणि पदानि, अल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं ण्येतिसूत्रे अणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम्। अचि श्नुधातु सूत्रे इण इत्येव सिद्धे य्वोरिति संसृष्य ग्रहणान्न पूर्वेणेण्ग्रहणम्। तत्र विभक्ति निर्देशे संसृष्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे

---

तयोर्मध्ये इत्यर्थः। [तत्र हीति।] अपृक्तएकालिति सूत्रे हीत्यर्थः। [अल् ग्रहण इति।] अस्य संज्ञायामित्यादिः। [तदेकमिति।] अल्ग्रहणमेकमित्यर्थः। [इत्युक्तमिति।] यदीदृशेषु मात्राप्रयुक्तमपि लाघवं विचार्येत तदा संज्ञाविधावल्ग्रहणे सार्धमात्रा। लुग्विधावणिञोरित्यस्य स्थाने अपृक्तपद निवेशे सार्धषण्मात्राः। स्वादिलोपे हल् ग्रहणे द्वे मात्रे इति संकलनया दश मात्राः। संज्ञाविधौ हल्ग्रहणे तु द्वे मात्रे लुग्विधावणिञोरिति करणे सार्धपञ्चमात्राः। संकलनया च सार्ध सप्तमात्रा इति विशेषस्य स्पष्टतया नास्ति विशेष इत्युक्तिरसंगता स्यादिति भावः। प्रायेणेत्यस्य फलमाह। [अचिश्नुविति।] [संसृष्येति।] संहितया वर्णानां संश्लेष स्सम्मर्दः। [तिस्रो मात्रा इति।] इदं पदच्छेदाभिप्रायेण। संहितायां तु रुत्वयत्वयलोपेषु सार्धमात्राद्वयमपीति बोध्यम्। अत्रेदमवधेयम्। मात्रागौरवे तदभिव्यक्तिजनककण्ठताल्वादिव्यापाराधिक्यात्क्लेशः। पदाधिक्ये तु तदीयपदार्थोपस्थित्यादिजनकमनोव्यापारप्रयुक्तो ऽपीत्युभयथा परिक्लेशान्मात्रागौरवात्पदगौरवमधिको दोषः। नहि कायिकक्लेशजनकमुच्चरणगौरवमेव दोषो नतु मानसिक क्लेशजनक

तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा ओतश्श्यनीति सूत्रे शितीति वक्तव्यम्। तत्रायमर्थः। ष्ठिवुक्लम्विति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम्॥ ९३३ ॥

इति श्रीमन्महामहोपाध्यायाशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः परिभाषेन्दुशेखरः समाप्तः ॥

---

मनो व्यापारगौरवमित्यत्र मानमस्ति। परं तु कायिक क्लेशान्मानसिक क्लेशस्यैवाधिक्यमनुभूयते सर्वैः। एवं च पदप्रयुक्त एव गुरुलघुभावो मुख्यत्वाद्विचार्यते। मात्राप्रयुक्तं गौरवं तदपेक्षया अल्पत्वात्क्वचिद्विचार्यते क्वचिन्न। एवं पदलाघवानुपहितं मात्रालाघवमकिंचित्करम्। पदलाघवं तु मात्रालाघवानुपहितमपि श्रेय एवेत्योतश्श्यनीति सूत्रस्थ भाष्यकैयटयो र्निष्कर्षः। तदेतत् प्रायेणेत्युपसंहरन्नुपाध्यायस्सूचयतीति शिवम्।

इति श्री मद्गुरुचरणकमलसेवासंजातशेमुषीवैशद्येन श्री विजयनगरमहाराज संस्कृतमहापाठशालाविश्रान्तप्रधानोपाध्यायेन, कृष्णापरिसरागिरिपल्लीमार्कण्डेयसंस्कृत महापाठशालाध्यक्षेण, नरसांबाजगन्नाथतनूजन्मना, वैयाकरणशेखरेत्यादि बिरुदाङ्कितेन, शिरोमण्युपाधिधारिणा, पेरि वेङ्कटेश्वरशास्त्रिणा विरचिता नागेशगूढार्थदीपिकानाम्नी परिभाषेन्दुशेखरव्याख्या संपूर्णा। इति शिवम्।

ओंनमः पाणिनिकात्यायनपतञ्जलिभ्यः शब्दविद्यासंप्रदायकर्तृभ्यः परमर्षिभ्यः।

शिरसा प्रणिपत्येयमर्पिता गुरवे मुदा।
ब्रह्मविष्णवीशरूपस्य तस्यास्तु परितुष्टये।

स्वतन्त्रभारतशके वत्सरे वसुसङ्ख्यके। समापितेयंकृपया गुरोर्नभसि मान्मथे॥

---

Printed by A. Nageswara Rao at the Saraswathi Power Press, Rajahmundry.

श्रीः

# शुद्धाशुद्ध पत्रिका

---

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | व्या - १ | मूलमासीनं ... | मूल आसीनं |
| ३५ | व्या - ११ | प्रस्यया ... | प्रत्यया |
| ४८ | ,, - ५ | ग्रहणस्य दाधाध्वि ... | ग्रहणस्य वक्तव्यतया दाधाध्वि |
| ४८ | ,, - ७ | दित्यादिना समाहितम् | दित्यादिना अवदात मित्यत्र घुत्व प्रतिषेधाप्राप्ति माशंक्य, " सिद्धमनुबन्धस्यानेकान्तत्वा दित्यादिना समाहितम्· |
| ४८ | ,, - ७ | एजन्तत्वेऽपि ... | एकान्तत्वेऽपि |
| ५२ | ,, - ५ | पक्षे वधादेशमात्रं ... | पक्षे वधादेशापत्तिः, यदितु घनादेशमात्रं |
| ६४ | ,, - ११ | द्वित्व निमित्तत्वाभावेन· ... | द्वित्वनिमित्तत्वाभावेपीस इत्यकार विशिष्टस्य निमित्तत्वे बाधकाभावेन |
| ७२ | ,, - ८ | अनित्यत्वाङ्गीकारे· ... | अनित्यत्वानङ्गीकारे |
| २०४ | ,, - ६ | शाखादित्वदिवार्थेयः ... | शाखादित्वादिवार्थेयत् |
| २४८ | मू - ५ | तदपि वक्तु मुचितम् । मम ... | तदपि वक्तु मुचितम् । प्राथम्या त्तदेववावक्तु मुचितम् । मम- |
| २६२ | ,, - २ | खट्वा ऊढेत्यत्र ... | खट्वा - आ - ऊढेत्यत्र |